# सारस्वती सुषमा

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका



पण्डितराजश्रीराजेश्वरशास्त्रिद्रविडस्मृतिविशेषाङ्कः

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

## पण्डितराजश्रीराजेश्वरशास्त्रिद्रविडस्मृतिविशेषाङ्कः


प्रधानसम्पादकः

**प्रो. राजेन्द्रमिश्रः**

कुलपतिः

सम्पादकौ

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






५५ वर्षे
१-४ अङ्काः

वार्षिकं मूल्यम् - १०० रूप्यकाणि
जून-सितम्बर-दिसम्बर-मार्च, २०००-२००१



*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी - २२१००२

*मुद्रकः —*
**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

*प्राप्तिस्थानम्—*
**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२

**विष्णुकान्त शास्त्री**
राज्यपाल, उत्तर प्रदेश




राजभवन
लखनऊ–227132



## सन्देश

मुझे यह जानकर प्रसन्नता हुई कि सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी द्वारा प्रकाश्य शोध-पत्रिका **'सारस्वती सुषमा'** का आगामी अङ्क **'पण्डितराज श्री राजेश्वर शास्त्री द्रविड स्मृति विशेषाङ्क'** के रूप में प्रकाशित किया जा रहा है।

पण्डितराज श्री राजेश्वर शास्त्री विलक्षण प्रतिभा से सम्पन्न विद्वान् थे, जिन्होंने विश्वविद्यालय में राजशास्त्र एवं अर्थशास्त्र विषयों के अध्ययन एवं अनुसन्धान-कार्य में महत्त्वपूर्ण योगदान दिया था। मुझे विश्वास है कि पण्डितराज श्री राजेश्वर शास्त्री की स्मृति में प्रकाशित यह विशेषाङ्क उनके शैक्षिक एवं बौद्धिक योगदान से परिचित कराते हुए सामान्यजन एवं विशेषतः नई पीढ़ी को अनुप्राणित करने में अवश्य सफल होगा।

पण्डितराज श्री राजेश्वर शास्त्री की पुण्य स्मृति को सादर नमन करते हुए मैं विशेषाङ्क की सफलता हेतु अपनी मङ्गलकामनाएँ प्रेषित करता हूँ।

(विष्णुकान्त शास्त्री)



## अनुग्रहसन्देशः

**[ दक्षिणाम्नाय-शृङ्गगिरि-शारदापीठाधीश्वराणां जगद्गुरु-शङ्कराचार्याणामनन्तश्रीविभूषितानां श्रीभारतीतीर्थमहास्वामिनाम् ]**

वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयायाः सारस्वती-सुषमाख्यायाः त्रैमासिक्याः पञ्चपञ्चाशवार्षिकमङ्कचतुष्टयं पण्डितराज-श्रीराजेश्वरशास्त्रिद्रविडस्मृतिविशेषाङ्कत्वेन प्रकाशयिष्यत इति विज्ञाय नितरां प्रसन्नस्वान्ता अभूम।

दिगन्तविश्रान्तयशोराशीनां पण्डितराजानां संस्मरणं विश्वविद्यालयस्यास्य गौरवमभिवर्धयिष्यति। सर्वेष्वपि शास्त्रेषु तलस्पर्शिपाण्डित्यमावहन्तोऽपि ते सौजन्यमूर्तय आसन्। किं बहुना? रघुवंशादिनैककाव्यव्याख्यात्रा मल्लिनाथेनोक्तस्य—

**वाणीं काणभुजीमजीगणदवासासीच्च वैयासिकी-**
**मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्।**
**वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां**
**लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः।।**

इति पद्यस्य समीचीनमुदाहरणं पण्डितराजा इति कथनमतितरां युज्यत इत्यभिप्रेमः।

भगवतो विश्वनाथस्य कृपया विशेषाङ्कोऽयं सुष्ठु प्राकाश्यमेतु इत्याशास्महे।

**इति नारायणस्मरणम्**



।। श्रीराघवो विजयते ।।

## मङ्गलाशासनम्

काशीवासीड्यमेनोहृतिचणचरितञ्चारुचन्द्रस्मितास्यं
काशीकाशीशशोभामरवरसरिदुद्भूतिसूत्यङ्घ्रिकञ्जम्।
काशीनाथैकवन्द्यं वनरुहवदनं भूमिपुत्रीकलत्रं
काशीस्वस्स्वर्णवल्लीफललसदभिधं भावये रामभद्रम्।।

अथ त एव हेमाद्रिसङ्काशा यशःसुरभिसुरभितभुवनेतिहासाकाशाश्चकासति काञ्चन काञ्चनकमनीयकान्तिमावहन्तो लसन्तश्च वनजजनिवदान्यधन्यसकलसाधु-सम्मान्यविध्वस्तवालेयबाल्योचितपापवर्गसमलङ्कृतत्रिवर्गनिरस्तजनतातापवर्गतृणीकृत-स्वर्गापवर्गनिरर्गलविगलदानन्दनिःस्यन्दसन्दोहदूरापास्तसम्मोहसङ्कलितपरमपावन-प्रेमौघामोघसंशोभितसकललोकललाममञ्जुलमतिसञ्जनितकोटिकोटिशास्त्रीय-सिद्धान्तशुद्धस्वान्तविश्वविश्वविश्रुतोदन्तपावितसत्यकशाश्वतसर्गान्तनिसर्गरमणीयविश्ववन्दारु-वन्दनीयपरमपावनपाथेयप्रथिष्ठपरम्परास्थपतिनिष्प्रत्यूहविगतसंशयव्यूहपरमप्रतिभया व्रीडितबृहस्पतिविभया विशदज्ञानविज्ञानवीर्यविकलीकृतविपक्षेभया निर्भयाभयावहेति सततसन्निहितसमत्याहितनिरस्तलक्षणसमस्तदूषणभीषणावहे सुव्यक्तपरिभवे समनादिकालिकमनोभवा भवे भवे शमभयदानेन चेदानीमपि कोटिकोटिनिजचरण-नलिननिर्लीनविनष्टकश्मलपरिकलितपरमपरिमलनिर्मलमकरन्दमाधुरींशरणमुपेयुषो रोलम्बनिकुरम्बनिकरान्नितरामनुगृह्णन्तः समाभ्योऽपि श्रुतिभ्यो जननीभ्य इव सङ्गृह्णन्तः शुभाशिषः सदाशिषः निराशिषोऽपि पीतवीतविभ्रमनिगमागम-नीराशिषो येषां लोकमङ्गलजीवनस्य प्रत्येकं क्षणो विभूषितविष्वग्विशदवर्म-सार्वभौमसानतनधर्मसत्कर्मशुभमर्ममानवीयमूल्यमञ्जुलमर्यादासंरक्षकक्षणो विश्व-विश्वविलक्षणो विचक्षणश्च विश्वजनविसङ्कटसङ्कटाटवीगहनविटपिविदलने सङ्कलने च मधुलिहामिह विविधविबुधसद्बुद्धिवल्लभासंलालितपरमपवित्रतल्लज-जगज्जालभङ्गिममहितहितश्रुतिसन्निहितसौमनससौमस्यसौमनससारभाणाम्। अमीष्वेव पुण्यश्लोकशिखामणिषु सन्ति शान्तपार्थिवविग्रहा अपि विश्वजीवातु-

शास्त्ररसिकसस्यजीवनजीमूतजेगीयमानयशोविग्रहाः, निराग्रहा अपि नीराग्रहाः, नीराग्रहा अपि द्रुहिणजनिचरणनलिननिसृष्टनीराग्रहाः, असङ्ग्रहा अपि सकलशास्त्रीयसारस्वतसद्गुणगुण्यसत्सिद्धान्तसङ्ग्रहाः, सेवितपञ्चानना अपि न्यायाटवीपञ्चाननाः, अचतुरानना अपि वैदिकमर्यादासंरक्षणचकितीकृतचतुराननाः, अकानना अपि काननाः, अद्रविणा अपि विद्याद्रविणाः, द्रविणकुलकञ्जभानवः सततसमर्चितकृशानवो नित्यस्मरणीयाः **पण्डितराजश्रीराजेश्वरशास्त्रिवर्याः**। तदीयगुणगणगरिमपीयूषसम्प्रीणितविपश्चिन्मृगाङ्का पण्डितराजरजनीकरविद्वन्मनोरथपूर्तिसमेधितशास्त्रजिज्ञासुसविशेषविमलविरुदविशदविद्यार्थिविद्यापिपासापूर्तिकीर्तिकौमुदीदीधितिमुदितविशेषाङ्का श्रीमत्पण्डिताखण्डलाखण्डन्यायवेदान्तराद्धान्ततिमिरान्तमार्तण्डमञ्जुलितशेमुषीनलिनीमनोरमा श्रीराजेश्वरशास्त्रिवदनवनजविगलितविविधशास्त्रार्थप्रसङ्गप्रस्तुतविद्वत्प्रकाण्डसंस्तुतगहनयुक्तिव्यासङ्गसंस्मरणसत्सङ्गकोटिकोटिशास्त्रीयकोटिभृङ्गालीमण्डितवर्ण्यवर्णितसुषमा **सारस्वती सुषमा** श्रीमन्मन्मथारिनिटिललसितजाह्नवीसुषमेव निखिलविद्वल्ललामलोकान् निरस्तशोकान् कृषीष्टेति मङ्गलमाशास्ते—

राघवीयो धर्मचक्रवर्तिमहामहोपाध्यायवाचस्पतिश्रीचित्रकूटतुलसीपीठाधीश्वर**जगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यो** जीवनपर्यन्तकुलाधिपतिर्जगद्गुरुरामभद्राचार्यविकलाङ्गविश्वविद्यालयस्य, चित्रकूटधाम्नः (उ०प्र०)

॥ श्रीराघवः शं तनोतु ॥





# सन्देशः

परमादरणीयाः **प्रो. राजेन्द्रमिश्राः**
कुलपतिमहोदयाः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

सस्नेहं शुभाशीर्वादाः समुल्लसन्तुतराम्।

समधिगतं भावत्कं पत्रम्। अवगतञ्च पत्रस्य वृत्तम्। विद्यातपःपूतान्तःकरणानां 'यस्य पृथ्वी शरीरमि'तिवत् शास्त्रशरीरिणां विद्याभ्यसनव्रतव्रतिनाम् अखण्डभूतले विदुषां मध्ये लब्धकीर्तीनां पण्डितश्रीराजेश्वरशास्त्रिद्रविडमहोदयानां शास्त्रसंरक्षणं सदैव वन्दनीयमस्ति।

यद्यपि पण्डितराजानां सर्वैर्विद्वद्भिः सस्नेहसम्बन्ध आसीत्, तथाप्यस्माकं पूर्वाचार्यैर्जगद्गुरुवल्लभाचार्यषष्ठपीठाधीशैः **नि.ली.गो.श्रीमुरलीधरजीमहाराजैः** सह सनातनधर्मसंरक्षणे सहोदरवत् स्नेह आसीत्।

ईदृशानां पुण्यश्लोकानां पण्डितराजानां स्मरणेन सुरभारतीसमुपासकानां नितरां शास्त्रनिष्ठा एव दृढतरा भवति। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीया त्रैमासिकी 'सारस्वती सुषमा', 'पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडस्मृतिविशेषाङ्क'-प्रकाशनेन नूनं पितृ-ऋणात् नैऋण्यमिव गमिष्यति। तदिदं ग्रन्थरत्नमचिरादेवास्माकं समेषां गौरवमभिवर्धयेदिति कामयामहे।

**गो. श्रीश्याममनोहराः**
जगद्गुरुश्रीवल्लभाचार्याः षष्ठपीठाधीश्वराः,
षष्ठपीठम्, गोपालमन्दिरम्,
चौखम्भा, वाराणसी

# अभिनन्दनकुसुमाञ्जलिः

## डॉ. आदित्यनाथझाः

वाराणस्यां जटापाठित्वेन सुप्रसिद्धानां वेदमूर्तीनां पौत्रत्वेन, वर्णाश्रमस्वराज्यसङ्घसंस्थापकानां त्यक्तमहामहोपाध्यायपदवीकानां स्वनामधन्यानां ब्रह्मवादिनां पण्डितश्रीलक्ष्मणशास्त्रिचरणानां पुत्रत्वेनाविर्भूतं पुम्भाववाग्देवतां महामहोपाध्याय-तार्किकगुरु-पण्डितश्रीवामाचरणभट्टाचार्यमहाशयप्रधानान्तेवासिनं लोकोत्तरप्रतिभाकौमुदीधवलितदिग्दिगन्तं श्रीशास्त्रिपादं नाम्ना शैशवादेव जानामि। यतोऽयमात्मनो यौवनारम्भवेलायामेव मम जन्मभूमेर्दर्शनविद्यागङ्गाहिमालयायमानाया मिथिलाया 'राघवपुरे' दरभङ्गामहाराज-महामहोपाध्यायमहेशठक्कुर-वंशावतंसेन सुगृहीतनाम्ना पण्डितव्रजनन्दनसिंहठक्कुरेण स्वतनय-कलाधारीसिंह-यज्ञोपवीतशुभमहोत्सवावसरे समायोजितायामभिरूपभूयिष्ठायां परिषदि शास्त्रार्थे जरन्नैयायिकदुर्लभां कीर्तिपताकामदोधूयत। अथ वाराणसेयसंस्कृतविश्वविद्यालय-प्रथमोपकुलपतिपदकार्यभारं निभालयन्नहं पुण्यदर्शनस्यास्य न केवलं तर्कशास्त्रे भारतीयदर्शने वा अपि तु संस्कृतशास्त्रमात्रे लोकोत्तरं पाण्डित्यं बहुशोऽनुभूयामन्दानन्दमविन्दम्।

यो 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति' भगवतीं श्रुतिं सर्वथा स्वजीवनेऽपालयत्, यं च 'नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमानिति' सूक्तिरञ्जसा गायति, येन 'न्यायसिद्धान्तमुक्तावल्या' 'दिनकरी-' टीकाटीकाया 'रामरुद्री'-समभिधानाया अपूर्णो गुणनिरूपणव्यापको भागोऽपूर्यत, यस्मै देशस्य नानाधर्माचार्यैश्चतुर्भिः श्रीशङ्कराचार्यैश्च सम्भूय 'पण्डितराजः', 'सर्वतन्त्रस्वतन्त्रश्चे'त्युपाधी सादरं प्रादीयेताम्, यस्माज्ज्ञानरत्नाकराद् अवच्छेदकत्वविमर्शप्रभृतीनि ग्रन्थरत्नानि निर्गतानि, यस्य 'शान्ति का अग्रदूतेति' कृती राजनीतौ विराजते, यस्मिंश्च भारतप्रशासनस्य पद्मभूषणोपाधिर्जयति, तं विद्वद्वरेण्यं कः स्तोतुं क्षमः।

यो न केवलं सर्वशास्त्राणां निरुपमगुरुत्वेन पण्डितसमाजे विख्यातः, अपि तु वर्णाश्रमस्वराज्यसङ्घस्थकर्णधारत्वेन ब्राह्मणमहासम्मेलनशास्त्रार्थपरिषदः सञ्चालकत्वेन, 'गीर्वाणवाग्वर्धिनी'-नाम्न्याः सभायाः संरक्षकत्वेन, वल्लभराम-शालिग्रामसाङ्गवेदविद्यालयाधिष्ठातृत्वेन, वाराणसेयसंस्कृतविश्वविद्यालयस्य

प्राचीनराजशास्त्रार्थशास्त्रविभागाध्यक्षत्वेन सम्मानितप्राध्यापकत्वेन च देशस्य प्रतिकोणं जेगीयते।

पण्डितश्रीमहेशझा-श्रीहरिरामशुक्ल-श्रीरामचन्द्रखनङ्गप्रभृत्यनन्तसर्वतन्त्र-स्वतन्त्रपण्डितनिर्मातुर्यस्य शिष्यपरम्पराया: साम्प्रतं पञ्चमी पीठिका विराजते, यस्य च त्रयोऽपि पुत्रा: कृष्णयजुर्वेदं नव्यन्यायशास्त्रं चाधीयते न पाश्चात्यविद्या:, यश्चाधुना भारतीयसंस्कृतिप्राणायमान: सपत्नीक: काशिराजस्य 'रामनगरे' प्रासादीयति कुट्याम्, तस्मै लोकोत्तरचरिताय महर्षिकल्पाय सर्वतन्त्रस्वतन्त्राय पद्मभूषणपण्डितराज-श्रीराजेश्वरशास्त्रिमहात्मनेऽभिनन्दनकुसुमाञ्जलिमर्पयन्नात्मनो गौरवमनुभवामि, प्रार्थये च सशक्तिकं श्रीविश्वनाथं यत् संस्कृतजगतो जीवातुमेनं कल्पायुषं विरचयेदिति।

**(ऋषिकल्पन्यासत:)**



# नान्दीवाक्

व्यतीतचतु:पञ्चाशद्धायनेभ्यस्सारस्वतीसुषमानाम्नी काचिदनुसन्धानपत्रिका सम्पूर्णानन्दसंस्कृतविश्वविद्यालयपक्षत: प्रकाश्यत इति विदितचरं सुरभारती-समुपासकानां सहृदयानाम्। पत्रिकेयं सामान्यतो वेदवेदाङ्गपुराणषड्दर्शनशास्त्रनिचय-सौगतार्हतचिन्तनकलासंस्कृतिलोकपरम्परादिसम्बद्धानां सुचिन्तितमौलिकशोधा-लेखानां त्रिमासावधिपरिमितं प्रकाशनं विधत्ते। एवं सत्यपि, कादाचित्करीत्या यथावसरमस्या विशिष्टाङ्का: प्रकाश्यन्ते, ये पुनर्विद्वद्धौरेयव्यक्तित्वकर्तृत्वसमीक्षापरा अथवा विश्वविद्यालयीयविशिष्टमहोत्सवानुस्मारका भवन्ति।

गतवर्षेऽस्माभि: सारस्वतीसुषमाविशेषाङ्कमाध्यमेन केषाञ्चनोत्तमर्ण-विद्याऽम्बराभोगमार्तण्डानां स्वोपज्ञाचरणवैदुष्यवात्सल्यसौजन्यरचितेतिहासानां शिष्यप्रशिष्यनिकुरम्बहृदयासनप्रतिष्ठितानां लोकोत्तरचरितानामाचार्यचरणानां मधुरस्मृतिं स्थिरां विधातुं, किञ्चात्मानमप्यनृणीकर्तुं सङ्कल्पितम्। तत्र तावच्चत्वारो विशेषाङ्का: प्रकाशयितुं निर्णीता: पण्डितराजश्रीराजेश्वरशास्त्रिद्रविड-श्रीवसन्तत्र्यम्बकशेवडे-प्रो.वि. वेङ्कटाचलम्-डॉ. मण्डनमिश्रसम्बद्धा:। एतेषां विशेषाङ्कानां विशिष्टसम्पादनार्थं चत्वारोऽतिरिक्तसम्पादकाश्चापि सर्वसम्मत्याऽङ्गीकृता:। ते च वर्तन्ते क्रमेण—डॉ. राजारामशुक्ला:, डॉ. शिवजी-उपाध्याया:, प्रो. अभिराजराजेन्द्रमिश्रा:, प्रो. युगलकिशोरमिश्राश्च, मूलसम्पादको डॉ. हरिश्चन्द्रमणित्रिपाठी तु सर्वत्राऽनुस्यूत एव।

तत्रेदम्प्रथमतया **पण्डितराजश्रीराजेश्वरशास्त्रिद्रविडविशेषाङ्क:** प्रकाश्यते। विशेषाङ्केऽस्मिन् पत्रिकाया: पञ्चपञ्चाशत्तमवत्सरीयाया: सर्वेऽप्यङ्काश्चत्वारस्सम्मिलितास्तिष्ठन्ति। विशेषाङ्कस्यास्य सम्यङ्निर्वहणार्थं परामर्शदातृमण्डलमप्येकं नियुक्तं वर्तते यत्सदस्या: सन्ति वेदवेदाङ्ग-दर्शन-साहित्यसंस्कृति-श्रमणविद्या-आधुनिकज्ञानविज्ञानसङ्कायाध्यक्षा:। एतावता महता सम्भारेण सतताऽध्यवसायेन च सम्पादकयुगलस्य प्रकाशितोऽयं विशेषाङ्कस्सम्प्रति भवतां समेषां संस्कृतज्ञानां करकमलेषु मया**ऽभिराजराजेन्द्रेण** सप्रणयं समर्प्यते।

दक्षिणाम्नायशृङ्गगिरिशारदापीठाधीश्वरा जगद्गुरुशङ्कराचार्या **अनन्त-श्रीविभूषिता: श्रीभारतीतीर्थस्वामिन:,** तुलसीपीठाधीश्वरा: **श्रीमन्तो राम-भद्राचार्यचरणाश्चित्रकूटस्था:,** षष्ठपीठाधीश्वरा **जगद्गुरुश्रीवल्लभाचार्या गोस्वामिश्रीश्याममनोहरा:** (पुण्यश्लोका: **डॉ. आदित्यनाथझामहोदयाश्च)**

विद्वन्मुकुटमणिं श्रीराजेश्वरशास्त्रिद्रविडं समाराधयितुं प्रेषितवन्तः स्वप्रसन्नवाचिकमित्यहो परमसौभाग्यमस्माकम्। एतान् सर्वान् प्रति विश्वविद्यालयपक्षतो हार्दिकीं कृतज्ञतां प्रकाशये।

विश्वविद्यालयीयाऽनुसन्धानसंस्थाननिदेशका न्यायदर्शननदीष्णा विशिष्टसम्पादकाश्चास्याङ्कस्य **डॉ. राजारामशुक्ल**महोदया यथा प्रस्तुवन्ति बुधोत्तमश्रीराजेश्वरशास्त्रिव्यक्तित्वविषयकं प्रामाणिकं विस्तृतञ्च विवरणं तेन न किञ्चिदपि वक्तुमवशिष्टं प्रतिभाति। महताऽभिनिवेशेन श्रमेण च सङ्कलितेयं सामग्री निश्चप्रचमुपकुरुते विद्याम्भोधिविहरणपरायणशफरकल्पान् पाठकान्। तत्कृते तेऽपि ममाशिषं जयजीववाचञ्चार्हन्ति। **डॉ. हरिश्चन्द्रमणित्रिपाठिनां** योगदानमधिकृत्य किमुच्येत मया? तत्प्रयत्नैरेव सारस्वतजगति नितरां प्रकाशतेऽयं विश्वविद्यालयः।

विशेषाङ्केऽस्मिन् विविधविषयसम्बद्धा द्विचत्वारिंशन्मिताः शोधनिबन्धाः सङ्कलय्य प्रकाश्यन्ते। विश्वसिमि, यदङ्कोऽयं पत्रिकायाः सन्दर्भग्रन्थरूपेण प्रतिष्ठितो भविष्यति।

महापण्डितराजेश्वरशास्त्रिद्रविडविषये मया किं वक्तव्यम्? ममाधन्यतया कीर्तिशेषास्ते सञ्जाताः काश्यां ममागमनात्प्रागेव। परन्तु तद्गुणसौरभसुवासितायां वाराणस्यामद्यापि प्रतिसमज्यं सञ्जायत एव तदुत्तमगुणचर्चा। ताभिश्चर्चाभिश्चर्चिताङ्गः सन्नेवाहमात्मानं कृतकृत्यं मन्ये, प्रतिभाबलेन च तं प्रत्यक्षमिवानुभवामि। शारदानुग्रहभावितानां कवीनां कृते न कोऽपि दिवङ्गतस्तिष्ठति, यतो हि तेऽपूर्वनिर्माणक्षमया योग्यया दिवङ्गतानपि प्रत्यक्षदृष्टीकृत्य व्यवहरन्ति। तथापि शतशो मत्प्रणामा विलसन्तुतरां पण्डितराजश्रीराजेश्वरशास्त्रिचरणाम्भोजयोः। किञ्च,

**गङ्गातोये तरन्तः पुरहरनगरीवीथिकासु भ्रमन्तः**
**स्वैरं काशीशदुर्गे विभवविलसितां सत्सपर्यां हरन्तः।**
**काश्यामद्याप्यनूनं श्रुतिकुहरततिं पूरयन्तो बुधानां**
**वर्धन्तां भूरिभावा हृदि हृदि लसिताः शास्त्रिराजेश्वराणाम् ।।**

**वाराणसी**
प्रबोधिन्येकादशी,
वि.सं. २०६०
(४.११.२००३ ई.)

सहृदयवशंवदः
(हस्ताक्षर)
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# सम्पादकीयम्

बहुतिथादिह कालात् कलिकालमहिम्नेव वा कालकालस्येच्छयेव वा काचन सानातनी अपि शास्त्रकाराणां परम्परा तदीयराजधान्यामपि विलोपाकुलेवावस्थितापि तदनुग्रहेणैव यत्र क्वचिद् यदा कदाचिच्च कस्यचिन्महापुरुषस्यावतारमिषेण महता संरम्भेणाग्रे नीयमाना स्वीयं सनातनत्वमिव सदातनत्वमप्यनुमापयन्ती तिष्ठतीति कश्चिदवर्णनीयो महिमाऽयं काश्या:। ते हि महात्मानस्तदा तदा भगवदंशेन न केवलं स्वयमाविरासते, प्रत्युत स्वसदृशान् स्वोत्कृष्टानपि वा कृष्टिवरिष्ठान् शिष्यान् शिष्याणां काञ्चन चमूं वा सज्जीकृत्य सर्वथा उत्तमर्णा अपि सदा विनयावनतकन्धरा अगणितगुणोपेता गणनायामल्पीयांसोऽपि विद्वांसो भुवमिमां काशिकेयामद्यापि विद्योतयन्ति स्ववैदुष्येनेति वेवेत्त्येव विद्वल्लोक: सकलोऽपि। तादृशां विदुषां तप:स्थलमिदं परःशतवर्षेभ्य: प्राक् प्रतिष्ठामधिगतं तदात्वे काशिकराजकीयसंस्कृतकालेज इति नाम्ना प्रथितं महतां सौजन्येन समध्यगाद् अद्यत्वे परिणतिं परिणतविश्वविद्यालयत्वेनेत्यपि विदितमेव। एतस्य विश्वविद्यालयत्वेन परिणतेर्मूलस्रोतोभूतानां प्रातःस्मरणीयानां डॉ. सम्पूर्णानन्द-(तदानीन्तना उत्तरप्रदेशस्य मान्या: मुख्यमन्त्रिण:)-काशीनरेश-डॉ. विभूतिनारायणसिंह-पं. कमलापतित्रिपाठि-(तदानीन्तना उत्तरप्रदेशस्य शिक्षामन्त्रिण:) महाभागानामुपकारभरं स्मारं स्मारं तेषां चरणेष्वहर्निशं श्रद्धाभावं समर्पयाम:। न हि तादृश: कश्चनापि संस्कृतजीव्यस्मिंल्लोके, य: खल्वनृणत्वमासादयेत् कदाचिदप्यस्य विद्याकेन्द्रस्य। समग्रोऽपि संस्कृतसंसार: साक्षात् परम्परया वा एतस्मादेव प्रसूत इति वचोऽपि नातीवायुक्तं पश्याम:। न केवलं भारते प्रत्युत विदेशेष्वप्यस्य यशोध्वजं दोधूयमानं विदधति विदग्धा: सुधियोऽद्यापि। अत्र ह्येकत्र यथापरम्परं गूढार्थवती: शास्त्रपङ्क्तीरधीयते मेधाविनोऽन्तेवासिन:, अपरत्र तत्र तत्रान्तर्गतानि तत्त्वानि पूर्वमित: परैरपरिशीलितान्याविष्कर्तुं निपुणमनुसन्दधति अनुसन्धित्सव:। उभयथाऽपि शास्त्रपरम्परापरिरक्षणमात्रे व्यापारयत्यात्मानमयं विश्वविद्यालय:। एकमेव हि तल्लक्ष्यमस्य। तदर्थमेव च सर्वेऽप्यस्य व्यापारा:। तेष्वन्यतमोऽयं व्यापार: सारस्वत्या: सुषमाया: प्रकटनं नाम। इयं हि संस्थाया: स्थापनाकालत एव दि पण्डितपत्रिका-काशीविद्यासुधानिधि-सरस्वतीभवनाध्ययनमाला-सरस्वतीभवनग्रन्थ-

मालाप्रभृतिभिरभिधानैरलङ्कृता इदानीं **'सारस्वती सुषमा'** इति नाम्ना प्रथिमानं प्राप्ता देशस्य तेषु तेषु कोणेषु विद्यमानानां विद्यावतां संस्कृतवाङ्मयसम्बन्धिशोधपरा उत्कृष्टाः कृतीः प्रकाशयन्ती प्रकाशयत्येव सारस्वतीं सुषमां विश्वविद्यालयस्य। ये हि मनीषिणः स्वाध्यायप्रवचनाभ्यामन्यथा वा विश्वविद्यालयस्यास्य यशो भास्वरं व्यधासिषुः, तेषां सपर्यापर्यायत्वेन तदा तदाऽस्यास्ते तेऽङ्कविशेषाः स्मृतिविशेषाङ्कत्वेन प्रकाशमानीता आनीयमानाश्च सन्त्यस्माभिः। अयमिदानीं प्रकाशमानीयते **'पण्डितराजश्रीराजेश्वरशास्त्रिद्रविड-स्मृतिविशेषाङ्कः'**। पूज्या पण्डितराजा हि विद्वत्परम्परायामेवावतीर्णास्तयैवाऽन्तिमो-च्छ्वासमावेष्टिता अभूवन्, तथा हि—एकतोऽमीषां पितृपादा **महामहोपाध्यायश्रीलक्ष्मणशास्त्रिमहाशया** नैकेषु शास्त्रेषु नदीष्णतामावहन्तः सर्वदा सनातनधर्मसंरक्षायां दत्तावधानाः, अत एव **'धर्मप्राण'** इत्युपाध्यलङ्कृता नैकान् शिष्यान् शास्त्रपथे न्ययूयुजन्, अपरतस्तत्रभवतां मातुलाः **सुब्रह्मण्यशास्त्री**-त्यभिधया विख्यातास्तन्त्रमीमांसादिशास्त्रेषु अपश्चिमां वैपश्चितीं धारयन्तो व्यराजन्त। पुत्राश्चाप्येतेषां त्रयोऽपि **वीरेश्वर-विश्वेश्वर-गणेश्वरा**भिधा वेद-न्याय-ज्योतिष-धर्मशास्त्रेषु तलस्पर्शिपाण्डित्यमादधानाः पितृपैतामहीं कीर्तिं प्रसारयन्ति सर्वतः। विद्यावंशस्त्वेतदीयोऽत्यन्तमुन्नतः। एतेषां (लोकश्रुत्यनुसारं) परात्परगुरवश्चान्द्रनारायणीति ख्यातानां विशिष्य नव्यन्याये हेत्वाभासग्रन्थानाश्रित्य लिखितानां क्रोडपत्राणां रचयितारः **चन्द्रनारायणभट्टाचार्या** विश्वविद्यालयमिमं न्यायविद्याप्रवचनेनोपाकार्षुः। इमानि हि क्रोडपत्राणि सत्प्रतिपक्षस्य सामान्यनिरुक्तेश्चैवोपलब्धानि इदानीमपि शास्त्रार्थचर्चा अनुतिष्ठासुभिः सश्रममालोडितान्यपि तत्र कृतभूरिपरिश्रमाणामपि शिरःशूलन्त्येव। सर्वतन्त्रस्वतन्त्रा इदानीन्तनाः शृङ्गेरीजगद्गुरुचरणा अनन्तश्रीविभूषित**श्रीभारतीतीर्थमहास्वामिनः** स्वसभासु क्रोडपत्राण्येतानि सादरमनुमोदन्ते इत्येतावताऽपि निर्विवादं प्रमाणीकृतं भवति गौरवमदसीयम्। तेषां शिष्याः (पण्डितराजानां परमगुरवः) **कैलासचन्द्रशिरोमणि**रिति प्रथिता नैकेषु शास्त्रेषु विशिष्य न्यायशास्त्रेऽपरिमितमतयः षोडशमहामहोपाध्यायानामप्युपाध्यायाः स्वगुरोः स्थानं सम्यग् व्यभूषयन्। तेषाञ्च शिष्याः पण्डितराजानां गुरवो महामहोपाध्यायाः **श्रीवामाचरणभट्टाचार्याः** (बडे वामाचरण) अत्रैव क्रमेण गुरोः पदं भूषयन्तः स्वसदृशान् चतुरश्चतुरान् प्रख्यापितगौरवयशस्कानतः प्रथितयशस्कान् **श्रीपद्मप्रसादभट्टराय - पण्डितराजराजेश्वरशास्त्रिद्रविड - पण्डितशिवदत्तमिश्र-**

**पण्डितवामाचरणभट्टाचार्य**-(छोटे वामाचरण)नामकान् उदजीवयन्। इतरे चापि नैके शिष्यास्तेषां कृपापात्रतामासाद्य कृतकृत्या अभूवन्। इमे हि पण्डितराजा आबाल्यादेवाप्रतिमप्रतिभा अल्पीयसैवानेहसा साङ्गवेदाध्ययनं विधाय विशिष्य न्यायवैशेषिकतन्त्रेऽप्रतिहतगतित्वं तथाऽऽसादितवन्तो यथा ते प्रथम एव वयसि न्यायपञ्चानन-विश्वनाथभट्टाचार्यकृतन्यायसिद्धान्तमुक्तावल्याश्रितमहादेवभट्टविरचितदिनकरी-व्याख्याश्रितां रामरुद्रभट्टाचार्यैरारब्धामप्यदृष्टवशादपूर्णां रामरुद्रीनाम्नीं व्याख्यां पूरितवन्तः। ग्रन्थांशस्त्वयमद्यत्वे विदुषामौषधतीति मन्यन्ते तर्करसिकाः। तदनु धर्मशास्त्र-राजशास्त्र-ज्योतिष-मीमांसाद्याश्रितान् अनेकान् निबन्धान् व्याख्यानानि च तत्रभवन्तः प्रणिन्युः। तदीयवैदुष्यविशेषाकृष्टचेतसस्तदानीन्तना विश्वविद्यालयस्य सम्मान्याः कुलपतयः **पण्डितसुरतिनारायणमणित्रिपाठि**महाभागा अत्र प्राचीनराजशास्त्रार्थशास्त्रविभागं संस्थाप्य तदीयां गुर्वीं धुरमेतेषां स्कन्धयोः सादरानुरोधं प्रतिष्ठाप्य च स्वीयां कृतकृत्यताममन्यन्त। प्रसङ्गेऽस्मिन् नेदं प्रस्मर्तव्यं यत् सत्रेदंविभागेनाचार्यत्रिपाठिवर्यैर्योगशास्त्राऽऽयुर्वेदयोर्विशिष्टाध्ययनाध्यापन-शोधादीनालक्ष्य योगतन्त्रविभाग-आयुर्वेदविभागयोरपि स्थापना सम्पादिता ययोश्च क्रमेण **महामहोपाध्यायश्रीगोपीनाथकविराज**महाभागान् **कविराज-श्रीसत्यनारायणशास्त्रि**महाभागाँश्च सादरमामन्त्र्याध्यक्ष्यं पदं विभूषयितुं न्यवेदयन्। तदा प्रभृति आऽवकाशग्रहणं भारतीयराजशास्त्रविषयकान् नैकान् प्रबन्धान् प्रणीय नैकान् शिष्यांश्च सज्जीकृत्य तत्रभवद्भिः श्रीमद्भिर्द्रविडशास्त्रि-पादैः सफलीकृतो मनोरथो विश्वविद्यालयीयानाम्। तदनु आऽन्तिमोच्छ्वासं पितृपादैः प्रतिष्ठापितस्य श्रीवल्लभरामशाल-ग्रामसाङ्गवेदविद्यालयस्याध्यक्ष्यं निर्वहन्तस्तादृशां शिष्यप्रशिष्याणां महतीं परम्परां प्रतिष्ठापितवन्तो यैस्तावत्सम्पूरिता समस्ताऽप्यवनीदानीम्। तेषां शिष्येषु विशिष्टान् **पं.रामचन्द्रखनङ्गशास्त्रि-पं.हरिरामशास्त्रिशुक्ल-पं.जयरामशास्त्रिशुक्ल-पं.गणपतिशास्त्रिहेब्बार**प्रभृतीन् न्यायमीमांसादिशास्त्रेषु पारङ्गतान् विदुषः कस्को न जानाति। प्रशिष्या अप्येतेषां **श्रीमज्जगद्गुरुराघवेन्द्रभारतीमहास्वामि-पं. रामचन्द्रशास्त्रिहोसमने-पं.सीतारामशास्त्रि-पं. विश्वनाथशास्त्रिदातार-पं. काशीनाथशास्त्रि-पं. शिवरामशास्त्रि-पं. बलिरामशास्त्रि-पं. चन्द्रशेखर-शुक्ल-पं.सुधाकरदीक्षित-पं.गणपतिशुक्ल**-प्रभृतयो विशिष्टा विद्वांसोऽभूवन् सन्ति च केचनाद्यापि शास्त्राणि सेवमानाः। एष जनोऽपि तत्रभवतामेव प्रशिष्यकोटावन्तर्भवतीति परमं भागधेयं मन्यते स्वीयम्।

शास्त्रिपादानामुदात्तजीवनस्य संक्षिप्तः परिचयस्तेषामेव शिष्यकोटिप्रविष्टानां विद्वन्मूर्धन्यानां **श्रीरामचन्द्रशास्त्रिहोसमने**महाभागानां वचनैरेवात्र प्रस्तूयते येनास्य प्रामाण्यं दृढीकृतं भवेत्—

## जन्म बाल्यावस्था च

जन्म षट्पञ्चाशदधिकैकोनविंशतितमे वैक्रमसंवत्सरे (१९५६ संवत्) श्रावणमासस्य पूर्णिमातिथौ । अखिलभारतीयवर्णाश्रमस्वराज्यसंघस्य संस्थापकानां महावेदान्तिनां धर्मप्राणानां महामहोपाध्यायपण्डितश्रीलक्ष्मणशास्त्रिद्रविडमहोदयानां (श्रीमत्या अन्नपूर्णादेव्याश्च) पुत्ररूपेण वाराणस्यां बृहस्पतेरवतारस्संजातः। शिशोः राजेश्वरस्य मातामहाः प्रसिद्धमीमांसका महामान्त्रिका म.म.पं.श्रीसुब्रह्मण्यशास्त्रिमहोदया आसन्। एतेषां पितामहाः श्रीरामचन्द्रजटापाठिमहोदया मातामहाश्चोभये क्रमशः त्रिविशनूरमद्रासप्रान्तात् महिषशूर(मैसूर)देशाच्च समागत्य वाराणस्यामुषितवन्तः। एतेषामुभयेषां वंशवृक्षौ ततः कालादत्र एधमानौ विद्येते। श्रूयते यद् चरित्रनायकाः श्रीशास्त्रिमहोदया बाल्यावस्थायां महामान्त्रिकैस्तन्मातामहैः श्रीसुब्रह्मण्यशास्त्रिमहोदयैः स्वीयोपास्यदेवतायाः प्रसादपात्रीकृता अभवन्। एतेषां वाण्यां विद्याधिष्ठात्री श्रीशारदा नानाशास्त्ररूपेण विलसति। एतेषां प्रारम्भिकी शिक्षा स्वीयमातामहसमीपे सम्पन्नाऽभवत्।

## विद्याध्ययनं पाण्डित्यञ्च

एतैः सर्वप्रथमं स्वर्गीय-श्रीबालम्भट्टगौडबोलेमहोदयसकाशात् कृष्णयजुर्वेदान्तर्गतायाः तैत्तिरीयशाखायाः सस्वरमध्ययनं विहितम्। तदुत्तरं वाराणस्यां नव्यन्यायस्याद्वितीयपण्डित-म.म.स्व. श्रीवामाचरणभट्टाचार्यसकाशात् तर्कशास्त्रमधीतम्। न्यायाचार्य-स्व. श्रीगोपालभट्टमहोदयानां शब्देषु चरित्रनायका अध्ययनवेलायां स्वीयस्वाभाविकप्रतिभायाः प्रतापेन न्यायशास्त्रीयगूढरहस्योद्घाटनं विधाय स्वगुरून् श्रीभट्टाचार्यान् आनन्दसागरनिमग्नान् कुर्वन्तोऽभूवन्। श्रीभट्टाचार्यसकाशाद् नव्यन्यायस्य केवलानां प्रमुखकतिपयविषयाणामेव एतैः साङ्गमध्ययनं विहितम्; परन्तु स्वीयाया अचलाया गुरुभक्त्या गम्भीरस्याध्ययनस्य प्रतिभायाश्च प्रकर्षेण संस्कृतसाहित्यस्य सर्वक्षेत्रेष्वपि इमे समानमधिकारमादधति। एतेषां विद्वत्तया शास्त्रार्थविधानस्य विलक्षणया प्रतिभया च प्रभाविता भूत्वैव अद्यप्रभृति ५० पञ्चाशतो वर्षेभ्यः पूर्वं वाराणस्यां सम्पन्ने अखिलभारतीयब्राह्मणमहासम्मेलने सम्मिलितेन विद्वत्समूहेन विभिन्नसम्प्रदायानां धर्माचार्याणामुपस्थितौ एते पण्डितराजपदव्या अलंक्रियन्ते स्म। सम्मेलनावसरेषु विहिताभिरनेकदैवसिककचर्चाभिरेतैः स्वीयमद्वितीयं पाण्डित्यं लोकोत्तरप्रतिभा च दर्शिते।

**विशिष्टानि कार्याणि**

हिन्दूकोड-निर्माणावसरे पूनाप्रान्ते (पुण्यपत्तने) एका भारतीयविद्वत्परिषन्निर्मिता आसीत्। तत्र एभिर्नियामकस्थानमलंकृतमभूत्, यत्र बम्बईप्रान्तस्य उच्चन्यायाधीशन्यायमूर्ति-श्रीदिवेटिया न्यायमूर्ति-श्रीलोकरमहोदयश्च निर्णायकौ (मध्यस्थौ) आस्ताम्। तस्यां सभायां श्रीशास्त्रिमहोदयवर्णिता प्राचीनपक्षसमर्थनपद्धतिः तयोर्मध्यस्थयोः महाराष्ट्रीयसाहित्यसम्राट्न.चि.केलकरमहोदयस्य इतरसर्वविचारकवर्गस्य चात्यन्तप्रभावकारिका सम्पन्ना आसीत्।

एवमेव एतस्यैव विषयस्य विचारार्थं मद्रपुर्यामप्येका विद्वत्परिषदभवत्, यत्र तत्रोपस्थिता अनेके व्यवहारपण्डिताः प्राड्विवाका मीमांसकपण्डितगणश्च श्रीशास्त्रिमहोदयविचारेण प्रभाविता अभूवन्।

वेदापौरुषेयत्वसम्बन्धे तत्पूर्वतन्यामेकस्यां मद्रासविद्वत्परिषदि तैर्निर्भयैः शास्त्रीयदृष्टिकोणः प्रस्तुतोऽभवत्, यस्य विस्तारोऽग्रे पुण्यपत्तने कौशिकव्याख्यानमालायां तैर्विहितोऽस्ति। एतेषां व्याख्यानानां निष्कर्षोऽधुना हिन्दीभाषायां सन्नद्धोऽभवत्।

पञ्चमहाभूतपरिषत् त्रिदोषपरिषच्च हिन्दूविश्वविद्यालये आहूते अभूताम्। तत्र तैर्दर्शनायुर्वेदपक्षयोरत्यन्तकुशलतया समर्थनं विहितम्।

पाटलिपुत्रे काशीहिन्दूविश्वविद्यालये च सम्पन्नासु प्राच्यविद्यापरिषत्सु एतैर्विद्वत्परिषदां नेतृत्वं विहितम्।

पूनानगर्यां भूतपूर्वराष्ट्रपतिराधाकृष्णन्महोदयस्याध्यक्षतायामेतेषां षष्ट्यब्दपूर्तिमुपलक्ष्य अभिनन्दनसमारोहो जनताद्वारा महतोत्साहेन सम्पन्नोऽभवत्। काश्यां सम्पन्ने एतेषां षष्ट्यब्दपूर्त्युत्सवे स्व.म.म.श्रीगिरिधरशर्मचतुर्वेदिनामध्यक्षतायां सर्वे विद्वांसः श्रीमदादित्यनाथझाप्रभृतिमहोदयाश्च एतेषामभिनन्दने भागं गृहीतवन्तोऽभवन्।

काशीनरेशश्रीविभूतिनारायणसिंहमहोदयेन स्वस्य सर्वविद्यासु धर्मादिसमस्तकार्येषु चैते निर्देशका अभूवन्।

देशे पञ्चाङ्गविवादो योऽद्य प्रचलितो विद्यते तत्र प्राचीनपक्षसमर्थनं तैर्येन प्रकारेण विहितम्, यत्र ज्यौतिषसिद्धान्तस्य सर्वेषां (मैसूर) वेङ्कटसुब्बाशास्त्रिप्रभृतिप्राचीनज्योतिःशास्त्रविदुषां पूर्णसमर्थनं प्राप्तमस्ति, स प्रकारः सर्वेषां मौहूर्तिकानामद्भुतसागरे निमज्जयिता अभवत्।

एतेषां विद्वत्तया प्रसन्नाः श्री १००८ काञ्ची-शङ्कराचार्यमहोदया एतान् शास्त्ररत्नाकरपदव्या अलञ्चक्रुः।

**एतेषां कृतयः**

न्यायशास्त्रधर्मशास्त्रमीमांसाराजनीतिसाहित्यविषयान् सरलान् सुबोधान् उपयोगिनश्च भावयितुं तत्रभवद्भिरेतान् विषयान् प्रति टीकाग्रन्थेषु विविधाभिनन्दनग्रन्थेषु च लेखस्य पुस्तिकाया व्याख्यानानां च सङ्कलनं प्रकाशितं विद्यते। तेषु केषाञ्चन नामानीमानि—

१. न्यायसिद्धान्तमुक्तावल्यामपूर्णरामरुद्रीटीकायाः पूर्णता।
२. टिप्पण्या सार्धं सांख्यतत्त्वकौमुद्याः सम्पादनम्।
३. जयमंगलोपाध्यायनिरपेक्षाटीकाभ्यां सार्धं कामन्दकीयनीतिसारस्य सम्पादनम्।
४. कालिदासनिरङ्कुशतानिराकृतिः।
५. सनातनधर्मप्रदीपे विस्तृता टिप्पणी।
६. अवच्छेदकत्वादिविमर्शः।
७. 'शान्ति का अग्रदूत'-ग्रन्थः।
८. वेदापौरुषेयत्वविचारः।
९. हिन्दूधर्मस्वायोगप्रश्नोत्तरम्।
१०. शतशो निबन्धाः साङ्गवेदविद्यालयीयवार्षिकविवरणेषु मुद्रिताः।
११. कौटिलीयार्थशास्त्रटीका 'वैदिकसिद्धान्तसंरक्षिणी'।

एतदतिरिक्ता अभिनन्दनग्रन्थेषु प्रकाशिता लेखसूची बृहत्यस्ति। एवमेव प्रकारेण गीर्वाणवाग्वर्धिन्याः सभायास्तत्त्वावधाने एतैर्धर्मशास्त्रादिविविधप्रश्नानां शास्त्रीय-व्यवस्थानुसारं निर्णयो दत्तः। संख्यायामिमे एकसहस्रतोऽधिकाः स्युः। सर्वे लिपिबद्धाः सन्ति। अधुना तेषां प्रकाशनमवशिष्टमस्ति।

तत्रभवतां तेषामुपयुक्तविशिष्टवैदुष्यद्वारा प्रभावितेन भारतीयशासनेन ते पद्मभूषणोपाधिना गौरवान्विता भाविताः। इति।

वाराणसेयसंस्कृतविश्वविद्यालयद्वारा 'वाचस्पति'-उपाधिः, प्रयागीय-भारती-परिषद्द्वारा 'ऋषिकल्पन्यास' अभिनन्दनग्रन्थः, उत्तरप्रदेशशासन-राज्यसाहित्यिक-पुरस्कारसमित्या १५००० विशिष्टपुरस्कारः (१९७६)।

**(ऋषिकल्पन्यासतः)**

इत्थमपरिमितवैभवभूषितानां पण्डितराजानां स्मृत्यङ्केऽस्मिन् नैकेऽपि विशिष्टा विद्वांसः स्वीयकृतिसम्प्रेषणेन तेषु स्वीयं श्रद्धाभावं प्राचीकटन्निति ते समेऽपि साधुवादैर्महीयन्ते। अत्र विदुषां कृतय इव स्वयं पण्डितराजानामपि काश्चन विशिष्टाः कृतयः क्वचित् पूर्वं प्रकाशिता अपि भूयसां हिताय पुनः प्राकाश्यमानीयन्ते। विशिष्यात्र पण्डितराजानां 'न्यायकुसुमाञ्जलिः' इति शीर्षकाङ्कितं निबन्धमधिकृत्य पं. केदारनाथओझा-पं. हरिरामशास्त्रिशुक्लयोः कश्चन विशिष्टः संवादो विद्वन्मनोरञ्जनाय प्रकाश्यते।

प्रसङ्गेऽस्मिन् एतत्संवादस्य प्रथमप्रकाशका अयोध्यास्थ-'संस्कृतम्' इति पत्रिकाया अधिकारिण: साभारप्रदर्शनं स्मर्यन्ते।

विशेषाङ्कस्यास्य श्रेय:कामनया शुभाशी:सम्प्रेषणेनास्माननुगृहीतवन्तो दक्षिणाम्नायशृङ्गगिरिशारदापीठाधीश्वरा जगद्गुरुशङ्कराचार्या अनन्तश्रीविभूषिता: **श्रीभारतीतीर्थमहास्वामिपादा:**, श्रीतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्या: **स्वामिश्रीरामभद्राचार्यश्रीचरणा:**, षष्ठपीठाधीश्वरगोस्वामि**श्रीश्याममनोहरश्रीचरणाश्च** साष्टाङ्गप्रणतिपुर:सरं स्तूयन्ते।

एतादृशेषु सारस्वतव्यापारेषु सर्वदा सोत्साहं स्वयमग्रेसरन्त: स्वीयांश्चोत्साहयन्तोऽस्मदीया: कुलपतिवर्या महाकवय **आचार्यश्रीराजेन्द्रमिश्र**-महाभागा: कै: शब्दैर्महनीया इति न जानीमहे। भगवान् विश्वनाथस्तेषु एवमेवानुग्रहं विधत्तामिति तत्सविध एव प्रार्थयामहे।

एवमेव ग्रन्थरत्नस्यास्य सम्पादन-मुद्रण-प्रकाशन-प्रसारणादिकर्मसु परोक्षमपरोक्षं वा साहाय्यमनुतिष्ठतां समेषामपि महानुभावानां कार्तज्ञ्यं विजिज्ञापयिषामि।

अन्ते च भाविष्वप्येतादृशेष्वनुष्ठानेषु भवत्त: सहयोगमपेक्षमाणो ग्रन्थरत्नमिदं भवतां करकमलयोरुपहरन् उपसंहरामि।

**राजारामशुक्ल:**

निदेशक:, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

# विषयानुक्रमणी

श्रीशास्त्रिपादानामन्तिमं चित्रम्
(शिवसायुज्यप्राप्तेः सप्ताहात् प्राक्कालिकम्)



सर्वतन्त्रस्वतन्त्र-शास्त्रपञ्चानन-महामहाध्यापक-प्रज्ञादित्य-
वाचस्पति-दार्शनिकसार्वभौम-विद्वच्छिरोमणि-पण्डितपञ्चानन-
शास्त्ररत्नाकर-पद्मभूषण-पण्डितराज-श्रीराजेश्वरशास्त्रिद्रविडमहाभागाः

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५५ वर्षे | ज्येष्ठ-भाद्र-मार्ग.-फा.पू., वि.सं. २०५७ | १-४ अङ्काः |
|---|---|---|


# पण्डितराजवैभवम्


**पण्डितश्रीमनुदेवभट्टाचार्यः**
उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी




स्वर्गङ्गास्फुटहेमकोकनदभाभास्वत्प्रभाभासुरे
लोलत्पल्लवतल्लजालिदललालित्यैकलीलाङ्कुरे।
नन्दन्नन्दनरक्तचन्दनदलद्धाराप्रवाहाद्भुते
देव्याः पादसरोरुहे रतमती **राजेश्वरो** राजति।।१।।

आस्तिक्याङ्कुरसम्भवे स्वगुरुपत्सेवालवालोदये
सद्वैदुष्यदले यशःफलबले संस्कारकेदारजे।
श्रौताचारविचारसौरभभरैर्व्याप्ते प्रकामं दिशि
विश्रान्तः श्रुतकल्पपादपतले **राजेश्वरो** राजति।।२।।

संसारोषरदग्धपान्थनिकरानाश्वासयत्यादरात्
प्रत्यक्षानुमितिश्रुतित्रिनयनैर्भावानहो पश्यति।
साराम्भोनिधिमन्थनोद्गतसुधापात्रं वहत्यन्वहं
यो विन्यस्तमतिर्हि शास्त्रपुरुषे राराष्टि **राजेश्वरः**।।३।।

शास्त्रं नाम रहस्यचिन्तनकृतामेकास्पदं सुन्दरं
यत्सत्तत्त्वपयोनिधौ मतिमतां सम्मजतां धीमताम्।
आनन्दातिशयं हि वक्तुमपि वा कोऽस्तीह सामर्थ्यवान्
तत्सत्यापितमेव येन विदुषाऽसौ भाति **राजेश्वरः**।।४।।

आम्नायादिकशास्त्रसिन्धुमथनव्यापारमन्थाचलो
नानादर्शनकाव्यसञ्चयवनीसञ्चारपञ्चाननः।
तत्तच्छिष्यपरम्परापरिलसत्पादद्वयाम्भोरुहः
श्रीमत्पण्डितराजपण्डितपती **राजेश्वरो** राजति॥५॥

श्रीमत्पण्डितमण्डलेन्द्रमुकुटीरत्नावलीभासुरं
सञ्जातं हि पुरा महीसुरमहासम्मेलनं सुन्दरम्।
तत्र श्रीकविराजपाणियुगलाम्भोजातचारूल्लसत्-
श्रीमत्पण्डितराजशब्दमहितो **राजेश्वरो** राजति॥६॥

मध्येकाशि यदाऽभवन्ननु पुरा श्रीमत्त्रिवेणीस्थले
विद्वद्वृन्दमयेऽत्र भूसुरमहासम्मेलनं मञ्जुलम्।
शास्त्रार्थेऽत्र दिनत्रयं विहितवान् यः पूर्वपक्षं मुदा
श्रीमान् पण्डितराज एव नितरां **राजेश्वरो** राजति॥७॥

आसृष्टि स्वरभास्वरप्रतिलसच्छब्दानुपूर्वीच्छटा-
सत्पारायणसत्रमात्रनिरतप्रज्ञातिमात्रात्मनाम्।
रक्षायै यदमुत्र काशिवलये श्रीवेदविद्यालयः
श्रीमत्पण्डितराजताातचरणैस्तस्य प्रतिष्ठा कृता॥८॥

ताते **लक्ष्मणशास्त्रि**णीह पुरतो यो वर्तमाने स्वयं
सर्वैः पण्डितमण्डलीपरिवृढैश्शास्त्रैकरक्षाव्रतैः।
श्रीमान् **पण्डितराज** इत्यभिधया योऽयं पदव्या तदा
भूयो भूषित एव हन्त मुदितै **राजेश्वरो**ऽसौ कृती॥९॥

वेदान्तोदन्तदान्ता कविकृतिकृतधीर्बौद्धबोधैकबाधा
मीमांसामार्मिकश्रीर्जिनजनजयकृद् या प्रवीणा पुराणे।
साङ्ख्ये सङ्ख्यावदीशा नयनयनवतामग्रणीग्रामणीर्या
राराजीति प्रकामं त्रिभुवनभवने हन्त **राजेश्वरश्रीः**॥१०॥

विद्याकेलिगृहे पुरे पुररिपोर्विद्यावदातश्रमा
विद्वांसः किल भान्ति तेऽनुदिवसं शास्त्रैकदीक्षाक्षमाः।
तत्रापि प्रतिभा-प्रभावलयितप्रज्ञाविभाभासिता
मान्याः केचन भान्ति तेष्वचरमो भात्येष **राजेश्वरः**॥११॥

य: 'प्राचीननवीनराजनययोर्नूनं समीक्षा भवेत्'
**काशीराज** इदं प्रकाममवदद् नीतिव्रतानां पुर:।
यस्य प्रेरणयाऽनया समभवत् तत्सर्वमत्युज्ज्वलं
श्रीमान् पण्डितराजसत्त्वधिषणाकूपार एव स्वयम्।।१२।।

**प्रभुनारायणसिंह**भूपतिमणि: काशीनरेशो महान्
स तु चक्रे ननु मालवीयविदुषां श्रीविश्वविद्यालयम्।
इदमीयेन कराम्बुजेन समभूदुद्घाटनं तस्य यद्
ध्रुवमेवास्य पिताऽस्ति कारणमहो **श्रीलक्ष्मणद्राविड:**।।१३।।

आशाचारुनितम्बिनीश्रुतिलसत्कीर्तिप्रभाभासुरो
दिग्दन्तावलचक्ररम्यकरटस्पर्धाढ्यकीर्त्युज्ज्वल:।
स्वर्गङ्गास्फुटपुण्डरीकपटलीकिञ्जल्कमञ्जुप्रभ:
श्रीमत्पण्डितराजपण्डितपती **राजेश्वरो** राजति।।१४।।

काशीयं त्रिपुरारिराजनगरी सृष्टिप्रभृत्यादराद्
विद्वद्भि: परिभूषिता विजयते स्वर्गापगापाविता।
यस्यैवास्य समाख्यया परिचयस्तस्या बभूवानिशं
सोऽयं पण्डितराजशब्दलसितो भात्येष **राजेश्वर:**।।१५।।

नूनं श्रीपुरुषोत्तम: स भगवान् श्रीमान् हरिर्गीयते
श्रीविश्वेश्वर एष एव मुनिभि: प्रोक्तो महेश: सदा।
एवञ्चापि शतक्रतु: सुरपति: सैव स्वयं कीर्तित:
तद्वत् पण्डितराज एव हि भवान् **राजेश्वरो**ऽस्यां क्षितौ।।१६।।

वेदव्यासमुनीश्वरैरभिहितं वेदान्तसूत्रेषु यत्
किं वा शङ्करदेशिकैर्हि भणितं भाष्ये तु शारीरके।
भामत्यां यदुपाचरत् कृतिवरो वाचस्पतिर्मैथिल:
संहत्यैतदहो समस्तमपि तद् **राजेश्वरे** राजति।।१७।।

जायन्ते भुवने सदैव वितते जाता जनिष्यन्त्यपि
ते ते पण्डितसञ्चया: प्रतिदिनं प्रारब्धकर्मोदयात्।
किन्त्वेते विबुधा निधाय हृदये हस्तं वदन्त्वादराद्
**श्रीराजेश्वरशास्त्रि**पण्डिततुलां कश्चित् कदाप्यर्हति।।१८।।

श्रीमत्संस्कृतवाङ्मये हि विलसन्त्येतानि सर्वाण्यहो
भूयो वृद्धलघुत्रयात्मकमहाकाव्यानि कम्राणि षट्।
श्रीमत्पण्डितमल्लिनाथविबुधव्याख्याविमर्शादिकं
सर्वं तत् प्रतिपङ्क्ति यस्य वदने भात्येष **राजेश्वरः**॥१९॥

यो वैशेषिकदर्शने कणचरो न्यायेऽपरो गौतमो
मीमांसासु च जैमिनिः पुनरहो योगेऽथ भोगीश्वरः।
साङ्ख्ये यः कपिलः पराशरसुतो वेदान्तशास्त्रे सदा
सोऽयं दर्शनदर्शनीयधिषणो भात्येव **राजेश्वरः**॥२०॥

श्रीमत्पाणिनिपण्डितेन्द्रकथितं यद्रत्नसूत्रायितं
श्रीकात्यायनकोविदेन च ततो व्याख्यानविख्यापितम्।
शाब्दं तत्त्वमहः पतञ्जलिमहाभाष्यामृताह्लादितं
यस्मिन् सर्वमहो विभात्यनुदिनं **राजेश्वरो**ऽसौ महान्॥२१॥

आम्नायोदितमार्गमार्गणमहामार्गप्रकर्षोज्ज्वलः
काव्यानन्दसरस्वतीह विहरल्लीलामरालोपमः।
कूटत्कर्कशतर्ककाननमहानागेन्द्रपञ्चाननः
सोऽयं सम्प्रति भाति सम्प्रतितरां **राजेश्वरो** देशिकः॥२२॥

भक्तिज्ञानविरागनिष्कृतिलसत्तत्त्वामृतैकास्पदं
श्रीमद्भागवतं पुराणममलं वर्वर्ति सर्वोपरि।
मान्यश्रीधरवङ्गधीरकृततद्भावार्थसन्दीपिका
व्याख्याऽप्यस्य मुखाम्बुजेऽरमत सा **राजेश्वर**स्तादृशः॥२३॥

यच्छ्रीमद्भरतर्षिसंस्कृतमहो तन्नाट्यशास्त्रं महद्
मूलं यत्तु धनञ्जयादिविदुषां षट्त्रिंशदध्यायभृत्।
नानाभावविभावजातरसनिष्पत्त्येकलीलास्थलं
**श्रीराजेश्वरपण्डिते**ऽभिनवभारत्या रतं सन्ततम्॥२४॥

**श्रीवामाचरणार्यवर्यविदुषां** प्रज्ञासमुद्भासिता
नव्यन्यायमनोज्ञकल्पलतिका **राजेश्वरा**लम्बिता।
श्रीमत्**पण्डितशुक्ल**वंशरुचिरारामं तु लब्ध्वाऽधुना
जागर्ति प्रकटं तु तत्समभवद् **राजेश्वर**स्याशिषा॥२५॥

जीवस्येव कचो विधेस्तु पुलहः शक्तिर्वसिष्ठस्य यः
शक्तेश्चापि पराशरः पुनरहो व्यासश्च तस्येव सः।
व्यासस्येव शुकस्तथेध्मवहनोऽगस्त्यस्य पुत्रो यथा
पुत्रो **लक्ष्मणशास्त्रिणो**ऽप्युदभवद् **राजेश्वर**स्तादृशः॥२६॥

पूर्वं हन्त चतुर्मुखः स्वमुखतो वेदान् समस्तानपि
प्रादुर्भाव्य च तस्य रक्षणकृते चिन्तातुरः सोऽभवत्।
तस्मादुत्तरदक्षिणात्मकदिशोर्विन्ध्याचलस्यावधिः
सीमानं हि विनिश्चिकाय च धिया श्रीभारतेऽस्मिन् पुरा॥२७॥

श्रीविन्ध्याचलतस्ततः समभवन् ते दक्षिणस्यां दिशि
पञ्चद्राविडसञ्ज्ञया त्वभिहिता ये वैदिका ब्राह्मणाः।
एवञ्चोत्तरदिक्षु ये समभवन् ते पञ्चगौडा द्विजाः
स्वाध्यायाध्ययनादिकैकमतयः षट्कर्मचित्ताशयाः॥२८॥

पञ्चद्राविडपण्डितान्वयमहापाथोधिजैवातृकः
सासील्**लक्ष्मणशास्त्रि**पण्डितवरो वेदाभिमानोज्ज्वलः।
पुत्रस्तस्य तु सैक एव समभूत् संख्यावतां केसरी
काशीपण्डितमण्डलीपरिवृढो **राजेश्वरद्राविडः**॥२९॥

श्रीमद्द्राविडवंशमङ्गलमहालक्ष्मीदयालालितः
श्रीमल्**लक्ष्मणशास्त्रि**सूनुरनिशं विद्वल्ललाटन्तपः।
काशीराजयशस्सुरद्रुमलताकेदारसंस्कारभूः
श्रीमान् पण्डितराज एष सततं **राजेश्वरो** राजति॥३०॥

भूयः पण्डितमण्डलीमणिमहामालासुमेरुप्रभः
श्रीविश्वेश्वरपादपद्मयुगलीमत्तद्विरेफोत्तमः।
शङ्कापङ्ककलङ्ककश्मलकलत्सन्देहसन्दोहहृद्
श्रीमान् पण्डितराजशब्दमहितो **राजेश्वरो** राजति॥३१॥

**प्रभुनारायणसिंह**काशिनृपतिर्मत्तेभविक्रीडितोऽ-
प्यनुगङ्गं समतिष्ठिपत् करकजैः श्रीवेदविद्यालयः।
प्रतिवर्षं समबीभवत्त्वभिनयो नाट्यस्य, यस्याज्ञया
**मनुदेवो**ऽहमकार्षमत्र करुणामूर्तिस्स **राजेश्वरः**॥३२॥

शुद्धाचारपरम्परापरिलसत्स्मार्तक्रियाप्रक्रिया-
प्राचुर्यप्रचरत्प्रचारचरितालङ्कारचिन्तामणिः।
शास्त्रार्थाऽऽहववादिवादजयकृच्छिष्यप्रशिष्यार्चितो
राराजीति सदाऽमितेन यशसा **राजेश्वरद्राविडः**॥३३॥

श्रीमद्भारतराजनीति-रमणी-प्रेम-प्रमेयास्पदं
प्रोद्यत्प्राञ्जलकीर्तिचारुविलसच्छत्रावलीलालितः।
सच्छास्त्रानुगरीतिनीति-चमर-द्वन्द्वानिलाऽऽवीजितः
सम्पूज्यः प्रजया जयान्वितमती राजेव **राजेश्वरः**॥३४॥

वङ्गान्तर्गतमल्लभूमिनृपतिप्रौढैकविद्वत्सभाऽ-
लङ्कारास्पदसर्वशाब्दिकशिरोरत्नैकशब्दार्चितैः।
अस्मत्पूज्यपितामहैः समभवद् मध्येसभं विस्तरात्
शास्त्रार्थः खलु यस्य पूजितपितुश्चासीत् स **राजेश्वरः**॥३५॥

**श्रीमद्विष्णुपुरेन्द्र**पण्डितसभाध्यक्ष्यैकशोभास्पदाद्
**राजाराम**बुधेश्वरात्समभवच्छास्त्रार्थयज्ञस्तु यः।
सर्वज्ञः स च सर्वविच्छ्रुतिपदे श्राद्धाहनि प्राञ्जलः
साऽऽसील्लक्ष्मणशास्त्रिपण्डितपती **राजेश्वरो** यत्सुतः॥३६॥

पाश्चात्त्याः परमाणुखण्डनमहो चक्रुस्स्वयन्त्रैर्यदा
तेनाऽभूत् खलु भारतर्षिकथनं सर्वं हि चिन्तास्पदम्।
एतेनैव तदा समाहितमहो शास्त्रं प्रमैकास्पदं
नूनं पण्डितराजचारुपदवी सत्यं भवत्यन्ततः॥३७॥

वेदानां यदपौरुषेयमहिमा मीमांसकाविष्कृतः
शङ्कापङ्ककलङ्ककालिमधियः केचित् प्रलापं जगुः।
तत्रायं प्रथमं त्विदम्प्रथमतामाश्रित्य चक्रे पणं
तत्सिद्धिं स्वयमाचकार सकलां **राजेश्वरस्तादृशः**॥३८॥

काशीराजपदोज्ज्वलो विजयते यो**ऽनन्तनारायणः**
पारम्पर्यसमाढ्यवेदसरणीशाखासमाध्यायकः।
पारेगङ्गमभूद् यदीयविमलस्वारामृतस्यन्दनं
सर्वं पण्डितराजपण्डितपते **राजेश्वरस्याज्ञया**॥३९॥

श्रीमत्संस्कृतवाङ्मयोन्नतिलतावासन्तपुष्पोत्सवः
सर्वत्र प्रसरीसरीतु सततं तच्चिन्तयित्वा ध्रुवम्।
'नाट्यानां झटिति प्रयोगसरणिः तामाश्रयध्वं बुधाः'
मामाज्ञापयदेव हन्त कृपया **राजेश्वरो**ऽर्च्यो न कैः?॥४०॥

सौजन्यव्यवहारमूलकमहानीतिप्रथास्थापकै-
र्नाट्यानां जनतासु तास्वभिनयव्यापारकार्यैरहो।
नूनं स्यात् स्वविचारविस्तर इति ज्ञात्वा स्वयं चाचरन्
मामादिश्य कृपास्पदं विहितवान् **राजेश्वरो**ऽसौ गुरुः॥४१॥

मामाहूय पुरा त्विदम्प्रथमतामाश्रित्य सोऽसौ स्वयं
नाट्यं तत् करणीयमेवमिति यः कारुण्यतश्चादिशत्।
तूर्णं तत्कृपया मयाऽपि च तदा **श्रीवेदविद्यालये**
**व्यायोगः** किल तत्र **भास**रचितो भूयोऽभिनीतो मुदा॥४२॥

एतस्मात् परतस्तु तत्करुणया नाट्योत्सवोऽसौ महान्
काश्यामत्र बहुत्र तत्र बहुधाऽबोभूयत प्राञ्जलः।
भूयोऽसौ च समुद्दधार भरताख्यं नाट्यशास्त्रं महत्
सोऽयं पण्डितराजराजितवपू **राजेश्वरद्राविडः**॥४३॥

एवं संस्कृतवाङ्मयेऽस्ति विपुलं लोकोपकारोज्ज्वलं
तत्तच्छास्त्रकदम्बकं बहुविधं शस्त्रास्त्रदिग्दर्शकम्।
एतेषां व्यवहार एष हि भवेद् भूयः कथं भारते
तच्चिन्तातततितानमानसधनो **राजेश्वरो**ऽसौ महान्॥४४॥

काश्यामत्र विभाति नाटकमयी या नागरी मण्डली
तस्याः सम्प्रति हन्त नूत्नभवनं तत्कर्तृभिर्निर्मितम्।
तस्योद्घाटनकर्मणे ननु यदा **राजेश्वरः** प्रार्थित-
श्चक्रे संस्कृतनाटकेन च तदा तत्कर्म सोऽयं स्वयम्॥४५॥

तेनादिष्ट इह स्वयं प्रथमतः **श्रीरामशास्त्री** गुरु-
र्मामाहूय गुरूक्तशासनमहो आदिष्टवान् स्नेहतः।
श्रीमद्दूतघटोत्कचं पुनरहं व्यायोगरूपं च तत्
तत्रानुष्ठितवान् यदुक्तिकृपया वन्द्यः स **राजेश्वरः**॥४६॥

आसीत्तत्र महोत्सवः किल तदा साप्ताहिकः सुन्दरः
प्रत्येकं दिवसे कृतोऽप्यभिनयः **श्रीनागरीमण्डले**।
तत्रैव प्रथमे दिने सुरगवीहासस्य भासस्य तद्-
रूपस्याभिनयो मयैव विहितो **राजेश्वर**स्याज्ञया॥४७॥

तन्नाट्योत्सव एव तत्रभवता **राजेश्वरेण** स्वयं
सम्पूर्णं खलु नाट्यशास्त्रमखिलं षट्त्रिंशदध्यायभृत्।
श्रीमत्पञ्चमवेद इत्यभिधया ख्यातं धरित्रीतलेऽ-
प्याद्योपान्तमुपाश्रितोऽभिनयभारत्यन्वितं हेलया॥४८॥

यच्छिष्या **हरिरामशुक्ल**बुधराट् **श्रीरामचन्द्र**स्तथा
सम्मान्यो **जयराम**तार्किकमणिः **श्रीरामशास्त्री** तथा।
**दातारो** नयविद्वरो **गणपतिर्हेवारशास्त्री** महा-
नन्येऽनन्यधियोऽपि मग्नहृदयाश्शास्त्राम्बुधौ सन्ततम्॥४९॥

क्वासौ कर्कशतर्कयुक्तिविलसच्छास्त्रार्थकूटोद्भवत्-
पङ्क्तिप्रौढविवादजालजटिलव्यापारवाग्डम्बरः।
क्वायं नायकनायिकाऽतिमधुरप्राशस्त्यभावोल्लस-
ल्लीलालास्यकलाविलासविलसद्वैदग्ध्यनाट्योत्सवः॥५०॥

आम्नायस्य परम्परा प्रतिदिनं पृथ्वीं पुनातु प्रगे
चिन्तैषाऽप्युदियाय यस्य हृदयाम्भोजे सदैवानिशम्।
तत्सिद्ध्यै तु समादिदेश नृपतिं श्रीकाशिराजं तथा
भूयः **श्रीमेहताकुलं** तदुभयैस्तादृक् स्वनुष्ठीयते॥५१॥

तत्तच्छास्त्रसमुद्रलङ्घनविधिप्राचुर्यचातुर्यधीः
शङ्काऽऽतङ्ककलङ्कपङ्कदनुजव्यूहैकविध्वंसकः।
श्रीमद्रामपदाब्जपीठविलसद्भृङ्गायमाणोऽनिशं
भूयः **पण्डितराज** एष लसति श्रीमान् **हनूमानयम्**॥५२॥

पृथ्व्यां सम्प्रति तीर्थराजपदभृत् पूज्यः प्रयागो ध्रुवं
विद्वन्मञ्जुलभारतीपरिषदा तत्रत्यया साऽऽग्रहम्।
यस्याऽभूदभिनन्दनं हि **'ऋषिकल्पन्यास'**पुस्तार्पणैः
सोऽयं **'पण्डितराज'**चारुपदवीधन्योऽस्ति **राजेश्वरः**॥५३॥

पुत्रा यस्य लसन्ति तेऽग्निसदृशा मान्यास्त्रयः पण्डिता
एतेषु प्रथमो विभाति सततं **वीरेश्वर**द्राविडः।
योऽयं मध्यम एष तत्र तनयो नाम्नास्ति **विश्वेश्वरः**
पश्चात् सोऽपि **गणेश्वरो** विजयते योऽध्यापनैकव्रतः।।५४।।

श्रीमद्भासकृतस्य तस्य तु पुरा व्यायोगरूपस्य यत्
सञ्जातोऽभिनयस्तदीयसविधे तस्याज्ञया मत्कृतः।
एतस्मात् परतस्तु तेन महता यो मध्यमस्तत्सुतो
भूयो **मध्यमशब्द** एव सततं प्रोक्तस्सदा तत्कृते।।५५।।

योऽयं श्रीपितृवाक्यमात्रपरवानाजीवनं संस्थितो
यो वा श्रीमनुमार्गपालनविधिव्यापारलीलाक्षमः।
श्रीमद्भारतराजनीतिनियमप्राप्तप्रतिष्ठामृतो
रेजे **पण्डितराज** एष **भगवाञ्छ्रीरामचन्द्रो** भुवि।।५६।।

यो गीतार्जुनकीर्तिचारुमहिमा गोरक्षणैकव्रतः
किं वा नन्दयशोदयादृततनुर्विश्वेश्वराद्यर्चितः।
तत्तच्छास्त्रसमूहवेणुविलसत्पीयूषयूषः सदा
श्रीमान् **पण्डितराज** एष भवति **श्रीकृष्णचन्द्रो** ध्रुवम्।।५७।।

यश्चक्रे पितृवाक्यमात्रशरणो लोके पुराऽत्यद्भुतं
भूयः श्रीयुतरामचन्द्रशरणव्यापारमोदान्वितः।
श्रीमच्छङ्करपादपङ्कजकृपासम्प्राप्तशास्त्रामृतो
नूनं **पण्डितराज** एष भुवने **श्रीभार्गवोऽसौ** महान्।।५८।।

यो नैयायिकनाकनायकनृपो वेदान्तसिद्धान्तधी-
र्यो वैयाकरणाम्बुजाम्बरमणिः साहित्यपाथोनिधिः।
मीमांसामतमार्मिको नृपनयालङ्कारझङ्कारकः
श्रीमान् **पण्डितराज** एव धरणौ **राजेश्वरो** राजति।।५९।।

अद्यत्वेऽपि पुरातनोदितसदाचारैकरक्षाचणो
भूयोऽनुष्ठितदर्शयागविविधप्राशस्त्यविद्याविधिः।
स्वाध्यायाऽध्ययनोदिताखिलमहानुष्ठाननिष्ठादरो
भूयः **पण्डितराज** एव हि कलौ **राजेश्वरो** दृश्यते।।६०।।

सर्वे संस्कृतपण्डिताः प्रतिपलं भाषन्त एव ध्रुवं
भूयः संस्कृतपाठनार्थमनिशं छात्रेभ्य एभ्यो मुहुः।
हंहो न्यक्कृतवेतनो निजसुतान् योऽपाठयत् संस्कृतं
**सामानाधिकरण्यभागिह मनोवाक्कार्यवृन्दैरसौ**॥६१॥

श्रीमत्पण्डितनीलकण्ठविहितं श्रीमन्महाभारते
श्रीमद्भारतभावदीपपदभृत् व्याख्यानमाराजते।
एतस्याध्ययनं कृतं प्रतिपदं चान्विष्य चान्विष्य यैः
सासीत् **पण्डितराज**शब्दविभवो **राजेश्वरद्राविडः**॥६२॥

अस्मिन् भारत आर्षशास्त्रकथिता आसन् पुरा संस्कृताः
श्रीमन्नारदविष्णुलल्लशुनकापत्यादि-ऋष्युत्तमैः।
यद्वैमानिकयानयन्त्रघटनाविष्कारयुक्त्यादयोऽ-
ध्येता तद्विषयस्य शान्तमनसा भात्येष **राजेश्वरः**॥६३॥

कीलत्कश्मल-कोटि-कोटि-कलना-काठिन्य-कूटोत्कटत्-
कालुष्याङ्कुर-कूट-कूट-विकटाऽऽकारप्रकाराऽऽकरैः।
कर्कत्कर्कश-तर्क-तार्किक-वितर्कोदर्कतर्काङ्कुरैः
खेलन् क्रीडनकैर्विभात्यनुपदं **राजेश्वरो** धीधनः॥६४॥

**'नासा'**केन्द्रगतान्तरिक्षसमनूसन्धानदीक्षाधन-
श्रीवैज्ञानिकवायुयानविषयाविष्कारसंस्कारकैः।
भूयः स्थापितसर्वसंशयविषं मां यो मुदाऽबोधयत्
तादृक्षं किल पण्डितेन्द्रमुकुटं **राजेश्वरं** तं भजे॥६५॥

प्राचीनोदितवायुयानविषयाविष्कारविख्यापकोऽ-
भूद् वैज्ञानिक एषकः **शिवकरो बापूजि**नामा बुधः।
यश्चक्रेऽत्र **मरुत्सखं** निरुपमं पूर्णं विमानं धिया-
मामुत्साहयितारमेनमहकं **राजेश्वरं** साऽऽश्रये॥६६॥

अर्वाचीनकभारतीयसहितं वैज्ञानिकं पुस्तकं
प्राप्याहं समुपागतः किल महाराष्ट्र्यास्तु हिन्द्यां ततः।
यो भाषान्तरहेतवेऽप्यचकथत् स्वीयं कनिष्ठं सुतं
सद्यो हन्त **गणेश्वरं** द्रुतमती **राजेश्वरोऽ**भूत्तथा॥६७॥

धन्योऽसौ कविराजराजिमुकुटालङ्कारमुक्ताप्रभा
**गोपीनाथ**समाह्वयो मम गुरू राजेश्वराद्यर्चितः।
आदिष्टः किल येन सम्प्रति तदा वैमानिकांस्तान् विधी-
नन्वेष्टुं ननु तत्र दत्तधिषणो **राजेश्वरो**ऽसौ महान्॥६८॥

यो मित्रावरुणाख्यविद्युदुदयच्छक्तिप्रवाहोद्वलद्-
वेगप्राप्तनभस्समुड्डयनभूरिप्रक्रियाख्यापकः।
सोऽयं संस्कृतपण्डितोऽपि सततं विज्ञानविज्ञापको
नूनं **पण्डितराजचारुपदवीं** चक्रे यथार्थामसौ॥६९॥

नूनं संस्कृतवाङ्मयाध्ययनतो वस्तूनि सर्वाण्यपि
श्रीपातञ्जलभाष्यसंस्थितपरोक्षेलिट्विधानोदितः।
अध्याप्यन्त इदं विविच्य नितरां शब्दैश्च शब्दानहो
निर्विण्णो व्यवहारमास्थित इह श्रीमान् स **राजेश्वरः**॥७०॥

पारेकाश्यनुगङ्गमेवमभवद् दुर्गो महान् दुर्गम-
स्तस्मिन् नु प्रथमे वयस्यनुदिनं यो**ऽनन्तनारायणः**।
तस्माद् भारतराजनीतिविषयान् सर्वान् समध्यैष्ट यो
श्रीमत्**पण्डितराज**तस्समभवत् **काशीनरेशो**ऽधुना॥७१॥

एतस्मिन् विषये महद्भिरखिलैस्सम्प्रार्थितोऽनेकशो
मान्य**श्रीहरिरामशुक्ल**विबुधं योऽध्यापयत् सन्ततम्।
प्रत्यक्षं हि हितोपदेशपठने कः शाल्मलीपादपः
पृच्छायां समबोधयद् ननु पुरः स्पृष्ट्वा स **राजेश्वरः**॥७२॥

शेषाशेषगवीनवीनपथकृन्नागेशकालेस्तुत-
श्रीमद्व्याकरणाभिधागममहापीयूषयूषः सदा।
एतद् यस्य मुखारविन्दनिहितं रात्रिन्दिवं साग्रहं
श्रीमान् **पण्डितराज** एष महितो **राजेश्वरो** राजति॥७३॥

श्रीवैशेषिकदर्शनं पुनरहो न्यायस्तथैतद्द्वयं
नव्यन्यायमहानयो विजयते पृथ्व्यां मिलित्वा ध्रुवम्।
तत्सर्वं किल हन्त यस्य वदनाम्भोजे स्म माध्वीकति
प्रत्युत्पन्नमहामतिर्ननु भवानाभाति **राजेश्वरः**॥७४॥

श्रीवैशेषिकदर्शनं निरुपमं श्रीमत्कणादेरितं
तत्राभाति पदार्थसङ्ग्रहमयं यद्भाष्यरत्नं महत्।
यत्रैवोदयनोदिताऽस्ति किरणावल्ल्यादृता धीधनैः
सर्वं यन्नखदर्पणायितमभूद् **राजेश्वर**स्तादृशः॥७५॥

नव्यन्यायमहानयो ह्युदभवद् ग्रन्थादमुष्माद् यतः
श्रीगङ्गेशकृपाकटाक्षपरवान् श्रीतत्त्वचिन्तामणिः।
वङ्गश्रीरघुनाथपण्डितमुखैर्यो वर्धितः सश्रमं
लीलाक्रीडनकं हि यस्य समभूद् **राजेश्वर**स्तादृशः॥७६॥

नव्यन्यायनयोऽभवत्तु मिथिलादेशे हि गङ्गेशतो
वङ्गे यो रघुनाथमुख्यविबुधैः सम्प्रापितोऽतिश्रमात्।
श्रीवामाचरणात् पुनस्तदखिलं श्रीकाशिकायां स्थितं
पात्रे तैलपृषद्यथाऽभवदसौ **राजेश्वरे**ऽस्मिन् पुनः॥७७॥

श्रीमन्मैथिलवङ्गतार्किकवरैर्यो वर्धितः सश्रमं
नव्यन्यायमहानयस्त्रिजगतीकौतर्क्यशङ्कापहः।
व्याख्याटिप्पणिकानुवृत्तिसुभगः सर्वोऽप्ययं साग्रतो
भूयोऽवर्धत यत्र तत्रभवति श्रीयुक्त**राजेश्वरे**॥७८॥

व्याख्या यास्तु मणेश्च दीधितिरसौ तत्त्वप्रकाशस्तथा
व्याख्या याऽप्यनुमानखण्डमहिता या सा मयूखाभिधा।
आलोकश्च प्रकाश एष रुचिधीजातः प्रकाशोऽप्यसौ
सर्वं बुद्धिगतं विभात्यनुपदं **राजेश्वर**स्तादृशः॥७९॥

भूयो यस्तु मयूख एष **जयराम**न्यायपञ्चाननै-
र्यश्चालोकविवेक एष च **भवानन्द**स्य टीका तथा।
व्याख्या **श्रीहरिराम**पण्डितकृता गूढार्थसन्दीपिका
सर्वं यस्य मतौ मतं मतमहो **राजेश्वरो**ऽनन्वयः॥८०॥

भट्टाचार्य**गदाधरेण** विहिता टीका च गादाधरी
सेयं सम्प्रति माथुरी च सततं श्रीतत्त्वचिन्तामणौ।
एतत्सर्वमहो विभाति सततं गङ्गेशचिन्तामणौ
तच्चिन्तामणिधारणोज्ज्वलमती **राजेश्वरो**ऽभूत्तथा॥८१॥

योऽभूच्छ्री**रघुनाथ**तार्किकशिरोरत्नं हि वङ्गावनौ
नव्यन्यायविचारविस्तरमहाकार्यैकदीक्षागुरुः।
सर्वं तत्स्वयमेव सद्गुरुकृपाकारुण्यतारुण्यतः
सञ्जग्राह समासतो गुरुगृहे **राजेश्वरो**ऽसौ कृती॥८२॥

श्रीमत्काशिकराजकीयसुरगीर्विद्यालयेऽस्मिन् पुरा
नव्यन्यायपदे भवेद् ध्रुवमहो वङ्गीय एषोऽधुना।
आङ्ग्लाध्यक्ष इदं विचार्य च धिया **श्रीचन्द्रनारायणं**
श्रीमत्पण्डितराट्परात्परगुरुं चक्रे तमस्मिन् पदे॥८३॥

वङ्गानां सुमहाधिकार उदितस्तन्न्यायशास्त्रे तदा
मत्त्वैतत्तु परं महायुतमहोपाध्यायमेनं ततः।
वङ्गीयञ्च शिरोमणिञ्च विदुषां **कैलाशचन्द्राभिधं**
तं नैयायिकनाकनायकममुं चक्रे तु तस्मिन् पदे॥८४॥

पूर्वं काशिकराजकीयसुरवाग्विद्यालयो योऽभवद्
न्यायाध्यापनहेतवेऽत्र समभूच्छ्रीन्यायपञ्चाननः।
यन्नामस्मरणाद् भवेन्नयमतिश्श्रीचन्द्रनारायणः
पारम्पर्यममुष्य वर्धितमहो **राजेश्वरेणा**दरात्॥८५॥

पश्चात् काशिकराजकीयसुरवाग्विद्यालये सोऽभवत्
सौभाग्यात् परमो गुरुर्गुरुसमो **राजेश्वर**स्यास्य यः।
धीराणां च तदा शिरोमणिरलं कैलाशचन्द्रो महान्
शिष्याः षोडश भान्ति यस्य विदुषो न्यायैकरक्षामणेः॥८६॥

शिष्या यस्य महापदोत्तरमहोपाध्यायधन्यास्समे
यो नैयायिकधीशिरोमणिरहो व्याख्यानवाचस्पतिः।
श्रीवैशेषिकदर्शने स च तदा भाष्यस्य कर्ताऽभवद्
यत्सच्छिष्यपरम्परालिसुमनोगुच्छस्स **राजेश्वरः**॥८७॥

प्राचार्यः खलु तत्र यस्समभवत्काले तदानीमहो
**थीबो**नामक एष आंग्लविबुधो यस्संस्कृतस्यादृतः।
सेवाकालनिवृत्तितः परमपि न्यायाब्धिपारङ्गमं
भूयश्चाप्यसकृत् तदीयसमयाऽऽवृद्धिं मुदैवाकरोत्॥८८॥

तस्यासीदनुगङ्गमत्र भवनं शिष्यप्रशिष्यावृतं
तस्मादागमनेन किञ्चिदपि तत्कष्टं भवेच्चिन्तितः।
**थीबोसाहब**नामकेन शिबिकायानं व्यवस्थापितं
सर्वं पण्डितराजवक्त्रकमलादश्रावि पूर्वं मया॥८९॥

दीधित्यास्तु प्रकाशिकास्तु बहवष्टीकाः समुट्टङ्किता
आलोकोऽपि रहस्यनाममहितव्याख्यादिभिर्भूषितः।
कालीशङ्करपण्डितैर्विरचितैस्तैः क्रोडपत्रैर्युत-
स्तद्धस्तामलकायमानमभवद् **राजेश्वर**स्याखिलम्॥९०॥

श्रीवात्स्यायनभाष्यकीर्तितमहो तन्न्यायसूत्रं महद्
यच्चोद्द्योतकरोदितं तदुपरि श्रीवृद्धमिश्रोदितम्।
सम्मान्योदयनार्यवर्यकथितं तात्पर्यशुद्ध्याह्वयं
सर्वं हस्ततलस्थितं समभवद् **राजेश्वरे** धीधने॥९१॥

श्रीकाणादपदार्थसङ्ग्रहमयं यद्भाष्यरत्नं महत्
तस्मिञ्छ्रीधरतार्किकेन्द्ररचिता श्रीन्यायकन्दल्यसौ।
एवं सा किरणावली ह्युदयनाचार्यैस्समाविष्कृता
बुद्धौ सम्प्रतिभाति यस्य सततं सासीत्तु **राजेश्वरः**॥९२॥

श्रीमद्व्योमशिवार्यसन्निगदिता या व्योमवत्याह्वया
श्रीवत्सार्यमुखोद्गता निरुपमा लीलावतीयं तथा।
व्याख्यानानि च सन्ति सन्ति शतधा सर्वत्र सर्वाण्यहो
एकत्रैव समस्तमेतदभवद् **राजेश्वरे**ऽस्मद्गुरौ॥९३॥

श्रीमत्पण्डित**विश्वनाथ**सुमतिर्यो न्यायपञ्चाननो
**भट्टाचार्य**पदोज्ज्वलः समभवद् **विद्यानिवासा**त्मजः।
ग्रन्थस्तस्य तु **कारिकावलि**रियं भाति प्रकामं भुवि
नव्यन्यायगताभिधेयविषयाऽऽसाराऽमृतैकास्पदम्॥९४॥

श्रीश्रीमद्गुरुपादभक्तिविलस**द्राजीव**बोधोद्धुरा
स्वोपज्ञं खलु भाति तत्र विवृतिः **सिद्धान्तमुक्तावली**।
व्याख्यामूलसमन्वयोभयमयो ग्रन्थः सदाऽसौ महान्
आसेतोरपि चाहिमालयगिरेः सर्वत्र रराष्ट्यहो।।९५।।

व्याख्याटिप्पणिकादयोऽतिविमलास्तस्याऽत्र पारेगिरां
व्याख्ये द्वे किल तत्र धीरनिवहैर्भातस्तमामादृते।
भट्टः कश्चिदभूदसौ खलु **महादेवाभिधानो** बुधः
पुत्रस्तस्य तथैव यो **दिनकरो** भट्टो बुधग्रामणीः।।९६।।

रराजीति तु कारिकावलिगता **सिद्धान्तमुक्तावली-**
व्याख्याख्यापितविग्रहा निरुपमा तत्र **प्रकाशा**भिधा।
व्याख्या या रचिता पुरा किल **महादेवेन** पित्रा स्वयं
तत्पूर्तिं न विलोक्य दूनहृदयः **पुत्रो** मुदाऽपूरयत्।।९७।।

तत्राप्यस्ति **तरङ्गिणी**त्यभिधया व्याख्या प्रसिद्धा भुवि
भट्टाचार्यमहाशयेन रचिता या **रामरुद्रेण** सा।
तत्पूर्तिं न विलोक्य पण्डितजना दोदूयमाना भृशं
श्रीराजेश्वरशास्त्रिणा मतिमता पूर्तिस्तदीया कृता।।९८।।

श्रीमद्ब्रह्मचतुर्मुखावलिमहापद्माटवीनिर्गलद्-
माध्वीकद्रवमोदमानविबुधश्रेणीमरालीसमा।
पारम्पर्यसमाश्रयश्रमधना पारम्परी प्राक्तनी
तत्र प्रौढमतिः सदा समभवत् काशीनरेशोऽधुना।।९९।।

काशीमानसराजहंस इह यः **काशीनरेशो**ऽभवद्
मध्येमार्गमसौ मुहु**र्हरहर**ध्वानैस्स्म जेगीयते।
काशीराज्यनिवासकृत्समनृणां **श्रीविश्वनाथः** सदा
सोऽयं भाति **विभूतिशब्द**महितो **नारायणो**ऽसौ महान्।१००।।

एतत्प्रेरणया पुराणनिवहा व्याख्यानुवादोज्ज्वलाः
काश्यन्ते खलु पण्डितैर्मुहुरहो प्रामाणिकाः सन्ततम्।
न्यासः कश्चन सर्वभारतमयः संस्थापितः सुन्दरः
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम्।।१०१।।

आसृष्टेरपि चालयादपि सदा तैस्तैः पुराणैरहो
कीतिर्यस्य हिमांशुरश्मिसुभगा जेगीयतेऽहर्निशम्।
येनाजीवनमेव भूषितमहो कौलाधिपत्यं महत्
श्रीमत्काशिमहीमहीपतिरलं यच्छिष्य एवाभवत्।।१०२।।

तत्पुत्रोऽपि तदीरितागममतिः सच्छास्त्रनिष्णातधी-
राम्नायोत्तमसामसस्वरमहागीत्येकनीतिव्रतः।
राज्ञा प्रेरित एव यस्य चरणाम्भोजे स्वयं सागतो
वेदव्याकरणादिसर्वविषयानध्यैष्ट सत्यश्रमः।।१०३।।

धन्यो यः स्वयमागतो खलु निजैर्मित्रैर्मुदा सादरं
सद्यः सम्मिलितुं च संस्कृतपरीक्षायाममुष्यामहो।
यस्तत्र प्रथमो बभूव च पुरा श्रीसाङ्गवेदालये
श्रीमत्**पण्डितराज**वैभवमिदं लोकोत्तरं किं न तत्।।१०४।।

सद्यो यो भुवि राजते सुरगिरोऽयं विश्वविद्यालयः
सासीत् काशिकराजकीयसुरगीर्विद्यालयः प्राक्तनः।
तत्रत्याङ्गलनायकैर्गुणगणानन्विष्य चान्विष्य ते
तत्तच्छास्त्रसमुद्रमन्थनधियः संस्थापिताः पण्डिताः।।१०५।।

श्रीनैयायिकनाकनायकनृपात् **कैलाशचन्द्रात्** परं
कोऽन्यस्तत्पदमर्हतीति? भुवने को वाऽपरस्तादृशः?
जिज्ञासा समभूत् तदैव महती प्राचार्यचित्तालये
तच्छान्त्यै तु **शिरोमणिर्गुरुवरः** सम्प्रार्थितः सादरम्।।१०६।।

न्यायाचार्यपदोज्ज्वलः समभवद् ज्येष्ठः सुतस्तद्गृहे
किन्त्वेनं समुपेक्ष्य तेन गुरुणा **कैलाशचन्द्रेण** सः।
**श्रीवामाचरणस्स्वशिष्यमुकुटं** निर्देशितः साग्रहं
सोऽयं **पण्डितराज**सद्गुरुवरो जातोऽत्र पश्चादहो॥१०७॥

**श्रीवामाचरणार्य**वर्यविदुषां शिष्यास्तु पारेशतं
सर्वत्रैव विभूषयन्ति जगतीं विद्वत्कदम्बोज्ज्वलाः।
सत्तत्त्वामृतशास्त्रसिन्धुमथनव्यापारलीलाधनो
**गोपीनाथ**कृतीश्वरोऽपि च यतः सोऽध्यैष्ट तां भामतीम्॥१०८॥

**श्रीवामाचरणस्तु** यस्त्रिजगतीनैयायिकैकाग्रणी-
स्तन्न्यायाभिमतप्रमाणसदृशाश्शिष्यास्तथान्येऽभवन्।
**गौडश्रीशिवदत्त** एष च ततः **पद्मप्रसाद**स्तथाऽ-
न्यो **वामाचरणश्च** पण्डितपती **राजेश्वरद्राविडः**॥१०९॥

नव्यन्यायमतप्रमाणमहिताश्शिष्या यदीयास्समे
चत्वारस्तु चतुर्दशात्मकमहाविद्यावदातश्रमाः।
एतेष्वेष समस्तशास्त्रनिकषग्रावोपमप्रज्ञया
भूयो भासितविग्रहो निरुपमो **राजेश्वरो**ऽभूदहो॥११०॥

यच्छ्रीमत्कपिलोदितं पुनरहो श्रीमत्कणादोद्गतं
यद्द्वैपायनवक्त्रपङ्कजमतं श्रीश्रीशुकास्यागतम्।
श्रीमज्जैमिनिसंस्कृतं तदथवा श्रीगौतमाविष्कृतं
सर्वं तत्तु समष्टिरूपमभवद् **राजेश्वराख्यं** महः॥१११॥

न्यायाचार्यपदाङ्कितस्य भवतो **राजेश्वरस्यास्य** यद्
श्रीनैयायिकनायकत्वमभवच्चात्यल्पमेतद् ध्रुवम्।
एतच्चाप्युपलक्षणास्पदमहो सर्वाणि शास्त्राण्यलं
नूनं यत्र लसन्ति सन्ति सततं सोऽस्त्येष **राजेश्वरः**॥११२॥

यत्प्रोक्तं मनु-याज्ञवल्क्य-लिखिताऽऽपस्तम्ब-शङ्खोशना-
हारीताङ्गिरसाऽत्रि-विष्णु-यम-दक्ष-व्यास-कात्यायनैः।
श्रीसंवर्त-वसिष्ठ-गौतम-मुखैर्यत्तु व्यवस्थापितं
तत्प्रामाण्यसमेधमानधिषणाधन्यस्स **राजेश्वरः**॥११३॥

या नैयायिकनायिका सुगतवाक्सिद्धाऽऽर्हतालम्बिनी
मीमांसामतमेदुरा श्रुतिशिखाचिन्तैकचिन्तामणी।
श्रीवैयाकरणाम्बुजाम्बरमणी या राजशास्त्रोज्ज्वला
मूर्तिः **पण्डितराजवाङ्मयमयी** वर्वर्ति सर्वोपरि॥११४॥

श्रीकामन्दक-विष्णुगुप्त-विदुराचार्यादिसम्भाषितं
लुप्तप्रायमभूत् समस्तभुवने राष्ट्रोन्नयैकास्पदम्।
एतत्सम्प्रति राजशास्त्रमखिलं प्रोद्धृत्य यत्नाच्छ्रमाद्
राराजीति स राजनीतिविभवो **राजेश्वरद्राविडः**॥११५॥

प्रस्थानत्रयभाष्यभास्वरयशोराजीवराजीवलत्-
श्रीमच्छङ्कर-मध्व-वल्लभ-महाऽऽचार्यादिसम्मानितः।
काशीपण्डितमण्डलीमणिमहामालासुमेरूपमः
सैकः **पण्डितराज** एष भुवने **राजेश्वरो** राजते॥११६॥

सारासारविसारसारधिषणासन्दीप्तदिव्याङ्गना-
सीमन्ताङ्गणसान्द्रसुन्दरमहासिन्दूरबिन्दूज्ज्वलः।
आम्नायागमवार्धिमन्थनलसत्पीयूषयूषश्रयः
श्रीमान् **पण्डितराज** एव सततं भात्यत्र **राजेश्वरः**॥११७॥

राजद्राष्ट्रिक-राजनीति-रचना-गोरोचना-चर्चितो
भ्राजद्भारत-भूमि-भूति-विभवालङ्कारसम्भूषकः।
सत्काव्यामृतयूषपिण्डविगलत्सौधैकसौधोपमः
श्रीमान् **पण्डितराज** एव नितरां नूनं वरीवर्त्यहो॥११८॥

शास्त्राम्भोनिधितत्त्वमन्थनमयः सत्काव्यविद्यामयो
धूलिक्षेपतमोनिवारणमयः शास्त्रार्थलीलामयः।
ज्ञानानन्दमयः कुधीक्षयमयः सत्पक्षरक्षामयो
नूनं **पण्डितराज** एव भुवने विद्यासुधातन्मयः॥११९॥

वृत्तिच्छेदमहापिशाचविकटदंष्ट्राकरालानल-
प्रप्सातप्रतिभाङ्कुरस्य मनुदेवस्यास्य बालस्य हा।
वृत्तिच्छेददशासु तासु महता येन स्वयं साग्रहं
सद्यो मत्कृत एव साधु विहिता सा शास्त्रवृत्तिस्तदा॥१२०॥

**राजारामस्य** वैयाकरणमृगपतेरस्ति पौत्रः कनिष्ठो
वीणापाणौ तथा श्रीपशुपतिबुधतः प्राप्तजन्मा द्विजो यः।
सम्पूर्णानन्दनामान्वितविबुधवचोविश्वविद्यालयीयो
यश्चक्रे पद्यमेतच्छतमथ **मनुदेवा**भिधानोऽधिकाशि॥१२१॥

**वीणापाणि**रसौ सतीमणिरलं माता यदीया मता
वेदव्यासकृपात आविरकरोद् यश्श्लोककूटान्यहो।
राराष्टि स्म यदीयचित्तकमले श्रीमन्महाभारतं
तातो मे सुकृतीश्वरः **पशुपति**स्तौ द्वौ नमाम्यादरात्॥१२२॥

यश्चक्रे खलु **पाकशासन**पराक्रान्तिं पुरा लीलया
**विद्वद्वैभव**मत्र **मारुतिशतव्याख्यान**मत्यादरात्।
**पातिव्रत्यजयञ्च शङ्करजयं शृङ्गारशृङ्गाटकं**
श्रीमत्**पण्डितराजवैभव**मिदं तस्यास्त्यहो सुन्दरम्॥१२३॥

एतच्चारु**विशुद्धवैभव**महाकाव्यानुजं साम्प्रतं
**श्रीवैमानिक**यानयन्त्रघटनाऽऽविष्कारमित्रं तथा।
**चम्पूसङ्गम**सोदरञ्च **सुषमासारस्वती**सोदरं
चक्रे **पण्डितराजवैभव**मिदं श्रीखण्डकाव्यं मुदा॥१२४॥

श्रीश्रीमत्कविराजराजिमुकुटालङ्कारमुक्ताप्रभा-
गोपीनाथपदारविन्दविगलत्पीयूषविश्रान्तिभूः।
श्रीमत्पण्डितराजचारुकरुणासारातिसाराश्रयः
सोऽयं **श्रीमनुदेव** एष च गुरोर्वृत्तं मुदैवालिखत्॥१२५॥

यश्चक्रेऽत्र **विदेशवैभव**महो तत्खण्डकाव्यं पुरा
सद्यो यो रचयाञ्चकार स **महाकाव्य**द्वयं सुन्दरम्।
**वीणापाणि**रसौ प्रसूः **पशुपति**स्तातो यदीयौ स्तुतौ
काव्यं पण्डितराजवैभवमिदं तस्याभ्युदीयादहो॥१२६॥

॥इति श्रीमत्सकलसतीशिरोमणि**वीणापाणिदेवी**श्रीमन्महाभारत-व्यासकूटाविष्कारक-पण्डितेन्द्र-साहित्यसार्वभौम-कविताकामिनीस्वयंवृत-**श्रीश्रीमत्पशुपतिभट्टाचार्य**कनिष्ठात्मज**मनुदेवभट्टाचार्य**-व्याकरणाचार्य-व्याकरणकेशरि-शास्त्रभूषण-शास्त्रार्थमहारथविरचितं **पण्डितराजवैभवाख्यं सपादशतकं** सम्पूर्णम्॥ श्रीरस्तु॥शुभमस्तु॥ गुरुगोविन्दसिंहजयन्ती, पौषी शौक्ली सप्तमी, २०५९ विक्रमाब्दः॥



# संस्कृतकाव्येतिहासवाङ्मयविमर्शः

**मिश्रोऽभिराजराजेन्द्रः**
कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी



पाण्डित्यदृष्ट्या शास्त्रदृष्ट्या वा यत्किञ्चिदप्युच्येत, तदन्यदेव; परन्तु प्रायेण सर्वोऽपि संस्कृतज्ञो वय्यासिकसूक्तिमिमां सम्यक्तया स्मरत्येव, यत्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।।

अनेन पद्येन रहस्यद्वयमुद्भिन्नं जायते। आद्यं तावदिदं यदितिहासपुराणाभ्यामेव वेदमन्त्रोक्तपुराकथारहस्यं व्याख्यातुं शक्यते। अपरञ्चेदं यदितिहासपुराणमर्मज्ञ एव भवति बहुश्रुतः। किञ्चाल्पश्रुतो भवतीतिहासपुराणज्ञानविरहितो जनः। परवर्तिसंस्कृतसाहित्यपरम्परायां वाल्मीकिप्रणीतं रामायणं **काव्यत्वेन**, द्वैपायनप्रणीतं महाभारतम् **इतिहासत्वेन**, तदुपज्ञमेव श्रीमद्भागवतं **पुराणत्वेन** ख्यातेः परां काष्ठामधिरूढानि संल्लक्ष्यन्ते।

एवं हि काव्येतिहासपुराणानि पृथक्संज्ञानि साहित्यसंहननानि। विषयेऽस्मिन् प्रभूतव्याख्यानं समुपलभ्यते शास्त्रग्रन्थेषु।

**काव्यमीमांसायाः** शास्त्रनिर्देशाख्ये द्वितीयाध्याये आचार्यराजशेखरोऽभिव्यनक्ति यद् वाङ्मयमुभयथा—शास्त्रं काव्यञ्च। शास्त्रमपि तत्र द्विविधम्—अपौरुषेयं पौरुषेयञ्च। अपौरुषेयं तावच्छ्रुतिः। पौरुषेयञ्च शास्त्रचतुष्टयम्—पुराणम्, आन्वीक्षिकी, मीमांसा, स्मृतितन्त्रञ्चेति।

यायावरीयो राजशेखरोऽपि पुराणं परिभाषमाणो ब्रूते—तत्र वेदाख्यानोपनिबन्धनप्रायं पुराणमष्टादशधेति। एवं हि वेदसमुपबृंहणकरं वैशिष्ट्यमितिहासस्य महाभारतोक्तं, काव्यमीमांसाकारेणापि समर्थितं दृश्यते।

पुराणप्रविभेद एवेतिहास इत्येकेषां केषाञ्चिन्मतं समुद्धरन् । राजशेखरः स्वयमपि समर्थयते, विवृणोति च तद्भेदद्वयम्—

परक्रिया पुराकल्प इतिहासगतिर्द्विधा।
स्यादेकनायका पूर्वा द्वितीया बहुनायका।।

अत्र तावद्रामनायका रामायणी कथा परक्रियारूपेणोदाहृता, पाण्डवकौरव-नायका च भारतीकथा पुराकल्पत्वेन।

वाङ्मयाङ्गभूतस्येतिहासस्येयमेव शास्त्रीया पृष्ठभूमिः। यथा चाङ्गीकरोति राजशेखरस्तदवितथमेव परिलक्ष्यते। पुराणेतिहासयोर्न किमपि महदन्तरम्। उभावेव शब्दौ प्रत्नत्वपर्यायभूतौ। पुराणं भवति प्रत्नं, प्राचीनं, पुराचीनमतीतं वा। पुराणे प्रतनप्रत्नपुरातनचिरन्तना इत्यमरः। इतिहासः पुरावृत्तमित्यप्यमरः। पारम्पर्यो-पदेशेऽपि इतिहैतिह्यशब्दौ प्रयुज्येते। तदप्युक्तममरकोशकृता—पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययमिति। एवं हि यद्भवति प्राक्कालीनं परम्परागतं वा तदेवोच्यते पुराणमितिहासश्च।

सम्प्रति निरूप्यते काव्येतिहासशब्दः। काव्यस्येतिहास इति षष्ठीतत्पुरुष-महिम्ना व्याख्यातुं शक्यते; परन्त्वत्र कर्मधारयसमासोऽपि भवितुमर्हति। तद्यथा—काव्यं चासौ इतिहासश्चेति काव्येतिहासः। अर्थात् **काव्यं सदपि यत्कविकर्म ऐतिह्यगुणसम्पन्नं भवति तदेवोच्यते काव्येतिहासः**। सरलतरपरिचयार्थं काव्येतिहास एव **ऐतिहासिककाव्य**मित्यप्युच्यते।

तर्हि, किन्नामेदमैतिहासिकं काव्यम्? किं काव्यमपि ऐतिहासिकाऽ-नैतिहासिकभेदाभ्यां पृथक्कर्तुं शक्यते, सम्प्रत्युच्यते। इतिहासो नाम पुरावृत्तम्। यदि काव्यस्य कस्यचित्कथानकं नूनं पुरावृत्तं, पूर्वघटितं वा तर्हि निश्चप्रचं तत्काव्यं भवत्यैतिहासिकं काव्यम्। यदि च काव्यवृत्तं कल्पनामात्राश्रितं तर्हि तत्काव्यं काव्यमात्रमेव। वस्तुत इतिवृत्तस्य पूर्वघटितत्वमेव किमपि सामान्यकाव्यं काव्येतिहासमहिम्ना संयुनक्ति। अत्रापि काव्येतिवृत्तस्य पारोक्षिकपूर्वघटितत्वं नाऽभिप्रेतम्। अन्यथा कादाचित्कपूर्वघटितत्वेन सर्वाण्यपि रामायणादीनि काव्यानि ऐतिहासिककाव्यान्येव भविष्यन्ति। वस्तुत आप्तं प्रत्यक्षदृष्टं वा पूर्वघटितत्वमेव काव्येतिहासलक्षणभूतम्। आप्तजनोपदिष्टे पूर्वघटितत्वे सति नवसाहसाङ्कचरितादीनि काव्येतिहासपदभाञ्जि। एतेषां कथानकं इतिहासग्रन्थेषूट्टङ्कितं सन्दृश्यते। प्रत्यक्षदृष्टं पूर्वघटितत्वं कथानकस्य यथा सत्यव्रतशास्त्रिप्रणीते इन्दिराचरिते, रामकुबेरप्रणीते मालवीयचरिते, माधव-अणेप्रणीते तिलकयशोऽर्णवे, ब्रह्मानन्दशास्त्रिप्रणीते नेहरूचरिते च परिलक्ष्यते।

किञ्च, गद्यशैल्या निबद्धा ऐतिहासिकप्रबन्धा अपि काव्येतिहासेभ्यः पृथगेव मन्तव्याः। पूर्वलक्षणकारैरपि एवंगुणविशिष्टा रचना आख्यायिकापदवाच्या एव। एवं हि पद्यविधयोपबृंहिताः पुरावृत्ताश्रितप्रबन्धाः काव्येतिहासाः (ऐतिहासिक-काव्यानि वा) गद्यविधयोपबृंहिताश्चाऽऽख्यायिका इति विवेकोऽस्माभिरङ्गीकरणीयः।

पुराणेतिहासशब्दयोरथर्ववेदमन्त्रेषूपलब्धत्वाद् भारतीयानां पुराणेतिहासज्ञानं निखिलेऽपि विश्वे प्राचीनतमं प्रतिभाति। तथापीर्ष्याद्वेषग्रस्ताः पाश्चात्त्यविद्वांसो भारतीयान् इतिहासलेखनपद्धतिविरहितानेवामन्यन्त। कियदुपहासकरमिदं तथ्यम्? पार्जिटरमहोदयः पुराणग्रथितस्यैतिह्यतत्त्वस्य प्रामाण्यं नैव स्वीकरोति। स्टीनमहोदयस्तु भारतीयान् इतिहासबुद्धिशून्यानेव मन्यते। स्टीनमहोदयस्य दुर्बुद्धिजन्यं मृषाक्षेपमिमं खण्डयन् भारतमनीषापक्षधरः फ्रेडरिक-मैक्समूलरोऽलिखत्—

Greece and India are two opposite poles. Greeks were happy everywhere. For them, this life was full of reality. But for Indians this life was merely a drama, a delusion. That's why India has no history.

यद्यपि विवरणेऽस्मिन् मैक्समूलरो भारतीयानामध्यात्मदृष्टिमेव सविशेषं पुरस्करोति न तेषामितिहासदृष्टिं द्रढयति, तथापि स्टीनमहोदयस्य भारतविद्वेषं प्रकारान्तरेण शमयत्येव।

परन्तु सन्दर्भेऽस्मिन् पक्षोऽयमेव सुप्रतिष्ठितस्तिष्ठति यदध्यात्मदृष्टिसम्पन्ना अपि भारतीयाः प्राचीनकालादेवेतिहासलेखननिपुणा आसन्। निरुक्तकारो यास्काचार्यः (खिस्तपूर्वसप्तमशतकीयः) वेदमन्त्रव्याख्यासन्दर्भे व्याख्यातृप्रचलिता-मैतिहासिकीं पद्यतिमुदाहरत्येव। अष्टादशपुराणपल्लवितं बृहत्तमं वाङ्मय-मितिहासाश्रितमेव। खिस्तपूर्वद्वितीयशतके विद्यमानो महाभाष्यकारः पतञ्जलिरपि **सुमनोत्तराभैमरथी**नाम्नीमाख्यायिकाद्वयीमुदाहरत्येव। आख्यायिकायाः प्रख्यातेति-वृत्तत्वमितिहासपरत्वञ्च सर्वथा सिद्धमेव। ततश्च विद्यत एव भारते राजकीय-शिलालेखानां बृहती परम्परा। तत्रापि महीयते मौर्यनृपतिरशोको यस्य शासनादेशा निखिलेऽपि राष्ट्रे समन्ततो व्याकीर्णा दृश्यन्ते। हरिषेणलिखिता समुद्रगुप्तप्रशस्तिः प्रयागे, शकक्षत्रपरुद्रदाम्नो गिरनारशिलालेखो गुर्जरराज्ये, वत्सभट्टिप्रणीता दशपुरप्रशस्तिः, ऐहोलशिलालेखो दक्षिणभारते, खारवेलप्रशस्तिः कलिङ्गे, भोजदेवस्य उदयपुरप्रशस्तिः—सर्वमेतद् इतिहासलेखनपरम्पराया एव अक्षय्यसाक्ष्यम्। किञ्च, देवालयस्थशिलाशासनानां दानसम्बन्धिताम्रपत्राणां

विविधनृपतिराजमुद्राणां वापीकूपतडागादिस्थापितशिलाशासनानां भूयसी संख्यापि भारतीयामितिहासपरम्परामेव दृढं पुष्णाति।

एवं सत्यपि, यदि कश्चित्पाश्चात्त्यो द्वेषग्रहिलधीर्भारतीयान् इतिहासकलाऽनभिज्ञान् स्वीकृत्यैवात्मानं गौरवार्हं मन्यते, तर्हि मन्येत नाम! सन्त्येव लक्षमिता मूढा आकाशकुसुमकल्पनामात्रसम्मोदिनः।

राजतरङ्गिणीकारो महाकविः **कल्हणो** न केवलमितिहासग्रन्थलेखकोऽपि त्वसौ भारतीयेतिहासलेखनपरम्परायाः सुदृढं साक्ष्यमपि प्रस्तौति। ग्रन्थरचनातः प्राक् कल्हणेन यदितिहासवाङ्मयमधीतं तेनैव सर्वं स्फुटं जायते। तेनैवाऽनुमातुं शक्यते यद्भारतराष्ट्रे कीदृग्विपुलं विविधञ्चैतिहासिकं वाङ्मयं ख्रिस्तीयद्वादशशतकं यावदुपलब्धमासीत्?

कल्हणः सुव्रतप्रणीता राजकथाः, क्षेमेन्द्रस्य नृपावलिं, नीलमुनिप्रणीतं नीलमतपुराणं, हेलराजस्य पार्थिवावलिं, पूर्वमिहिरप्रणीतं पुरावृत्तग्रन्थं, छविल्लाकरप्रणीतमितिहासं, विविधपूर्वसूरिप्रणीतान् अन्यांश्च एकादशमितानितिहासग्रन्थान् उदाहरति यान् सम्यगधीत्यैवाऽसौ राजतरङ्गिण्याः प्रणयने प्रवृत्तोऽभवत्। कथयति कल्हणः स्वयमेव—

दृग्गोचरं पूर्वसूरिग्रन्था राजकथाश्रयाः।
मम त्वेकादशगता मतं नीलमुनेरपि॥ (राज॰ १.१४)

इतिहासकारस्सुव्रतो विच्छिन्नाः प्राचीनराजकथाः स्वोपज्ञप्रबन्धेन ग्रथितवान्। अयं ग्रन्थः कल्हणस्य जीवनकालेऽपि प्रथिम्नः परां काष्ठामधिरूढ आसीत्। कल्हणस्तस्य गहनमध्ययनं कृतवान्। हेलराजप्रणीता पार्थिवावलिरपि द्वादशसहस्रपद्योपनिबद्धा सुविशाला कृतिरासीत्। काश्मीरराजवंशस्य मूलं निरूपयितुं कल्हणो नीलमतपुराणादेव महत्साहाय्यमादधे। स्वाधमर्णतां प्रकाशयत्यसौ स्वयमेव—

तेभ्यो नीलमताद् दृष्टं गोनन्दादिचतुष्टयम्। (राज॰ १.१५)

तदेतत् कल्हणपूर्ववर्ति ऐतिह्यग्रन्थविवरणं यदध्ययनपूर्वकमेवासौ कालजयिनीमात्मकृतिं राजतरङ्गिणीं निबबन्ध।

अत्रैवासौ निजेतिहासलेखनस्रोतांस्यपि विशदयति। तद्यथा—

दृष्टैश्च पूर्वभूभर्तृप्रतिष्ठावस्तुशासनैः।
प्रशस्तिपट्टैः शास्त्रैश्च शान्तोऽशेषभ्रमक्लमः॥ (राज॰ १.१५)

दृष्टिहीनैर्भारतविरोधिभिः पाश्चात्यविपश्चिद्भिः श्लोकोऽयं साभिनिवेशं भूयोभूयः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च। यतो हि श्लोकेऽस्मिन् महाकविकल्हणो राजतरङ्गिणीप्रणयनसहायभूतान्युपलब्धानि पूर्वेतिहासस्रोतांसि समुपन्यस्यति दृष्टिगोचरीकृतैर्यैः प्रमाणैस्तस्याऽशेषभ्रमक्लमश्शान्तो जातः। तानीतिहासस्रोतांस्यासन्—प्रतिष्ठाशासनम् (Temple Foundation Inscriptions), वास्तुशासनम् (Architectural Edicts), प्रशस्तिपट्टम् (Panegysical Edicts), शास्त्राणि (Technical Sciences)।

एतदतिरिक्तमपि विविधैतिहासिकप्रमाणनिचयं प्रस्तौति कल्हणो यथावसरम्। तद्यथा—ताम्रदानपत्राणि, प्राक्तनराजमुद्राः, जनश्रुतयश्च। नाऽमूला जनश्रुतिरिति न्यायेन जनश्रुतिगर्भनिलीनैतिह्यरहस्यमप्यादत्ते कल्हणः। हूणाधिपस्य तोरमाणस्य दीनाराख्यमुद्राः, हर्षकलशोच्चलादीनां टङ्काख्यमुद्राश्चापि प्रस्तौति कल्हणस्तद्यथा—

तोरमाणेन दीनाराः स्वाहताः सम्प्रवर्तिताः॥३.१०३॥
कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः॥ ७.९२६॥

सम्प्रति विचारणीयमिदं तथ्यम्। हन्त! यस्मिन् राष्ट्रे लोकपरम्पराः, जनश्रुतयश्चापि ऐतिह्यस्रोतस्त्वेन स्वीकृताः स्युस्त एव भारतीया इतिहासलेखनकलाऽनभिज्ञा आसन्निति स्टीनमते भ्रमास्पदे को न खलु श्रद्धास्यते? अनेनैतदुक्तं भवति यद्भारतीयाः पुरातनकालादेवेतिहासरुचिकास्तल्लेखनोपक्रमाश्चासन्। पौराणिकमपि वृत्तं जीवन्तमितिहासमेव स्वयुगीनं प्रस्तौति, यस्य साक्ष्यमद्यापि यथाकथञ्चिदवशिष्टं परिलक्ष्यते। कामं न विद्यन्तेऽधुना रामनलयुधिष्ठिरप्रभृतयो राजानः; किन्तु तच्चरितसाक्षिभूतनगरग्रामजनपदशैलारण्यादीनि तु वर्तन्त एव। इक्ष्वाकुपुत्रं **दण्डं** किन्न स्मारयति **दण्डकारण्यम्**। भरतपुत्रौ तक्षपुष्कलौ किं न स्मारयतस्तक्षशिलापुष्कलावत्यौ (पेशावर इति)। कुशाम्बेन स्थापिता **कौशाम्बी**। हस्तिना स्थापितं **हास्तिनपुरं** (हस्तिनापुरं वा)। विशालेन निर्मिता **वैशाली**। भगीरथं स्मारयति **भागीरथी**, तपतीसंवरणसूनुं कुरुं च **कुरुक्षेत्रम्**। महर्षिभृगुयशस्साक्षिकं **भृगुकच्छं** (भड़ौच, भरुचेति वा) प्रतीयते। गोमतीस्यन्दिका-(सई)न्तर्वर्तिनीं वाल्मीकिरामायणोल्लिखितामेव पावनीं नदीं (सम्प्रति शुष्कप्रायां विरूपाञ्च) वेदश्रुतिं प्रमाणयति साम्प्रतिकी **बिसुई**। वस्तुत ऐतिह्यप्रमाणान्वेषणेऽसीमधैर्याध्यवसायप्रतिभाश्चापेक्ष्यन्ते। पितामहात्परं स्ववंशपरम्पराक्रममपि सम्प्रति को नु जानाति? तादृश एव मन्दधीर्यदा पुरातनेतिहासे सन्देग्धि तदाऽऽश्चर्यं जायते।

सहस्रमितानितिहासानद्यापि भगवती वसुधाऽऽत्मगर्भे निपुणं रक्षति। को नु जानाति नतोन्नतध्वंसावशेषनिलीनान् तान् राजवंशोदन्तान्? वस्तुतो मानवेन स्वाकिञ्चित्करत्वे हीनोपायत्वे क्षुद्रत्वे चापि श्रद्धातव्यम्। यतो हि नाऽन्या क्वापि गतिः। इतिहासज्ञस्तु केवलं परमेश्वरो यस्त्रैकालिकं जगत्करतलस्थमामलकमिव पश्यति। वराको मनुष्यः कथं नु तमितिहासं बुध्येत यश्शतं समा अपि जीवितुमक्षमः?

उपर्युक्तानुच्छेदेषु मया निरूपिताः काश्चन समस्या या इदानीमपि विवादं जनयन्ति। वस्तुतो विवादाः सन्ति, समुद्भवन्ति वा विपश्चितां चिन्तनेषु। इतिहासे न कोऽपि विवादः। यद्यैतिहासिकं सत्यमन्वेष्टुमक्षमो मनुष्यस्तर्हीतिहासस्याऽत्र को दोषः? मर्यादापुरुषोत्तमो रामो यदा भारतभुवमलञ्चकार तत्तु सत्यमेव; परन्तु यदि तं कालविशेषं न जानातीदानीन्तन इतिहासज्ञानगर्वितः कोऽपि, तर्हि नाऽत्र रामोऽपराध्यति, न वाऽयोध्या। सोमनाथचटर्जिसदृशा नास्तिकाः सांसदाः साम्यवादभक्तास्तु तदस्तित्वमपि सन्दिहन्ति, तेन किम्? आकाशप्रक्षिप्तं निष्ठीवनमात्मशीर्षादृते क्वाऽन्यत्पतिष्यति? वस्तुतः साम्प्रतिकाः शून्यबुद्धयो विद्वांसो न पुनरितिहासं **ज्ञातुं** प्रयतन्तेऽपि तु **क्रीडन्ति** ते क्रीडनकीकृत्येतिहासम्। तस्मादेव राजतरङ्गिणीकार इतिहासस्रष्टारं महाकालपुरुषं प्रत्येव नतमस्तकः परिलक्ष्यते प्रकृतिमहतः कविकर्मणो व्याजेन—

भुजवनतरुच्छायां येषां निषेव्य महौजसां
जलधिरशना मेदिन्यासीदसावकुतोभया।
स्मृतिमपि न ते यान्ति क्ष्माया विना यदनुग्रहं
प्रकृतिमहते कुर्मस्त्वस्मै नमः कविकर्मणे॥

सम्प्रति देववाण्यामुपनिबद्धानां काव्येतिहासानां परम्परा प्रस्तूयते। तत्र पद्मगुप्तपरिमलप्रणीतं **नवसाहसाङ्कचरिताख्यं** महाकाव्यं प्रथमम्। वैदर्भमार्गानुगतं सुललितकाव्यमिदं मुञ्जराजानुजं भोजदेवपितृचरणं नवसाहसाङ्कविरुदभूषितं परमारनरपतिं सिन्धुराजं (९९७-१०१० ई०) प्रख्यापयति। वस्तुतो मृगाङ्कदत्तसूनुः परिमलोपाधिधारी पद्मगुप्तो वाक्पतिराजस्य मुञ्जस्यैव राजकविरासीत्। तैलपद्वितीयेन निहते सति साहितीसूत्रधारे मुञ्जदेवे पद्मगुप्तोऽपि काव्यव्यसनाद् विरक्तो जातः; परन्तु सिन्धुराजस्य प्रीत्या तत्कवित्वं भूयोऽपि कन्दलितं जातम्। कथयति कविः—

दिवं यियासुर्मम वाचि मुद्रामदत्त यां वाक्पतिराजदेवः।
तस्याऽनुजन्मा कविबान्धवस्य भिनत्ति ता सम्प्रति सिन्धुराजः।।

महाकाव्यमिदं यद्यपि यथार्थकल्पनयोः सम्मिश्रणं प्रतीयते, तथापि ग्रन्थस्यैकादशसर्गे वर्णितानि ऐतिह्यतथ्यानि विविधशिलालेखसाक्ष्यैः समर्थितानि तिष्ठन्ति।

ततश्चायाति बिल्हणप्रणीतस्य **विक्रमाङ्कदेवचरितस्य** क्रमः। काव्येऽस्मिन् कविर्दाक्षिणात्यकल्याणनगरवास्तव्यं चालुक्यनरपतिं विक्रमादित्यं षष्ठमुपश्लोकयति (१०७६-११२७ ई०)। स्वमहाकाव्ये बिल्हणस्त्रीन् काश्मीरभूपतीन् स्मरति—अनन्तदेवं, तत्पुत्रं कलशं, कलशसूनुं हर्षदेवञ्च। कलशशासनकाल एव कविः काश्मीरात्प्रतस्थे यात्राव्याजेन। वृन्दावनमथुराकान्यकुब्जप्रयागकाशीडाहलधारा-पट्टणसोमनाथादितीर्थानां राजधानीनाञ्च यात्रां परिसमाप्यासावन्ततः कल्याण्यां स्थिरो जातः। तत्रस्थचालुक्यभूभुजा दत्तविद्यापतिपदवीकस्सत्कृतश्च बिल्हणस्तच्चरितं निबबन्ध।

महाकाव्यमिदं नायक-(विक्रमाङ्क)पितरमाहवमल्लं (१०४०-६९ ई०) सविशेषं वर्णयति। ततश्च समसामयिकघटनानां चित्रणं दृश्यते काव्येऽस्मिन्, यथा—तुङ्गभद्रातटे आहवमल्लस्य प्राणत्यागः, सिंहासनकृते त्रयाणां सहोदराणां सङ्घर्षः, मध्यमसहोदरस्य विक्रमादित्यस्य सिंहासनावाप्तिः, विक्रमपुराख्यनगरस्य संस्थापनम्, काञ्चीविजयः, विष्णुमन्दिरनिर्माणमिति।

कल्हणप्रणीताया (११४८-५० ई० मध्ये) **राजतरङ्गिण्याश्**चर्चा प्रागपि कृता मया। अष्टतरङ्गेषु विभक्तेयं कृतिः प्राचीनकालादारभ्य खैस्तद्वादशशतकं यायत्काश्मीरेतिहासं निष्पक्षपातं प्रस्तौति। आढ्यद्विजान्वयोत्पन्नः कल्हणः काश्मीरनरेशस्य हर्षदेवस्य (१०८९-११०२ ई०) प्रधानामात्यस्य चम्पकस्य पुत्र आसीत्। हर्षविषयकं सर्वमपि वृत्तान्तमसौ पितृमुखादेव निशम्योट्टटङ्केति प्रतीयते। कल्हणस्य पितृव्यः कनकोऽपि हर्षदेवस्य वशंवद आसीत्। हर्षदेवेऽस्तङ्गते सति काश्मीरे सर्वत्रापि युद्धविभीषिका व्याप्ता। डामराणामत्याचारैः काश्मीरवसुन्धरा सन्त्रस्ता जाता। ततश्च यथाकथञ्चिद् उच्चलसुस्सलयोः शासनं प्रबभूव। सुस्सलपुत्रस्य जयसिंहस्यैव शासनावधौ (११२७-५९ ई०) कल्हणो राजतरङ्गिणीं प्रणिनाय। राजतरङ्गिण्यामुल्लिखिता प्राचीनतमा तिथिरस्ति ८२३ तमा खैस्ती। तत आरभ्य ११५० ख्रिस्ताब्दं यावत् प्रवर्तितं काश्मीरेतिहासं कल्हणः प्रस्तौति, यत्र विविधराजवंशोत्पन्नानां शास्तॄणां, सहस्रमितानाञ्च शास्त्रकाव्यकलाकाराणामितिवृत्तं

सप्रमाणं सविस्तरं सूक्ष्मेक्षिकयोपन्यस्तं दृश्यते। तेन महाकवेः कल्हणस्य गगनाभोगपरिमितं पुरावृत्तज्ञानं, विविधशास्त्रावगाहनं, प्रत्ननूत्नवृत्तान्तपरिचयनञ्च प्रमाणितानि भवन्ति। विलक्षणोऽयमितिहासग्रन्थो यत्तुलां नारोहति कोऽप्यन्यः। नायं ग्रन्थस्तुरुष्केतिहास इवाश्रयदातॄणां मिथ्याप्रशंसां प्रस्तौति, न चापि सत्यं किमपि विकृत्याऽन्यथाकृत्य वा प्रस्तौति। काश्मीरकः सन्नपि कल्हणस्तत्रस्थसैनिकानां भीरुत्वं लालाटिकत्वं क्लैब्यमर्थपिशाचत्वं च निर्विशङ्कं प्रस्तौति। निजेतिहासलेखनस्य मानदण्डं स्वयं निश्चिनोति कविः—

श्लाघ्यः स एव गुणवान् रागद्वेषबहिष्कृता।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती।।

अमुमेवाऽऽदर्शमाद्यन्तं निर्वहति कल्हणः। एतादृशमितिहासदर्शनं क्वचिदन्यत्र नैव दृश्यते—न तावत्प्लिनीटॉलमीप्रभृतिषु यवनेतिहासकारेषु, न चापि जियाउद्दीनबर्नी-(तारीखे फीरोजशाही १३५७ ई॰) एसामी-(फुतूहुस्सलातीन १३५० ई॰) अमीरखुसरो-(खजाइनुल्फुतूह १३११ ई॰) प्रभृतितुरुष्केतिहासकारेषु। एते सर्वेऽपि प्रायेण स्वात्रदातॄणां **क्रीतदासाः** स्वजातिधर्ममात्रपक्षपातिनो वा प्रतीयन्ते। अत एव सर्वेऽपि **विकृतं कल्पितं** वेतिहासं प्रस्तुवन्ति, यो न कथमपि विश्वसनीयः। अस्मिन् सन्दर्भे मया क्वचिदन्यत्रापि सविस्तरं निरूपितं यत्सर्वैरपि भारताभिमानिभिरध्येयम्[१]।

परवर्तिषु काव्येतिहासेषु प्रामुख्यं भजमाना ग्रन्थाः सन्ति—हेमचन्द्र-(१०८९-११७३ ई॰) प्रणीतं कुमारपालचरितम्, नयचन्द्रसूरि-(१४००-१० ई॰) प्रणीतं हम्मीरमहाकाव्यम्, चन्द्रशेखरप्रणीतं (षोडशतमे शतके खैस्ते) सुरजनचरितम्, राजनाथडिण्डिमप्रणीतम् अच्युतरामाभ्युदयम् (षोडशशतकीयम्), गङ्गादेवीप्रणीतं वीरकम्परायचरितम् (मधुराविजयमित्यपरसंज्ञम्), जोनराजप्रणीता राजतरङ्गिणी, वनमालीदासप्रणीता राजावली, कल्याणमल्लसूरिप्रणीतं सुलेमच्चरितम्, रामभद्राम्बाप्रणीतं रघुनाथाऽभ्युदयञ्च।

शम्भुकविः स्वाश्रयदातारं काश्मीरनरेशं हर्षदेवं (१०८८-११०२ ई॰) **राजेन्द्रकर्णपूराख्येन** काव्येन ख्यापितवान्। प्रशस्तिकाव्येऽस्मिन् पञ्चसप्ततिमितानि पद्यानि सन्ति।

---

१. मध्यकालीन संस्कृत महाकाव्यों में वर्णित इस्लामी साम्राज्य की राजनैतिक गतिविधियाँ। संस्कृतसाहित्य को इस्लाम-परम्परा का योगदान, संस्कृत परिषद्, सागर, १९८६ ई॰।

सन्ध्याकरनन्दी स्वोपज्ञे **रामचरिते** पालवंशीयभूपतिं रामपालं (१०८४-११३० ई०) ख्यापयति।

जयानकप्रणीतं **पृथ्वीराजविजयमहाकाव्यं** निश्चप्रचमैतिह्यदृष्ट्या परं महिमानं भजते। यद्यपि काव्यस्यास्य द्वादशसर्गा एव सम्प्रत्युपलब्धाः, त्रयोदशचतुर्दशसर्गयोः केवलं खण्डितांशा एव प्राप्यन्ते; किन्तु तावन्मात्रेणैव काव्येन पृथ्वीराजयुगीनेतिहासस्य प्रामाणिकं वृत्तमुपलभ्यते। द्वादशसर्गस्थपद्येन ज्ञायते यत्काश्मीराभिजनो जयानकोऽजमेरनगरं समाययौ पृथ्वीराजाश्रयमवाप्तुम्। चाहमानभूभुजा सत्कृतः सन्नेवासौ तत्कीर्तिमक्षय्यां विधातुं महाकाव्यमिदं प्रणिनाय।

द्वितीय**राजतरङ्गिण्या** रचयिता लोलराजपौत्रो नोणराजपुत्रश्च विश्रुतकीर्तिर्जोनराजः पृथ्वीराजविजयस्य टीकां प्रणिनाय पञ्चदशशतके खैस्ते।

समसामयिकत्वान्महाकाव्यमिदं प्रत्यक्षदृष्टं प्रत्यक्षघटितञ्चेतिहासं प्रस्तौति। ११९२ मितख्रिस्ताब्दे पृथ्वीराजो मुहम्मदगोरिणं पराजितवान्। ११९३ मितख्रिस्ताब्देऽसौ स्वयमपि गोरिणा समरे जितो निबद्धश्च। अत एव सम्भाव्यते यन्महाकाव्यमिदं जयानकेन प्रणीतं ११९२ मिते ख्रिस्ताब्दे। महाकाव्येऽस्मिन् चाहमानराजवंशाभ्युदयस्य प्रारम्भिकी गाथा सप्रमाणं निरूपिता दृश्यते। ततश्च पृथ्वीराजगोरीसङ्घर्षस्यापि वास्तविकं क्रमिकञ्च वर्णनमवाप्यते येन हिन्दुनरपतेः पृथ्वीराजस्य हिमधवलं चरित्रं, कण्ठीरवकल्पं दुर्धर्षशौर्यं, विलक्षणं च मानवीयसद्गुणकदम्बकं—सर्वमिदं स्फारीभवति। तथैव काव्येनानेन गोरिणः षड्यन्त्रपारगत्वं नृशंसत्वमसत्यसन्धत्वं छलच्छद्माश्रयत्वञ्चापि सिध्यति।

कविश्रेष्ठस्सोमेश्वरो वस्तुपालप्रशस्तिभूतां **कीर्तिकौमुदीं** कृतवान्। वस्तुपालतेजःपालौ गुर्जराधिपतेर्वीरधवलस्य तत्सूनोर्वीसलदेवस्य च मन्त्रिणावास्ताम्। तयोर्दानशीलता जिनदेवालयनिर्माणाभिरुचिः प्रजाकल्याणबुद्धि-र्विद्याकलासक्तिश्च सर्वतः ख्याताऽऽसीत्। चालुक्यवंशपुरोहितस्सोमेश्वरो वस्तुपालस्यैवाश्रितकविस्तदन्तरङ्गसुहृच्चाप्यासीत्।

अरिसिंहः **सुकृतसङ्कीर्तना**ख्यमेकादशसर्गोपबृंहितं काव्यं प्रणीतवान् यस्मिन् वस्तुपालनिर्मापितानां मन्दिराणां धर्मकृत्यानाञ्च विवरणं सुरक्षितं तिष्ठति। कविरयं भूपतेर्वीसलदेवस्य सभापण्डित आसीत्।

बालचन्द्रसूरिश्चतुर्दशसर्गात्मकं तृतीयं काव्यं प्रणिनाय त्रयोदशतमे ख्रिस्ताब्दे **वसन्तविलास**संज्ञम्। यतो हि वस्तुपाल एव वसन्तपालसंज्ञयापि लोके

समज्ञामवाप, ततो हि वसन्तविलासमहाकाव्यमपि तस्यैव सुचरितान्यवगाहते। कृतिरियं वस्तुपालस्य मृत्योरनन्तरं प्रणीता यतो हि काव्येऽस्मिन् वस्तुपालस्यान्तिमा तीर्थयात्राऽपि सङ्केतिता वर्तते।

वदान्योत्तमो महामात्यो वस्तुपालो जिनसङ्घपतिरप्यासीत्। आचार्यविजयसेन-सूरिरासीत्तस्य धर्मगुरुः। महता सम्भारेणासौ गिरनारशत्रुञ्जयादितीर्थानां यात्रां निर्व्यूढवान्। अर्वुदाचलपृष्ठे बहूनि मन्दिराणि निर्मापितवान्। आसामेव तीर्थयात्राणां वृत्तमवलम्ब्य उदयप्रभसूरिः पञ्चदशसर्गात्मकं **धर्माभ्युदया**ख्यमहाकाव्यं तज्जीवन-काल एव कृतवान्। महाकाव्यमिदं **सङ्घपतिचरित**मित्यपि कथ्यते।

एवं हि वस्तुपालचरिताश्रितं काव्यचतुष्टयमुपर्युक्तां प्रभूतामैतिह्यसामग्रीं प्रस्तौति।

कान्यकुब्जाधिपतेर्यशोवर्मणस्सभाध्यक्षो महाकविर्वाक्पतिराजः प्राकृतवाचि १२०९ गाथोपबृंहितमैतिहासिकं काव्यं **गौडवधं** (गउडवहो इति संज्ञम्) प्रणीतवान् ख्रैस्ताष्टमशतकस्य मध्यभागे। वाक्पतिराजो भवभूतेरधमर्णः प्रतीयते। काव्यमिदं यशोवर्मकृतं गौडेश्वरविजयवृत्तमधिकृत्य विरचितम्, तथापि ऐतिह्यवृत्तमस्मिन् समुपलभ्यतेऽल्पमात्रमेव। काव्यसौष्ठवदृष्ट्या पुनः कृतिरियम्महीयत एव। वाक्पतिराजः स्फूर्तिग्रहणप्रसङ्गे सबहुमानं स्मरति भासरघुकार-(कालिदास) भवभूतिसुबन्धुहरिश्चन्द्रप्रभृतीन्।

राजतरङ्गिण्या इतिहासपरम्परा भाविनि कालेऽपि पुरस्ससार। महाकविः कल्हणस्तु प्रारभ्यादितो जयसिंहशासनकालं यावत् (११५० ई०) काश्मीरेतिहासं लिलेख। ततश्चास्यामेव परम्परायां **द्वितीया तृतीया चतुर्थी** चापि राजतरङ्गिण्यः प्रणीता जोनराजश्रीवरशुकाख्यकविभिः।

काश्मीरशासकस्य जैनुलाब्दीनस्य राज्यावधौ (१४१९-७० ई०) तत्पूर्वार्ध एव जोनराजः ९७६ श्लोकात्मिकां स्वोपज्ञां **राजतरङ्गिणीं** प्रणीतवान्। इयं कृतिः जयसिंहशासनकालादारभ्य कविजीवनावसानतिथिं (१४५९ ई०) यावत् काश्मीरेतिवृत्तमाख्याति। ततश्च श्रीवरः १४५९ तमादारभ्य १४८६ मितख्रिस्ताब्दं यावत्प्रवर्तमानं काश्मीरवृत्तं स्वोपज्ञराजतरङ्गिण्यां प्रस्तौति। शुकोऽपि १४८६ तः समारभ्य १५९६ मितख्रिस्ताब्दं यावद्घटितमैतिह्यं स्वोपज्ञचतुर्थराजतरङ्गिण्या-मुपनिबध्नाति। अयमासीन्मुगलशासनकालः।

एवं हि राजतरङ्गिणीचतुष्टयं विक्रमपूर्वद्वादशशतकादारभ्य ख्रैस्तषोडश-शतकं यावत् प्रवर्तमानं प्रायेण **सहस्रत्रयवर्षपरिमाणमितिहासं** क्रमेण प्रस्तौति।

कलिकालसर्वज्ञोपाधिमण्डितेनाचार्यहेमचन्द्रेण प्रणीतं **कुमारपालचरितं** गुर्जरैतिह्यं सविस्तरं सप्रमाणञ्च प्रस्तौति। अत्र तावन्मूलराजचामुण्डरायकर्णराज-जयसिंहकुमारपालादीनां लाटभूभुजां युद्धप्रजापालनादिवृत्तनिचितं साम्राज्यवर्णनं कविनोपनिबद्धम्; परन्तु तेनैव प्रणीतमपरं काव्यं **त्रिषष्टिशलाकापुरुषचरित्रम्** अर्धैतिहासिकं प्रतिभाति। काव्येऽस्मिन् तीर्थङ्करमहावीरानन्तरमुत्पन्नानां शलाका-पुरुषपदवाच्यानां जैनधर्मादर्शभूतानां त्रिषष्टिमितानां महापुरुषाणां जीवनवृत्तमुपनिबद्धं त्रयोदशसर्गैः ३३७९ मितश्लोकैः। वस्तुतश्चरितकाव्यमिदं यत्र न सर्वेऽपि शलाकापुरुषाः ख्यातवृत्ता ऐतिहासिका वा।

नयचन्द्रसूरिप्रणीतं **हम्मीरमहाकाव्य**मितिहासदृष्ट्याऽप्रतिमं विलक्षणं च प्रतिभाति। शरणागतवत्सलतायाः परां काष्ठामधिरूढो हम्मीरः प्राणोत्सर्गं करोति; परन्तु शरणमागतान् महिमाशाहप्रभृतीन् न कथमपि प्रत्यर्पयति नृशंसकर्मणेऽ-लाउद्दीनाय। हम्मीरस्य दुर्गाधिपती रणमल्लो, भाण्डागारनायको जाहडश्च विश्वासघातं विधाय सपत्नपक्षमाश्रयेते, दुर्गप्रवेशार्थं गुप्तमार्गं निर्दिशतः, जलागमप्रवाहपथमपि निरोद्धुमुपायमुपदिशतस्तथापि सर्वविधासहायो **हठी हम्मीरो**ऽलाउद्दीनस्याऽपमानकरं सन्धिप्रस्तावं (कन्याया देवलदेव्या अर्पणम्, महिमाशाहप्रभृतीनाञ्च प्रत्यर्पणम्) नाङ्गीकरोति। स खलु गैरिकवस्त्राणि सन्धार्य षड्भिरेवाऽनुचरैस्सह दुर्गद्वारमुद्घाट्य मरणान्तकं युद्धं कुर्वन् भिन्दिपालेनात्मानं हिनस्ति। महिमाशाहोऽपि शरणागतवत्सलताया ऋणं निर्यातयितुं बद्धपरिकरः स्वखड्गेनैव पुत्रकलत्रादीन् निर्दयं व्यापाद्य, वीरोचितशौर्यं प्रदर्शयति समराङ्गणे। हम्मीरमहिमशाहयोर्मध्ये को नु महत्तर इति निश्चेतुं न शक्यं प्रतिभाति। पातिव्रतमर्यादां निर्वहन्ती राजमहिषी पद्मिनी क्षत्रियललनोचितं **जतुगृहव्रतं** (जतुगृह/जउघर/जउहर/जौहर इति निबन्धकारः) सम्पादयति। विश्वासघातिनौ साम्राज्याधिकारलोलुपौ जाहडरणमल्लौ पश्चाद् अलाउद्दीनेन सथूत्कारं निहतौ। समरावसाने रणस्तम्भपुरीयदुर्गाभ्यन्तरे प्रविष्टोऽसौ जौहरव्रतस्य भयावहदृश्य-मक्षिलक्ष्यीकृत्य चित्रलिखित इवावतस्थे।

महाकाव्यमिदं नयचन्द्रो ग्वालियरदुर्गाधिपतिवीरमदेवप्रेरणयैव प्रणिनाय १४००-१४१० मितख्रिस्ताब्दयोर्मध्ये। अत्र कविना प्रस्तुतं चाहमानवंश-विस्तारेतिवृत्तमतीवप्रामाणिकं प्रतिभाति। नयचन्द्रप्रामाण्येन दिल्लीश्वरो भूपतिः पृथ्वीराजो मुहम्मदगोरिणं सप्तधा जितवान्। भयादुपद्रुतं तत्सैन्यं कृपावशादेवासौ न जघान। पारसीक इतिहासकारः **फरिश्ताऽपि** तथ्यमिदमनुमोदते, पृथ्वीराजस्य

शौर्यपराक्रमादिसद्गुणान् दयालुताञ्च पौनःपुन्येन प्रशंसति; परन्तु तत्रैव तुरुष्कः सन्नप्यसौ मुहम्मदगोरिणो जाल्मत्वं विश्वासघातं नीचताञ्चापि निर्भयं वर्णयति। तत्सर्वं मया स्वोपज्ञे हिन्दीशोधनिबन्धे सप्रमाणं विवेचितं वर्तते।

महनीया काव्यकृतिरियं वंशसंस्थापकाच्चाहमानादारभ्य हम्मीरं यावद् अष्टात्रिंशन्मितानां भूपालानां जीवनवृत्तं प्रस्तौति। महाराजो जैत्रसिंहः १२८२ मितख्रिस्ताब्दे साम्राज्यभारं स्वपुत्ररत्नाय हम्मीराय समर्प्य वानप्रस्थो जातः। तत आरभ्य १३०० मितख्रिस्ताब्दं यावद् न्यायविक्रमप्रजाप्रणयावतारो हम्मीरः साम्राज्यस्य योगक्षेमौ सम्यक्तया ररक्ष। पश्चाच्च धर्मरक्षार्थं प्राणान् समरभूमौ त्यक्त्वा देवोचितममरत्वमापेदे।

यद्यपि हम्मीरकाव्यकारो नयचन्द्रो न समकालीनो हम्मीरस्य, तथाप्यसौ हम्मीरेतिहासं स्वपितामहप्रामाण्येन लिखितवान्, यो हि हम्मीरालाउद्दीनयुद्धस्य घटनान्तराणाञ्च प्रत्यक्षदर्शी आसीत्। तत्पितामहो महानैय्यायिको जयसिंहसूरिरेव तस्य काव्यशास्त्रशिक्षकोऽप्यासीत्। एवं हि पितामहप्रामाण्येन प्रणीतं हम्मीरकाव्यं सर्वथा यथार्थसत्यमेव प्रस्तौति।

रुद्रकविः खैस्ते षोडशतमे शतके **जहाँगीरचरितं खानखानाचरितं** च प्रणीतवान्। तत्र द्वितीया कृतिश्चम्पूशैल्या प्रणीता।

**आसफविलास**नाम्नीमाख्यायिकां पण्डितराजो जगन्नाथः प्रणिनाय सप्तदशतमे ख्रिस्ताब्दे। अष्टादशतमे ख्रिस्ताब्दे लक्ष्मीधरो**ऽब्दुल्लाहचरितं** प्रणीतवान् चम्पूपद्धत्यैव, यस्मिन् औरंगजेबप्रपौत्राद् मुहम्मदशाहादारभ्य महामात्यमब्दुल्लाहं यावत् किञ्च, सय्यंदबन्धुयुद्धं यावद् व्याप्ता घटना वर्णिताः। दाराशिकोहस्य लेखकेन वनमालीदासेन प्रणीतायां **राजावल्यां** युधिष्ठिरादारभ्य शाहजहानं यावद् विस्तृतमैतिह्यमुपनिबद्धं दृश्यते।

अर्वाचीनसंस्कृतवाङ्मययुगेऽपि (१७८४ तः समारभ्येदानीं यावत्) शतमिता इतिहासग्रन्थाः कविभिः प्रणीता वर्तन्ते विविधाभिः काव्यविधाभिः। तत्सर्वं मदुपज्ञे सद्य एव प्राकाश्यमुपगते **विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रे** (Catalogue of the Twentinth Century Sanskrit Works) द्रष्टव्यमितिमात्रं विनिवेद्य विरम्यते।

## श्रीशास्त्रिपादानां गुरुपरम्परा



२



७



५



३



१



४



६

१. हरिभक्तिपरायणवेदमूर्तिश्रीरामसुब्रह्मण्यधनपाठिमहाशयाः सं. १८८४-१९७६ (पूज्यपितामहचरणाः)
२. महामहोपाध्यायश्रीसुब्रह्मण्यशास्त्रिमहाशयाः सं. १९२२-१९८९ (पूज्यमातामहचरणाः)
३. महामहोपाध्यायधर्मप्राणश्रीलक्ष्मणशास्त्रिद्रविडमहाशयाः, सं. १९३१-१९८८ (पूज्यपितृचरणाः दीक्षागुरवश्च)
४. महामहोपाध्यायश्रीकैलाशचन्द्रशिरोमणिभट्टाचार्यमहाशयाः सं. १८८७-१९६५ (पूज्यपरमगुरुचरणाः)
५. वैदिकप्रवरश्रीबालम्भट्टगोडबोलेमहाशयाः, सं. १९२२-१९८९ (पूज्यगुरुचरणाः, कृष्णयजुर्वेदस्य)
६. महामहोपाध्यायश्रीवामाचरणभट्टाचार्यमहाशयाः सं. १९३६-१९८८ (पूज्यगुरुचरणाः, न्यायशास्त्रस्य)
७. योगिराजश्रीगोविन्दरावपण्डितमहाशयाः, सं. १९३७-१९८९ (पूज्यगुरुचरणाः योगतन्त्रयोः)

# वेदशास्त्रयोः प्रदीपवत्सर्वार्थविद्योतित्वं जगद्धितैषित्वञ्च

पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडः



वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः।।
यूरोपीयकुशिक्षया कवलिते धर्माश्रिते भारते
लोके मानसकायकर्मवचनैर्दासेयतामापिते।
दुःशिक्षां व्यपनीय धर्मधनुषोद्धर्तुं पुनर्भारतं
सर्वस्वेन कृतोद्यमान् गुरुवरान् साष्टाङ्गपातं नुमः।।

## प्रमादशब्दार्थविचारः

'स्वाध्यायान्मा प्रमदः'। 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'। 'सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्'। 'देवपितृकार्याभ्यां न प्रमदितव्यम्'। (शिक्षोपनिषद्)

अत्र मुख्यतया प्रमादद्वयं निषिध्य तदङ्गत्वेनाग्रिमप्रमादपञ्चकस्य निषेधस्तैत्तिरीयश्रुत्या कृतो वर्तते। अत्रत्यसर्ववाक्यस्थितप्रमादशब्दस्य कोऽर्थो भवितुमर्हतीति विचार आवश्यकः। तत्र 'धर्मात्प्रमाद्यतीत्यत्र प्रमादेरनुद्बुद्ध-संस्कारोऽर्थः, पञ्चम्या विषयत्वमर्थः, धर्मविषयकानुद्बुद्धसंस्काराश्रयत्वं वाक्यार्थः' इति गिरिधरोपाध्यायकृतविभक्त्यर्थनिर्णयस्थविवरणानुसारेणानुद्बुद्धसंस्कारः[1] प्रमादशब्दार्थः,

१. उक्तश्रुतिमन्त्रेष्वनुद्बुद्धसंस्कारवत्त्वनिषेधात्तत्र २ संस्कारोद्बोधनेन प्रमादः परिहर्तव्यः, येन तत्परिणामरूपस्तत्त्वानवधारणात्मकः प्रमादोऽपि न भवेत्। तदुक्तं सनत्सुजातीये—
'प्रमादं वै मृत्युमहं ब्रवीमि सदा(तथा)ऽप्रमादममृतत्वं ब्रवीमि।'इति।
अत्र तत्त्वानवधारणात्मकः प्रमादो मृत्युत्वेनोक्तः। अत उक्तकर्मस्वनुद्बुद्धसंस्कारवत्त्वे तत्त्वानवधारणात्मकप्रमादात्समाजस्य मृत्युर्भविष्यतीति भयमस्ति।

अर्थात् स्वाध्यायप्रवचनादिषु सप्तसु कर्मस्वनुद्बुद्धसंस्कारवत्त्वं (संस्कारोद्बोधं विनावस्थानं) नाम प्रमादवत्त्वमिति सिद्ध्यति।

## वेदसंरक्षणमावश्यकम्

प्रमाणमूर्धन्यस्य वेदस्य संरक्षणं कण्ठस्थीकृत्य वैदिकैः क्रियते। भारतीयपुरुषार्थसाधनविद्याः सर्वा अपि वेदमूलिका एव। आधुनिकपाश्चात्त्यदृष्ट्यापि समस्तवाङ्मये वेदग्रन्थोऽतिप्राचीनतया मान्य इत्यत ऐतिहासिकसंशोधनार्थम्, इतरविद्याकलादीनामुत्पत्तिनिर्णयार्थं च वेदानां संरक्षणस्यावश्यकता सिद्ध्यति।

## रोगनिवारणाय शब्दप्रामाण्यं सर्वैः स्वीकर्तव्यमेव

अधुना शब्दप्रामाण्यविचार आवश्यकतया क्रियते। यदा मनुष्यो व्याधिग्रस्तो भवति, तदा तन्निवारणार्थं तस्य पराधीनतामन्तरा गत्यन्तरं नास्ति।

'जाड्यमप्रतिपत्तिः स्यात्सर्वकार्येषु सर्वदा।
प्रियाप्रियश्रुतेस्तत्तद्दर्शनैर्व्याधिभिर्भवेत्।।
सुखदुःखाविवेकित्वमिष्टानिष्टानभिज्ञता।
तूष्णीमप्रतिभा चाक्ष्णोरनिमेषोऽनवेक्षणम्।।
अभाषणं पारवश्यमेतैर्जाड्यं निरूप्यते'।।

इति भावप्रकाशनोक्तरीत्या तेन परवशतारूपं जाड्यं स्वीकर्तव्यं भवति। अर्थाद् भारतीयाङ्ग्लमहामदीयानां चिकित्साशास्त्राणि स्वस्वानुयायिसमाजस्य मार्गदर्शनद्वारा नेतृत्वं कुर्वन्ति। एवमेव मार्गदर्शकत्वेन कञ्चित्सहायकं गृहीत्वा यदि क्वचिद् गम्यते तदा हिन्दुम्लेच्छादिभिः सर्वैरपि तत्पराधीनैर्भाव्यमेव। सोऽयं विषयः 'ऋष्यार्यम्लेच्छानां समानं लक्षणम्'[1] इत्याप्तलक्षणकथनावसरे न्यायभाष्यकारैरुक्तः। शब्दप्रमाणविचारावसरे यदि पूर्वोक्तप्रमादमन्तरा मनुष्यो विचारं कुर्यात्तर्ह्यवश्यं

---

१. 'ऋष्यार्यम्लेच्छे'त्यत्र धर्मातिरिक्तसन्निकर्षाजन्यप्रत्यक्षप्रमा ऋषीत्यनेन, शास्त्रेणालौकिकार्थावगतिः प्रमा आर्येत्यनेन, लौकिकसन्निकर्षादिहेत्वादिजन्यप्रमा म्लेच्छेत्यनेनेत्याप्तित्रैविध्यसङ्ग्रहे तात्पर्यम्। ऋष्यार्ययोरलौकिकार्थे क्वचिदनुमानमुक्तं चेत्तत् शास्त्रहेतुकं वैशेषिकमतेन बोध्यम्। एतादृशाप्तिमान् यो यदर्थे स तदर्थे आप्तः, तदर्थे च तस्य यथार्थ उपदेश आप्तोपदेश इति। ईश्वरस्याजन्यप्रत्यक्षस्य देवानां धर्मजन्यप्रत्यक्षस्य च प्रथमे प्रवेशः। अधर्मदोषजन्यस्य त्वनृतत्वान्नात्र क्वापि प्रवेशः। तत्तदाप्तिघटितसम्बन्धेनार्थविशिष्टोपदेशत्वं प्रमाणशब्दत्वम्। सम्बन्धाननुगमो भावत्ववत्र दोष इति। अत एव 'आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवांस्तस्योपदेश इत्यर्थः। प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः' इति न्यायसूत्रवृत्तिकाराः।

स्वाभीष्टं लक्ष्यं प्राप्नुयादेव। एवंस्थितौ वेदादिशास्त्रविषयेऽत्र प्रतिदिनं योपेक्षा सम्प्रति प्रवृत्ता, तन्निवारणाय तद्विषयकविचाराकरणं प्रमाद एव स्यात्।

## योगक्षेमसाधनविद्यास्वप्रमाद आवश्यकः

'कुशलान्न प्रमदितव्य'मित्यस्य—'कुशलं क्षेमः, तेन तत्कारणं कर्म विवक्षितम्' इति सायणभाष्यानुसारेण क्षेमकारणकर्मविषये प्रमादो न कार्य इत्यर्थः सिद्ध्यति।

'भूत्यै न प्रमदितव्य'मित्यस्य—'भूतिरैश्वर्यं, तया तत्कारणमुपलक्ष्यते। तत्रापि 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिकं वैदिकम्। प्रतिग्रहादिकं लौकिकम्। कुशलभूत्योरभावे मुक्तिहेतुकर्मानुष्ठानासम्भवात् तयोरप्रमादोऽनुशासनीयः' इति भाष्यसन्दर्भानुसारेण ऐश्वर्यसाधककर्मसु प्रमादो न कार्य इत्यर्थो ज्ञायते। अर्थात्—'अप्राप्तस्य प्रापणं योगः, प्राप्तस्य परिरक्षणं क्षेमः' इति लक्षणानुसारेण योगक्षेमसाधनविद्याविषयेऽनुद्बुद्धसंस्कारवत्तया न भाव्यमिति निष्कर्षः सिद्ध्यति।

## आन्वीक्षिक्यादिविद्या योगक्षेमसाधिकाः

'क्षेम इति वाचि। योगक्षेम इति प्राणापानयो'रिति श्रुतिवाक्यस्य भाष्यम्—'अथोपासनान्येव कानिचिद्विधत्ते क्षेम इतीत्यादिना। यद्वागिन्द्रियरूपं प्रतीकमस्ति तस्मिन् ब्रह्म क्षेमरूपेणावस्थितमित्युपासीत। क्षेमो रक्षणम्। प्राणापानयोरुच्छ्वासनिःश्वासयोः प्रतीकयोः क्रमाद्योगरूपेण क्षेमरूपेण च ब्रह्मावस्थितम्। अप्राप्तस्य धनादेः प्राप्तिर्योगः। तस्य परिरक्षणं क्षेमः' इति।

'यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि' इत्यत्र भाष्यकाराः—

'यदुक्तं कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यमिति, तत्र कञ्चिद्विशेषं दर्शयति। क्षेमैश्वर्यकारणानि कर्माणि द्विविधानि—अनिन्द्यानि निन्द्यानि च। तत्र पूर्वोदाहृतान्यायुष्कामेष्टिप्रतिग्रहयाजनादीन्यनिन्द्यानि कर्माणि सेवितव्यानि। इतराणि त्वभिचारादीनि शत्रुवधद्वारा क्षेमहेतुत्वेऽपि नरकप्रदत्वेन निन्दितत्वान्न सेव्यानि। ननु शिष्टाचारस्यापि श्रुतिस्मृतिवत्प्रमाणत्वादाचार्यस्य तव सम्बन्धीनि चरितानि सर्वाण्यपि सेवितव्यानीत्याशङ्क्य तत्रापि विशेषं दर्शयति। द्विविधं चरितं दैवमासुरं चेति। तदुभयं भगवानुदाजहार—

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्।।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्।।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत!।।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ! सम्पदमासुरीम्।।
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता'।।इति।

तत्रास्माकं सम्बन्धीनि यान्यभयादीनि सुचरितानि त्वया तान्येव सेवितव्यानि न तु दम्भादीनि। अयं न्यायः सर्वत्र शिष्टाचारे योजनीयः। तथा हि—जामदग्न्यः पितुराज्ञया स्वजननीं जघानेत्यत्रापि पित्राज्ञापालनरूपं सुचरितमादर्तव्यम्, न तु मातृवधरूपं दुश्चरितम्। एवमन्यदप्युदाहार्यम्'। इति वदन्ति।

'चतस्र एव विद्या इति कौटिल्यः। ताभिर्धर्मार्थौ यद्विद्यात् तद्विद्यानां विद्यात्व'मिति वदता कौटिल्येन धर्मकुशलभूतीनां विषयेऽप्रमादसिद्ध्यर्थमान्वीक्षिकीत्रयीवार्तादण्डनीतिविद्यानां सेवनमावश्यकमिति सूचितमस्ति। अयमेव निष्कर्षः—

'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः'।।

इति नीतिसारवचनेनापि सिद्ध्यति।

## विद्यासंरक्षणं दण्डनीत्यायत्तम्

'आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः, तस्य नीतिर्दण्डनीतिः' इत्यर्थशास्त्रपरिभाषानुसारेण—

'आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विभ्रमे (विप्लवे)।।
दण्डनीतिर्यदा सम्यङ् नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते।।

इति नीतिशास्त्रविधानस्य विचारे क्रियमाणे आन्वीक्षिकीत्रयीवार्तानां संरक्षणाय दण्डनीतिविद्यायां प्रमादो न युक्त इति निष्कर्षः सिद्ध्यति।

'तर्कशास्त्राद्विनिष्क्रान्तं नीतिशास्त्रमिति स्थिति'रिति वचनानुसारेणान्वीक्षिकीत एव नीतिशास्त्रस्योत्पत्तिर्ज्ञायत इति तस्या विषयेऽप्यप्रमाद आवश्यक इति सूचितमेव।

एवं 'साङ्ख्यं योगो लोकायतं चेत्यान्वीक्षिकी'ति सूत्रद्वारा चार्वाकमतस्यापि पूर्वपक्षरूपेणान्वीक्षिक्यामन्तर्भावं विधाय तद्विषयेऽपि प्रमादो न कर्तव्य इति घोषितम्।

## मात्स्यन्यायनिवृत्त्यर्थं धर्मानुष्ठानं चार्वाकस्यापि सम्मतम्

'नीतिकामशास्त्रानुसारेण वर्तनं धर्मः' इति चार्वाकेणाप्यन्ते निष्कर्षः कृत इति 'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानं नीति'रिति[1] लक्षणलक्षितनीत्यनुसारेण वर्तनमावश्यकमिति निष्कर्षात् 'धर्मात्र प्रमदितव्य'मिति चार्वाकस्यापि सम्मतमिति सिद्ध्यति। एवंस्थितौ 'सत्यात्र प्रमदितव्यम्' इत्यपि सहजत एव सिद्ध्यति। यतो हि—प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मण्येव स्थिरतयावस्थानं नीतिपदवाच्यम्, सत्यपदस्यापीयमेव व्याख्या। प्रमाणत्रयनिर्णीतत्वं नाम तत्परीक्षितत्वं यतो धर्मेऽस्ति, ततस्तद्विषयेऽप्रमादश्चार्वाकमतेन सत्यकुशलभूतिविषयेऽप्रमाद एव।

---

१. 'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यमुपायसाधनविनियोगलक्षणा क्रिया नीतिर्नयः' इति नीतिलक्षणं भारतीय-राजनीतिग्रन्थे निरूप्यते। अत्र—

'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम।।

इति दर्शिता ध्रुवा नीतिर्लक्ष्या। नहि शास्त्रेण ध्रुवाध्रुवसाधारणनीतिर्लक्षणीया, येन 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति प्रदर्शितप्रामाण्यस्य सामानाधिकरण्येन व्याघातापत्तिः स्यात्। फलसिद्धौ निर्णीतायामित्यनेन अत एव शास्त्रानुमतपुरुषार्थ-सिद्धिरभिप्रेता। यथोक्तम्—

'न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाम्।
त्रिवर्गेणोपसन्धत्ते निहन्ति ध्रुवमन्यथा'।।इति।

अत्र त्रिवर्गेति चतुर्वर्गमन्तर्भाव्योच्यते। 'अयं तु परमो धर्मो यद्योगेनात्मदर्शन'मिति चतुर्थपुरुषार्थस्यापि मोक्षधर्मेति व्यवहारात्। अत एव 'यस्य प्रभावाद् भुवनं शाश्वते पथि तिष्ठती'ति, 'आन्वीक्षिक्यात्मविद्या स्या'दिति, 'विद्याभिराभिर्निपुणं चतुर्वर्गमुदारधीः। विद्यात्तदासां विद्यात्वं 'विद ज्ञाने' निगद्यते'।। इति, 'जगन्मृगतृषातुल्यं वीक्ष्येदं क्षणभङ्गुरम्'

इत्यादि तत्रोच्यते। गीतायामपि—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्यारभ्य—

'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'।

'सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे'।। इत्यादि,

'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्'।। इति च।

ततश्चैवं त्रिवर्गसिद्धिर्लक्षणे प्रविष्टा, न तु यथाकथञ्चिद्यत्किञ्चित्फलसिद्धिः। अत एव—

'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्'।।

इत्युक्तावर्थस्येति प्रोक्तचतुर्वर्गस्योपलक्षणम्। अत एव 'सत्पात्रप्रतिपत्तिः—अश्वमेधादौ गुणवति च पुत्रे विनियोजन'मिति जयमङ्गला, 'सत्पात्रप्रतिपत्तिश्चेति। सत्पात्राण्यत्र त्रिविधानि—धर्मपात्राणि, अर्थपात्राणि, कामपात्राणि इति। सत्त्वमुत्तमत्वं तेषां यदुद्दिश्य प्रदीयते प्रतिपाद्यते तस्यार्थस्य बहुकरणात्। तत्र धर्मपात्राणि सदनुष्ठाना ब्राह्मणास्तपस्विनश्च। अर्थपात्राणि मन्त्रिपुरोहितादयो वार्ताकर्तारश्च। कामपात्राणि कमनीयाः स्त्रियः। तेषु प्रतिपादनार्थमेव राजवृत्तं विजिगीषोरनुष्ठानं चतुर्विधं चतुष्प्रकारं भवति' इत्युपाध्यायनिरपेक्षा च। तथा च 'पार्थिवः स्वर्गलोकभा'गिति कथने केवलमर्वाचीनं फलमुक्तम्। 'स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिना'मिति मूल एवोक्तेः। तथा च— 'इति यस्मादुभौ लोकौ धारयत्यात्मवान् नृपः' इत्युक्तमनुसन्धेयम्। ततश्च— एतादृशफलाव्यभिचारिणी ध्रुवा नीतिः। तद्विरुद्धा आधुनिकानामध्रुवा म्लेच्छनीतिरुपर्युक्त-पुरुषार्थव्यभिचारिणी सेक्युलारिजम्(इहमात्रवाद)नियता भारतीयचार्वाकजैनबौद्धादि-सम्मतार्थकामशास्त्रीयपुरुषार्थसम्पत्तिमपि दूषयन्ती पर्यावरणदूषणादिजीवजीवनापायापादन-निद्रादारिद्र्योन्मादप्रभृतिनवीनविपत्तिसहितमात्स्यन्यायापदं प्रसूत इति प्रत्यक्षमद्य नोपपादनमपेक्षते। महायन्त्रप्रवर्तन-सर्वाकरेष्वधीकारासच्छास्त्राधिगमनादिफलिता-परिमिताकाङ्क्षानित्यातृप्तिप्रभृतयः 'डेथ् इन एअर ऐंड वाटर' 'हैव वी मर्डर्ड टाइम' इत्याद्युक्तसहितमात्स्यन्यायश्च सर्वत्र प्रत्यक्षाः ध्रुवा नीतिमन्तरा दुर्निवाराः।

अत्र केषाञ्चिन्महती विप्रतिपत्तिरुपतिष्ठते। प्रत्यक्षादिप्रमाणैर्निर्णीतायां फलसिद्धावुपायसाधनानुष्ठानं नीतिरुक्ता। सतिसप्तम्या पूर्वं समकालं वा निर्णयः प्रविष्टः। ततश्च पूर्वं समकालं वा अनुष्ठानस्य फलसिद्धिः कथं प्रत्यक्षप्रमाणेन निर्णीता सम्भवति? अनन्तरभाविफलसिद्धिः प्रत्यक्षेण सम्बद्धवर्तमानग्राहिणा कथं सम्भवेत्? एकमुदाहरणम्, उपायास्तावत्—

'साम दानं च भेदश्च दण्डश्चेति चतुष्टयम्।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः'।।इत्युक्ताः।

तत्र—आयतेः सम्प्रकाशनं साम्न्यन्तर्गतम् 'अस्मिन् एवं कृते इदमावयो-र्भविष्यतीत्याशाजनन'मिति टीका। न ह्याशाकाले प्रत्यक्षः फलसिद्धिनिर्णयो भवति। न हि बीजावापकाले कृषिफलसिद्धिः प्रत्यक्षा? इत्याद्युदाहृत्य किञ्चिद्विप्रतिपद्यते नीतिलक्षण-समन्वये। तत्रेदं विविच्यते—

अत्र फलांशः, सिद्ध्यंशो निर्णयांशश्चेत्यंशत्रयम्। तस्मिन् निर्णयांशे प्रमाणत्रयान्वयः सर्वांशेऽन्वयासम्भवे पक्षे, सम्भवे तु सर्वांशेऽन्वयः। 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिने'ति स्थिते भाविफलांशः प्रत्यक्षः कथं सर्वांशे सम्भवेदिति चेत्, नेह लौकिकसन्निकर्षजन्यमेव प्रत्यक्षमुच्यते; किन्त्वलौकिकसन्निकर्षजन्यमपि। अर्जुनेन तु महाभारते गीतायां प्रोक्ता ध्रुवा नीतिः सर्वांशे प्रत्यक्षीकृत्यैव निर्णीतानुष्ठिता च। तथा हि—

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' इति सन्दिग्धं पूर्वम्। ततः 'त्वत्तः, भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया। त्वत्तः कमलपत्राक्षे'ति, श्रुत्वाऽपि-अप्ययोऽत्र युद्धे केषाम्? इत्यपीतरकृत्स्नजगता सह दिदृक्षुराह—'योगेश्वर ततो मे त्वं दर्शयात्मान'मिति। ततो भगवतोक्तम्—

'न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्'।।

इति भगवत्प्रदत्तदिव्यचक्षुषा (अलौकिकसन्निकर्षेण) अर्जुनो दृष्टवान्। तथैव पश्यन् फलसिद्धिं प्रत्यक्षमाह—

'अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः।।

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि।
केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः।।

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति।।

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः।।इति।

एवमेव—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः।।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्।।

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान्'।।

इत्येवं भगवानपि फलसिद्धिनिर्णयदर्शनं सर्वांशेऽनूदितवान्। ततश्चार्जुनस्येयं नीतिः सर्वांशे प्रमाणत्रयनिर्णीतैवेत्यतः सञ्जयोऽप्यन्ते तथेति 'ध्रुवा नीतिर्मतिर्मम'ेति निगमितवान्। तस्माल्लक्षणे प्रमाणत्रयनिर्णीतत्वं नासम्भवग्रस्तम्। सर्वार्थप्रत्यक्षदर्शिनो देवा भगवान् वा सदैव सर्वांशे प्रत्यक्षनीतेरनुष्ठातार इत्यस्त्येवैतत्। एवं मनुष्येषु येऽलौकिक-सन्निकर्षसम्पन्नास्तेषां नीतिरप्यनयैव रीत्या प्रमाणत्रयनिर्णीता ध्रुवा भवेदेव। 'युद्धे विनाशो नियतः कदाचिदुभयोरपीत्यादिसन्देहग्रन्थस्तु नियत्या वा दोषेण भ्रमनिर्णीततया वा भवन् अध्रुवो निर्णय उक्तः। महामद-अब्दालीविग्रहेऽगत्या नियत्या दैवविपत्त्या मराठासेनया उपवासेन पशुमारं मरणापेक्षया युद्धे 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं'मिति

निर्णीयैवानुष्ठिता ध्रुवैव नीतिर्नियतिनियताऽप्रतीकारदैवव्यसनतः। तत्र सैव फलसिद्धिर्निर्णीता शास्त्रमूलपारमेश्वरप्रत्यक्षा। ततश्च क्वचिद् अनुष्ठातुः स्वीयप्रत्यक्षतो वा शास्त्रादिमूलभूताप्तप्रत्यक्षतो वा निर्णीतत्वमादाय प्रमाणत्रयनिर्णीतत्वम्। दोषाभावे निर्णये प्रामाण्यस्य नियतत्वादिति। अतः 'परप्रत्यक्षस्याप्यात्मप्रत्यक्षसमत्वा'दिति विरोधाधिकरणे प्रभावती। अत एवोक्तम्—'चारैः पश्यन्ति राजानः' इति, 'त्रयाणामेकवाक्यत्वे सम्प्रत्ययः' इति च।

अर्जुनस्य कृते अयुद्धनीतिमूलप्रमाणानि परप्रत्यक्षाणि स्वप्रत्यक्षयुद्धनीतिमूलप्रमाणापेक्षया दुर्बलानीति यतः, स्वप्रत्यक्षं यावदननुष्ठेयान्येव। कदाचित्स्वप्रत्यक्षत्वेऽपि स्वात्मतुष्ट्या 'प्रकृतिस्त्वां नियोक्ष्यती'त्युक्त्या 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इत्यनेन च हेयान्येवेत्यनुसन्धेयम्।

एवं दिलीपेन नन्दिनीसेवानीतिनिर्धारणं 'सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारण'मिति वसिष्ठस्य प्रत्यक्षेण निर्णीय साधितमिति कालिदासो दर्शयामासेति सङ्गच्छते। तदेवाह—'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः' इति प्रमाणत्रयनिर्णीतफलसिद्धिं दिलीपः स्वयमिति।

एवमेव दक्षिणस्यां दिशि सीतान्वेषणाय प्रेषिता हनूमदादयो जटायोराप्तस्य वचनाद्रामश्राविताद्रावणेन सा हृतेति ज्ञात्वा लङ्कां तद्दिश्यनुमाय सम्पातिप्रत्यक्षतोऽशोकवनिकास्थेति प्रमाणत्रयेण सीतान्वेषणे ध्रुवां नीतिं वर्तितवन्त इत्यादि। एवं निर्णीतेऽपि हनुमता लङ्कां प्राप्येतस्ततोऽन्विष्य विभीषणादेः संवादापेक्षणं तदानीमपि तत्रैव स्थितेति, न मार्गच्युतेति, तत्रोपसर्पण उपायापायपरामर्शेन निरपायतां निर्णेतुं, सापाये तत्प्रतीकारसन्नाहेन सावधानीभवितुमित्यादि धीमद्भिरूह्यम्। अशक्तैरेकदेशं केवलं लक्षणस्य मत्वाप्यनुष्ठेया नीतिः क्वचिद्भवतीत्यन्यदेतत्।

अत एव सति सम्भवे सर्वत्र प्रमाणानामभिसम्प्लवमाह न्यायभाष्यकारो यथा—'किं पुनः प्रमाणानि प्रमेयमभिसम्प्लवन्ते? अथ प्रमेयं व्यवतिष्ठन्ते? इति। उभयथा दर्शनम्' इत्याद्युक्त्वाऽन्ते—'सा चेयं प्रमितिः प्रत्यक्षपरा। जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते। लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते। प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तत इति। तस्मात्सति सम्भवेऽभिसम्प्लव एवोक्तो जिज्ञासानिवृत्तये'। (न्या.भा.अधि. १, सू. ३) इति।

ननु चार्वाकादिसाधारण्यं लक्षणस्योच्यते कथम्? न हि तन्मते एवंविधालौकिकप्रत्यक्षादिकमभ्युपगतम्? नाप्यनुमानादि वेति चेत् 'संवरणमात्रं त्रयी लोकयात्राविदः' इति शास्त्रमनुसरता भ्रमकारणाभावे उपर्युक्तशास्त्रमूलभूतप्रत्यक्षनिर्णीतत्वं तेनापि परम्परया प्राप्तमेव बोध्यमिति। भ्रमकरणदोषसमवधाने तु नैव ध्रुवा नीतिरनुष्ठातुं शक्यते केनापीति नियतमेव। तथानुष्ठिता त्वेतल्लक्षणालक्ष्यैवेति निष्कर्षः। इतः परं विद्वांसः प्रमाणम्। ईश्वरो नियतिश्चेत्यादिश्चार्वाकादेरनभ्युपगममात्रेण न लुप्यते; किन्तु बलान्नियमयत्येव तानपि। यथा चोरो दण्ड्यत इति शासनमनभ्युपगच्छन्नपि न विमुच्यते, दण्ड्यत एवेति।

एवमपौरुषेयमूलं शास्त्रं ध्रुवां नीतिं प्रसूत एव। तथाप्यशक्तिङ्गतैर्भारतीयैर्म्लेच्छसङ्गतिं दूरीकर्तुमकृत[1]पर्याप्तनीतिकृत्यैर्दैवदुर्विपाकान्म्लेच्छशिक्षासङ्गतौ पतितै राजसतामसबुद्धिकर्तृभावं गतैः 'स्वयं नष्टः परान् नाशयतीति' पर्यवसायिम्लेच्छनीतितदीयापत्तीरत्राप्यावाह्य सहभागीभवद्भिरनुस्रियत इति प्रत्यक्षमेतत्। किं कुर्मः। ईश्वरो[2]रक्षतु। (कृष्णाश्रमः)

अत एव सन्तशिरोमणिभिर्ज्ञानेश्वरमहाराजैः 'धर्मांशी नीतीशी शेंस (ज) भरी' इति वाक्येन धर्मस्थापनैव नीतिस्थापनेत्युक्तम्। एवमेव श्रीसमर्थरामदासैरपि सोऽयं विषयः—

'मुख्य ते हरिकथा निरूपण। दुसरे ते राजकारण।
तिसरे ते सावधपण। सर्वविषयी'।।

इत्यनेन प्रोद्वलितः। अर्थाद् उक्तविषयेऽप्रमादस्य स्पष्टं विधानं कृतम्। एवं हिन्दीसन्तशिरोमणिभिर्गोस्वामिश्रीतुलसीदासैरपि—

'गुरुपद प्रीति नीतिरत जेई। द्विजसेवक अधिकारी तेई'।।

इत्यनेनास्यैव विषयस्य प्रोद्वलनं कृतमस्ति।

धर्मविषये प्रमादे सति यो मात्स्यन्यायः प्रवर्तते तस्य निवृत्तिरशक्यकोटावायातीत्ययं विषयो 'मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे' इत्यर्थशास्त्रवाक्येन सत्यतया सिद्ध्यति।

'सत्यान्न प्रमदितव्यम्' इत्यत्र प्रत्यक्षपरोक्षानुमानरूपप्रमाणत्रयनिर्णीतेष्ट-साधनताकं कर्मैव सत्यपदवाच्यमिति पूर्वमुक्तमेव, तद्विषयेऽनुद्बुद्धसंस्कारो न स्थापनीय इत्यतो मात्स्यन्यायप्रसङ्गोऽस्मासु मा भूदित्येतदुद्दिश्यैव 'नीतिशास्त्रा-नुसारेण वर्तनं धर्मः' इति चार्वाकेण यदुक्तं तदवश्यं स्मर्तव्यम्, अन्यथा सोऽप्येको महान् प्रमादः स्यात्। अतः कामशास्त्रे धर्मविषये चार्वाकस्य यः संवादो वर्णितः सोऽवश्यमवधातव्यः।

---

१. अकृतपर्याप्तनीतिकृत्यत्वं नीतिज्ञानाभावादेवेति न नियमः। अतस्तथैवेति न वक्तव्यम्।

२. 'ईश्वरो रक्षत्वि'त्यनेन 'दैवपरो ध्यायन्निति ये असन्धेयत्वपुरस्करणं भवतीति मन्यन्ते ते कृपया विमृशन्तु—ईश्वरः = ईश्वरभाववान्। 'ईश्वरभावः = प्रभुशक्ति'रिति मधुसूदनी, विजिगीषोर्गुणोदये 'स्वप्रधानता = अनेयता' इति ज़यमङ्गला, 'आत्मायत्तसिद्धि'रित्यु-पाध्यायनिरपेक्षा, समीकरणसम्भवात्। तथा च प्रवर्तमानराजनीतौ तादृशस्वप्रधानतावान् प्रभू रक्षतु = रक्षानीतिं करोत्विति विधौ लोडनुतिष्ठेदिति। चेत्तादृशः कोऽपि तत्र तर्हीश्वरोऽन्यः कश्चित्समर्थस्तथानुतिष्ठेदिति। न चेत्तथा कश्चित्तदेतरः कश्चित्समर्थीभूयानुतिष्ठेदिति। तत्र च दैवमनुकूलयितुं श्रीसमर्थरामदासोक्तिमनुसृत्य 'दैवसम्पन्नतायै', 'शान्त्या वा प्रशमं नये'-दित्याद्यनुतिष्ठेदिति लिङर्थप्रेरणैव लोडर्थ इति—'मुख्य ते हरिकथा निरूपण। दुसरे ते राजकारण' इतिवत् 'दैवं पुरुषकारश्च लोकयात्रां यापयत' इत्यर्थशास्त्रमिष्यते। तत्र परमेश्वरान्तप्रभुषु कर्तव्यम् 'उच्चैर्यदपि जानीयान्नीचैस्तदपि कीर्तये'दित्यनुजीविवृत्तं प्रभुषु संस्मृत्य प्रार्थनारूपेण प्रेरणेति प्रार्थनापि इति च। दैवपरत्वादिरर्थो यावज्जीवं शास्त्रीयराजनीतिकरणे कृतप्रयत्नानां श्रीगुरुचरणानामभिप्रेतत्वे प्रमाणाभावात् 'स्वकर्म-सूत्रग्रथितो हि लोकः' इति त्याज्य इति सोत्साहा गुणगृह्याः।

## धर्मविषये चार्वाकपूर्वपक्षस्तदुत्तरं च

तत्र चार्वाकेणायं पूर्वपक्षः कृतो यत् 'न धर्मांश्चरेत्' इति। अत्र धर्मानुष्ठानं न कर्तव्यमिति प्रतिज्ञा, तत्र हेतुवाक्यद्वयं प्रदत्तम्—'एष्यत्फलत्वात्, सांशयिकत्वाच्चे'ति। अर्थाद् धर्मानुष्ठानस्य फलं यत्स्वर्गादि, तत्तु वर्तमानकाले न प्राप्यं, किन्तु भविष्यति काले इत्युच्यते, तत्प्राप्तिश्च सन्दिग्धैवेति हेतुद्वयमुक्त-पूर्वपक्षे प्रदश्र्यते। तत्र स्वाभिमता उपपत्तयोऽग्रे प्रदर्शिता दाढर्याय। 'को ह्यबालिशो हस्तगतं परगतं कुर्यात्'। अर्थात्—कः प्राज्ञ ईदृशः स्याद्यः स्वहस्तगतं धनं निष्कारणं परस्मै दद्यात्? 'वरमद्य कपोतः श्वो मयूरात्'। अर्थात्—मांसभक्षकः कोऽपि मनुष्यः परैर्वञ्चितः सन् अद्य प्राप्तं कपोतं श्वो मयूरः प्राप्येतेत्याशया परस्मै न दद्यात्। 'वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः'। निश्चितस्ताम्रपणोऽपि सन्दिग्धसुवर्णनिष्कापेक्षयाऽत्यधिकमूल्यवदस्ति। एवम्प्रकाराभिर्युक्तिभिः पूर्वोक्तहेतुद्वयं दृढीक्रियते। एवंस्थितौ 'धर्मान्न प्रमदितव्य'मिति कथं सम्भवेत्? अतः पूर्वोक्तचार्वाकपूर्वपक्षस्योत्तरं यत्सिद्धान्तिभिर्दीयते तदप्यवश्यं ध्यातव्यम्। अत्र सर्वापेक्षयाधिकं महत्त्वमिदमेव दृश्यते यत्— स्वयं चार्वाकेण 'संवरणमात्रं हि त्रयी लोकयात्राविद' इत्युक्त्वा वर्णाश्रमधर्मव्यवस्थासंरक्षणेनैव लोकस्थितिः सुस्थिरा स्यादिति तदर्थं नीतिशास्त्रानुसारेण स्वस्यापि (चार्वाकस्यापि) वर्तनमावश्यकमिति निर्णीतमस्ति।

## सत्त्वगुणाभावेन पाश्चात्त्यदेशे उन्मादवृद्धिः

चार्वाक आरोग्यार्थमेव वा भवतु? वैद्यशास्त्रानुयायी वर्तते। वैद्यशास्त्रे शारीरव्याधिकारणतया वातपित्तकफरूपदोषाणां वैषम्यमुक्त्वा मानसिकरोगकारण-दोषत्वं रजस्तमोगुणयोरुक्तम्। तथा हि—

'क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाऽधिका
दम्भः कामुकताऽप्यलीकवचनं चाधीरता दुष्कृतिः।
ऐश्वर्यादभिमानिताऽतिशयिताऽऽनन्दोऽधिकश्चाटनं
प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः'॥
'नास्तिक्यं सुविषण्णताऽतिशयिताऽऽलस्यं च दुष्टा मतिः
प्रीतिर्निन्दितकर्मशर्मणि सदा निद्रालुताऽहर्निशम्।
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता
प्रख्याता हि तमोगुणेन सहितस्यैते गुणाश्चेतसः'॥

इति क्रोधताडनादीनां रजोगुणजन्यत्वं, नास्तिक्यस्य तमोगुणजन्यत्वं च प्रतिपाद्य तत्प्रतीकारसमर्थम्—

'आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो
मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानं च निर्दम्भता।
कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादरा-
देते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः'॥

इति वर्णितसत्त्वगुणयुक्तं मन इत्युक्तम्। साम्प्रतममेरिकाप्रभृतिविज्ञानसमृद्ध-राष्ट्रेष्वप्येतादृशमानसिकरोगः प्रत्यहं वर्धत इत्ययं विषयः 'राक फेलर इन्स्टिट्यूट'-संस्थायाः प्राध्यापकेन मिस्टर पि ऑटमहोदयेन न्यायालये प्रदर्शनयोग्यप्रमाणद्वारा प्रतिवर्षं तत्रत्यचिकित्सालयेषून्मादरोगिणां सङ्ख्या लक्षाधिकमात्रया वर्धत इति साधितमस्ति। भारतवर्षे तु सर्वत्र सन्तवाङ्मयप्रचारेण सत्त्वगुणप्रभाव आधिक्येन प्रवर्तत इति तादृशी दशा नास्तीत्ययं गौरवावहो विषयः।

## 'विवेकश्रुतिसम्पत्ती'त्यादिसङ्कल्प एव सत्त्वगुणोद्भवः

'विवेक-श्रुतिसम्पत्ति-गुरुभक्ति-तपस्वितासिद्ध्यर्थं विवेक-श्रुतिसम्पत्ति-गुरुभक्ति-तपस्विताख्य-व्रतचतुष्टयं यावज्जीवमहं करिष्ये' इति सङ्कल्पे स्थितास्तु सर्वदा सत्त्ववन्त एव भवन्ति। अत एव राज्यलक्षणकथनप्रसङ्गे—

'स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम्'॥

इति नीतिसारकारेणोल्लिखितमस्ति। 'नीतिकामशास्त्रानुसारेण वर्तनं धर्म' इति वदता चार्वाकेण उपरिदर्शितवैद्यशास्त्रोक्तसत्त्वगुणस्याभावे मात्स्यन्यायोऽ-वश्यम्भावीति विज्ञाय— अर्थकामपुरुषार्थापेक्षयैव वा कामं भारतीय-राजनीत्यनुसारिणी लोकव्यवस्था पालनीयेति मन्यत इत्यतो हेतोः पूर्वोक्तरीत्या चार्वाको भारतीयराजनीत्यनुकूल एवेति सिद्ध्यति।

## वेदप्रतिपक्षौ बौद्धार्हतावनुभवानन्तरं वेदानुयायिनौ संवृत्तौ

राजनीतिशास्त्रटीकाकारैर्यद्यपि 'बौद्धार्हतौ तु वेदप्रतिपक्षत्वान्नोक्तौ' इत्यान्वीक्षिकीप्रसङ्ग उक्तम्, तथापि यथा यथा समयो व्यतीतस्तथा तथा बौद्धार्हतानामपि विचारे परिवर्तनं जातमिति दृश्यते। जैनाचार्येण सोमदेवसूरिणा नीतिवाक्यामृतग्रन्थं निर्माय ~वैदिकराजनीतेर्मान्यता प्रदत्ता। अर्थशास्त्रटीका-

कारैर्योग्घमभिक्षुप्रभमतिप्रभृतिभिर्नाम्ना बौद्धतया ज्ञायमानैरपि बौद्धेभ्यश्चरकार्यं दत्त्वा तेषां देशान्तरवासव्यवस्थाऽङ्गीकृता वर्तते।

## वेदप्रतिपक्षाणामितो निष्कासनकाल एव जयमङ्गलाकारकालः

इतः पूर्वं शतानां चतुर्विंशतेर्वर्षेभ्यः प्रागर्थशास्त्ररचनाकाल इति संसाध्यते। तदीयजयमङ्गलाटीकायाः प्रणयनकालो भारतवर्षाद् बौद्धानां निष्कासनकालोऽर्थात् श्रीमच्छङ्कराचार्याविर्भावकालः सप्तमशताब्दी भवेदिति निश्चीयते। 'पुष्यमित्रं वयं याजयामहे' इति महाभाष्यस्थवर्तमानकालप्रयोगानुसारेण यथा—इतः पूर्वं शतानां त्रयोविंशतेर्वर्षेभ्यः प्राङ् महाभाष्यकारकाल इति सिद्ध्यति, तथैव 'अपनय-बाहुल्याच्चैते शास्त्रविद्भिरुद्वासीक्रियन्त' इति जयमङ्गलास्थवर्तमानकालनिर्देशा-नुसारेण बौद्धानां निष्कासनकाल एव जयमङ्गलाकारकाल इति सिद्ध्यति। बौद्धानां दशरथजातकादिग्रन्थदर्शनेन योऽपनयस्तेषां दृश्यते, सोऽद्यापि जावा-सुमात्रादिदेशेषु तैः प्रवर्त्यमानरामलीलादिषु दृश्यते। अस्तु! जयमङ्गलाकाराः शङ्कारार्या उपर्युक्त-प्रमाणेन अन्यैरपि प्रमाणैराद्यशङ्कराचार्या एव स्युरिति दृढतया भाति।

## वर्णाश्रमधर्मव्यवस्था चार्वाकसम्मतेत्यत्र जयमङ्गलोपष्टम्भः

अत एव 'वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्रायाः' इति कामसूत्रस्य तदीयव्याख्यायां जयमङ्गलायाम्—

'वर्णाश्रमेति। वर्णा ब्राह्मणादयः। आश्रमा ब्रह्मचर्यगार्हस्थ्यादयः। तेषामाचारः स्वधर्मः। तस्य स्थितिर्व्यवस्था। सैव लक्षणं यस्या लोकयात्रायाः सा लौकायतिकैर्मा भूदव्यवस्थायां मात्स्यो न्याय इति दृष्टार्थं वर्णिता 'संवरणमात्रं[1] हि त्रयी लोकयात्राविद' इति। तां च लोकविश्वासनार्थमाचरद्भिः कथं नाचरितो धर्मः? दृष्टार्थश्च[2] यद्यदृष्टार्थोऽपि स्यात् को विरोधः? एतेन 'न धर्मांश्चरे'दिति प्रतिज्ञाया अभ्युपगमबाधां दर्शयति'। इति मात्स्यन्यायप्रसङ्गभीत्या लोकस्थित्यर्थं वैदिकराजनीतेरनुष्ठानं चार्वाकेणापि सम्मन्यत इति दर्शितमस्ति। चार्वाकः प्रत्यक्षैकप्रमाणवादीति मात्स्यन्यायो यदा भवति तदा स प्रत्यक्षमनुसृत्यैव धर्मस्यावश्यकतां वदति। वैदिकराजनीतिज्ञास्तु—इतरप्रमाणैर्भूतकाले बहुवारं

---

१. 'संवृतिरविद्ये'ति न्यायशास्त्रीयबौद्धाधिकारटिप्पण्यां दीधितिकारैरर्थः क्रियते। 'अविद्याव-द्विषयाणि शास्त्राणी'ति श्रीमद्भगवत्पूज्यपादैरपि त्रयीविहितवर्णाश्रमधर्मकथनावसरे तेषां व्यावहारिकसत्यत्वरूपं संवरणं स्वीकृतमस्ति।

२. दृष्टार्थकविधयो नियमादृष्टार्थका अपि भवन्तीति मीमांसकप्रसिद्धमेतत्।

सञ्जातं भविष्यति कालेऽपि सम्भाव्यमानं च मात्स्यन्यायमालोच्य पूर्वमेव सावधानाः, अत एव सत्त्वप्रधाना भूत्वा यावच्छक्यं प्रमादो यथा न स्यात्तथा प्रयतन्ते। अनेन संक्षिप्तलेखेन सर्वेषां प्रमादानां निदर्शनं निरसनं वा यद्यपि न शक्यं, तथापि केषाञ्चित् प्रधानप्रमादानां निदर्शनाय निरसनाय च प्रयत्यते।

## वेदप्रामाण्यविचारेऽप्रमाद आवश्यकः

प्रधानशङ्कासु का शङ्काऽत्र विचारार्थं स्वीकरणीयेत्यस्य निर्णय एवं क्रियते यत्—श्रीमदाद्यशङ्कराचार्यकाले मण्डनमिश्रगृहसङ्केतकथनावसरे कूपतो जलं निष्कासयन्तीभिः स्त्रीभिर्यदुक्तं तदत्र विचारार्हमस्तीति। ताभिरुक्तं यत्—

'स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः'।।इति।

अनेनेदं प्रतिभाति यत्—बौद्धादिनास्तिकमतप्राबल्यसमये सनातनमत-प्राबल्यनिर्माणार्थं ये ये प्रयत्नाः कृतास्तेष्वयमप्येक आसीद्यत्— मण्डनमिश्रगृहे सहस्राधिकशिष्यैः क्रियमाणः 'वेदः स्वतः प्रमाणं परतः प्रमाणं वा? वेदो नित्योऽनित्यो वा?' इत्यादिविषयाणां सुमधुरः साधारो विचारः। स च गृहनीडस्थशुकानामप्याकर्षको जात आसीदिति तैस्तद्व्यञ्जकशब्दानामुच्चारणं यत्पुनः पुनः क्रियते स्म, तेन ते शब्दाश्चतसृष्वपि दिक्षु व्याप्ता आसन्। तदानीं कथञ्चिदास्तिकमतस्थापना जाता, सत्त्वगुणोद्भवश्च जात आसीत्।

साङ्गवेदविद्यालयीयरजतजयन्त्यवसरे निर्मितो वेदानां प्रामाण्यविषयकः संस्कृतलेखः, अनन्तरं हिन्दीभाषायां निर्मितौ 'वेदों का अपौरुषेयत्व—शान्ति का अग्रदूत'-ग्रन्थौ च यद्यपि तदानीं गीर्वाणवाग्वर्धिनीसभया परिशुद्धतया निर्णीतास्तथापि तन्नादः शुकानामप्याकर्षकः सन् चतसृष्वपि दिक्षु न व्याप्नोत्। एतस्य कारणमिदमेव यत् पूर्वतनकाल इव साम्प्रतं सहस्राधिका मा सन्तु नाम, किन्तु पाश्चात्त्यवात्यावशात् परिगणिताः केंचन शास्त्रीयतत्त्वजिज्ञासवोऽपि न सन्तीति। अतस्तन्नादः कथं लोके व्याप्नुयात्? तदर्थं स विचारः कतिपयानामेव वा पुरतः प्रदर्शितो भवत्वित्यस्मिन् लेखे प्रकटीक्रियतेऽस्माभिः।

## प्रसङ्गाद् धृतिमतिभावयोर्निरूपणम्

समाजे सन्तोषस्य शान्तेश्च स्थापनार्थं धृतिभावस्य मतिभावस्य च स्थापनमावश्यकमस्ति। पूर्वं सत्त्वगुणरूपेण धृतिभावस्य वर्णनं कृतमेव, मतिभावोऽपि तदन्तर्गत एव भवति।

'अपूर्वप्रतिभानं स्यान्मतिस्तां तु विभावयेत्।
अन्वयव्यतिरेकोत्थैः प्रत्ययैः शास्त्रचिन्तनैः।।
ऊहापोहैश्च विविधैरथ तामनुभावयेत्।
सन्दंशचतुराद्यैश्च करैरुत्क्षेपणैर्भ्रुवोः।।
नानाशास्त्रार्थविषयैः शिष्याणामुपदेशनैः।
तर्काख्यौ प्रत्ययावूहापोहौ विधिनिषेधयोः'।। (सङ्गीतरत्नाकरे)

इति साहित्यशास्त्रे मतिभावस्य वर्णनं कृतमस्ति। तत्रापूर्वप्रतिभानं मतेः स्वरूपम्। तदङ्गभूतानि—अन्वयव्यतिरेकोत्थप्रत्ययः, शास्त्रचिन्तनम्, विविधोहापोहरूपस्तर्कश्च तत्रावश्यकानि सन्ति। एते सर्वे विषयाः 'विवेकश्रुतिसम्पत्ती'त्याद्युपर्युक्तसङ्कल्परूपधृतिभावान्तर्गतविवेकेऽन्तर्भवन्ति। एवंविधविवेकस्यैव विस्ताररूपा 'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानं नीति'रिति लक्षणलक्षिता नीतिर्भवति। अत एव 'नीतिशास्त्रानुसृत्यादेरर्थनिर्धारणं मति'रित्यपि साहित्यशास्त्रकारैरुच्यते। सेयं नीतिश्चार्वाकस्यापि मान्येति पूर्वमुक्तमेव। कस्मिन्नपि प्रसङ्गे यदि मतिभावस्य तन्मूलकपूर्वोक्तसङ्कल्परूपधृतिभावस्य चातिक्रमणं स्यात्, तर्हि—

'अकार्यकरणाज्ञानगुर्वाज्ञादिव्यतिक्रमात्।
अनिर्वाहात्प्रतिज्ञायास्त्यागे भूयोऽनुतापतः।।
व्रीडा तदनुभावाः स्युरुर्वीलेखनचिन्तनम्।
मुखावनम्रताऽव्यक्तवचनं नखकृन्तनम्।।
वस्त्राङ्गुलीयकच्छेदो दूरादेवावगुण्ठनम्।
अनिर्गमो बहिः क्वापि सर्वत्राप्यनवस्थितिः'।।

इत्येतादृशो दुष्परिणामः समाजेन भोक्तव्यः स्यात्। ईदृशी स्थितिरस्माकं समाजस्य मा भूदिति अस्मदीयशास्त्रविषयेऽपि विचार आवश्यकः। एवं तत्रत्यप्रामाण्याप्रामाण्यविचारज्ञानमपि कर्तव्यमेव, अन्यथा महान् प्रमादः स्यात्। अतः प्रमात्वाप्रमात्वविषये या शास्त्रीया परिभाषा तस्या ज्ञानमपरिहार्यं भवति। तत्र विशेष्यताप्रकारतेत्यादिपारिभाषिकशब्दाः शास्त्रज्ञैः प्रयुज्यन्ते।

## क्वचिद्यथार्थज्ञानमपि भ्रमाधीनं भवति

दर्पणे यन्मुखप्रतिबिम्बं दृश्यते तज्ज्ञानमप्रमेति सर्वोऽपि वदति। मनुष्यदेहे दृश्यमानस्य तस्य (बिम्बस्य) ज्ञानन्तु प्रमेति लोकविश्रुतमस्ति; किन्तु व्यवहारकाले

कस्यचिद्यथार्थज्ञानं भ्रमसहयोगेनापि साधनीयं भवतीत्यपि सत्यमेव। यथा दर्पणे स्वमुखं दृष्ट्वैव स्वीयमुखाकृतेः सत्यकल्पना भवति। अत्र भ्रमसहयोगेनैव सत्यकल्पना क्रियत इति सर्वमान्यमस्ति। उपर्युक्तविशेष्यताप्रकारतादिपदार्थानां ज्ञानमपि भ्रमसहयोगेन भवतीत्यत्र विप्रतिपत्त्या न भाव्यम्। किञ्च स्वप्नो भ्रम एवेति सर्वमान्यः सिद्धान्तः, तथापि पतत्रैवोपदिष्टस्य रामरक्षास्तोत्रस्यान्तर्गतो यः 'सासितूणधनुर्बाणपाणिं नक्तञ्चरान्तक'मित्यादिध्यानश्लोकः, तत्र वर्णितौ रामहस्ते विद्यमानौ धनुर्बाणौ यदि तत्र दृश्येते, रामरक्षास्तोत्रमेव वा पठ्यते तर्हि तज्ज्ञानं भ्रम इति केनापि नोच्यते; किन्तु स्वप्ने यदि स्वशिरश्छेदो दृश्येत तर्हि तस्य सत्यता केनापि न मन्येत। उपर्युक्तदृष्टान्तयोर्यदा दर्पणे मुखदर्शनं तदा मुखे प्रकारता, दर्पणे विशेष्यता चायाति। रामहस्ते धनुर्बाणौ यदा दृष्टौ तदा धनुर्बाणयोः प्रकारता, रामहस्ते च विशेष्यता, अर्थाद् आधारतया भासमाने वस्तुनि विशेष्यता, तदुपरिभासमाने प्रकारतेति तदीयपरिभाषा शास्त्रज्ञैर्निश्चिता।

## भ्रमप्रमयोर्न्यायवेदान्तरीत्या विवेचनम्

उपर्युक्तदर्पणोदाहरणे प्रकारताश्रयो मुखं विशेष्यताश्रये दर्पणे वस्तुतो नास्तीति 'तदभाववति तत्प्रकारकत्व'रूपं भ्रमत्वम्, द्वितीयोदाहरणे तु प्रकारताश्रययोर्धनुर्बाणयोरभावो रामहस्ते ध्यानसमये नास्तीति तादृशं भ्रमत्वं तज्ज्ञानस्य न भवतीति न्यायशास्त्रे मन्यते। वेदान्तिभिस्तु विशेष्यनिष्ठाभावप्रतियोगित्वं यदि प्रकारे स्यात् तर्हि स प्रकारः कल्पितः, अर्थात् मिथ्येत्युच्यते; किन्तु न्यायशास्त्रपरिभाषानुसारेण 'तदभाववति तत्प्रकारकत्वम्' दर्पणमुखदर्शनेऽस्तीति तदेवाप्रमात्वम्, यद्वा भ्रमत्वमिति सिद्ध्यति। एवं वेदान्तशास्त्रदृष्ट्या तदानीमेव विशेष्यनिष्ठाभावप्रतियोगि मुखं मिथ्याभूतमिति सिद्ध्यति। एतादृशमिथ्यावस्तुविषयकत्वं यत्तादृशज्ञाने तदेव भ्रमत्वमिति मन्यते। न्यायमते ज्ञाननिष्ठं भ्रमत्वं यदा ज्ञायते तदा तज्ज्ञानमप्रामाण्यज्ञानास्कन्दितमित्युच्यते। वेदान्तशास्त्रानुसारेण तु तत्र मिथ्यावस्तुविषयकत्वे ज्ञाते तादृशव्यवहार इति विशेषः। अर्थाद् विशेष्ये प्रकारस्याभावे ज्ञाते न्यायमते ज्ञानेऽप्रामाण्यव्यवहारो भवति।

अथ मृगतृष्णिकायां मृगैर्यज्जलं ज्ञायते, तत्र मरुभूमिर्विशेष्यभूता, जलं च प्रकारभूतम्। तथा च कस्यापि वस्तुनः प्रत्यक्षार्थं तेन सह चतुरादीन्द्रियसन्निकर्षोऽपेक्ष्यते। मृगतृष्णिकाभ्रमावसरे तत्र जलं सर्वथा नास्तीति कथं मरुभूमौ जलं दृश्यते? इत्यस्योपपत्तिर्वेदान्तिभिः प्रतिपाद्यते यत् तत्राज्ञानपरिणामरूपं मिथ्याजलमुत्पद्यते, तेन सह चक्षुःसन्निकर्षो भवति, अत एव तस्य प्रत्यक्षं

भवतीति। तादृशजलसमवायिकारणाज्ञाननाशे मिथ्याजलमपि नश्यतीति, अनन्तरं न दृश्यते तत्।

'मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः'॥

श्लोकेऽस्मिन् पुष्पमालायां सर्पभ्रममुदाहरणत्वेन गृहीत्वा तत्र मिथ्या-सर्पज्ञानेन मनुष्यो यथा भीतो भवति, तथा तदज्ञाननाशे सर्पो भयं च नश्यतः, एवमेव सच्चिदानन्दरूपब्रह्मणोऽज्ञानदशायां त्रैलोक्यरूपं जगत् स्वज्ञानद्वारा भयादिकारणं भवति, तत्त्वज्ञानानन्तरं चाज्ञाननिवृत्त्या भयकारणनाशेन जीवः सच्चिदानन्दरूपोऽवतिष्ठत इति वेदान्तमतरीत्या प्रतिपादितमस्ति। अर्थात्—प्रमाणमूर्धन्यस्य वेदस्येदमेव मतम्।

**सर्वमते प्रवृत्त्युपयुक्तं प्रामाण्यं स्वतो ग्राह्यं, व्यावहारिकं तु परतः**

उक्तवेदमतानुसारेण दर्पणरूपविशेष्यनिष्ठाभावप्रतियोगित्वरूपं यन्मुखस्य मिथ्यात्वं तस्य प्रत्यक्षं चक्षुरिन्द्रियद्वारा कदापि न भवितुं शक्यम्; किन्तु त्वगिन्द्रियेण स्पृष्ट्वा भवितुमर्हति। अर्थात्—दर्पणे त्वगिन्द्रियद्वारा मुखस्याभावे ज्ञायमानेऽपि चक्षुरिन्द्रियद्वारा तत्सत्यमित्येव प्रतिभाति। एतस्य कारणमिदमेव यत्—कल्पितमुखस्य तस्य समवायिकारणमज्ञानं (तत्संस्कारो वा) यावत्पर्यन्तं चक्षुरिन्द्रियसहकृतं स्यात्तावत्पर्यन्तं तस्य नाशोऽशक्य इति।

स्वप्नभ्रमे दृश्यमानाः पदार्था निद्रया जनितेन स्वदेहं व्याप्य स्थितेनान्धकार-रूपेणाज्ञानेनैव निर्मिता भवन्तीति मनुष्यो यावत्पर्यन्तं निद्रितो भवति तावत्पर्यन्तं तेषां मिथ्यात्वं न ज्ञायते। जाग्रदवस्थायां जातायां स्वप्नसृष्टेः समवायिकारण-मन्धकाररूपमज्ञानं नष्टमिति 'समवायिकारणनाशात्कार्यनाश' इति न्यायेन स्वप्नसृष्टिर्नश्यति, एवमुपर्युक्ताभावप्रतियोगित्वरूपं मिथ्यात्वमपि ज्ञायते। एवञ्च भ्रमकारणीभूतमन्धकाररूपमज्ञानं द्विविधम्। प्रतिबिम्बज्ञानकारणमज्ञानं यावत्प्रपञ्च-व्यवहारस्तावत्तिष्ठति। अर्थादेव तन्मिथ्यात्वं चक्षुरिन्द्रियद्वारा कदापि न ज्ञातुं शक्यम्। एवमियं प्रथमाज्ञानस्य स्थितिः। स्वप्नभ्रमस्य समवायिकारणमन्धकार-

---

१. अस्मिन् प्रसङ्गे सर्वत्र समवायिकारणशब्दो नैयायिकमतप्रसिद्धः प्रयुक्तः, वेदान्तिमतरीत्या तत्रोपादानकारणशब्दो योज्यः।

रूपमज्ञानं द्वितीयम्। अस्य तु स्थिति:—सुषुप्तस्य जाग्रदवस्थापर्यन्तमेव। अर्थात्तदुत्तरं तन्नश्यति, अतस्तन्निर्मिता स्वाप्निकसृष्टिरपि नश्यतीति तस्या मिथ्यात्वं प्रपञ्चावस्थायामेव ज्ञायते।

अनयोरज्ञानयो: प्रथमाज्ञानेनोत्पन्नाया: सृष्टेर्व्यावहारिकसृष्टिरिति, द्वितीयाज्ञानजन्यसृष्टे: प्रातिभासिकसृष्टिरिति च संज्ञा वेदान्तिभिर्दत्ता। अनयो: कापि सृष्टि: स्वीयसमवायिकारणमज्ञानं यावत् स्थास्यति तावत् पूर्वोक्ताभावप्रतियोगित्वरूपमिथ्यात्वेन न ज्ञायत इति वेदान्तसिद्धान्त:। अत: प्रथमसृष्टेर्व्यावहारिकसत्यता, द्वितीयसृष्टे: प्रातिभासिकसत्यता, पारमार्थिकसत्यं तु एकं ब्रह्मैवेति मन्यते। वेदान्तरीत्या एतादृशत्रिविधसत्यत्वस्य वर्णनं 'सत्यं चानृतं च सत्यमभवत्। यदिदं किञ्च' इत्यत्रोपलभ्यते। तत्र सत्यम् = प्रतिबिम्बवद् व्यावहारिकसत्यम्, अनृतम् = स्वप्नवत्प्रातिभासिकसत्यम्, एतद्द्वयस्यापि धारणं तृतीयेन पारमार्थिकसत्यरूपेण ब्रह्मणा कृतमित्युक्तश्रुतेरर्थ:। चलचित्रगृहे प्रथमत: एकस्मिन् पटेऽन्धकारो निर्मीयते, अनन्तरं तत्रापेक्षिता चित्रमालिका प्रदर्श्यते। चलचित्रद्वारा प्रदर्श्यमानं दर्पणे -पतितस्य जलप्रतिबिम्बस्य, मृगतृष्णिकायां दृश्यमानस्य चेति चित्रद्वयमपि क्रमेण व्यावहारिकसत्यस्य प्रातिभासिकसत्यस्य चोदाहरणं भवितुमर्हति। पारमार्थिकसत्यस्यापीदमेवोदाहरणम्, यत्—चलचित्रगृहे पूर्णप्रकाशे क्रियमाणे मूलाज्ञानतुल्ये मूलान्धकारे निवृत्ते दर्पणस्थजलप्रतिबिम्बरूपं व्यावहारिकसत्यं मृगतृष्णाजलरूपं प्रातिभासिकसत्यं चेति द्वयमपि नश्यति; किन्तु ब्रह्मस्थानापन्नं पटमात्रं दृश्यत इति। अर्थात् पारमार्थिकसद्ब्रह्मज्ञाने सति पूर्वकालिकं द्विविधमप्यज्ञानं पूर्णरूपेण निवर्तत इत्ययं विषय: प्रबोधचन्द्रोदयनाटकदर्शनेन ज्ञायते। अत: पूर्णप्रबोधपर्यन्तं व्यावहारिकजगत: सम्बन्धो न निवर्तते। अनयैव रीत्या व्यावहारिकप्रबोधपर्यन्तं स्वाप्निकजगत: सम्बन्धोऽपि न निवर्तते। अत एव स्वप्नसृष्टिरपि तत्काले पूर्वोक्ताभावप्रतियोगित्वरूपमिथ्यात्वेनाज्ञायमानैव भवति। पूर्वोक्तसत्यत्रयविषये प्रमादो न कर्तव्य इति 'सत्यान्न प्रमदितव्य'मित्यनेन वाक्येन दर्शितमस्ति; किन्तु 'धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्'। 'देवपितृकार्याभ्यां न प्रमदितव्य'मिति चतुर्भिर्वाक्यैर्ब्रह्मज्ञानपर्यन्तं प्रपञ्चं सत्यमर्थाद् व्यावहारिकसत्यं मत्वा वर्तितव्यमित्यादेश: कृत:। अतो वेदान्तिमतेन 'विशेष्यवृत्त्यभावप्रतियोगित्वेनाज्ञायमानतादशै'व नैयायिकमतेन 'तदभाववति तत्प्रकारकज्ञानत्वरूपाप्रमात्वेनाज्ञायमानतादशा' भवति, तदेव च सत्यत्वं प्रवृत्त्युपयुक्तप्रामाण्यस्वरूपं स्वत:सिद्धम्, अतो जगत्सत्यत्ववादिभिर्नैयायिकादिभि: शास्त्रकारैरपि तत् स्वतोग्राह्यमित्यैव मन्यते। वेदान्तिमतरीत्यापीदमेव

सत्यत्वं स्वतोग्राह्यम्। यावद्व्यवहारकालाबाध्यत्वरूपं प्राथमिकं व्यावहारिकसत्यत्वं तु भूतभविष्यत्कालरूपातीन्द्रियपदार्थघटितत्वान्नैयायिकमतवद्वेदान्तिमतेऽपि कदापि न स्वतोग्राह्यम्; किन्तु परतोग्राह्यमर्थादनुमेयमेव। तादृशानुमितिः केन हेतुना भवतीत्ययं विचारो नैयायिकमतवद्वेदान्तिमतेऽपि समानः। अस्मिन् विषये कस्यापि संशयो नोचितः। अत एव— अद्वैतसिद्धिकारैः 'परीक्षितागमस्य[१] प्रामाण्यमस्तीत्युक्तम्।

अधुना यावद्व्यवहारकालाबाध्यत्वरूपप्रामाण्यस्य परीक्षा कथं कर्तव्येत्यस्मिन् विषयेऽनुद्बुद्धसंस्कारो न स्थापनीय इत्येतदर्थं स प्रस्तूयते। मधुनि क्रेतव्ये वैद्येनापि परीक्ष्यैव तद् ग्राह्यं भवति, अन्यथा धूर्तैः शर्करापाके मधुवद् गन्धं रूपं च निर्माय कृत्रिमं मधु दत्वाऽज्ञजना वञ्च्यन्ते। एवंस्थितौ 'यथार्थमधुनि वर्तिकां निमज्जय्य दीपः प्रज्वालयितुं शक्यः, एवं यदि मक्षिका तत्र निमज्ज्यते तथापि सा न म्रियते, किन्तु सहजत उपर्यागत्योड्डयते' इत्यादिपरीक्षया तत्र सदसद्विवेकः कर्तव्यो भवति। एवं रीत्या परीक्षितं मधु यदि रोगिणे दीयेत तर्ह्येव तस्य गुणो लभ्येत, अन्यथा न। एवमेव शास्त्रस्यापि याथार्थ्यं परीक्षणीयं चेन्मधुपरीक्षावत् केचन विषया ज्ञातव्या भवन्ति। एवंरीत्या परीक्ष्य स्वीकृतं शास्त्रमनुसृत्य व्यवहरत्सु न कस्यापि दोषस्य सम्भवः।

## शास्त्रचक्षुष्ट्वप्राशस्त्यम्

'कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना'।।

इत्यत्र कालिदासेन सूक्ष्मकार्यार्थदर्शित्वरूपो गुणः शास्त्रेष्वस्तीत्युक्तम्। सूक्ष्मकार्यार्थदर्शित्वस्य व्याख्या मल्लिनाथेनैवं कृता वर्तते—

'सूक्ष्मान् कार्यार्थान् कर्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्यार्थदर्शिना शास्त्रेणैव। शास्त्रं दृष्टिर्विवेकिनामिति भावः' इति।

अतो 'विवेकश्रुतिसम्पत्ती'त्याद्युक्तसङ्कल्पानुसारेण व्यवहरत्सु निर्विकारदृष्टिर्भवितुमर्हति।

---

१. 'किञ्च परीक्षितप्रमाणभावशब्दबाध्यमपि प्रत्यक्षम्।' (अद्वैतसि०)
'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः।।' (मालविकाग्निमित्रम्)

## निर्दोषतर्कस्यैव विवेकरूपत्वम्

अधुना निर्विकारत्वं तेषु कथमायातीत्ययं विचार उपस्थाप्यते। कौटिल्येनान्वीक्षिक्या उपयोगस्य कथनावसरे—

'धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायां, नयापनयौ दण्डनीत्यां, बलाबले चैतासां हेतुभिरन्वीक्षमाणान्वीक्षिकी लोकस्योपकरोति। व्यसनेऽभ्युदये च बुद्धिमवस्थापयति' इत्युक्तम्। एवं कामन्दकेन—

'आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति'।।

इत्युक्त्वा 'व्यसनेऽभ्युदये च बुद्धिमवस्थापयती'ति कौटिल्यवचनस्यैवोपोद्बलनं कृतमस्ति। एवं 'हेतुभिरन्वीक्षमाणे'त्यनेन कौटिल्यो हेत्वाभासशून्यतर्कद्वारा त्रयीवार्तादण्डनीतिशास्त्राणां परीक्षायां न्यायशास्त्रदृष्ट्या कृतायां तत्तद्विद्यानां शुद्धिर्ज्ञायत इति प्रस्थापयामास। ईदृशं परीक्षणमेव पूर्वोक्त'विवेकश्रुतिसम्पत्ती'-त्यादिसङ्कल्पान्तर्गतविवेकपदार्थः। अस्यैव सङ्कल्पस्य 'धृतिभाव' इति साहित्यशास्त्रे संज्ञा। एवं 'व्यसनेऽभ्युदये च यदविकारकरं तत्सत्त्वम्' इति सत्त्वस्य नीतिशास्त्र-परिभाषाऽस्तीत्यस्यैव सङ्कल्पस्य 'सत्त्व'मिति नाम। 'आस्तिक्यं प्रविभज्य भोजन'-मित्यादिपूर्वोक्तश्लोकोक्तानां चतुर्दशगुणानां प्राप्तिर्मनुष्ये धृतिभावापरपर्यायेण सत्त्वगुणेन भवति। समाजधारणार्थमेतेषां गुणानां समुच्चयस्य परमावश्यकता वर्तते।

## सत्त्वगुणप्राधान्येन मन्वादीनां समाजधारकत्वम्

'कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः'।।

इति वचनोक्तक्रमेणोक्तगुणसमुच्चययुक्ता मनुगौतमशङ्खलिखितपराशराः कृतयुगादि-कालेषु समाजधारका आसन्।

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते'।।

इति गीतावचनानुसारेण श्रेष्ठान् अर्थात् प्रधानपुरुषान् लोका अनुवर्तन्ते। प्रथमो राजधर्मप्रवर्तको मनुरासीत्। अतो 'यद्वै किञ्च मनुरवदत्तद्भेषज'मिति वेदवाक्यानु-सारेण गौतमशङ्खलिखितपराशरपर्यन्तं स्मृतिकारप्रभृतयः सर्वे जना 'मन्वर्थविपरीता

तु या स्मृतिः सा न शस्यत' इति बृहस्पतिस्मृतिवचनानुसारेणोक्तसात्त्विकधर्मयुक्तस्य राजधर्मप्रवर्तकस्य मनोराज्ञायाः पालकाः संवृत्ताः। 'स यत्प्रमाणं कुरुते लोकस्तद-नुवर्तत' इति गीतावचनमनुसृत्य—

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च'।।

इति मन्वाज्ञयैव वेदं प्रमाणतया स्वीकृत्य तदुक्ताचारान् पालयन्तश्च संवृत्ता इति, सोऽयं वैदिकसमाजः प्रथितः।

## द्वापरान्तमेव सत्त्वोकर्षः सर्वविद्यावस्थितिश्च

'कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः'।।

इति वचनानुसारेण शरीरस्थितेः सत्त्वाद्वेदव्यासपर्यन्तं सर्ववेदवेदाङ्गाध्येतारः प्राप्यन्ते स्म। कलियुगे तु शरीरस्थितेर्ह्रासात्सम्पूर्णवेदवेदाङ्गाध्ययनं मनुष्येण कर्तुमशक्यं जातमतः पुलहवैशम्पायनजैमिनिसुमन्तुनाम्नश्चतुरः शिष्यान् व्यासः क्रमेण ऋग्यजुःसामाथर्ववेदान् विभज्याध्यापयामास। एवं तैरपि शरीरस्थितेर्ह्रासं दृष्ट्वैव स्व-स्ववेदस्यापि विभज्यानेकाः शाखाः शिक्षयित्वा वैदिकसमाजः संवर्धितः। साम्प्रतं ताः सर्वाः शाखा नोपलभ्यन्ते। केवलं काश्चन शाखा अखिल-भारतवर्षीयवैदिकसम्मेलनादिषु दृश्यन्ते जनैः।

वैदिकसमाजे पूर्वोक्तसङ्कल्परूपधृतिभावस्य पूर्णतया स्थितेः कालो व्यासकालपर्यन्तमासीत्। अर्थदेव 'आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षत' इति श्लोकोक्तरीत्याऽऽन्वीक्षिक्यादयः सर्वा अपि विद्यास्तदानीं सम्पूर्णतया स्थिता आसन्। अत एव—

'धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्'।।

इति व्यासकृतमहाभारतस्य प्रशंसा तदानीं जाता। कौटिलीयार्थशास्त्रोक्त्यनुसारेण रामायणमहाभारताविति‍हासग्रन्थौ स्तः। अतस्तयोराप्तवाक्यत्वेन च प्रामाण्यं सिद्धम्। कविभिरपि तयोः सत्येतिहासतां दृष्ट्वैव तदन्तर्गतचरित्राण्याधारीकृत्य नाटकानि निर्मितानि। अतो महाभारतादिग्रन्थो यथार्थ इति सिद्ध्यति। तदानीन्तनसमय एव पूर्वोत्तरमीमांसाद्वारा व्यासेन तच्छिष्येण जैमिनिना च मनूक्तं

वेदप्रामाण्यं स्वीयसत्तर्कैः समुपबृंहितम्। अनन्तरं प्रमादवशाद्दण्डनीत्यादेर्ह्रासो जातः। बौद्धजैनादिधर्मप्रादुर्भावेण समाजस्थितिर्विचलिताऽभूत्। ततः पाणिनि-पतञ्जलिकौटिल्यादिभिः पुनर्धर्मार्थकाममोक्षप्रतिपादकानां वेदवेदाङ्गानां स्थापना कृता। 'आस्तिक्यं प्रविभज्य भोजन'मिति श्लोके वर्णितानां 'तथ्यं वचः' 'निर्दम्भता' इत्यादिगुणानां विचारे क्रियमाणे द्वापरान्तं यावदसत्यतादम्भादीनामुत्कर्षो नासीदित्ययं विषयः प्रबोधचन्द्रोदयनाटके वर्णितस्य दम्भाहङ्कारयोः संवादस्य दर्शनेन ज्ञायते। अतः स संवादोऽत्र दीयते।

'दम्भः—(विलोक्य। सानन्दम्) अये! आर्यः पितामहोऽस्माकमहङ्कारः। आर्य! दम्भो लोभात्मजोऽहं भो अभिवादये।

अहङ्कारः—वत्स! आयुष्मान् भव। बालः खल्वसि मया द्वापरान्ते दृष्टः। सम्प्रति चिरकालविप्रकर्षाद्वार्धक्यग्रस्ततया च न सम्यक्प्रत्यभिजानामि। अथ त्वत्कुमारस्यानृतस्य कुशलम्?

दम्भः—अथ किम्? सोऽप्यत्रैव महामोहस्याज्ञया वर्तते। न हि तेन विना मुहूर्तमप्यहं प्रभवामि।' इति।

अतो निर्दम्भता पूर्णा वैदिकसमाजस्य पूर्णसत्त्वोत्कर्षसमय आसीदिति वक्तुं शक्यते। कालिदासेनापि—

'आ जन्मनः शाठ्यमशिक्षितो यस्तस्यांप्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः?'॥
(अभिज्ञानशाकुन्तलम्-५।२८)

इति मुनिपुत्रवाक्ये दम्भरहितवाण्याः कल्पना प्रदत्ताऽस्ति। अस्य विषयस्य प्रत्यक्षप्रमाणमिदमेव यन्महाभारते व्यासेन स्वोत्पत्तिकथापि लिखिता वर्तते। सत्त्वगुणप्राबल्येन नवमासपर्यन्तं गर्भवासमन्तरा उत्पन्नो व्यासः सद्य एवोत्थाय पितरमभिवादयतीति तस्यैश्वर्यविज्ञाने सति व्यासोत्पत्तिविषये नव्यशिक्षितैः क्रियमाण उपहासोऽनुचित इत्यपि पूर्णविचारान्ते ज्ञायेतैव।

## विभिन्नदेशवासिनां परस्पराज्ञातवैदिकानां मन्त्रपाठे पाठभेदादर्शनेन वेदानां सत्यत्वं निर्विवादम्

राजनीतिशास्त्रे यद्यपि परातिसन्धानविद्योक्ता, तथापि 'प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः' इत्यनेन वेदप्रामाण्यं स्वीकृतमेव। चरचर्यायां परस्परमज्ञातांस्त्रीँश्चरान् पृथक्पृथग्विजने देशे समाहूय कस्यचिदपेक्षितस्य स्थलविशेषस्य वृत्तं विलिख्य

प्रेषणीयमिति राजा तानादिशति। तत्प्राप्त्यनन्तरं तद् दृष्ट्वा 'त्रयाणामेकवाक्यत्वे सम्प्रत्यय[1]' इति सूत्रानुसारेण तत्स्थलविशेषस्य यथार्थं वृत्तं प्राप्नोति।

'गावो घ्राणेन पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः'।।

इति वचनानुसारेण गुप्तचराणां व्यवस्थां कृत्वैवाद्यापि राज्यव्यवस्था चालनीया भवति। राजनीतावेतां गुप्तचरव्यवस्थां सर्वोऽपि यथा सम्मनुते, तथैव विभिन्नस्थलेषु निवसतां वैदिकानां मुखतो मन्त्रपाठे वेदानामेकरूपेणोच्चारणश्रवणव्यवस्थायां दृष्टायां तेषामसत्यत्व–(अनियतपाठभेद)–कल्पनाया मनःकल्पिततत्वकल्पनाया वा नावसरः। एवंस्थितौ 'वेदैः पश्यन्ति ब्राह्मणा' इत्यवश्यं स्वीकर्तव्यं भवति। 'बायबल'प्रभृतीतरधर्ममूलग्रन्थेषु बहवः पाठभेदाः सञ्जाता वर्तन्ते[2]। अतस्तदनुयायिनामखिलसम्मेलनादिषु तत्पाठ एकरूपता न दृश्यते। अत एव 'विवेकश्रुतिसम्पत्ती'त्यादिसङ्कल्पे श्रुतिसम्पत्तिः साध्यसाधनोभयरूपेण स्थापिता। तया च सर्वसमाजान्तर्गतवैदिकसमाजे निर्विकारमनस्स्थितिः स्थाप्यते स्म। साऽद्यापि स्थापयितुं शक्या।

## मतिभावस्य विदग्धव्यवहारजनकत्वम्

पूर्वोक्तमतिभावस्य कार्यकोटौ प्रविष्टानां 'सन्दंश[3]चतुरा[4]द्रिमुद्रा-संशयच्छेदन-शिष्यहिताधानार्थदर्शन-चित्तसन्तोष-विदग्धव्यवहारादीनां निर्माणं समाजे मतिभावेनैव भवति। तस्य च प्राप्तिः पूर्वोक्तसङ्गीतरत्नाकरवचनानुसारेणान्वयव्यतिरेकादि-

---

१. 'दोषाभाववत्त्वे' इति ध्येयम्।

२. अस्मदीयपुराणादौ तु क्वचित्पाठभेदो य उपलभ्यते स न बायबलपाठभेदसमानः। वर्तमानपुराणानां शतकोटिप्रविस्तरब्रह्मनिर्मितपुराणसङ्ग्रहरूपत्वात्, सङ्ग्रहे सम्प्रदायभेदेन न्यूनाधिक्यवशात्, कल्पकल्पान्तरविषयप्रतिपादकत्वरूपभेदात्, वेदवत्कण्ठस्थीकरण-प्रकाराभावात्, समानार्थकशब्दानामर्थप्रधानशास्त्रत्वेन समागतत्वसम्भवाच्च न पाठभेदानां सर्वथाऽप्रामाणिकत्वमित्यादि-विरोधाधिकरणवार्तिकानुसारेण सुदूरं मननीयम्।

३. 'अरालाङ्गुष्ठतर्जन्यौ लग्नाग्रे निम्नतां गतः।
किञ्चिच्चेत्तलमध्यस्थस्तदा सन्दंश उच्यते।।
निरूपणे च तत्त्वस्य स द्वितीयोऽथ भाषणे।।' (सङ्गीतरत्नाकरे, अ.७)

४. 'अस्याङ्गुष्ठो मध्यमाया मध्यपर्वोदरं श्रितः।
ऊर्ध्वा कनीयसी यत्र चतुरं तं करं विदुः।।
विनयेऽथ विचारे स्यात्पार्श्वगोऽथ हृदि स्थितः'।। (सङ्गीतरत्नाकरे, अ.७)

सहकृतशास्त्रचिन्तनेन, किं वा भावप्रकाशनोक्तरीत्या[१] नानाशास्त्रार्थैर्भवति। एवञ्च—

'लौकिके वैदिके चार्थे तथा सामयिकेऽपि च।
सम्यक्परिचयप्रौढिर्वैदग्ध्यमिति कीर्त्यते'।।

इत्येवंरूपविदग्धव्यवहारस्य अर्थात्सुज्ञजनव्यवहारस्य प्राप्त्यर्थं वेदशास्त्राणामाश्रयोऽवश्यं ग्राह्यः। अतो मतिभावस्य व्याख्यायां भावप्रकाशनग्रन्थे 'मतिः स्याच्छ्रुतधारिणी' 'श्रुतिधारिणी'ति पाठद्वयमुपलभ्यते।

'सर्वशास्त्राधिगमनं श्रुतमित्यभिधीयत' इति परिभाषानुसारेण 'श्रुतधारिणी'ति पाठो निश्चितः, एवं 'विवेकश्रुतिसम्पत्ती'त्यादिसङ्कल्पान्तर्गता उद्देश्यकोटौ साधनकोटौ च निश्चिता 'श्रुतिसम्पत्ति'रिति सङ्गीतरत्नाकरे दृश्यते। अतः 'श्रुतिधारिणी'त्यपि भावप्रकाशनपाठो निश्चितो भवति।

## मुद्राद्वारा मतिभावसङ्क्रामकत्वान्मूर्तिपूजामाहात्म्यम्

अस्माकं कर्णाटकदेशीयै राजभिर्देवगिरिप्रभृतिस्थानेषु मतिभावसङ्क्रामकसन्दंशचतुरादिमुद्राणां यथार्थप्रचारो भवत्विति तादृशमुद्रायुक्तशास्त्रोक्तलक्षणलक्षितमूर्तीनां निर्माणं कारयित्वा गुहायां स्थापनं कृतमासीत्; किन्तु मतिभावप्रसारकमूर्तीनां हस्ता एव खण्डिताः कृताः। एतावान् विरोधिनां प्रचारोऽस्तीति ज्ञातव्यो वर्तते। अद्यापि दक्षिणदेशे वंशपरम्परागतशिल्पिभिर्निर्मितानां रामचन्द्रदक्षिणामूर्त्यादिमूर्तीनां दर्शने तासां सन्दंशचतुरादिमुद्राद्वारा मतिभावस्य सङ्क्रमणं भवतीति दृश्यते।

'स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये'।।

इत्यस्मिन् श्लोकार्धे मतिभावस्य सङ्क्रमणं दक्षिणामूर्तिदर्शनेन भवतीत्युक्तम्। कस्यचिन्मन्त्रस्योपदेशग्रहणार्थं कश्चिद् गुरुर्यदि न प्राप्येत तर्हि दक्षिणामूर्तिमेव गुरुं कृत्वा तद्ध्यानेन मन्त्रोपदेशो ग्राह्य इति मन्त्रशास्त्र उक्तं दृश्यते। अनेन मूर्तिपूजाया महत्त्वं ज्ञापितं भवति।

---

१. 'नानाशास्त्रार्थनिष्पन्ना मतिः स्याच्छ्रुत(ति)धारिणी।
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः।।
वर्ण्यते चित्तसन्तोषाद् विदग्धव्यवहारतः'।।

## वैद्यशास्त्रानुसारेण वर्णस्य (जातेः) महत्त्वम्

साम्प्रतं पूर्वं सङ्क्षेपत उक्तस्य लोकस्थितिहेतुभूतस्य त्रयीविहितवर्णाश्रम-धर्मस्य विवेचनं क्रियते।

बौद्धसम्प्रदायवद्भिर्वाग्भटाद्याचार्यैरप्यायुर्वेदोक्तवैदिकधर्माचरणमेवारोग्याद्यर्थ-मपेक्षितमित्युक्तम्। शिशुसङ्गोपने यदि जनन्या दुग्धं न स्यात्, तर्हि धात्र्या दुग्धं दातव्यं भवति। तत्र धात्री सवर्णाऽपेक्षितेति वैद्यशास्त्रकारैरुच्यते। आयुर्वेदे नेत्ररोगनिवारणार्थं स्त्रीस्तन्यं सर्वोत्तममौषधमिति वर्णितमस्ति। भिन्नवर्णाया धात्र्या दुग्धं यदि नेत्रयोः प्रक्षिप्यते तर्हि रोगो वर्धत इति दृश्यते। अयं विषयोऽधुना-तनविज्ञानरीत्यापि सूचीवेधद्वारा परकीयरक्तप्रवेशनावसरे ज्ञातव्यो भवति। एवंरीत्या वर्णानां निरूपणं कृतम्। ते च ब्राह्मणत्वादिजातिरूपा जन्मसिद्धास्तेषां परिवर्तनम् (तस्मिन्नेव जन्मनि शरीरे लौकिकोपायैः) अशक्यम्।

## आश्रमाणां चतुर्विधसङ्कल्परूपत्वम्

अधुनाऽऽश्रमाणां विवेचनमावश्यकम्। ते न जातिरूपाः; किन्तु चतुर्विधप्रधान(वैध)सङ्कल्परूपाः। तत्र कीदृशसङ्कल्पस्य कस्मिन्नाश्रमे प्रधानतेत्यस्य सम्यग्ज्ञानमावश्यकम्। अस्य विषयस्य विवेचनम्—

'भिक्षोर्धर्मः शमोऽहिंसा तपोऽन्वीक्षे वनौकसः।
गृहिणो भूतरक्षेज्ये द्विजस्याचार्यसेवनम्'॥

इति श्रीमद्भावगतैकादशस्कन्धे प्रधानरूपेण कृतमस्ति। 'विवेकश्रुति-सम्पत्ती'त्यादिसङ्कल्पस्यैव क्रमशो जायमानस्य स्वरूपस्य विवेचनमिदम्। तत्र ब्रह्मचर्यं नाम गुरुभक्तिश्रुतिसम्पत्त्योः सम्पादनम्। तत्पूर्णतायां सत्यां गुरुगृहतः परावृत्य पञ्चमहायज्ञादियज्ञाः, तद्द्वारा प्राणिरक्षणरूपवैधकर्मानुष्ठानात्मिका तपस्या चेति गृहस्थाश्रमरूपः सङ्कल्पः साधनीयः।

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति'॥

अनया रीत्या भगवद्गीतायां गृहस्थाश्रमस्य (विशिष्य) वर्णनमुपलभ्यते। 'केवलाघो भवति केवलादी'। 'मोघमन्नं विन्दते अप्रचेताः'। इति वेदेनापि गीताया भाव एव प्रदर्शितः। भारतीयराजनीतिशास्त्रेऽपि—

'स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम्।
अस्याभावे तु लोकोऽयं सङ्करान्नाशमाप्नुयात्'।। इत्युक्तम्।

एतस्य कारणमिदमेव यद् यथार्थगृहस्थाश्रमद्वारा जायमाना भूतरक्षा स्वर्गेश्वरप्राप्तीच्छया क्रियमाणयज्ञद्वारैव भवतीति। अयमेव प्रवृत्तिधर्मः। अथ मनसि वैराग्य उत्पन्ने निवृत्तिधर्मस्याधिकारः प्राप्तो भवति। तदा 'तपःस्वाध्यायेश्वर-प्रणिधानानि क्रियायोगः। समाधिभावनार्थः क्लेशतनूकरणार्थश्चे'ति योगसूत्रानुसारेण तपोऽन्वीक्षारूपवानप्रस्थधर्मात्मकः सङ्कल्पः, भिक्षुधर्माद्विद्याशमसन्तोषधर्म-विशेषात्मकचतुष्टयजन्यपरमसुखावस्था च प्राप्तौ भवतः। अर्थात् 'अप्राप्तातीत-नष्टानामलाभेऽनभिशोचन'मित्युपर्युक्तसङ्कल्पस्य परमफलं प्राप्तं भवति। अत एते चत्वार आश्रमा उक्तसङ्कल्पस्य विभिन्नावस्थारूपाः। एतैरानन्त्यरूपमोक्षस्य प्राप्तिर्भवति, लोकसंस्थितिश्च सन्धार्यते। एते चतुर्विधाश्रमसङ्कल्पाः पूर्वपूर्वाश्रमाणां पूर्णतायां सत्यामेव सफला भवन्ति, नान्यथेत्ययं विषयः—

'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते'।।

इति रीत्या गीतायां वर्णितः। वेदशास्त्राश्रयणजन्यं विद्याया मुख्यं सुखमेतदेवेति प्रशस्तपाद[1]भाष्यवचनाज्ज्ञायते। अत एव 'वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोक-यात्रायाः' इति वात्स्यायनमुनिमुखतश्चार्वाकेण निर्णय उक्त इत्यपि ज्ञातव्यं वर्तते।

## यज्ञस्योर्जाद्वारा लोकस्थितिहेतुत्वम्

'अग्नौ प्राप्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'।।

इति वचनेन यत्पूर्वोक्तचक्रवर्णनं कृतम्, तत्र पर्जन्यावस्थायामुत्पद्यमानाया विद्युच्छक्तेर्मूलकारणं य ऊर्जापदार्थः स यज्ञे मन्त्रपूर्वकमग्नौ प्रक्षिप्तानामाहुतिद्रव्याणां रस एव। अतो विद्युच्छक्तेः परिमितिरूर्जाद्वारा कार्या। नक्षत्रचन्द्रसूर्यताराग्रहचक्राणां धारणं[2] यया विद्युच्छक्त्या भवति स एवोर्जापदार्थः। सोऽयं विषयः 'शान्ति का अग्रदूत' इति ग्रन्थे स्पष्टः। स चेत्थम्—

---

१. 'यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासङ्कल्पेष्वाविर्भवति तद्विद्याशमसन्तोषधर्मविशेष-निमित्तम्'।

२. 'कार्यायोजनधृत्यादे'रित्यादिना न्यायकुसुमाञ्जलौ प्रपञ्चितां परमेश्वरस्य धृतिम् ईश्वरस्य प्रसन्नतारूपां गृहीत्वैवेयं व्यवस्थाऽनुसन्धेया।

"इन बातों से यह स्पष्ट हो जाता है कि नीति के बारे में चार्वाक, बौद्ध और आस्तिक इन तीनों ही के स्वीकार्य प्रमाणों का समन्वय होना ही चाहिए। इस पर कोई ऐसी शङ्का सहज ही उठा सकता है कि 'अदृष्ट से प्रत्यक्ष का मेल कैसे बैठ सकेगा?' इसका उत्तर यह है कि ऊपर-ऊपर देखने में जो अदृष्ट दृष्टिगोचर नहीं हो पाते, उनके बारे में 'वेदान्तसूक्तमुक्तावली' के मर्म पर ध्यान देना चाहिए। उसमें कहा है कि 'अदृष्ट सर्वथा अदृश्य नहीं होता, कुछ अवस्था में वह दृश्य कोटि में भी आता ही है'। इसका स्पष्ट तात्पर्य यों समझ सकते हैं—अग्निहोत्र में शुद्ध रूप से प्रदत्त आहुति जलरूप धारण कर सूर्यमण्डल में प्रवेश करती है, इसके ही सहारे पञ्चभूतों की सूक्ष्ममात्राएँ भी सूर्यमण्डल में जाक़र वहाँ इन्धन का कार्य करने लगती हैं। आगे वही मात्राएँ वृष्टिरूप से पृथ्वी पर और पृथ्वी से अन्न में प्रविष्ट होती हैं। इस प्रकार अन्न द्वारा पुरुष के शरीर में पहुँचकर वही मात्राएँ रस, रक्त, धातुरूप में परिणत हो जाती हैं और वहाँ से स्त्री के उदर में पहुँचकर वही आहुति पिण्ड (गर्भ) रूप धारण क़र लेती है।

इसे यों समझें कि नवनिर्मित होने वाले शरीर एवं मन में यदि बल, पुष्टि, स्फूर्ति, संस्कार, धारणा, मेधा, तुष्टि आदि गुणों का संग्रह बढ़ाना अभीष्ट हो तो संस्कारों द्वारा आहुति की शुद्धि संरक्षित रखनी ही होगी।

इस प्रकार यह बात स्पष्ट हो गयी कि जल के रूप में भिन्नता न रखने के कारण ही अदृष्ट प्रत्यक्ष रूप में आ सका। मतलब यह कि इससे नीति के लक्षण में कोई विघात नहीं आता। यही बात भगवान् कृष्ण ने गीता में कही है—

'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्'।

जल में आया हुआ वह अदृष्ट स्थूलरूप है और उसी का सूक्ष्मरूप परमात्मा की प्रसन्नता है, जिसे परमात्मा की माया, परमात्मा की इच्छा या प्रकृति की लीला भी कहा जाता है''। इति।

उक्तोर्जाया बलेनैव जीवनस्य धारणं भवति। आयुर्वेदे—

'येनौजसा वर्तयन्ति प्रीणिताः सर्वजन्तवः।
यदृते सर्वभूतानां जीवितं नावतिष्ठते।।
यत्सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः।
संवर्तमानं हृदयं समाविशति यत्पुरा।।

यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्।
यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः'।।
'दशमूलसिरा हृत्स्थास्ताः सर्वाः सर्वतो वपुः।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम्'।।

इत्यस्या ओजोरूपाया महत्त्वं वर्णितमस्ति। एतद्विषये डॉ॰ गन्महोदयस्याभिप्रायश्चिकित्साचन्द्रोदयकारैर्वर्णितो यथा—

'डाक्टर गन् महाशय कहते हैं कि........जीवन-कार्य चलने के समय में, इस तारघर से सिस्टम के समस्त भागों को संवेदना और गति या हरकत-सम्बन्धी आज्ञाएँ लगातार जाती रहती हैं। जब कि चोट लग जाती है या और कोई कारण उपस्थित हो जाता है, तब स्नायु बहुधा अपना जिस्म को सहारा देने वाला बरकी या वैद्युतिक अर्क (जो उन्हें मस्तिष्करूपी बिजली की वैटरी से मिलता है) पहुँचाना बन्द कर देते हैं। उस समय मस्तिष्क या इच्छा, मस्तिष्क की मार्फत शासन कर नहीं सकता। ऐसे मौके पर चेतनाशक्ति और गति नष्ट हो जाती है।' (भा॰७) इति।

अर्थाद् ऊर्जात्मकौजसः संरक्षणाय चरकेण—

'........................तच्चौजः परिरक्षता।
परिहार्या विशेषेण मनसो दुःखहेतवः।।
हृद्यं यत्स्याद्यदौजस्यं स्रोतसां यत्प्रसादनम्।
तत्तत्सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च'।।

इत्यनेन वर्णाश्रमधर्माणां महत्त्वं प्रदर्शितमस्तीत्यपि ज्ञातव्यम्।

'गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही'।।

इत्यनेनाप्यस्यैव तत्त्वस्य पुष्टिः कृता। अत एतत्तत्त्वस्य रक्षणार्थं दानशीलैः प्रयतितव्यमिति संसूच्यते।

## वेदस्य सत्येतिहासो मनुष्यसृष्टिपूर्वकालिकेन वेदायुर्वेदादिनैव ज्ञातुं शक्यः

आस्तिकसमाजे नास्तिकसमाजवत्—

'नास्तिक्यं सुविषण्णताऽतिशयिताऽऽलस्यं च दुष्टा मतिः
प्रीतिर्निन्दितकर्मशर्मणि सदा निद्रालुताऽहर्निशम्।
अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता'
. . . . . . . . . . . . . . . . . . . . . .।।

इत्यादिश्लोकोक्तानि[1] मानसिकरोगकारणानि न भवन्ति।

'विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतु'रिति माधवनिदानवचनमप्यस्मिन् विषये प्रोद्वलकमस्ति।

आयुर्वेदरीत्या कौमारभृत्यचिकित्सायां पूतनादिग्रहजनितरोगनिवारणार्थमनेकविधा दैविक्यो योजनाः कर्तव्या भवन्ति। तद्द्वारा बालसङ्गोपने जाते सत्येव मनुष्यो वर्धत इति दृश्यते। अतो मनुष्यसृष्टेः पूर्वं कौमारभृत्यतन्त्रयुक्तस्यायुर्वेदस्य स्रष्ट्रा निर्मितत्वं सिद्ध्यति। आयुर्वेदे सत्येव मनुष्यसृष्टिर्निर्मातुं शक्येति कश्यपसंहितादर्शनेन[2] ज्ञायते। आयुर्वेदोऽथर्ववेदस्योपाङ्गमस्तीत्यतः शान्तिकपौष्टिककर्मणां प्रकाशकोऽथर्ववेदो मनुष्यसृष्टेः पूर्वमेव ब्रह्मदेवे स्फुरितोऽभूदिति—

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये'।।

इत्युपनिषद्वाक्येन, 'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः' इति भागवतवाक्येन च सिद्ध्यति। जलमयीं सृष्टिं दृष्ट्वा विष्णोर्नाभिकमलस्थितेन ब्रह्मणोद्विग्नेन सता तपस्या कृता। तदानीमीश्वरान्तःप्रेरणया वेदस्योपलब्धिस्तस्मिन्नभूत्। अनन्तरमेव वराहावतारे जलमग्ना भूमिरुपर्युद्धृता। 'उद्धृताऽसि वराहेण कृष्णेन शतबाहुना'। इत्ययं वेदमन्त्रोऽस्मिन् विषये साक्षिभूतः।

एवंस्थितौ भूमौ जाता मनुष्यसृष्टिरपि पश्चाज्जातेत्यवश्यं मन्तव्यं भवति। अतो वेदस्य सत्येतिहास आधुनिकेनोत्खननशास्त्रेण न ज्ञातुं शक्यः; किन्तु

१. आदिपदेन 'क्रोधस्ताडनशीलता' इत्यादिपूर्वोक्तश्लोकोक्तानि गृह्यन्ते।
२. 'कथं चोत्पन्न इत्याह—अथर्ववेदोपनिषत्सु प्रागुत्पन्नः, स्वयम्भूर्ब्रह्मा प्रजाः सिसृक्षुः प्रजानां परिपालनार्थमायुर्वेदमेवाग्रेऽसृजत्सर्ववित्, ततो विश्वानि भूतानि'।
'किं चास्याद्यं तन्त्रमिति?
कौमारभृत्यमष्टानां तन्त्राणामाद्यमुच्यते।
आयुर्वेदस्य महतो देवानामिव हव्यपः।।
अनेन हि संवर्धितमितरे चिकित्सन्ति। बालस्य ह्यमौषधमन्यत्। किं नित्योऽनित्य इति? नित्य इति ब्रूमः। कुतः? आर्षवचनप्रामाण्यादविनाशित्वात्साध्यासिद्धेर्देशकालसामान्यादिति'।

मानसरोगचिकित्साप्रतिपादकायुर्वेदवेदादिशास्त्रद्वारा शक्यः। अस्यां स्थितौ वेदशास्त्ररक्षणमत्यन्तमावश्यकम्।

## आयुर्वेदप्रामाण्यविषये स्वानुभवः

अस्मद्गृहे त्रिचक्रवाहन(रिक्शा)सञ्चालकस्य जगन्नाथनाम्न इतिहासोऽत्र ज्ञातव्य इति स निर्दिश्यते। तस्यैकः पुत्रो 'लालजिह्वा'-नामा प्रत्यहं नियमेन कुत्रापि गत्वोदरभरणव्यवस्थां कृत्वा सायं गृहमायाति स्म। एकस्मिन् दिवसे समये स गृहं नागत इति तस्य शोधः कृतः। तदा निर्जनस्थान एकस्य महामदीयचैत्यस्य समीपे दन्तसंलग्नतापूर्वकमचैतन्यावस्थायां पतितः स दृष्टः। ततस्तथैवोत्थाप्य गृहमानीतः। दिनद्वयानन्तरमपि तस्य कापि चेष्टा न दृष्टेति परम्परया मया ज्ञातम्। अतो जगन्नाथः पृष्टः, किमयं विषयः सत्यो वेति। तेनोत्तरितं सत्य इति। ततो मया तं चिकित्सालयं प्रति कुतो न नीतवानसीति पृष्टम्। तेनोक्तम्—साधनाभावान्न स नीत इति। ततः क्रुद्धेन मया त्वं गृहस्थितत्रिचक्रवाहनेन कुतो न नीतवानित्युक्त्वा तद्द्वारा नेतुमाज्ञप्तम्। चिकित्सालये नयनानन्तरं तत्रत्येन मुख्याधिकारिणा डॉ॰ चौधरीमहोदयेन पूर्वपरिचितत्वादेतावान् विलम्बः कुतः कृत इति तर्जयित्वा रोगी चिकित्सालये स्थापितः। चिकित्साऽऽरब्धा। तत्र परिणामं ज्ञातुं ममापि कुतूहलमासीत्। यदा सप्ताहानन्तरमपि कोऽपि परिणामो न दृष्टस्तदा चौधरीमहोदयेनेयं काचनोपरिबाधाऽस्तीत्युक्त्वा पुत्रं गृहं नेतुमाज्ञप्तम्। अतस्तदर्थमस्माकं वाहनं पुनर्नीतम्। तदानीं कौतुकास्पदमयं विषयो ज्ञातो यत्—आधुनिकचिकित्साशास्त्रानुसारेण तस्मिन् कोऽपि रोगो नास्ति, स पूर्णतया स्वस्थ इति डॉ॰ चौधरीमहोदयेन विलिख्य निर्णयो जगन्नाथाय दत्त इति। एतज्ज्ञानेन ममापि तस्मिन् विषये जिज्ञासोत्पन्ना। तत आयुर्वेदोक्त एको धूपो भूतोन्मादनिवारणार्थं सुपरीक्षित उपायोऽस्तीत्युपलब्धम्। अतस्तद्वस्तुसङ्ग्रहाय सम्प्रेर्य पुत्रस्योपरि तद्धूपदानार्थं जगन्नाथ उक्तः। अन्येद्युरेवं ज्ञातं यत्—तेन धूपेन हेतुना एकदा तेन शिरस्सञ्चालनं कृतम्; किन्तु पुनः पूर्ववत्स्थित इति। ततो मया तदुपर्येव योजना कृता यत्—एकस्मिन् वस्त्रे धूपद्रव्यं पूरयित्वैका दीर्घा वर्तिका निर्मापिता, एवं तस्य धूपस्य तस्मै घ्रापणस्य व्यवस्था कारिता। ततस्तु द्वादशहोरानन्तरं तेन शनैः शनैरुत्थायोपवेशनमारब्धम्; किन्तु तस्य वागिन्द्रियं विकृतमेवाभूदिति वाणी विकृतैवाभूत्। सोऽद्यापि तथाविध एवास्ति कर्म करोति च। एकस्मिन् दिवसे त्रिचक्रेण गमनावसर एको महामदीयो जगन्नाथं पृष्टवान्, यत्—तव पुत्रस्य कीदृशी स्थितिरिति। ततस्तेनोक्तं—सोऽधुना स्वस्थ इति। पुनर्महामदीयेन पृष्टम्—केन तस्य स्वास्थ्यं सम्पादितमिति। जगन्नाथो

मन्मुखमपश्यत्। तद्दृष्ट्वा स महामदीयश्चकितः सन् समीपमागत्य मत्पादौ स्पृष्ट्वाऽवदद् यत्—श्रीमन्तो धन्याः। जगन्नाथपुत्रो यदा चिकित्सालय आसीत्तदाऽहमपि रुग्णतया तत्रैवासम्। मया प्रत्यक्षतो दृष्टं यत्—डाक्टरमहोदयेन सन्ततं सप्ताहावधि नानाविधरीत्या चिकित्सा कृता; किन्तु कयापि रीत्या तेनं स्वास्थ्यं न लब्धमिति। पूर्वोक्तसर्ववृत्तेनायुर्वेदोक्तभूतोन्मादनिवारकधूपसदृशमौषधं पाश्चात्त्यचिकित्सायां नास्तीति सिद्धम्। अतोऽन्ततो बालरोगचिकित्सार्थमायुर्वेदस्यात्यावश्यकतास्तीत्यनुभूतम्। एवं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादि'ति गौतमसूत्रोक्तं सत्यमेव, वेदस्य सत्य इतिहासस्तस्यापौरुषेयत्वमेवेति च मनस्यागतम्। बालरोगविषयेऽनेके प्रयोगा मम जीवनेऽनुभूताः। विस्तरभयात्ते नेह प्रतन्यन्ते। मत्सदृशा अन्येऽपि कियन्त आस्तिकाः सन्ति। तैरप्येतादृशविषया अनुभूताः। अतस्तैरवश्यं वेदशास्त्रसंरक्षणार्थमुद्युक्तैर्भाव्यमित्यभिलष्यते।

## आयुर्वेदचिकित्साया एवाविसंवादित्वम्

अन्योऽप्ययं विशेषो यत्—आयुर्वेदस्य श्रुतिमूलकत्वात्तदुक्तचिकित्सायां परस्परं विसंवादिता न भवति; किन्त्वाधुनिकचिकित्साशास्त्रे तादृशी स्थितिर्नास्ति। तत्रागत्या दन्तचिकित्सक-नेत्रचिकित्सकादिविभागाः स्वीकर्तव्याः संवृत्ताः। तेषां चिकित्सायां परस्परं विसंवादोऽपि कदाचिदुपलभ्यते। तदीयदन्तचिकित्सकचिकित्सया नेत्रयोर्बाधा निर्मिता भवति। ईश्वरनिःश्वासरूपं वेदं प्रमाणीकृत्य स्वास्थ्योपायं प्रतिपादयत्यायुर्वेदशास्त्रे तत एव कुत्रापि विसंवादो न भवति। अस्यां स्थितौ रोगनिवारणार्थमायुर्वेदसदृशी विद्या यदाऽस्माकं सविधेऽस्ति तदा तां परित्यज्यारम्भ एव तदितरविद्याश्रयणमपि प्रमाद एव। यत्रायुर्वेदद्वारा कार्यं न सिद्ध्येत्तत्रेतरविद्याश्रयणमापद्धर्मतया कार्यं भवेद् यद्यपि, तथापीतरचिकित्साद्वारा यत्र कार्यं न सिद्ध्यति, तत्रैवायुर्वेदाश्रयणं तु महाप्रमादः।

## अङ्गोपाङ्गोपवेदादिभिर्वेदस्यैवोपबृंहणम्

आयुर्वेद ऋग्वेदस्योपवेदोऽथर्ववेदस्योपाङ्गं चेत्यतस्तद्द्वारा श्रुतिप्रामाण्यं सिद्ध्यति।

धनुर्वेदो यजुर्वेदस्योपवेदस्तत्रापि गुरुमुखाद् गृहीता एव मन्त्राः कार्यकारिणो भवन्तीति दृश्यते। अनया रीत्या मन्त्रपरम्पराऽनादिवेदमूलिका सिद्धा।

सामवेदस्योपवेदो गान्धर्ववेदः (नाट्यशास्त्रम्)। सङ्गीतोपयोगिषड्जत्वादिसाक्षात्कारार्थं गुरूपदेशसहकृतश्रावणप्रत्यक्षमेव कारणमस्तीति सामवेदस्वरेभ्यः सङ्गीतशास्त्रमागतमित्युच्यते।

अथर्ववेदस्योपवेदोऽर्थशास्त्रम्। तत्र मुख्याः प्रतिपाद्या विषया अर्थगत-स्वत्वस्य रक्षणं वर्धनमित्यादयः सन्ति। यथोक्तम्—

'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्'।। इति।

अत्र मुख्यत्वेनोक्तं स्वत्वं वस्तु दायभागकारमतेन शास्त्रैकसमधिगम्यमिति वेदप्रामाण्यसापेक्षम्। मिताक्षराकारमतेन तस्य—

'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च'।।

इत्यादिशास्त्रीयोपायसहकृतलौकिकप्रत्यक्षगम्यत्वेऽपि वेदप्रामाण्यसापेक्षत्वमेव। अनया रीत्या चतुर्णामप्युपवेदानां द्वारा वेदप्रामाण्यसमर्थनं दृश्यते।

शिक्षादिवेदाङ्गविषये विचारे क्रियमाणेऽपीदमेव सिद्ध्यति यत्—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'।।

इति रीत्या वेदप्रामाण्यसापेक्षया शिक्षायामस्तीति संस्कृतभाषाया वेदस्य चाविकृतमुच्चारणमद्यापि स्थिरं वर्तत इति।

व्याकरणस्यापि प्रयोजनं 'साधुभिर्भाषितव्य'मिति वैदिकविधेः संरक्षणमेवास्ति।

छन्दसोऽपि ज्ञानं मन्त्रप्रयोगावसर आवश्यकमित्यपि वेदप्रामाण्यसापेक्षमेव।

यस्य वेदवाक्यस्यार्थः केनापि मार्गेण न लगति तस्य निरुक्तोक्तरीत्याऽर्थो ज्ञातव्य एवेति वेदप्रामाण्यं तत्रापि जागर्ति।

वैदिककर्मोपयोगिपुण्यकालज्ञानार्थं ज्यौतिषस्यावश्यकताऽस्ति। अथर्ववेदाङ्ग-ज्यौतिषादेव फलज्यौतिषारम्भ इति कै. श्रीशङ्करबालकृष्णदीक्षितकृतेतिहासे लिखितम्। अतस्तस्यापि मूलं वेद एवेति वक्तव्यं भवति। तथा हि—

'यां कामयेत दुहितरं प्रिया स्यादिति। तां निष्ट्यायां दद्यात्। प्रियैव भवति। नैव तु पुनरागच्छति'।

इत्यादितैत्तिरीयश्रुतिरत्र विषये स्पष्टैव। अतो वेदप्रामाण्यमन्तरा ज्यौतिष-स्याप्यस्तित्वमशक्यम्।

अवशिष्टं कल्पसूत्रम्—तत्र वेदसम्बन्धिसम्पूर्णशाखा दृष्ट्वा तासां समन्वयेन प्रयोगनिर्माणशक्तिरस्मिन् काले कस्यापि नास्ति। यतो हि—सर्वशाखानामध्ययनमधुना न शक्यमिति पूर्वमुक्तमेव। अत आश्वलायनबौधायनापस्तम्बादिभिर्महर्षिभिः संक्षेपेण सूत्रग्रन्थान् विरचय्याधुनातनलोकानां कृते मार्गदर्शनं कृतमस्ति। इदमपि कार्यं वेदरक्षार्थमेवास्तीति मीमांसाशास्त्रकारैर्द्वापरान्त एव लिखितमस्ति। एवंरीत्या षडङ्गानां व्यवस्था जाता।

अष्टादशविद्यास्थानेष्ववशिष्टानि यानि पुराणन्यायमीमांसाधर्मशास्त्राणि तेषु वैदिकसमाजान्तर्गतसामान्यजनोद्धारार्थं पुराणानां निर्मितिर्जाता। अतस्तानि वेदप्रामाण्यसापेक्षाण्येव।

निर्विकारतासम्पादनार्थं न्यायशास्त्रस्योपयोगेऽस्तीति पूर्वमुक्तमेव।

पूर्वोत्तरमीमांसाभेदेन मीमांसाद्वयं वेदवाक्यार्थज्ञानार्थमागतम्। अर्थात्तदपि वेदाश्रितमेव।

धर्मशास्त्रे 'वेदोऽखिलो धर्ममूल'मिति प्रथममेव वाक्यमस्तीति तत्र वेदप्रामाःण्यसापेक्षता सुस्पष्टैव।

## हिन्दुसमाजस्यास्तित्वं वेदशास्त्रायत्तम्

पूर्वोक्तसर्वविचारान्त एकोऽद्भुतो विषयो ज्ञातव्यो वर्तते यत्—एते सर्वे शास्त्रकारा 'विवेकश्रुतिसम्पत्ती'त्यादिसङ्कल्पनिष्ठत्वादेव कठिनतमं तपः कृत्वा वेदस्योपासनया ज्ञाननिधयः शास्त्रप्रवर्तकाः सम्पन्नाः। एतादृशशिष्यसम्पादको वेदग्रन्थो यस्य परमेश्वरस्य निःश्वासात्प्रादुर्भूत इत्युच्यते, तस्यापि सङ्कल्पो 'विवेकश्रुतिसम्पत्ती'त्यादिरूपोऽस्ति। अत एव रामकृष्णाद्यवतारं गृहीत्वा तेन वेदप्रामाण्यं स्थिरीकृतम्। अतस्तुलसीदासाः—

'गुरुगृह गये पढ़न रघुराई। अल्प काल विद्या सब आई।
जाकी सहज स्वास श्रुति चारी। सो हरि पढ़ यह कौतुक भारी'।।
'बन्दौं चारिउ वेद, भव बारिधि बोहित सरिस।
जिन्हहिं न सपनेहु खेद, बरनत रघुबर बिसद जसु'।।

इति वेदस्य महत्त्वं प्रकटयन्ति। एवंरीत्या वेदशास्त्रास्तित्वं यावत्तावद् हिन्दुसमाजस्यास्तित्वं वर्तते। अतोऽत्र विषयेऽनुदबुद्धसंस्काररूपः प्रमादो न स्थापनीय इति स्थिरं भवति।

## पूर्वमीमांसानुसारेण वेदानां निर्दोषत्वादेव प्रामाण्यम्

प्रत्यक्षानुमानशास्त्ररूपप्रमाणत्रयनिर्णीतार्थप्रतिपादनस्यैव भारतीयराजनीतिशास्त्रवैशिष्ट्याद् अस्मदीयवेदवेदाङ्गविद्याविषय एतादृशराजनीतिशास्त्रस्य पूर्णतयोपोद्बलनस्य सत्त्वाच्च निष्कारणं मनः कलुषीकृत्यावस्थानं महाप्रमाद एव। उपर्युक्तप्रमाणत्रयस्यास्मदीयसंस्कृतिविषये दर्शनेषु पूर्णतया विचारः पूर्वैः कृत एव। अतस्तद्विषयेऽपूर्णताकल्पनमव्यावहारिकमज्ञानपूर्णं च भवेत्। यतो हि न्यायालये— 'प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्'। इति व्यवहाराध्यायोक्ताज्ञामनुसृत्य शब्दप्रमाणरूपसाक्षिलिखितयोर्बलेन भुक्तिरूपानुमानप्रमाणबलेनैव च वंशपरम्परासीमाविवादाद्यष्टादशपदानां निर्णयः कर्तव्यो भवति। तत्र गुणवान् साक्षी निर्गुणसाक्ष्यपेक्षया यद्यपि प्रबलस्तथापि यत्र गुणवान् साक्षी नोपलभ्यते, तत्र साक्षिदोषरहितस्य निर्गुणस्यापि साक्षिणः प्रामाण्यं स्वीकर्तव्यं भवति। अन्यथा व्यवहार एव रुद्ध्येत। तथैव वेदशास्त्रविषयेऽपि वक्तुं शक्यमिति पूर्वमीमांसाशास्त्रमर्यादा। यथोक्तम्—

'दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते।
वेदे वक्तुरभावात्तु दोषशङ्कैव नास्ति नः'।। इति।

## उत्तरमीमांसानुसारेण ईश्वरप्रसूतत्वाद्वेदानां सर्वोत्कृष्टं प्रामाण्यम्

वेदान्तमतरीत्या ईश्वररूपो महान् साक्षी वेदस्यास्तीति तस्य सर्वोत्कृष्टं प्रामाण्यं सिद्ध्यत्येव। सोऽयं विषयः शास्त्रयोनित्वाधिकरणीयशाङ्करभाष्यस्य तट्टीकाया भामत्याश्च दर्शनेन स्पष्टो भवति। तथा हि—

'जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं, तदेव द्रढयन्नाह— 'शास्त्रयोनित्वात्'। महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य, प्रदीपवत्सर्वार्थविद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। न हीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति। यद् यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्सम्भवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके। किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः सम्भवः, 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृह॰ २।४।१०) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति'। (शाङ्करभाष्यम्)

''सूत्रान्तरमवतारयितुं पूर्वसूत्रसङ्गतिमाह—जगत्कारणत्वप्रदर्शनेनेति। 'शास्त्रयोनित्वात्'। न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनित्वादपि बोद्धव्या। शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थयते—महत ऋग्वेदादेः शास्त्रस्येति। चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मत्वे च शिष्याणां शासनात् शास्त्रम् = ऋग्वेदादि। अत एव महाविषयत्वान्महत्। न केवलं महाविषयत्वेनास्य महत्त्वम्, अपि त्वनेकाङ्गोपाङ्गोपकरणतयाऽपीत्याह = अनेकविद्यास्थानोपबृंहितस्य। पुराणन्यायमीमांसादयो दश विद्यास्थानानि तैस्तया द्वारोपकृतस्य। तदनेन समस्तशिष्टजनपरिग्रहेणाप्रामाण्यशङ्काऽप्यपाकृता। पुराणादिप्रणेतारो हि महर्षयः शिष्टास्तैस्तया द्वारा वेदान्व्याचक्षाणैस्तदर्थं चादरेणानुतिष्ठद्भिः परिगृहीतो वेद इति। न चायमनवबोधको नाप्यस्पष्टबोधको येनाप्रमाणं स्यादित्याह—प्रदीपवत्सर्वार्थावद्योतिनः। सर्वमर्थजातं सर्वथाऽवबोधयन् नानवबोधको नाप्यस्पष्टबोधक इत्यर्थः। अत एव सर्वज्ञकल्पस्य = सर्वज्ञसदृशस्य। सर्वज्ञस्य हि ज्ञानं सर्वविषयं, शास्त्रस्याप्यभिधानं सर्वविषयमिति सादृश्यम्। तदेवमन्वयमुक्त्वा व्यतिरेकमाह—न हीदृशस्येति। सर्वज्ञस्य गुणः सर्वविषयता, तदन्वितं शास्त्रम्, अस्यापि सर्वविषयत्वात्। उक्तमर्थं प्रमाणयति—यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् सम्भवति सः = पुरुषविशेषः, ततोऽपि शास्त्रादधिकतर-विज्ञान इति योजना। अद्यत्वेऽप्यस्मदादिभिर्यत्समीचीनार्थविषयं शास्त्रं विरच्यते, तत्रास्माकं वक्तृणां वाक्याज्ज्ञानमधिकविषयम्। न हि ते ते असाधारणधर्मा अनुभूयमाना अपि शक्या वक्तुम्। न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्याऽप्याख्यातुम्। विस्तरार्थमपि वाक्यं न वक्तृज्ञानेन तुल्यविषयमिति कथयितुं विस्तरग्रहणम्। सोपनयं निगमनमाह—किमु वक्तव्यमिति। वेदस्य यस्मान्महतो भूताद्योनेः सम्भवः, तस्य महतो भूतस्य ब्रह्मणो निरतिशयं सर्वज्ञत्वं सर्वशक्ति(मत्)त्वं च किमु वक्तव्यमिति योजना। अनेकशाखेति। अत्र चानेकशाखाभेदभिन्नस्येत्यादिः सम्भव इत्यन्त उपनयः। तस्येत्यादि सर्वशक्ति(मत्)त्वं चेत्यन्तं निगमनम्। अप्रयत्नेनैवेति। ईषत्प्रयत्नेन, यथाऽलवणा यवागूरिति। देवर्षयो हि महापरिश्रमेणापि यत्राशक्तास्तदयमीषत्प्रयत्नेन लीलयैव करोतीति निरतिशयमस्य सर्वज्ञत्वं सर्वशक्ति(मत्)त्वं चोक्तं भवति। अप्रयत्नेनास्य वेदकर्तृत्वे श्रुतिरुक्ता—'अस्य महतो भूतस्ये'ति। येऽपि तावद्वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेयम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मः,

वर्णानां नित्यानां विभूनां च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या। पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। तस्मान्नृत्तानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादि नर्तकः करोति तादृशमेव शिक्ष्यमाणाऽनुकरोति नर्तकी, न तु तदेव व्यनक्ति। एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः, न तु तामेवोच्चारयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात्। तस्मान्नित्यानित्यवर्णवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ये विप्रतिपत्तिः। यथाहुः—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'।।

तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रत्यस्मादृशगुरुशिष्यपरम्परामविच्छिन्नामनादिमाचक्षते। वैयासिकं तु मतमनुवर्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेणानाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यं, पूर्वपूर्वसर्गानुसारेण तादृशतादृशाऽऽनुपूर्वीविरचनात्। तथा हि—यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते। न हि जातु क्वचित्सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति। अग्निर्वा क्लेदयति। आपो वा दहन्ति तद्वत्। यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुः, अन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः। एवं सर्गान्तरेष्वपीति तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्चास्माकमपि समानम्, अन्यत्राभिनिवेशात्। न चैकस्य प्रतिभानेऽनाश्वास इति युक्तम्। न हि बहूनामप्यज्ञानां विज्ञानां वाऽऽशयदोषवतां प्रतिभाने युक्त आश्वासः। तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानवैराग्यैश्वर्यसम्पन्नानामुपपद्यते तत्स्वरूपावधारणं, तत्प्रत्ययेन चार्वाचीनानामपि तत्र सम्प्रत्यय इत्युपपन्नं ब्रह्मणः शास्त्रयोनित्वं, शास्त्रस्य चापौरुषेयत्वं प्रामाण्यं चेति''। (भामती)

## वेदविरुद्धानामागमानां सदोषत्वं तिष्यशरदामतियातवत्यामेकादशाधिकशतोनचतुःसहस्त्र्यामेव विस्तरेण प्रदर्शितम्

अत्र भाष्योक्तं 'प्रदीपवत्सर्वार्थावद्योतित्व'रूपं शास्त्रविशेषणं महत्त्वपूर्णमस्ति। अर्थशास्त्रजयमङ्गलाकाराणां शङ्करार्याणां समये कृतमुपर्युक्तभाष्यमस्माभिरुपलभ्यते।

तदुक्तरीत्या तदानीं कस्याप्यंशस्याज्ञानं नासीदिति सिद्ध्यति। तस्मिन्नेव समये बौद्धगुरुखण्डनजनितपापक्षालनार्थं तुषाग्नौ प्रविष्टानां कुमारिलभट्टानामैतिहासिक-सत्यतमोद्धरणानुसारेण शाक्यनिर्ग्रन्थप्रभृतिबौद्धाद्यागमाः 'विगानविच्छिन्नमूलत्व-प्रमाणविरुद्धार्थाभिधायित्व'रूपेण 'कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिगृहीतत्वा'दिरूपेण चासन्; किन्तु वैदिकाचार्याणां ग्रन्थेषु तादृशं रूपं नासीदिति प्रसिद्ध्यति।

## भारतीयविद्योपासकेष्वाधुनिकानामितिहासानभिज्ञत्वारोपस्तदुत्तरं च

पूर्वं कदाचित् 'सर्वेन्ट्स ऑफ इण्डिया सोसाइटी'भवने सम्पादिते प्राच्यपाश्चात्त्यविद्वत्सम्मेलनेऽन्तिमव्याख्यातृमहाशयेन प्राच्यपद्धतिरितिहासानभिज्ञ-पद्धतिरित्याङ्ग्लभाषायामुक्तम्। अर्थादेवाङ्ग्लभाषानभिज्ञैः केवलं संस्कृतविद्भिरय-मारोपस्तदानीं न ज्ञातः; किन्तु यद्ययमारोपः सत्यः स्यात्तर्ह्याधुनिका नव्यशिक्षिता ऐतिहासिकेति मन्यमानाः पाश्चात्त्या अपीतिहासानभिज्ञत्वदोषान्मुक्ता न भवितुमर्हन्ती-त्यत्रास्माभिः प्रतिपाद्यते। उदाहरणार्थम्—इतः पूर्वं शतानां त्रयोविंशतेर्वर्षेभ्यः प्रागस्तित्ववता 'मिस्टर आर्कमिडीज्'महोदयेन विशिष्टगुरुत्वस्य[1] ('स्पेस्फिक ग्राविटी' इत्यस्य) शोधः कृत इत्यधुना विश्वविद्यालयादिषु पाठ्यते। भारतीय-राजनीतिशास्त्रान्तर्भूतोऽर्थशास्त्रग्रन्थ इतः पूर्वं शतानां चतुर्विंशतेर्वर्षेभ्यः प्रागासीदिति सर्वैरङ्गीक्रियते। 'स्वीयसुवर्णमुकुट इतरधातूनां मिश्रणमस्ति न वेति परीक्षार्थं राज्ञा पारितोषिकत्वेन घोषितानां लक्षमुद्राणां लाभार्थमुक्तमहोदयेन विशिष्टगुरुत्वस्य शोधः कृतः, एवं तज्जन्यहर्षेण स्नानपात्रे स्नानं कुर्वता तेन तथैव नग्नेन सता प्रधाव्य राज्ञः सविध आगत्य स उक्त' इत्युच्यते; किन्त्वर्थशास्त्रे सुवर्णमणिनिर्माणावसरे तत्र सीसकादिधातूनां मिश्रणं कृतं न वेति परीक्षा तान्मणीन् जले प्रक्षिप्य कर्तव्या। यदि मिश्रिताः स्युस्तर्हि तेषां मिश्रितो भागः परिवर्तितः सन् तलं गच्छेदिति प्रतिपादितमस्ति। अर्थात्—अन्ततो गत्वाऽस्याः परीक्षायाः प्रथमं सम्माननं भारतीयशास्त्राय दातव्यमासीत्। परं दुर्दैवात्तथा नाभूदित्यन्यदेतत्।

विद्युच्छोधः षोडशशताब्द्यां 'मिस्टर फेरेडे'महोदयेन कृत इत्युच्यते; परन्त्वर्थशास्त्रे विद्युदाक्रमणनिवारणार्थं चर्मावरणं राजभवने कार्यमिति विधानमस्ति। छायाचित्रग्रहणकारणीभूतस्य 'सिलवर सोल्यूशन्'पदार्थस्य वर्णनमस्मच्छास्त्रेषु कुत्रास्तीति मत्सविधे केनापि पृष्टम्; किन्त्वर्थशास्त्रीये 'आकरकर्मान्तप्रवर्तन'प्रकरणे बहिःकृष्णा अन्तःशुक्ला पाषाणा रजतयोनयो भवन्तीत्युपलभ्यते। अत उक्तसर्वविषयदर्शनेनास्मदीयशास्त्रेषु प्रदीपवत्सर्वार्थविद्योतित्वमस्तीति वक्तुं न कोऽपि प्रतिबन्धः सम्भाव्यते। अतोऽस्माकं प्राचीनशास्त्राणां विषये प्रमादेऽक्रियमाण एव देशस्योन्नतिर्भवितुमर्हतीत्यवश्यं मन्तव्यं भवति।

१. महाराष्ट्रभाषानिर्मितम् 'अभिनवविज्ञानरसायन'नामकं पुस्तकं द्रष्टव्यम्।

साङ्गवेदविद्यालयीयरजतजयन्त्यवसरमुद्रितलेखस्थाः कियन्तोऽपि पारिभाषिकाः पदार्था अत्र न प्रतिपादिताः। तत्रत्याः सर्वे विषया दुरवबोधाः सन्तीति अत्र तेषां प्रतिपादनमशक्यम्, तथापि केषाञ्चित्पदार्थानां दिङ्मात्रप्रदर्शनमत्र कृतमस्ति।

## वेदशास्त्रयोर्मित्रत्वम्

परमावश्यक एको विषयोऽत्र प्रतिपाद्यते यत्—

'त्यागविज्ञानसत्त्वाढ्यं महापक्षं प्रियंवदम्।
आयतिक्षममद्वैध्यं मित्रं कुर्वीत सत्कुलम्'।।

इति नीतिसारश्लोकस्योपाध्यायनिरपेक्षाटीकायाम्—'विज्ञानमिति सर्वशास्त्रप्रवीणता' इति लिखितमस्ति। वेदेऽपि विज्ञानमयकोषस्य वर्णनम्—

'तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा'।।

इति रीत्या कृतमस्ति। तदुक्तसर्वशास्त्रप्रवीणताविषय एव कृतमित्युक्तौ न काऽपि क्षतिः। तत्र 'योग आत्मा' इत्ययं विषयोऽवश्यमवधातव्यः।

## समाधिनिरूपणम्

योगो नाम सम्प्रज्ञातोऽसम्प्रज्ञातश्च समाधिः। 'धारकेण प्रयत्नेन धार्यमाणस्य मनसस्तत्त्वबुभुत्साविशिष्टेनात्मना संयोगः समाधि'रिति न्यायशास्त्रे समाधिलक्षणमुक्तम्। समाधिजन्यमदृष्टं योगजधर्म इत्युच्यते। तस्मिन्नदृष्ट इयं शक्तिर्वर्तते यद्यत्तत्त्वबुभुत्सया समाधिः क्रियते तत्तत्त्वसाक्षात्कारोऽवश्यं भवतीति। अस्य पूर्वावस्थायां स्थितो योगो युञ्जान इत्युच्यते। एवंरीत्या योगजधर्मजन्यपुण्यसञ्चये जाते जायमाने वा यदि फलेच्छात्यागः क्रियेत, तर्हि निष्कामयोगः सिद्धो भवति। इयमवस्था युक्तावस्थेत्युच्यते।

'योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।
युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः'।।

इति न्यायशास्त्रे प्रतिपादितमस्ति। सोऽयं विषयो न केवलमाधुनिकग्रन्थोक्तः; किन्तु—

'युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः।
अग्निं ज्योतिर्निचाय्य पृथिव्या- अध्याभरत्।।
युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम्।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान्।।

युक्तेन मनसा वयं देवस्य सवितुः सवे। सुवर्गेयाय शक्त्यै।।
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः'।।

इति तैत्तिरीयश्रुतौ प्रतिपादितोऽस्ति। एतादृशमनोयोगबलेनैव श्रीरा॰रा॰शङ्कर(बापूजी)तलपदे-महोदयेन विमानं निर्माय चौपाटीस्थाने तस्योड्डयनं प्रदर्शितमासीत्; किन्तु पूर्वोक्तरीत्या दुर्दैववशात्पौर्वात्येभ्यः कुत्रापि महत्त्वं न देयमिति भावनाऽत्रापि प्रतिबन्धिका जाता। एवं तज्जन्यं श्रेयो 'राइट कम्पनी'संस्थया गृहीतम्। एतादृशी भावना पूर्वकालादारभ्य पाश्चात्त्यसमाजे यदाऽस्ति तदा भारतीयशास्त्राणां महत्त्वं कथं सिद्ध्येत्? तथापि न्यायव्याकरणादिशास्त्राणां महत्त्वमद्यापि—

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्याद्युक्तरीत्या जीवित-मस्तीत्यत्रेश्वरकृपैव कारणम्। अस्तु।

## वेदप्रभृतिसन्तवाङ्मयपर्यन्तस्थान्युक्तार्थोपष्टम्भकानि वचनानि

पूर्वोक्तरीत्या वैदिकवाङ्मयं सर्वविज्ञानपरिपूर्णमस्तीत्युक्तौ न काऽपि क्षतिरस्ति। अतो वैदिकवाङ्मयं समाजस्य मित्ररूपमस्तीति।

'यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदि शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्'।।

इति रीत्या स्वतो वेदेनैव प्रतिपादितमस्ति। अत एव तुलसीदासैरपि—

'जे न मित्रदुख होहिं दुखारी। तिन्हहि बिलोकत पातक भारी'।।

इति लिखितमस्ति। तत्राप्यभ्यर्हिताऽऽन्वीक्षिकीति तस्या विषये—

'कुपथ निवारि सुपन्थ चलावा। गुन प्रकटहि अवगुनहिं दुरावा।।
देत लेत मन सङ्क न धरई। बल अनुमान सदा हित करई।।
बिपतिकाल कर सतगुन नेहा। श्रुति कह सन्त मित्र गुन एहा'।।

इति लिखितमस्ति। एवञ्च—एतादृशैकमात्रवेदशास्त्ररूपमित्रविषयेऽनुद्बुद्ध-संस्काररूपः प्रमादो महादोषावहो भवेत्। तद्विषये पाश्चात्त्यैः शङ्कोत्पादनद्वारा भेदनीतिः सम्पादिताऽस्तीत्यवश्यमत्र सावधानैर्भाव्यम्। अत्र बहूनां विषयाणां प्रतिपादनमावश्यकमस्ति; किन्तु विस्तरभयादत्रैव लेखादस्माद्विरम्यत इति शम्।

प्रवर्ततां प्रकृतिहिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्।
ममापि च क्षपयतु नीललोहितः पुनर्भवं परिगतशक्तिरात्मभूः।।

# शास्त्रार्थविचारपद्धतिः

## पण्डितराजराजेश्वरशास्त्रिद्राविडः

***

तत्रादौ कथालक्षणम्—

विचार्यविषयो नानावक्तृको वाक्यविस्तरः।
कथा तस्याः षडङ्गानि प्राहुश्चत्वारि केचन।।

विचारगोचरविषयो नानावक्तृको वाक्यविस्तरः कथा। तस्याः कथायाः षडङ्गानि सङ्गिरन्ते— १. निरूप्यनिरूपकनियमः[1], २. कथाविशेषव्यवस्था, ३. वादिप्रतिवादिनियमः, ४. सदस्यानुविधेयसंवरणम्, ५. निग्रहस्थानसामस्त्यासामस्त्योद्भावनप्रतिज्ञानम्, ६. कथापर्यवसानसंवित्तिरिति षडङ्गानि।

अपरे तु चत्वारि— १–२ वादिप्रतिवादिनियमौ, ३–४ सदस्यानुविधेयसंवरणे चेति[2]।

लिपिकरण[3]व्यवहारेषु लेखकोऽपि कश्चिदुभयसम्मतो वरणीयः।

---

१. **निरूप्येत्यादि**। निरूप्यं प्रतिपाद्यमात्मतत्त्वादिकं, निरूपकं तत्प्रतिपादकं प्रमाणमनुमानादि तयोर्नियमः, अनेनेदं साधयामीति प्रतिज्ञानम्। कथाविशेषो वादादिः, तस्य व्यवस्था, अनेन कथयिष्यामीति नियमकरणम्। तथा अनयोरयं वादी प्रतिवादीति नियमो नियमनम्। अनु पश्चाद्विधेयं निष्पन्नकथाफलप्रतिपादनरूपमस्यास्तीत्यनुविधेयः सभापतिस्तस्य सभ्यानाञ्च संवरणम्, एते सभ्या अयमनुविधेय इति सम्परिग्रहः। निग्रहसामस्त्यं जल्पवितण्डयोः, वादे त्वसामस्त्यमिति। कथापर्यवसानस्य कथासमाप्तेः संवित्तिः पक्षादौ क्वचिदेकत्र समाप्तिरिति समयबन्धः।

२. वादिनियमः प्रतिवादिनियमः सभ्यसंवरणमनुविधेयसंवरणञ्चेति चत्वार्यङ्गानि। अन्यत्सर्वं तन्त्रान्तरीयकत्वान्न पृथग्वाच्यमिति भावः।

३. अत्र पक्षद्वयेऽपि पाक्षिकमङ्गान्तरमाह—**लिपिकरणेति**।

अत्र[१] कथकौ विद्यातः सम्भावितसाम्यौ स्यातम्। अन्यथा विशेष-विज्ञानप्रयोजनायाः कथाया आनर्थक्यप्रसङ्गात्, वादमन्तरेणापि विशेषनिर्णयोपपत्तेः।

सदस्यास्तु वादिप्रतिवादिसम्मताः सिद्धान्तद्वयरहस्यवेदिनो रागद्वेषविरहिणः[२] पराभिहितग्रहणधारणप्रतिपादनकुशलास्त्र्यवरा विषमसङ्ख्याः स्वीकार्याः। तथा च सति द्वैधे बहूनां संवादेन निर्णयः स्यात्। तथा च स्मरन्ति—

'रागद्वेषविनिर्मुक्ताः सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा'।।इति।
'द्वैधे बहूनां वचन'मिति च।

सदस्यानां तु—१. प्रमेयविशेषस्य कथाविशेषस्य वादिनः प्रतिवादिनश्च नियमनं, २. पर्यनुयोज्योपेक्षणोद्भावनादिना कथकगुणदोषावधारणम्, ३. भग्नप्रति-बोधनम्, ४. मन्दस्यानुभाष्यप्रतिपादनमिति कर्माणि।

सभापतिरपि वादिप्रतिवादिनोः सदस्यानाञ्च सम्मतो रागादिरहितो निग्रहानुग्रहसमर्थः स्वीकरणीयः। तस्य च निष्पन्नकथाफलप्रतिपादनादिकं कर्म[३]।

वादे तु दैवादागताः सदस्या वादिप्रतिवादिभ्यां सम्प्रतिपत्त्या प्रामादिक[४]-कथाभासशङ्काव्यावर्तनायाङ्गीक्रियन्ते, न जल्पवितण्डयोरिव प्रमेयादिव्यवस्थापनार्थ-मङ्गत्वेनोपादीयन्ते। तथा च वार्तिकम्—'न चायं नियमः प्राश्निकप्रत्यायनार्थ एवायं वाद इति। प्राश्निकानन्तरेणापि गुर्वादिभिः सह संवादो दृष्टः' इति। अत्र टीका-'न वादे प्राश्निकानामुपादानं, दैवादागतानां त्ववर्जन'मिति। यत्तु 'प्राश्निका वादे न सन्ती'ति तस्यैव वचनम्, अङ्गतया उपादानं नास्तीति तस्यार्थः। दैवादागता-नामवर्जनस्य स्वयमेवोक्तत्वादिति।

कथावान्तरविधास्त्वेताः—

वादो जल्पो वितण्डेति तिस्रस्तस्या विधा मताः।।

तत्र वादस्य लक्षणं फलं च प्रदर्श्यते—

तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता।
वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः।।

---

१. वादिप्रतिवादिनोस्तुल्यबलत्वमावश्यकमित्याह—**अत्रेति**। ननु तुल्यत्वं दुर्ज्ञानमत आह—**सम्भावितेति**। अतुल्यत्वे बाधकमाह—**अन्यथेति**। कथमानर्थक्यं, वादं विना निर्णया-सम्पत्तेरित्याशङ्क्याह—**वादमिति**। पुरुषगौरवादेव श्रद्दधानस्य तदुपदेशमात्रादपि निर्णय-सिद्धेरिति भावः।

२. रागद्वेषराहित्यञ्चामीषां निर्णयलेखपरिशुद्ध्या व्यवस्थापनीयमिति भावः।

३. निष्पन्नकथाफलप्रतिपादनं, पणीकृतद्रव्यदापनम्, आदिशब्दात्स्वयं छत्रचामरादिदापनम्।

४. **प्रामादिकेति**। 'बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः' इति न्यायादिति भावः।

प्रमाणतर्काभ्यामेव[1] स्वपक्षसाधनपरपक्षोपालम्भौ करणीयावित्यभिमानमात्रमत्र विवक्षितं, न वस्तुतः, उभयोरपि तथा कर्तुमशक्यत्वात्। यथाहुः— 'प्रामाणिकवचनमात्राभिप्रायपूर्विका कथा वादः' इति। तत्त्वावसायफलत्वादस्यां वीतरागाणामेव शिष्याचार्यसब्रह्मचारिणामधिकारः। न च विजिगीषूणामित्युक्तं **वीतरागकथेति**। तदुक्तम्—'तं शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेया'-दिति। अज्ञातज्ञापनं,[2] ज्ञातस्य स्थिरीकरणं, संशयनिवर्तनम्, इति त्रिविधस्तत्त्व-निर्णयः। अत्र निग्रहस्थाननियमः शास्त्रे प्रसिद्धः। तदुक्तम्—'प्रमाणतर्कसाधनो-पालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः[3] पक्षप्रतिपक्षपरिग्रहो वादः' इति। जल्पवितण्डे दर्शयति—

स च च्छलादिसम्भिन्नो जल्पोऽस्य विजयः फलम्।
जल्प एव वितण्डा स्यात् प्रतिपक्षे त्वसाधने।।

**स इति**। तच्छब्देन प्रमाणतर्कनियमाभिधानं तत्त्वावसायलक्षणं फलञ्च परिहाय उक्तलक्षणो वादः परामृश्यते। छलादिप्रयोगाभ्यनुज्ञानाद्विजयफलकत्व-निर्देशाच्च ततो भिद्यते। ततश्च प्रमाणतर्काभ्यां छलादिभिश्च स्वपरपक्ष-साधनोपालम्भवती विजिगीषुकथा जल्पः। विजिगीषमाणयोरुभयोरपि साधनो-पालम्भवती कथा जल्प इत्याचार्याः। तत्र हि मत्सरादिना विजिगीषया च कथाप्रवृत्तेः। सदुत्तरापरिस्फूर्तौ छलादिप्रयोगेणापि प्रतिवादी पर्याकुलितमानसोऽ-प्रतिभोऽसदुत्तरवादी वा भवेदिति इतरस्यावष्टम्भे विजयसम्भवात् प्रमाणतर्काभ्यामेव व्यवहार इत्यभिमानोऽपि न विवक्षितः। तस्याञ्च कथायं परपक्षसाधनानुपालम्भे तु न स्वपक्षस्थितिमात्रेण विजयी, अपि तु केवलं श्लाघ्य एव स्यात्, वञ्चितपरप्रहारस्तमप्रहरमाण इव वीरः। स्वसाधनासिद्धौ परदूषणमात्रेणापि तथा यथा आत्मानमरक्षन् परघातीव वीरः। ततश्च स्वपरपक्षयोः साधनोपालम्भाभ्यामेव विजयो नान्यतरमात्रेणेति। तदुक्तम्— 'यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनो-पालम्भो जल्पः' इति।

प्रतिपक्षस्थापनामात्रहीनो जल्प एव वितण्डा भवति। अत्र प्रतिवादी यं कञ्चन सिद्धान्तमवलम्ब्य व्यवस्थितः प्रतिपक्षभङ्गमात्रेण विजयी भवति, न तु

---

१. **प्रमाणतर्काभ्यामेवेति**। तेन छलादिनिवृत्तिः, तथा च प्रमाणतर्काभ्यामेव स्वपक्षसाधन-परपक्षोपालम्भनवती कथा वाद इति लक्षणं द्रष्टव्यम्।

२. अत्राधिकारित्रैविध्यात् फलत्रैविध्यमाह—**अज्ञातेत्यादि**। गुरुशिष्यवादे अज्ञातज्ञापनं फलं, सब्रह्मचारिवादे ज्ञातस्थिरीकरणं, शिष्टमुमुक्षुवादे संशयनिवर्तनमिति यथासङ्ख्यं द्रष्टव्यम्।

३. स्वपक्षसाधनं तत्समर्थनं परपक्षदूषणं तत्समर्थनं शब्ददोषवर्णनञ्चेति पञ्चावयवास्तदुप-पादकाः। अन्यथा अङ्गवैकल्यात् कथाभासप्रसङ्ग इति भावः।

जल्पवत्स्वपक्षसाधनेनापीत्युक्तं प्रतिपक्षे त्वसाधन इति। सिद्धान्तावष्टम्भस्तु अवश्यं करणीयः। अन्यथा अनित्यः शब्दः कृतकत्वादित्यादि नैय्यायिकेन प्रयुक्ते कश्चन वैतण्डिकाभिमानी मीमांसादृष्ट्या पूर्वमसिद्धिमुद्भाव्य वादिना पुनः साध्यमाने हेतौ सौगतमतानुसारेण सिद्धसाधनतामुद्भावयेदिति अपरिनिष्ठितः कथाव्यवहारः स्यात्। अत एव सूत्रकारोऽपि प्रतिवादिनः पक्षपरिग्रहमङ्गीकृत्य तस्य स्थापनामात्रं निराचष्टे 'स प्रतिपक्षस्थापनाहीनो वितण्डे'ति। जल्पवितण्डयोरेव चतुःपञ्चानां षट्सप्तानां वाङ्गानां नियमावश्यम्भावः[1]। वादे तु तदनपेक्षमेव[2] तत्त्वावसायफलसिद्धेः। न च[3] 'न विगृह्य कथां कुर्या'दित्यादिभिर्जल्पवितण्डयोर्निषेधः शङ्कनीयः, नास्तिकनिवारणार्थमवश्यकर्तव्यत्वेन तदितरविषयत्वान्निषेधस्य[4]। तदुक्तम्— 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदि'ति, 'ताभ्यां विगृह्य कथन'मिति च।

सदुत्तरेण जातीनामुद्धारे तत्त्वनिर्णयः।
जयेतरव्यवस्थेति सिद्ध्येदेतत्फलद्वयम्।।
षण्डसम्भोगतुल्याः स्युरन्यथा निष्फलाः कथाः।
इति दर्शयितुं सूत्रैः षट्पक्षीमाह गौतमः।।

किमर्थमिदं षट्पक्षीप्रदर्शनं, त्रिपक्षादावप्युभयोरसदुत्तरप्रयोगे कथाभासो दर्शयितुं शक्यत एवेति चेत्?, सत्यं, तथापि षट्पक्षीं नातिवर्तते, ततः परं सभ्यैरेव वादिनौ निवार्य कुकथात्वप्रदर्शनमिति प्रदर्शयितुं तदिति मन्येथाः। कुतः पुनः सभ्यास्तृतीयादिषु कुकथात्वमनुद्भावयन्तश्चतुर्थादिपक्षमनुमन्यन्ते। श्रूयतामवहितैः। सभ्यास्तावत् कथायां स्वयं कर्तृत्वेनानन्वयादुत्पाद्यविवक्षाः। तदुत्थापनञ्च प्रश्नेन वोभयोरप्रतिभया वा कथाभासप्रबन्धेन वा भवति। पर्यनुयोज्योपेक्षणञ्च सभ्यैरुद्भाव्यम्। तच्च सत्साधनोपक्रमायां कथायां प्रथमद्वितीययोरसम्भावितमेव। तृतीये वादिनः सम्भावितमप्यनुद्भाव्य प्रतिवाद्यनुयोगमपेक्षमाणास्तूष्णीमासते, तत्र

---

१. लेखकस्वीकारपक्षे पञ्चमसप्तमसम्भवः।

२. तदनपेक्षं भङ्गानपेक्षं, क्रियाविशेषणञ्चैतत्।

३. ननु निषिद्धयोर्जल्पवितण्डयोः किमर्थं लक्षणमुच्यते यत् प्रक्षाल्य त्यागः स्यादित्याशङ्क्याह— **न चेति**। कुतो न शङ्कनीयम् इत्याशङ्क्य निषेधस्य नास्तिकेतरप्रतियोगिककथाविषयत्वादित्याह—**नास्तिकेति**। तर्हि किमनयोः कर्तव्यताबोधकं शास्त्रमित्याकाङ्क्षायां सूत्रमेवेत्याह—**तदुक्तमिति**। स्मृतिवत् सूत्रस्यापि आर्षत्वात् तदपवादकत्वं युक्तमिति भावः। **जल्पवितण्डे** इति। कर्तव्ये इति शेषः। नन्वनेन सूत्रेणानयोः कर्तव्यतामात्रं प्रयोजनं चोक्तं, न तु विगृह्य कथनमिति कथमस्यापवादकत्वमित्याशङ्क्योत्तरसूत्रे तदुक्तमित्याह—**ताभ्यामिति**।

४. समानन्यायेन अभ्यासार्थमपि विद्यार्थिनामीदृशकथनमनिषिद्धमित्यपि बोध्यम्।

चतुर्थः पक्षः प्रवर्तते। तत्र सम्भावितस्यापि वाद्यनुयोगापेक्षयाऽनुद्भावने पञ्चमः पक्षः। वादिनोः स्तम्भरूपमनुविधेयप्रश्नावसरमपेक्षमाणेषु षष्ठः। प्रश्नसमयातिक्रमे पुनरननुयुक्ता अपि वादिना निवार्य कुकथात्वमावेदयन्ति। अन्यथाऽवसरप्राप्त-पर्यनुयोज्योपेक्षणानुद्भावने तेषामज्ञत्वप्रसङ्गात्। प्रतिवाद्यादिप्रश्ने त्रिपक्षादिषु पर्यव-स्यतीति सङ्क्षेपः।

अथास्मिन् विद्यार्थिनां परस्परं शास्त्रार्थविचारे परिहरणीयानि निग्रहस्थानानि। तत्रादौ निग्रहस्थानलक्षणम्।

अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम्।
निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते।।१।।

तानि च इदानीं 'प्रतिज्ञाहानिः प्रतिज्ञान्तर'मित्यादिसूत्रपठितायां द्वाविंशतौ वक्ष्यमाणानि बोध्यानि। सूत्रे चशब्दस्य तुकारपर्यायत्वेन कथामध्ये भूतावेशाभिभूत-प्रलापापस्माराद्यावेशेनोक्तानि, झटितितिरोधानेन गलितोद्भावनावसराणि, अनधि-कृतोद्भावितानि च न निग्रहस्थानानि। आद्ये अज्ञानलिङ्गत्वाभावात्, द्वितीये तदुद्भावनानर्हतया अज्ञानलिङ्गत्वाभावात्, स्वयमेव तेन बुद्ध्या परिहृतत्वात्, तृतीये अन्योक्तत्वेन प्रतिवादिनो विजयाभावाच्चेति बोध्यम्।

प्रतिज्ञाहानिः— अत्र निर्वाह्यमेव वदेत्, उक्तञ्च निर्वहेदिति रहस्यम्।
प्रतिज्ञाविरोधः— अत्र मिथो व्याहतं न वदेदिति तत्त्वम्।
प्रतिज्ञासंन्यासः— प्राश्निकाद्यवगतं नापलपेदिति रहस्यम्।
अर्थान्तरम्— अत्र च प्रकृतोपयुक्तमेव ब्रूयादिति रहस्यम्।
निरर्थकम्— अत्र च समानसमयैरेव पदैर्व्यवहरेदित्युपदेशः। समानसमयत्वं भाषाविषये बुद्धिसाम्यम्।
अविज्ञातार्थम्— अत्र च लोकरूढं गमितयोगमर्थनिर्णायकप्रकरणलिङ्गादिसहितं निरस्तदोषमेव वाक्यं ब्रूयादिति रहस्यम्।
अपार्थकम्— अत्र अन्वितमेव वदेदित्युपदेशः।
अप्राप्तकालम्— अत्र चाकाङ्क्षाक्रमेण ब्रूयादिति सङ्क्षेपार्थः।
न्यूनम्— अत्र परिपूर्णं ब्रूयादिति सङ्क्षेपः।
अधिकम्— अत्र च अकृतकरमेव वदेदिति सङ्ग्रहः।
पुनरुक्तम्— अत्र प्रतीतस्यैवार्थस्य प्रयोजनमन्तरेण पुनरपि शब्देन प्रतिपादनं न कुर्यादिति तत्त्वम्।
अननुभाषणम्— अत्र वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य पुनर्वादिना परिषदा वा अनूद्य दत्तस्य उच्चारणयोग्यस्य अज्ञानमनाविष्कुर्वता कथा-

मप्यविच्छिन्दता यदप्रत्युच्चारणं तदननुभाषणम्। तत्र च तदित्यादिसर्वनाम्नाऽनुवादः, दूष्यैकदेशानुवादः, कथानुवादः, केवलदूषणोक्तिः, स्तम्भनञ्चेति पञ्चापि अननुभाषणत्वेन सङ्गृह्यन्ते।

अज्ञानम्— पूर्वस्यामेवावस्थायां प्रतिवादी न ज्ञायते मयेति स्वाज्ञानमाविष्करोति चेत्, तस्याज्ञानं नाम निग्रहस्थानं भवति।

अप्रतिभा— वादिनोक्तस्य स्वेन चानुभाषितस्य वाक्यार्थस्य प्रतिषेधरूपमुत्तरं यदा प्रतिवादी न प्रतिपत्तुमीष्टे तदा तस्य अप्रतिभा नाम निग्रहस्थानं भवति। तूष्णीम्भाववद् भोजवार्तावतरण-श्लोकादिपाठ-केशादिविरचन-गगनसूचन-भूतलविलेखनादि-यत्किञ्चित्क्रियान्तरकरणेऽपि निग्रहोऽत एव, न तु अपस्मार-भूतावेशादिनिमित्तेषु, तेषामपकर्षासूचकत्वात्।

विक्षेपः— वादं कर्तुं सभामध्यमारुह्य, परिषदि श्रोतुमेकतानमनसि, प्रतियोगिनि च दत्तावधाने, 'सम्प्रति मे महत्प्रयोजनमस्ति, श्वः परश्वो वा कथयिष्यामी'ति कस्यचिद्व्याजस्य वचने विक्षेपलक्षण-माहुराचार्याः। अत्र च ताम्बूलभक्षणोद्गिरण-सूत्रोच्चारणाद्यावश्यकमनुष्यधर्मा व्याजा न भवन्ति, सर्वप्राणिधर्मत्वात्, कथाविच्छेदाहेतुत्वाच्च।

मतानुज्ञा— अत्र स्वदोषपरिहारेणैव परस्य दोषं प्रसञ्जयेदिति सङ्क्षेपः।

पर्यनुयोज्योपेक्षणम्—इदं निग्रहस्थानं षट्पक्ष्यनन्तरं मध्ये वा मध्यस्थैरुद्भाव्यम्।

अपसिद्धान्तः— सिद्धान्तमेकमालम्ब्य तद्विरुद्धपरिग्रहे।
अपसिद्धान्ततः सिद्धं निग्रहस्थानमक्षयम्॥

हेत्वाभासाः— सुप्रसिद्धा एव।

विद्यार्थिनामशक्तिमालोच्य प्रतिज्ञान्तरहेत्वन्तरनिरनुयोज्यानुयोगाः परित्यक्ताः। तेषां स्वरूपं यथा—

प्रतिज्ञान्तरम्— अत्र कक्ष्यान्तरे प्रतिज्ञार्थो न विशेषणीय इति रहस्यम्।

हेत्वन्तरम्— अत्रापि कक्ष्यान्तरे हेत्वर्थो न विशेषणीय इति तत्त्वम्।

निरनुयोज्यानुयोगः—सर्वथा निग्रहस्थानमप्राप्तो निग्रहस्थानान्तरप्राप्तावपि उद्भाव्य-माननिग्रहस्थानमप्राप्तश्च यो वादी तमपि तेनैव निग्रहस्थानेन निगृह्णतो निरनुयोज्यानुयोगो नाम निग्रहस्थानं भवतीति।

●

# हिन्दुत्वम्



[ विश्वहिन्दुपरिषदा 'धर्मान्तरपरिवर्तन'-विषये समुपस्थापितायाः समस्यायाः समाधाने उपयुक्तः **पण्डितराजैः** सञ्चालितया वर्णाश्रमस्वराज्यसङ्घविद्वत्परिषत्कार्यकारिश्रीगीर्वाणवाग्वर्धिनीसभया विचारितो निबन्धः—सं. ]

साम्प्रतं सर्वेऽपि विश्वस्मिन् राष्ट्रे विद्यमाना बुद्धिमन्तो वर्तमानां समाजस्य दुरवस्थामवलोकयन्तः सुखं शान्तिश्च समाजेन कथं लभ्येतेति प्रश्नं विचारयन्तः समुपलभ्यन्ते। तत्र निश्चितमेतद्वक्तुं शक्यते यद् यावत्पर्यन्तं व्यक्तिषु कुलेषु समाजेषु राष्ट्रेषु च परस्परमैक्यस्य समुन्मेषो न भवेत्, तावत्पर्यन्तं सुखस्य शान्तेश्च न सम्भावना स्यादिति। इदमैक्यं किं रूपं? के च तदुपाया इति विचारणं नानवसरे स्यात्। तत्र '....रामसुग्रीवयोः सख्यं देव्येवं समजायत' इति रामायणवाक्ये समालोच्यमाने ऐक्यं मित्रतारूपमेवेति सुस्पष्टं भवति। मित्रताया किं मूलमिति तु 'सद्भावेन हरेन्मित्र'मिति कामन्दकीयनीतिसारवचनात् सद्भाव एवेति सिद्ध्यति। 'सद्भावस्तावद् विश्वासः' इत्युक्तं तट्टीकायाम्। विश्वासो नाम....अयं मदिष्टं साधयिष्यत्येवेति निश्चयरूप इति साहित्यविदः। सङ्घटनमपि उक्तरूपमेव, यतो हि '....शमः समाधिः सन्धिरिति पर्यायाः' इति कौटिलीयार्थशास्त्रे, तद्व्याख्यायाञ्च '....राज्ञां विश्वासोपगमः सन्धि'रिति सन्धेः स्वरूपमुपस्थापितम्। '....सन्धिः सङ्घटना मता' इति वचनञ्च सन्धिमेव सङ्घटनारूपं वर्णयति। तेन विवेचनेन स्पष्टमिदं प्रतीयते यद् यावत्पर्यन्तं परस्परं विश्वासो न सम्पादितः स्यात्, तावत्पर्यन्तं कथमपि सुखस्य शान्तेश्च प्रादुर्भावः कुलेषु समाजेषु राष्ट्रेषु च न सम्भवेत्। उक्तस्य स्थायिनो विश्वासस्य कृते के उपाया अनुष्ठातव्या इति यदि समालोचयामस्तदा राजनीत्युक्ताः सदाचारा एवेति स्पष्टमवगम्यते। ते च—

'वाक्सूनृता दया दानं दीनोपगतरक्षणम्।
इति सङ्गः सतां साधु हितं सत्पुरुषव्रतम्।।
शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा।
देवतावद् गुरुजनमात्मवच्च सुहृज्जनम्।।
प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः।
कुर्वीताभिमुखान् भूत्यै देवान् सुकृतकर्मणा।।

सद्भावेन हरेन्मित्रं सम्भ्रमेण च बान्धवान्।
स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरान् जनान्।।
अनिन्दा परकृत्येषु स्वधर्मपरिपालनम्।
कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः।।
प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे।
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता।।
स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः।
नान्योपतापि वचनं मौनव्रतचरिष्णुता।।
बन्धुभिर्बद्धसंयोगः सुजने चतुरस्रता।
तच्चित्तानुविधायित्वमितिवृत्तं महात्मनाम्'।।

इत्यादिना ग्रन्थेन प्रतिपादिताः। एते सदाचाराः यद्यनुष्ठिता भवन्ति तदा स्थायिविश्वासमूलिकाया मैत्र्या अवश्यमेवोत्पत्तिः स्यात्, अत एवोक्तम्—

'इति पथि विनिवेशितात्मनो रिपुरपि गच्छति साधु मित्रताम्।
तदवनिपतिमत्सरादृते विनयगुणेन जगद् वशं नयेत्'।। इति।

त इमे पूर्वोक्ता सदाचाराः कस्मिन् समाजे परम्परया कर्तव्यत्वेन प्रचलिताः सन्तीत्यालोच्यमाने हिन्दुसमाज एवेति वक्तव्यमापतति। न हि हिन्दुसमाजं विहायान्यस्मिन् '....अनिन्दा....महात्मनाम्' इत्यनेनोक्तः प्राथमिक एव सदाचारः समुपलभ्यते। तर्हि परधर्मावलम्बिनः 'काफिर' इति निन्द्यन्ते, निरपराधस्त्री-बालानामवस्कन्दनं च क्रियते। हिन्दवस्तु तेऽपि स्वधर्माचरणेन स्वकीयं श्रेयः प्राप्नुवन्त्येवेति अङ्गीकुर्वन्ति। अत एव श्रीमदाद्यशङ्करभगवत्पादा जैनबौद्धादि-साधारणषण्मतस्थापनाचार्या इत्युच्यन्ते। यथोक्तं न्यायरत्नावल्याम्—'विश्वगुरु-मित्यनेन नास्तिकषड्दर्शनीकर्तृणामास्तिकषड्दर्शनीकर्तृणां च शिक्षक आचार्य इति सूचनात्....' इति। अत एव च—'श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः' इति सर्वेषामपि स्वस्वधर्मेऽवस्थितिरितरेषामबाधकतया हिन्दुधर्मेऽनुमन्यते।

तथा च सहिष्णुता, स्वधर्मपरिपालनम्, अनिन्दा परकृत्येषु, इत्यादयः परस्परमैक्यसम्पादकाः सदाचारा हिन्दुसमाज एव समुपवर्णिताः, परम्परया चानुष्ठाने पर्यवसायिनः सन्तीति कृत्वा हिन्दुसमाजस्य सङ्घटनमेव राष्ट्राणामैक्यस्य मूलं भवितुमर्हतीति स्फुटं वक्तुं शक्यते। अत एव श्रीमदनमोहनमालवीयमहोदयै-र्हिन्दुसङ्घटनोपायत्वेन निम्नलिखिताः सदाचारा उपवर्णिताः सन्ति—

'ग्रामे ग्रामे सभा कार्या ग्रामे ग्रामे कथा शुभा।
पांठशाला मल्लशाला प्रतिपर्व महोत्सवः।।

अनाथा विधवा रक्ष्या मन्दिराणि तथा च गौः।
धर्म्यं सङ्घटनं कृत्वा देयं दानं च तद्धितम्।।
स्त्रीणां समादरः कार्यो दुःखितेषु दया तथा।
अहिंसका न हन्तव्या आततायी वधार्हणः।।
अभयं सत्यमस्तेयं ब्रह्मचर्यं धृतिः क्षमा।
सेव्यं सदाऽमृतमिव स्त्रीभिश्च पुरुषैस्तथा।।
कर्मणां फलमस्तीति विस्मर्तव्यं न जातुचित्।
स्मर्तव्यः सततं विष्णुः सर्वभूतेष्ववस्थितः।।
उत्तमः सर्वधर्माणां हिन्दुधर्मोऽयमुच्यते।
रक्ष्यः प्रचारणीयश्च सर्वभूतहिते रतैः।।'इति।

अस्माकं राजनीतिशास्त्रेऽप्येते सदाचारा उपवर्णिता इति पूर्वमेवावेदितम्।

अत्र हिन्दुशब्दार्थः कीदृशो भवितुमर्हतीति प्रश्नः समुद्भवति। तत्रेदं विचारयामः। यद्यपि हिन्दुशब्दस्तावत् संस्कृतवाङ्मये विशेषतः प्रयुक्तो नास्ति, तथापि मेरुतन्त्रे एवमुल्लेखोऽस्य वर्तते—

'हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्तिनः।
....हीनञ्च दूषयत्येव स वै हिन्दुरिति स्मृतः' इति।।

एवं कालिकाभविष्यपुराणादिषु द्वित्रेषु स्थलेषु हिन्दुशब्दस्योल्लेखो वर्तते। अत्र शब्दार्थनिर्णयार्थं पिकनेमाधिकरणन्यायेन प्रधानतमं निदानं परम्पराप्राप्ता प्रसिद्धिरेवेति विदन्त्येव सर्वे। एवञ्च हिन्दुशब्दविषयेऽपि परम्पराप्राप्ता प्रसिद्धिस्तावत्—श्रुतिस्मृतिसदाचारपर्यन्तप्रमाणबलेन वेदबोधितकर्तव्यतामनुमाय प्रवृत्तिमति तदधीने च समाजे वर्तत इति वक्तव्यमापतति। अत एव 'हीनञ्च दूषयत्येव स वै हिन्दुरिति स्मृतः' इति वचने यः पूर्वोक्तेन सदाचारेण हीनो भवति तं बहिष्कारादिदण्डैर्यः समाजो दण्डयति स एव हिन्दुसमाजः। दण्डस्तावद् अनेकप्रकारो भवति. धिग्दण्डः. बहिष्कारदण्डः. अर्थदण्ड इत्यन्यदेतत। यद्यपि वर्तमानसमये तादृशो दण्डो बहिष्कारादिरूपो न दातुं शक्यते, तथापि— 'लोकशास्त्रानुगो नेयो दण्डोऽनुद्वेजनः श्रिये'। इत्युक्तरीत्या प्रायश्चित्तादिना कथञ्चित् तद्दानं सम्भवति। अत एव च—'हिन्दुबाल्यविवाहनिरोध एक्ट'नामके विधाने हिन्दुपदपरिभाषाप्रसङ्गे आर्यसमाज-बौद्धादीनां पृथग् निर्देशं विधाय हिन्दुशब्दस्य पृथग् निर्देशः कृतः। तेनाप्येतत्सिद्ध्यति यद् हिन्दुशब्दस्य प्रयोगो वर्तमानसमयेऽपि व्यावहारिकाणां श्रुतिस्मृतिसदाचारप्रामाण्यवादिष्वेव मुख्यत्वेनाभिमतो वर्तते। हिन्दूनां ये सदाचाराः पूर्वमुक्ता राष्ट्रस्यैकतायै अपेक्षिताश्च, तेषां सदाचाराणां कर्तव्यता येषु समाजेषु वर्तते तादृशा बौद्धादिसमाजान्तर्गता अपि गोहन्तृभिन्ना हिन्दुशब्देन व्यवहर्तुं शक्या भवितुमर्हन्ति राष्ट्रीयैकतायाः संरक्षणसंवर्धनयोः कृते। गोहन्तृभिन्नत्वं

च राष्ट्रलक्षणे 'गोहिता भूरिसलिला' इत्युक्तत्वेन अत्यावश्यकम्। गोसंवर्धनेन ऐहिकं नैतिकं दृष्टमदृष्टञ्च सत्फलं विशेषतो विशदीकृतमस्त्यन्यत्र।

म्लेच्छादयस्तु हिन्दुपदवाच्यत्वाभावेऽपि भागवतधर्मदीक्षिता भवितुमर्हन्ति। एवञ्च देशान्तरनिवासिनामपि बहोः कालात् '......शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः' इत्याद्युक्तरीत्या येषां हिन्दुत्वसंस्कारलोपः समजंनि तेषामपि हिन्दुत्वेन स्वीयप्रसिद्धिर्यदि वर्तते, तदा तेऽप्युक्तसदाचारपरिपालनं कर्तुमधिकृता हिन्दव इति वक्तुं शक्यन्त एव। तेषां सदाचाराश्च हिन्दुत्वार्थमपेक्षिता ये पूर्वमुपपादितास्तेषु स्वधर्मपरिपालनात्मकस्य सदाचारस्य किं स्वरूपं भवितुमर्हतीति प्रश्ने तत्र वेदाविरोधिभागवतधर्मपरिग्रहस्तैः कर्तव्यः। तदनुसारेण च स्वधर्मपरिपालनं तैः कर्तुमुचितमिति प्रतिभाति। तस्य विशेषविवरणं तु परस्तादुपस्थापयितुं शक्यम्। सोऽयं हिन्दुधर्मः कीदृश इति अधोनिर्दिष्टपद्येन स्पष्टं भवति—

'मुहुर्मुहुः काममुखं निरीक्षन् भजन्नथार्थस्य विधेयभावम्।
मोक्षेण पृष्ठेऽनुगतः कथञ्चिद् धृतावलम्बः परमूर्ध्वगत्या'।। इति।

राजकीयैरपि 'अर्थस्य विधेयभावं भजन्' इत्युक्ते राजनैतिकानां धर्माणामनुष्ठानमवश्यकर्तव्यतया स्वीकरणीयमेवेति सिद्ध्यति।

यद्यपि यथोक्तानां सर्वेषां सदाचाराणां यथावत्परिपालनं न कर्तुं शक्यते, तथापि तेषां परिपालनं यावच्छक्ति अवश्यं कर्तव्यमिति येषां मतिस्तादृशाः, अथ च यावच्छक्ति तदाचरणे प्रयतमानास्तथाविधसमाजान्तर्गता हिन्दुपदव्यपदेशभाजो भवितुमर्हन्ति।

इदमत्र विचारणीयं यत् श्रुतिस्मृत्युपपादितानां धर्माणामनुष्ठानमवश्य-कर्तव्यतया यदि सर्वेषामुपरि प्रतिष्ठापितं भवति, तदा स्त्रीणामन्त्यजादीनाञ्च हिन्दुसमाजात् प्रच्यवनं भवेत्। ते च म्लेच्छधर्मं स्वीकरिष्यन्तीति केचन आक्षिपन्ति। तत्रेदमेवास्ति समाधानं यद् हिन्दुधर्मे पूर्वोक्तरीत्या भागवतधर्म-जैन-बौद्ध-सिक्खार्यसमाजादीनामप्यन्तर्भावस्य कृतत्वात् तत्सिद्धान्तस्वीकारेणापि तेषामभीष्टसिद्धिः सम्भाव्यते। अतस्तेषां म्लेच्छादिधर्मस्वीकरणं नोचितं भवेत्। येषां तु तादृशो हठवाद एव स्यात्, तेषां दुर्जनत्वेन समाजे स्थापनं सर्वथा हानिकरमेव सम्भाव्यते। यतो हि—समाजे शुचित्वं सर्वथा परिरक्षणीयमस्ति सुव्यवस्थायै। अत एव कौटिलीयार्थशास्त्रव्याख्यायां जयमङ्गलायाम्—

'आहारेष्वथ योनौ च बीजे कर्मणि चापि यः।
शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः।।' इत्युक्तम्।

।।इति वर्णाश्रमस्वराज्यसङ्घविद्वत्परिषत्कार्यकारिश्रीगीर्वाणवाग्वर्धिनीसभासभासदां मतम्।।

# हिन्दुधर्मस्वायोगस्य प्रश्नानामुत्तराणि

## पण्डितराजराजेश्वरशास्त्रिद्राविडः



[ स्वीयसाक्ष्यप्रसङ्गे श्रीगीर्वाणवाग्वर्धिनीसभासंरक्षकेण पद्मभूषणपण्डितराज-श्रीराजेश्वरशास्त्रिद्राविडेन समुपाहृतानि हिन्दुधर्मस्वायोगस्य प्रश्नानामुत्तराणि दिवङ्गतमहन्तगोस्वामिशिवनाथपुरीप्रभृतीनां साहाय्येन सम्पादित-'ब्राह्मणमहा-सम्मेलन'-नामकसंस्कृतमासिकपत्रप्रकाशितमठमन्दिरविषयकव्यवस्थासाहाय्येन भारतीयराजनीतिविचारेण च सम्पाद्य प्रकाशितानि तान्यविकलान्यत्र प्रस्तूयन्ते-सं.]

हिन्दुधर्मस्वायोगद्वारा उपस्थापितानां प्रश्नानां विचारणा हिन्दुधर्म-स्वरक्षणार्थिभिः श्रद्धालुभिरवश्यकर्तव्यतां गताऽस्ति।

अतः प्रस्तुतलेखे अस्माकं विचारा यथाप्रश्नक्रममुपस्थापयिष्यन्ते। ततः पूर्वं यादृशीं भूमिकामाश्रित्यायं विचारः कर्तव्यः सात्र उद्ध्रियते—

'आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विभ्रमे।।
दण्डनीतिर्यदा सम्यङ्नेतारमधितिष्ठति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते'।।

इति कामन्दकनीतिसारोक्तन्यायेन त्रय्या अपि विद्याया योगक्षेमरूपधर्मस्य रक्षा राजनीत्यायत्तैवेत्यवगम्यते। प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतेष्टसाधनताक-कर्मानुष्ठानरूपभारतीयराजनीतिर्मठमन्दिरादिद्वारा प्रवर्तमाना दृश्यते।

अतो मठमन्दिरादिसंस्थानां नीत्यनुसारि संरक्षणं नीतिशास्त्रदृष्ट्या विवेचनेनैव भवितुमर्हति, तत्रेषन्मात्रमपि व्यतिक्रमे कृते सति राष्ट्रस्य स्थितिलोप एव सुनिश्चितो भवति। इत्यतो राज्यस्थितिमूलत्वमेतेषां कया रीत्या वर्णितमिति

प्रथममुपदर्शयामः।

सुव्यक्तमेतत्, प्रत्यक्षेत्यादिपूर्वोक्तलक्षणा भारतीया राजनीतिश्चार्वाकस्यापि हृदयावर्जिका पदवाक्यप्रमाणपारावारपारीणस्य। अत एवोक्तम्—

'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति।।

एवं स्थिते विशेषज्ञभूयिष्ठेऽस्मिन् हिन्दुधर्मस्वायोगे हिन्दुधर्मसम्बन्धस्यावर्जनीयतया भारतीयराजनीतिरुपस्थाप्यमाना न तिरस्करणीयतामर्हति। तत्र भारतीयराजनीतिदृष्ट्या वेदान्तनयानुसारेण ईश्वरप्रसादकोपयोरेव धर्माधर्मरूपत्वे स्थिते तादृशधर्मोद्देश्यकविनियोगमात्रार्हं धनमेव हिन्दुधर्मस्वमिति व्यपदेष्टुं योग्यम्। यथा दर्शपूर्णमासयागे 'अग्नये जुष्टं निर्वपामी'त्यादिरीत्या निरुप्तं व्रीह्यादिद्रव्यम्। तस्य हि द्रव्यस्यावघातादिसंस्कारेण पुरोडाशनिर्वृत्या अग्निदेवतोद्देशेन द्रव्यत्यागरूपाग्नेययागे पर्यवसानं व्यवदानमात्रस्याग्नौ होमात्मकप्रक्षेपेण भवति। 'यजमानपञ्चमा इडां भक्षयन्तीति' भक्षणद्वारा ऋत्विग्बलाधानेन प्रतिपत्तिविशेषश्च सम्मानविशेषरूपः कण्ठधारितस्रजो निर्माल्यतां गताया अपि अवकरादिपर्युदासेन समुचितस्थाननिवेशादिव भवतीति मीमांसकसिद्धान्तो भारतीयराजनीत्यनुसारेण स्वीक्रियते। तदुक्तं नीतिसारे—

'शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा।
देवतावद्गुरुजनमात्मवच्च सुहृज्जनम्।।
प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः।
कुर्वीताभिमुखान् भूत्यै देवान् सुकृतकर्मणा'।।

अत्र टीका—'एवं पञ्चविधं प्रजासङ्ग्रहोपायं प्रदर्श्य इदानीं विषयभेदेनान्यदाह—शुचिरित्यादिना श्लोकत्रयेण। शुचिर्बाह्याभ्यन्तरशौचयोगात्। आस्तिक्यं भावितपरलोकता। पूजयेद्देवता अभिमुखीकरणार्थम्। तेषां या यस्य पूजा तामाह—प्रणिपातेनेत्यादिना। गुरून् पित्रादीन्। सतो विद्यावृद्धान्। अनूचानः प्रवचने साङ्गेऽधीती। सुकृतकर्मणा यागादिपुण्यकर्मणा गन्धपुष्पधूपोपहारादिना चेत्यादि।

अभिमुखीकरणार्थमित्यस्य प्रसादार्थमित्यर्थः स्पष्टः। यागादिपुण्यकर्मगन्धपुष्पाद्योः सुकृतपदेन सङ्ग्रहाद् आग्नेयादियागोदाहरणमस्मत्कृतं प्रस्तुते नासङ्गतम्।

टीकोक्तं प्रजासङ्ग्रहोपायत्वं तु कथमस्येति विवेचयामः।

तत्र 'मनोग्रहणं वै सङ्ग्रहण'मिति श्रुतेः, 'राजा प्रकृतिरञ्जनात्' इति न्यायेन प्रकृतिरञ्जनं राज्यस्थितावसाधारणं कारणम्। तच्चोक्तं नीतिसारे—

'स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोशो बलं सुहृत्।
एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम्'।।

अत्र राज्यस्थितिसाधनयोः सत्त्वबुद्ध्योर्मध्ये सत्त्वस्याभ्यर्हितत्वात् पूर्वनिपातः कृतः। तत्स्वरूपञ्च—

'परस्मादात्मनो भान्ति ज्ञानानन्दक्रियाप्रभाः।
ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते।।
क्रियाप्रभा रजः सत्त्वाच्छक्तिः स्यात्तु तमःप्रसूः'।।

इत्युक्तं साहित्यशास्त्रे। वक्ष्यमाणविषये बहूपयोगित्वादिदं सत्त्वस्वरूपं विशदीक्रियते।

'भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः।
दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः'।।

इति भागवत-(२।२।५)श्लोकानुसारेण परमात्मा तावत् प्रत्यक्षपरोक्षानुमानलक्षण-प्रमाणत्रयनिर्णीतोऽर्थ इति ज्ञायते।

'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया।
तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेत्'।।

ततः पूर्वतनपद्ये 'भगवान् ब्रह्मा कूटस्थो निर्विकार एकाग्रचित्तः सन्नित्यर्थः। त्रिः त्रीन् वारान्, कार्त्स्न्येन साकल्येन, ब्रह्म वेदमन्वीक्ष्य विचार्य, यत आत्मनि हरौ रतिर्भवेत् तदेव मनीषया अध्यवस्यत् निश्चितवानि'त्युक्त्वा 'नन्वनुभूतेऽर्थे रतिर्भवति। अननुभूते तु भगवति कथं रतिः स्यात्, तत्राह—भगवान् सर्वेषु भूतेषु लक्षितः दृष्टः। कथं स्वात्मना क्षेत्रज्ञान्तर्यामितया। कैर्दृश्यैर्बुद्ध्यादिभिः। तदेव द्वेधा दर्शयति। दृश्यानां जडानां दर्शनं स्वप्रकाशं द्रष्टारं विना न घटत इत्यनुपपत्तिमुखेन लक्षणैः स्वप्रकाशान्तर्यामिलक्षणैस्तथा बुद्ध्यादीनि कर्तृप्रयोज्यानि, करणत्वाद् वास्यादिवद् इति व्याप्तिमुखेन अनुमापकैरनुमितिजनकैः। स्वतन्त्रश्च कर्तेत्येवमीश्वर-सिद्धिः। इति श्रीधरस्वामिभिरुक्तपद्यं व्याख्यातम्।

आधुनिका अपि वैज्ञानिका जडचेतनविभागव्यवस्थायां—यद्वस्तु स्वस्थिति-परिवर्तने परापेक्षं तज्जडं, यत्तु तदर्थं स्वतन्त्रं तच्चेतनमिति प्राकृतिकनियमा-नामनुसारमेव वैज्ञानिकानां कार्यमिति च वदन्तः—

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च'।।

इति श्रुतिमेव प्रकारान्तरेणोपोद्वलयन्ति। अतः पूर्वोक्तपरमात्मस्वरूपे प्रत्यक्षादि-निर्णीतार्थस्वरूपत्वमुपपन्नम्। घटं जानातीत्यादौ भासमानज्ञानस्वरूपं हि स्वनिरूपिताज्ञानाविषयत्वप्रयोजकविशिष्ट-चिदभिन्नसाक्षिस्वरूपमिति निर्णीतं वेदान्तशास्त्रे।

'नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्—'

इत्यादिना श्रीदक्षिणामूर्तिस्तवे भगवत्पादसूक्त्या आबालवृद्धं प्रत्यभिज्ञायते च। तथा च प्रत्यभिज्ञाकारिका—

'बोधस्य चाप्यकर्तृत्वं कर्तृत्वस्याप्यबोधता।
द्विधाऽऽणवं मल'मित्यादिः।

'प्रागस्वाप्समिति प्रबोधवचसा यः प्रत्यभिज्ञायते' इति भगवत्पादसूक्तिश्चास्यां प्रत्यभिज्ञायां प्रमाणम्।

तस्यास्याधुनिकविज्ञानसम्मतस्य परमात्मनः 'तदध्यवस्यत् कूटस्थ' इति भागवतपद्ये निर्विकारात्मककूटस्थमात्रवेद्यत्वोपवर्णनात् तादृशनिर्विकारभारतीय-राजनीतिज्ञमात्रवेद्यत्वं भवति। विकृतसाम्यवादादिराजनीतिगम्यत्वं तु मास्तु। सर्वथा प्रमाणसिद्धोऽयमर्थो विशेषज्ञैर्नापलपितुं शक्यत इत्येव वक्तव्यम्।

सत्त्वरजस्तमोगुणेषु मध्ये सत्त्वगुणस्य यत्स्वरूपं साहित्यशास्त्रे उक्तम्— 'परस्मादात्मन' इत्यादि, तत्र परमात्मा भारतीयराजनीतिदृष्ट्या प्रमाणत्रयेणोपपन्नः आधुनिकराजनीतिदृष्ट्या अपीति सिद्धम्। अधुना तदीया ज्ञानानन्दक्रियाप्रभा विविच्यन्ते।

ईश्वरस्तावत् सर्वविषयकज्ञानेच्छाकृतिमान् इति परिपूर्णज्ञानेच्छाक्रिया-शक्तियोगात्स्वतन्त्रः।

'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
इति विद्यात्समासेन लक्षणं सुखदुःखयोः'।।

इति मनूक्त्यनुसारेण स्वातन्त्र्यस्य परिपूर्णज्ञानक्रियाशक्तिमयत्वात्तदीयेच्छाया निरन्तरं पूर्यमाणत्वेन आनन्दरूपता। तथा चेश्वरस्था ज्ञानेच्छाकृतय एव ज्ञानानन्द-

क्रियारूपाः क्रमेण भवन्ति। ईश्वरनिष्ठानाममीषां गुणानां प्रभाशब्देन उपादानं तु 'प्रभा हि तेजसो रूप'मिति सिद्धान्तानुसारेण—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः'।

इत्युक्तजाठराग्निरूपस्येश्वरस्य सर्वज्ञस्य रूपविशेषमभिलक्ष्य कृतम्। तथा च यस्मिन् जीवदेहे यादृश्या मात्रया ज्ञानानन्दक्रियाशक्तिप्राचुर्यं तादृश्या मात्रया तदीयं तेजस्वित्वं तत्र दृश्यत इति सर्वानुभवसिद्धम्। एवञ्च परमात्मसमवेतज्ञानप्रभैव भास्वररूपा प्रकाशत इति—

'नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते'।

इति भगवत्पादसूक्त्या,

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।।

इति गीतायां उपक्रमे तेजःशब्दे सत्येव पुनस्तेजःशब्दोपादानात् तादृशशुक्लभास्वररूपस्य ईश्वरदृष्ट्योपास्यत्वप्रतीतेश्च।

सूर्यचन्द्राग्नयश्चेमेऽध्यात्मं ज्ञानक्रियेच्छारूपा एव परमात्मसमवेताः शारीरविज्ञाने 'नान् वालेन्स'पेशीषु स्वतन्त्रज्ञानतन्तुषु क्रियातन्तुषु चाधुनिकशारीरविज्ञानेनानुमोद्यन्ते, अध्यात्मतन्त्रेषु उपवर्ण्यन्ते, 'थियोसोफी'-दर्शनकारैराधुनिकैः 'अरा'(Ura)पदेन व्यवह्रियन्ते, 'मेस्मेरिजम्' आदिप्रयोगेषु फ्रेञ्चन्यायालयादिषु स्वीकृताश्च। सामान्यतया 'अरा'पदवाच्यत्वेन स्वीकृतानाममीषां तु अवान्तरभेदो ज्ञानानन्दक्रियाप्रभारूपत्वेन साहित्यशास्त्रे विशदीक्रियते।

एवञ्च परमात्मप्रसादप्रभैव परमात्मगतानन्दप्रभा परमात्मगतज्ञानप्रभैव विज्ञानप्रभा। एवञ्च परमात्मेच्छामनुसृत्य क्रियायां क्रियमाणायां तदीयानन्दप्रभा अभिव्यज्यते। तन्मूलभूतज्ञानेषु जीवात्मसमवेतेष्वपि नित्यज्ञानावृत्तिविषयता-शून्यत्वरूपप्रामाण्याभिव्यक्तेरावश्यकत्वात् परमात्मसमवेतज्ञानप्रभाया अप्यभिव्यक्तिः स्थिता। तदुक्तं प्रत्यभिज्ञाकारिकायाम्—

'स्वाङ्गकल्पेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
मायातृतीये ते एव पशोः सत्त्वं रजस्तमः'।।इति।

अत्र पत्युर्ज्ञानं पत्युरानन्दश्च मिलितं सत् पतिव्रतायाः स्त्रिय आनन्दो ज्ञानं च भवति। सैव सतीत्युच्यते। तस्याः स्वभावः सत्त्वं प्रोक्तज्ञानानन्दप्रभयोर्मिश्रणमेव आनन्दांशे भग्नावरणसाक्षितादात्म्यापन्नस्थायिभावादिरूपरसरूपम्,

'शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां
ज्ञात्वेत्थं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः'।। इत्युक्तम्।

अत एव पूर्वोक्तनीतिसारवाक्ये टीकायां 'सत' इत्यस्य विद्यावृद्धानित्यर्थः कृतः। तत्र विद्यापदेन ईश्वरसमवेतज्ञानस्योक्तौ वृद्धपदेन तत्प्रसादरूपो धर्म एव विवक्षितः। अत एव 'विद्या धर्मेण शोभते' इत्युच्यते। एतादृशसत्त्वोत्कर्षे सति साहित्यशास्त्रप्रसिद्धश्चित्तसन्तोषरूपरसोऽपि सिद्ध्यति। अन्यथा तु रसाभास एव, यत्र सदोषत्वं नियतमिति सिद्धान्तः। अस्य सत्त्वस्य सर्वत्रोद्गमाय सन्ति बहवः प्रकाराः। तदुक्तम्—

'कामुकैश्च विदग्धैश्च श्रेष्ठिभिश्च विरागिभिः।
शूरैर्ज्ञानवयोवृद्धै रसभावविवेचकैः।।
बालमूर्खाबलाभिश्च सेव्यं तन्नाट्यमुच्यते।
तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते।।
अर्थेष्वर्थपराश्चैव मोक्षे त्वथ विरागिणः।
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च।।
धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः।
सत्त्वभावेषु सर्वेषु बुधास्तुष्यन्ति सर्वदा।।
बाला मूर्खाः स्त्रियश्चैव हास्यनेपथ्ययोः सदा'।। इति।

तथा च मठमन्दिरादयो हि बालमूर्खादिप्राकृतजनानां चित्रतुरगन्यायेन सत्त्वस्य साधारणीकरणव्यापारप्रधानाः संस्था भवन्ति। तद्द्वारा सत्त्वस्य प्रचारः स्त्रीबालप्राकृतादिजने राष्ट्रस्य भवतीति मत्वैव—

'शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा'।

इत्युक्तं नीतिसारे। शुचिरित्यनेन धर्मांशः, आस्तिक्यमित्यनेन ईश्वरसमवेतज्ञानांशश्चाभिव्यज्यत इति सूच्यते। तदभिव्यक्तिरूपमेव मनोग्रहणं सङ्ग्रहणं प्रजानामिति नीतिसारस्थो राजनीतिसिद्धान्तः।

मठमन्दिरादिहिन्दुधर्मस्वसंस्थासु आलोच्यमानासु राजनीतिसर्वस्वायमानस्यैतादृशसाधारणीकरणस्य विच्छेदे तासां चित्तसन्तोषविच्छेदो नियतः। तदुपेक्ष्य सिनेमादिभिः क्रियमाणोऽभिनयश्च रसाभासतां गच्छेदित्यतः,

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्'।

इत्यालोच्य अस्मिन् साधारणीकरणव्यापारे सर्वत्रौचित्यरक्षणार्थं यतनीयं विशेषज्ञैः। औचित्यञ्च 'येन कर्मणा प्रसन्नो गुरुराजदेवतादिरभीष्टफलदो भवति तादृशकर्मत्वम्' इति परिष्कृतं काव्यप्रकाशटीकायां यद्विशेषतोऽवधेयतामर्हति। आधुनिक-विश्वविद्यालयेषु गुरुप्रसादः तृणायमन्तव्यतां यदा गतः, ईश्वरप्रसादश्च, तदुत्तरमेव राजप्रसादोऽपि लुप्यमानतां गत इति पश्यामः। गुरुप्रसादे तु सति—'शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन' इतीश्वरप्रसादोऽपि नियतः। आधुनिक-विश्वविद्यालयीयच्छात्राणां गुरुप्रसादो राज्येन काम्यत इति ततः राजप्रसादोऽपि नियतः। इत्यालोच्यैव शुचिरास्तिक्येति नीतिसारोक्तं स्मार्यते।

सर्वस्याप्यस्य निष्कृष्टोऽर्थोऽयमेव यद् मठमन्दिरादिषु प्रवर्तमानं देवताराधनं तदनुकूलव्यापाराश्च प्रोक्तरीत्या राज्यस्थितिहेतुः राजनीतिज्ञानां तत्तत्संस्था-मूलभूतशास्त्रानुसारित्वेन आस्तिक्यशुचित्वयोः प्राधान्येनानुसरण एव भवतीति। इमां भूमिकामाश्रित्य प्रश्नानामुत्तराणि वक्ष्यन्ते। अत्र विषये बहवः क्लिष्टाः शास्त्रीयविषया आगताः। तेषां लेखे स्वल्पे स्फुटीकरणं न शक्यते। साक्ष्यप्रसङ्गेन साक्षात् संवादप्रसङ्ग आयाति चेत् तदा विस्तरेण वक्तुं शक्यते। इदानीं यथाक्रम-मुत्तराणि वक्ष्यामः—

(द्वितीयभागस्थप्रश्नानामुत्तराणि)

१. मठमन्दिरादिषु यावतां पदार्थानाम्—

सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम्।
रमन्तु सर्वभूतानि स्नानपानावगाहनैः॥

इत्यादिना मन्त्रेण जलाशयोत्सर्गपद्धत्यनुसारेण उत्सर्गः कृतः, तावत्सु सार्वजनिकं स्वत्वम्। तदतिरिक्तेषु तु या देवमूर्तिर्येन प्रतिष्ठापिता तत्र तस्य स्वत्वम्। तदनन्तर-मुत्तराधिकारक्रमेण स्वत्वम्। तच्च स्वत्वं शास्त्रानुसारेण प्राप्तानां देवस्य सर्वकार्यव्यवस्थानां सञ्चालने पर्याप्तम्। यत्र देवमूर्तौ उपेक्षिततया स्थितिस्तत्र उपादातुः स्वत्वं स्यात्। देवतोद्देशेन दत्ते तु देवतायाः स्वत्वम्। मठादीनामपि मठीयदेवतोद्देशेनोत्सृष्टे देवताया एव स्वामित्वम्। देवतास्वामिकद्रव्यद्वारा भृतिदाने तु अध्यक्षस्याधिकारः, अप्राप्तव्यवहारबालकद्रव्ये पालकस्येव तत्प्रतिनिधि-भूतत्वात्। आचार्यादिमुद्दिश्य दत्ते तु अध्यक्षस्याचार्यादेः स्वामित्वमिति।

२. मन्दिराध्यक्षः त्रिविधः—(१) भृत्यर्थं पूजकः, (२) वृत्त्यर्थं पूजकः, (३) आत्मार्थपूजकश्चेति। तत्र भृत्यर्थपूजकाय यावद् भरणायोचितं द्रव्यं तावद् देयम्। प्रदातृत्वं पूर्वोक्तरीत्या स्वामिन एव। वृत्त्यर्थं पूजकस्य तु उच्यते—

'देवस्वं देवताद्रव्यं नैवेद्यञ्च निवेदितम्।
चण्डद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं स्मृतम्'।।

इति षड्विधनिर्माल्येषु निवेदिते सर्वस्मिन् तस्य पूर्णं स्वत्वम्।

'देवस्वं देवताद्रव्यं नैवेद्यञ्च निवेदितम्।
चण्डद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं स्मृतम्'।।
देवस्वं ग्रामभूम्यादि-दासीदासचतुष्टयम्।
हेमरूप्यकरत्नादि देवद्रव्यमिति स्मृतम्।।
सङ्कल्पितं यद्देवाय पत्रं पुष्पं फलं जलम्।
अन्नपानादि तत्सर्वं नैवेद्यमिति कीर्त्यते।।
एतत्त्रिविधनिर्माल्यमनर्हमिति कथ्यते।
शिवद्रव्यापहारेण नरकं यात्यसौ जनः।।
शिवोपभुक्तस्रग्गन्धमन्नपानादिकं तथा।
निवेदितमिति प्रोक्तं सर्वपापहरं परम्।।
स्थापितं विधिना लिङ्गं सर्वैर्देवासुरैर्नरैः।
एतद्द्विविधनिर्माल्ये चण्डेशोऽधिकृतः शिवे।।
बहिःक्षिप्तमनर्हं स्यादन्यद्रव्यत्वकारणात्।
पिशाचानाञ्च सर्वेषामधिकारोऽत्र सर्वदा।।

इत्यादिषु चतुर्थं निवेदितमुच्यते। एवं—

'देवे दत्वा च दानानि देवे दत्वा च दक्षिणाम्।
तत्सर्वं ब्राह्मणे दद्यात्............'।।

इत्यादिनिवेदितविषयमेव। तत्रापि तस्यैव वृत्त्यर्थपूजाकर्त्तुः पूर्णस्वत्वम्। आत्मार्थपूजकस्य तु न पोषणस्वामित्वापेक्षा।

३. (अ) राजवद् मठाध्यक्षस्तस्य धनस्य विनियोजकः स्वामी। स शास्त्रानुमते कार्ये मठमन्दिरोद्देश्यानुकूले अधिकारी सङ्ग्रहे विनियोगे च। यथोक्तं नीतिसारे—

'धर्महेतोस्तथार्थाय भृत्यानां भरणाय च।
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा'।।इति।

स न्यायोऽत्रापि समानः। तद्द्वारा कार्यविशेषारम्भविस्तारौ भवितुमर्हतः।

(ब) आचार्यः समयी साधकः शिष्य इत्यादिव्यपदेश्या मठमन्दिराधिकृताः। तेषां सम्प्रदायानुसारिप्रशिक्षणादिकृते व्ययः कर्तुमुचित एव स्वाम्यनुमत्या।

४. यस्मिन् संस्थाने येषामाचार्यार्चकादीनां परम्परानुसारेण यानि कर्तव्यानि प्राप्तानि तदर्थमागमादितत्तच्छास्त्रोक्तं ज्ञानं तस्य तस्य आवश्यकमेव।

'शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा' इति वचनात् शुचित्वमास्तिक्यं च सर्वेषु कर्मकर्तृषु प्रयोजकम्। यत्र पितृपरम्पराप्राप्तं मठमन्दिराध्यक्षत्वं तत्रापि पातित्यप्रयोजककर्म यावत्पर्यन्तं न करोति तावत्पर्यन्तं ज्ञानाभावेऽपि मन्त्र्यायत्तसिद्धिकस्य राज्ञ इव तेनैव निर्वाहः कार्यः। तथापि गुणसंवर्धनार्थं तत्रापि तेन यत्नः कर्तव्य एव उत्तराधिकारी यथा योग्यतरः स्यात्, तथा प्रयतनीयम्।

५. स्वयम् अथवा स्वनियुक्तद्वारा यथायथं कुर्वन्त्येव।

यदि केचिन्न कुर्वन्ति कर्तव्यं तैः। तेषामेव कर्तव्यस्य फलमद्यापि कुम्भपर्वादिषु दृश्यत एव। समाजे सर्वसाधारणः प्रचारस्तैरेव क्रियमाणः अद्य वर्तते।

यदि कश्चन दोषः स्याद् अकर्मण्यता वा तथापि न त उच्छेद्याः। यथाशक्ति शोधनाय प्रयतनीयम्। न ह्याधुनिकविश्वविद्यालयादिष्वपि सर्वथा निर्दोषत्वं दृश्यते। तथापि तेषामुच्छेदस्तु नानुमन्यते। शोधनायैव यत्यते तद्वत्।

६. बहुषु मठेषु उत्तराधिकारिणां योग्यशिक्षकत्वसम्पादनार्थं प्रयत्नः क्रियत एव। येषु तथा न क्रियते तत्रापि तादृशव्यवस्थाकरणमध्यक्षाणां कर्तव्यमस्ति।

७. मठमन्दिराणां स्थापनोद्देश्यं तु प्रजासु भूमिकोक्तस्य परमात्मसमवेत-ज्ञानानन्दसम्मिश्रणात्मकस्य सत्त्वस्य प्रचार एव। तदर्थं बहुभिर्मठैर्यथायथं यत्नः क्रियत एव। अधुना हिन्दुप्रजासु स्त्रीबालप्राकृतादिषु यावद्विद्यमानं शुचित्वा-स्तिक्यादि-सत्त्वकार्यं तत्कृतमेव। 'सिनेमा' आधुनिकविश्वविद्यालयादिकैस्तु राज्यसंस्थाश्रयैः शुचित्वास्तिक्ययोरुन्मूलनमेव क्रियत इति तेषां प्रचारः फलतो मन्दीक्रियते।

८. यत्र तत्र सन्ति, ततस्तत एवावगन्तव्यानि।

९. एतदुत्तरं मठमन्दिराधिकारिद्वारा प्राप्तमेव स्यात्।

१०. एतस्यापि पूर्ववदेवोत्तरम्।

११. एतस्यापि पूर्ववदेवोत्तरम्।

१२. एतस्यापि पूर्ववदेवोत्तरम्।

१३. एतस्यापि पूर्ववदेवोत्तरम्। रामानन्दमठः, बिन्दुमाधवघट्टे, वाराणसी, तारकमठः, दुर्गाघट्टे, वाराणसी, आदि ज्ञातमस्ति।

१४. येन कर्मणा प्रसन्नो गुरुराजदेवतादिरभीष्टफलदो भवति तदेवोचितमित्युच्यत इति साहित्यशास्त्रसिद्धान्तः। वर्तमानसमये औचित्यानुकूलधर्मप्रचारकसङ्घटनं कथं सम्भवतीति आलोचनीयमेव। अस्मिन् समये क्रियमाणानि सङ्घटनानि अनर्थकराण्येव दृश्यन्ते। सति सम्भवे मठाध्यक्षाणामनुकूलतां सम्पाद्य परम्परोचितधर्मप्रचारकसङ्घटने व्ययः कर्तुमुचितः। प्रजासु सत्त्वप्रचारस्य मठमन्दिरोद्देश्यत्वात्।

१५. मठमन्दिराध्यक्षेषु केवलं राजकीयहस्तक्षेपं पुरस्कृत्य क्रियमाणा कापि व्यवस्था नोद्देश्यसिद्धये पर्याप्ता भवितुमर्हति। वस्तुगत्या अधिकारिषु सत्त्वगुणोत्कर्ष एव लक्ष्यसिद्धये प्रधानकारणम्। सत्त्वगुणोत्कर्षे सति खलु जगद्विषये आत्मीयत्वाभिमानः स्वयमेव सम्भवति, तेन च प्रधानमुद्देश्यं लोकेषु सत्त्वगुणप्रचारणम्।

'स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनस्त्यक्तविषादाः सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्त्वसाराः, ते एषां स्वलक्षणैरेव गुणा व्याख्याताः। इति (चरके विमानस्थाने ८ अध्याये ११२ सूत्रे)।

चरकोक्तरीत्या एवंविधजननिर्माणञ्च सुकरं भवितुमर्हति। अधिकारिणां पातित्यादिदोषे तु उत्तराधिकारक्रमेण योग्यानयनाय अवसरो भवत्येव।

'आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्।
पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम्'।। इति।

स्थितौ च सति ते स्वामिनः स्वकर्मणो निवर्तेरन्। शासनद्वारेण बलात्कारे सति बलात्कारानुष्ठितसन्ध्यावन्दनादिवत् तत्र तन्मूलस्य सत्त्वस्य लोप एव प्रसक्तो भवति। यथा केनचन राजशासनेन यदि सन्ध्यावन्दनं बलात्कार्यते तर्हि कश्चित् शासनविहितसमये बहिर्देशाद्यवस्थास्वपि विद्यमानोऽनर्थावहं सन्ध्यावन्दनानुष्ठानाभिनयं शासनभयात्कुर्यात् तथा एतेषां प्रचारणं न सत्त्वप्रचाराय भवेत्।

१६. येषां भूम्यादीनां दानविक्रयाद्युपयोगि स्वत्वमध्यक्षस्य नास्ति तेषां दानविक्रयादिस्तेन कृतस्तदर्थं नैव नवीननियमनिर्माणापेक्षा। विद्यमाननियमैरेव प्रत्यावर्तनसम्भवात्। यत्र तु अधिकारो वर्तते, योग्यकारणेन दानविक्रयादिः कृतः, तत्रापि न परावर्तनमुचितमिति नैव नवीननियमापेक्षा।

१७. अन्विष्य ज्ञातव्यम्।

१८. क्रियतां न विरोधः।

१९. येषां मठमन्दिरादीनां यादृशी आचार्यसमयिसाधकपुत्रकेत्यादि-पदाधिकारिभेदेन उत्तराधिकारिनियमनव्यवस्था परम्परया प्रचलति तदनुसरणमेव युक्तम्। तस्या एव शैथिल्ये दृढीकरणमेव कार्यम्।

२०. महती हानिः, मठादिद्वारा क्रियमाणानां कार्याणां बहुधा लोपश्च प्रसक्त इति। 'कुकुरमुण्डा'-'वाशिम' प्रभृतिस्थानेषु इदं दृष्टम्।

२१. अत्रापि पूर्वमेव उत्तरम्।

२२. यथायोग्यं पर्याप्तं प्रतिफलं देयम्। गृहीतधर्मस्वेन यावान् आयः प्रतिवर्षं भवति स्म तावान् आयो यावता द्रव्येण भवेत् तावद् द्रव्यं प्रतिफलरूपेण दातुमुचितम्।

२३. अध्यक्षाणां यादृशी योग्यता अपेक्षिता सा इदानीं अविकला दुर्लभा दृश्यते। तत्रैकं कारणं कलिमाहात्म्यमपरञ्च पाश्चात्त्यराजनीतेरर्थकाममात्रप्रधानायाः प्रचारश्च। अतो भारतीयराजनीतेः प्रचारणमधिकयोग्यताविषये प्रोत्साहनं यथा स्यात् तथा प्रयत्नं चावश्यकम्। 'शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा' इत्युक्तदिशा शौचस्य आस्तिक्यस्य च आवश्यकता वर्तते। वर्तमानकालमाहात्म्याद् राजकीयशासनाच्च तथा शौचानुष्ठानं दुष्करं सम्पन्नमस्ति। तथापि—

'युगे युगे च ये विप्रास्तत्र तत्र च ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा हि ते स्मृताः'।।

इति पराशरोक्तेर्यथासम्भवं मन्तव्यम्।

२४. यावत्पर्यन्तं सत्त्वप्रचारः अर्थादिशौचमास्तिक्यञ्च प्रजासु अपेक्षितम्, इति भारतीयराजनैतिकः सिद्धान्तः सुस्थिरः, तावत्पर्यन्तमेतासां संस्थानां मूल्यमस्त्येव, सत्त्वगुणसंवर्धनाय। वैज्ञानिकमेव सत्त्वप्रचारकस्यावश्यकत्वमिति भूमिकायां स्पष्टमेव।

२५. मठमन्दिराध्यक्षाणां भारतीयराजनीतिसम्बन्धो बहुभिर्दिनैरुच्छिन्नः, अत इयं स्थितिः। तस्मात्पुनः भारतीयराजनीतिसम्बन्धं संस्थाप्य तेषां पूर्वादर्शे यथा सुस्थितिः स्यात् तथा कार्यम्।

२६. भूमिकायामारम्भे स्पष्टीकृतानि।

२७. यत्र यादृश उत्तराधिकारक्रमः परम्परया प्रचलति तत्रागमाद्युक्त-दीक्षादीक्षिता यथाक्रममुत्तराधिकारिण इत्येव युक्तम्।

२८. ज्ञातव्यम्।

२९. भिन्नभिन्नमन्दिरमठादिषु अर्चावताररूपेण स्थितानां विभिन्नानां देवतानां सम्मिलितं स्वत्वं न सम्भवति। यथा भिन्नभिन्नकर्माङ्गदेवतानां हविषामेकत्र सम्मिश्रणं शास्त्रतो नानुमोद्यत इति।



# भारतभूगोहितत्वविमर्शः

## पण्डितराजराजेश्वरशास्त्रिद्राविडः



नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।।

युगान्तरे गोवधः शास्त्रेषु विहित इत्यमुं विषयमुपश्रुत्य गोमांसभक्षका अस्मिन्नपि युगे तद्दृष्टान्तेन गोहत्यां धर्म्यत्वेन प्रतिपिपादयिषन्ति। इदमुदाहरणोद्भावनं तेषां शास्त्रैकशरणेषु हिन्दुषु कलिवर्ज्यप्रकरणे पठ्यमानस्यास्य कर्मणः सम्प्रति कथमपि धर्म्यत्वासम्भवाद् यद्यपि सर्वथा अनुचितम्, तथापि युगान्तरे धर्म्यतया अनुष्ठितस्य कर्मणोऽपि विदग्धव्यवहाररूपत्वेन आदर्शतायाः स्वीकरणीयत्वे सति म्लेच्छव्यवहारस्यापि तादृशाचारमूलकत्वेन देशविशेषकुल-विशेषादिगताचाराणां प्रदेशविशेषेषु क्रियमाणासवर्णाविवाहाद्याचाराणामिव कलिवर्ज्येषु पठितानामपि इदानीं प्रवृत्तानां तत्तद्देशविशेषजातिविशेषाद्यवच्छेदेन साधुत्वव्यवस्थापकत्वं प्रसज्यते। तेन च सामाजिकव्यवहारेषु गोविषये हिन्दूनां भावना अन्यथाकृता भवितुमर्हतीति हिन्दुसमाजस्थितिपरिरक्षणकामैरस्य विषयस्य यथावद्विमर्शश्चिकीर्ष्यते।

सुमेधसामत्र यथोचितसमाधानमपश्यतां गोमेधवाक्येषु गोशब्देनौषधि-विशेषस्यैव ग्रहणादिना गोवधवाक्यानि न सन्तीत्येव समाधानञ्च गोरक्षणार्थ-मनृतस्यापि वाच्यत्वेन धर्म्यतायाः शास्त्रसिद्धत्वेन यद्यपि स्तुत्यमेव, तथापि समाजस्थितिरक्षणाय अत्रत्यसूक्ष्मतमतत्त्वप्रकाशनमप्यावश्यकमेवेत्याकलय्य किञ्चि-द्विमृश्यते।

तत्र 'तद्यदेवादो मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते', 'मैत्रावरुणीं गां वशामनूबन्ध्यामालभेत' इत्यादिवैदिकवचनान्युपाश्रित्य युगान्तरे गोवधस्य धर्म्यत्वं परे प्रतिपादयन्ति। तदनुकूलान्येव स्मृत्यादि-

वचनान्युपन्यस्यन्ति च। 'मधुपर्के पशोर्वधः', 'अक्षता गोपशुश्चैव' इत्यादिकलिवर्ज्य-प्रकरणस्थस्मृतिवचनैस्तेषामिदानीमधर्म्यत्वेऽपि युगान्तरे धर्म्यत्वं दुरपह्नवमित्यत्र नैव कस्यापि विप्रतिपत्तिरित्यपि साधयन्ति च।

तत्र ब्रूमः—युगान्तरेऽपि म्लेच्छप्रवर्त्यमानगोहिंसनस्यादर्शता वैदिकाचारे सर्वथा नास्त्येव। तथा हि मधुपर्काचारमेवादौ तावद्विमृशामः। तत्र 'यदेवादो मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते' इति शतपथश्रुतिः, तन्मूलिका 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति स्मृतिश्च प्रमाणमिति परेषां प्रतिपिपादयिषितम्, तदयुक्तम्। 'मा गामनागामदितिं वधिष्ट' इति प्रत्यक्षनिषेधविधिप्रभवया 'गां न हन्या'दिति स्मृत्या 'तद्यदेवादो मनुष्यराज आगते' इत्यर्थवादप्रभवाया 'महोक्षं वा महाजं वा' इत्यादिस्मृतेर्बाधस्यैव मीमांसक-सिद्धत्वात्। तदुक्तं मीमांसाबालप्रकाशे—

'तथा विधिप्रभवया स्मृत्या अर्थवादप्रभवा सा बाध्यते। यथा 'मा गामनागामदितिं वधिष्टे'ति विधिप्रभवया 'तद्यदेवादो मनुष्यराज आगते अन्यस्मिन् वार्हत्युक्षाणं वा वेहतं वा क्षदन्त' इत्यर्थवादप्रभवा 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति'।

यत्तु मीमांसकैर्मन्त्राविधायकत्वाधिकरणे मन्त्राणामविधायकत्वस्य निर्णीतत्वाद् उक्तमन्त्रान्तर्गतस्य 'मा गामि'त्यादिभागस्यापि विधित्वमयुक्तमिति, तन्न, प्राप्तार्थक-मन्त्राणामविधायकत्व एव मीमांसकानां तात्पर्यात्। उक्तमन्त्रभागस्य चाप्राप्तार्थकत्वेन विधित्वस्यैव स्वीकार्यत्वात्। तदुक्तं भाट्टदीपिकाव्याख्यायां प्रभावल्याम्—

'मन्त्रपदं यच्छब्दादिसमभिव्याहृताख्यातमात्रोपलक्षणम्, न तु मन्त्रत्वमविधायकत्वे तन्त्रमित्येतदर्थम्, 'वसन्ताय कपिञ्जलानि'त्यादौ मन्त्रत्वेऽपि विधायकत्वांत्'। इति।

भास्कररायदीक्षितकृतभाट्टचन्द्रोदये तथा भाट्टचिन्तामणावपि—

'ब्राह्मणत्वमन्त्रत्वे न विधायकत्वतदभावव्याप्ये', 'जर्तिलयवाग्वा जुहुयात्', 'कपिञ्जलानालभेत' इत्यादौ व्यभिचारात्' इति।

यत्तूच्यते 'मा गामनागामदितिं वधिष्टेति' निषेधविधेस्तन्मूलिकायाः 'गां न हन्या'दिति स्मृतेश्च रागप्राप्तगोवधविषयत्वेनाप्युपपत्तौ विहितमधुपर्कीयगोवध-विषयत्वं न युक्तम्, 'विधिस्पृष्टे निषेधानवकाशादिति।

तत्र। उक्तमन्त्रस्य पितृमेधारण्यकपाठानुसारेण आपस्तम्बादिभिर्गोरुत्सर्गपक्ष एव विनियोगस्य प्रदर्शितत्वेन उक्तनिषेधविधेः प्राकरणिकतया क्रत्वर्थगोहननाभावविधायकत्वेन पूर्वोक्तार्थपरताया दुरपह्नवत्वात्।

'माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः।
प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट'।।

इति मन्त्रो हि ऋक्संहितायां यथा अनारभ्याधीतः पठ्यते, तथा स एव मन्त्रः सामवेदादिमन्त्रप्रश्नेषु मधुपर्कप्रकरणेऽपि 'ॐ उत्सृजत' इति विधिसन्निधौ पठ्यते। तथा च 'नानृतं वदेत्' इति निषेधस्य अनारभ्याधीतस्येव क्रतुप्राकरणिकस्याप्युपलब्धेः संयोगपृथक्त्वन्यायेन क्रत्वर्थपुरुषार्थोभयरूपतावत् 'मा गामनागामदितिं वधिष्ट' इति निषेधस्यापि उभयविधत्वं केन वार्यताम्?

यस्तु मधुपर्के गोरनुत्सर्गपक्षः, तत्र च 'कुरुत' इति प्रैषवाक्यं विधाय 'माता रुद्राणा'मित्यादि 'मा गामनागामदितिं वधिष्ट' इत्यन्तमन्त्रस्य विनियोगश्च पारस्करेणोक्तः, तन्मन्त्रार्थश्च 'चेतनावते पुंमात्राय मां तोष्टुं यूयमिमां गां मा घ्नत, किन्तु गोपशुं कर्तुं घ्नत' इत्येवंरूपस्तद्भाष्यकारादिभिः कृतः, सोऽपि निषेधवाक्ये 'किन्तु गोपशुं कर्तुं घ्नत' इत्यध्याहारादिसापेक्ष एव, न तु निषेधवाक्याक्षरस्वारस्यायात इति प्रत्यक्षनिषेधवाक्याक्षरमूलिकाभिः आपस्तम्बस्मृत्यादिभिर्बाध्यत एव। विधिप्रभवया स्मृत्या अर्थवादप्रभवायाः स्मृतेर्बाधस्यैव मीमांसान्यायसिद्धताया आवेदितत्वात्।

किञ्च 'प्रनु वोचं चिकितुषे जनाय' इत्युक्तमन्त्रतृतीयपादे 'चिकितुषे जिज्ञासमानाय जनाय प्रावोचम्' इत्युपदिशन् वेदपुरुषः 'मा गामनागामदितिं वधिष्टे'ति विधेः पठ्यमानत्वं वदन् द्विविधमपि पाठं क्रत्वर्थपुरुषार्थोभयरूपेण द्विविधविधिपरं स्वमुखेनैव प्रतिपादयतीति नात्र विषये शङ्काकलङ्कावकाशः।

अत एव 'अघ्न्या न हन्तव्याः' इति निरुक्तस्मृत्युपष्टब्धम् अघ्न्येति गवां समाख्यानमपि अजादिव्यावृत्तं क्रत्वर्थतादृशनिषेधविषयत्वादेव साधु सङ्गच्छते।

'अघ्न्या इति गवां नाम क एतान् हन्तुमर्हति।
महच्चकाराकुशलं वृषं गां वाऽऽलभेत्तु यः'।।

इति महाभारतवाक्यमप्युक्तमेवार्थमुपोद्बलयति 'अघ्न्या'पदस्य पाणिनीयैः कृतं व्युत्पत्त्यन्तरं नोक्तमहाभारतनिरुक्तप्रणीतार्थविरोधकम्, वेदवाक्यस्थतत्पदस्योक्तोपबृंहणद्वयदर्शनेन पूर्वोक्तार्थपरताया अप्यावश्यकत्वेन निराकर्तुमशक्यत्वात्।

यद्यपि 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेन पारस्करादिस्मृतेः सर्वथा बाधोऽनुचित एव तथापि 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरुद्धाया 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतेः स्पर्शयोग्यदेशं परित्यज्य अन्यत्र सर्वत्र वासोवेष्टनविषयत्वरूपस्य सङ्कोचरूपबाधस्येव गोपशुप्रकरणे वक्ष्यमाणसमाधानानुसारेण अस्थिगतप्राणरक्षणपुरस्सरं भक्षणोपयुक्त-दुग्धवत्परिणममानतदवयवविश्लेषणपरतया सङ्कोचरूपे बाधे अभ्युपगम्यमाने सर्वथा आनर्थक्याभावात् पारस्करस्मृत्युपष्टम्भो म्लेच्छकृतगोप्राणवियोजने पुनरुज्जीवनरहिते आदर्शतां व्यवस्थापयितुमयोग्य एव। अत एव आपस्तम्बमन्त्रप्रश्ने सामवेद-मन्त्रप्रश्ने च मधुपर्कप्रकरणे पठ्यमानस्यास्य मन्त्रस्य गुणविष्णुभाष्ये 'गां मा प्राणैर्वियोजयत' इत्यर्थः स्पष्टीकृतः। तथा हि तद्भाष्यम्—

'येयम् अर्हणार्थमालम्भार्थमर्हणीया गौरानीता सेयं रुद्राणां माता, वसूनां दुहिता, आदित्यानां स्वसा-भगिनी, अमृतस्य-दधिदुग्धादेः नाभिः कारणम्। अत एव एतां गाम् अनागाम्-अनपराधाम्, अदितिम्-अदीनां हे यजमानपरिचारकाः! यूयं मा वधिष्ट-मा प्राणैर्वियोजयत। अहमेवं 'नु' भोः! जनाय—अस्मै यजमानाय प्रवोचम्—प्रोक्तवानस्मि, गोवधं मा कुरु त्वमिति। किम्भूताय? चिकितुषे—ध्यानसम्पन्नाय' इति।

तत्सिद्धं मधुपर्के पशुवधस्मृतिर्नात्र विषये प्रमाणमिति।

अधुना वेदस्थान् 'मैत्रावरुणीं गां वशामनूबन्ध्यामालभेत' इत्यादीन् गोपशुद्रव्यकयागविधीनुदाहृत्य विमृश्यते।

यद्यपि प्रोक्तवाक्येषु 'आलभेत' इति विधिभिः आङ्पूर्वकलभधात्वर्थस्यैव विधानमवगम्यते। स च 'ईषामालभेत' इत्यादौ स्पर्श एव तद्धातुवाच्यः। तन्मात्रस्य प्रकृतवाक्येऽपि विधानाभ्युपगमे वधस्य विधेयत्वप्रसक्तिरेव नोत्पद्यते। तथापि सूक्ष्मेक्षिकया पर्यालोचने क्रियमाणे अत्र यागस्यैव विधेयत्वमायाति, स च लक्षणया तद्धात्वर्थ इत्यवश्यमङ्गीकर्तव्यम्। तथा हि—प्रोक्तवाक्ये मैत्रावरुणीमिति देवतातद्धितनिष्पादिते पदे मित्रावरुणौ देवता अस्या इत्यस्मिन्नर्थे 'सास्य देवता' इति पाणिनिस्मृत्यनुसारेण देवतातद्धितस्य श्रवणात् प्रकृतभावनान्वितस्य मित्रावरुणनिष्ठदेवतात्वस्य त्यज्यमानहविर्भागित्वरूपस्य मित्रावरुणदेवतोद्देश्यक-गोरूपद्रव्यत्यागं विना अनुपपन्नत्वेन यागस्य प्रकृतवाक्यविधीयमानभावनासम्बन्धः अर्थापत्त्यैव सामान्यतः सिद्ध्यति। स च तादृशयागस्य प्रकृतभावनाकरणत्वेन विधानेन प्रकृतभावनासम्बन्धीतिकर्तव्यताभावनान्तरकरणत्वेन वा सम्पादनीय इति

संशयो यद्यप्यत्र सम्भवति तथापि पूर्वोक्तवाक्यानामुत्पत्तिवाक्यत्वेन अधिकार-विध्युत्तरकालिक्या इतिकर्तव्याकाङ्क्षाया आदावभावेनात्रैवेतिकर्तव्यताविधानस्य वक्तुमशक्यत्वात् 'सोमेन यजेत' इत्यादाविव यागांशेऽपि विशिष्टविधित्वाभ्युपगमे गौरवाच्च यागाक्षिप्तस्पर्शानुवादेन याग एवात्र आलभतिना लक्षणया विधीयत इति सिद्धान्तस्थितिः। अत एव यत्र न देवताश्रवणं 'वत्समालभेत' इत्यादौ, तत्र वाच्यार्थः स्पर्श एव विधीयते, न याग इति सिद्धान्तितं 'विशये प्रायदर्शनात्' इत्यधिकरणे मीमांसकैः।

एवञ्च 'अग्नीषोमीयं पशुमालभेत', 'वायव्यं श्वेतमालभेत' इत्यादि-वाक्येष्वपि आलभतिलक्ष्यार्थो याग एव विधीयते देवतासंयोगानुमितः, वाच्यार्थः स्पर्शस्तु केवलमनूद्यत इत्येव च सिद्धान्तस्थितिः।

यत्तु अमरकोशादिषु वधस्यापि आलम्भनपदार्थत्वेन वर्णनाद् वधविशिष्टयाग एवात्र लक्ष्यो विधेयश्चेति परैरुच्यते, तन्न युक्तम्, स्पर्शस्य वधस्य च द्वयोरपि आलम्भनपदवाच्यत्वाविशेषे वधविशिष्टयाग एवात्र लक्ष्यः अजहत्स्वार्थ-लक्षणानिर्वाहाय, न स्पर्शविशिष्टयाग इति कथनस्य रागमात्रप्रसूतत्वेन 'मा हिंस्यात्' इति निषेधविषयताया एव हिंसाप्रयोजकस्य तत्पक्षस्य युक्तत्वात्।

अत एव 'कपिञ्जलानालभेत' इति विधौ त्रित्वचतुष्ट्वादिसङ्ख्यानां सर्वासामपि बहुवचनवाच्यत्वाविशेषेऽपि चतुष्ट्वादिपरत्वेन व्यवस्थापनं पापप्रयोजकमिति व्यवस्थापितं मीमांसकैः।

किञ्च वधविशिष्टयागविधानाभ्युपगमेऽपि न परेषामभिमतसिद्धिः सम्भवति। तथा हि—विशिष्टस्य यागस्यात्र विधानाभ्युपगमे हि प्रवर्तनाविषयत्वेन हेतुना स्वर्गादिरूपेष्टसाधनत्वं याग एवानुमातुं युज्यते, न तु विशेषणे वधे तस्यापि यागसमफलत्वेन समप्राधान्यापत्तेः। तथा च विशेषणस्यापि प्रवर्तनाविषयत्वे स्वीकृते तत्र स्वर्गसाधनताव्यभिचारतायास्तादृशप्रवर्तनाविषयताया यागांशे इष्टसाधनत्वानुमापकत्वमप्युपजीव्यभूतं व्याहन्येतेत्यहो पाण्डित्यम्। अत एव हि 'दध्नेन्द्रियकामस्य जुहुया'दित्यादौ गुणफलविधौ सर्वथा सिद्धस्वभावस्य दध्यादेः इन्द्रियादिफलसाधनत्वे विधिनोच्यमाने 'वात्यया समुद्रे कल्लोलकाः समुद्गच्छन्ति' इत्यादाविव साध्यसाधनभावमात्रबोधकत्वेऽपि कर्तव्यत्वाप्रतीतेर्विधिवैयर्थ्यापत्त्या यत्किञ्चित्क्रियाविशिष्टतयैव दध्नो विधेयत्वे अभ्युपगन्तव्ये सति प्रकरणप्राप्तहोमविशिष्टतया फलोद्देशेन तद्विधाने स्वीकृतेऽपि दधिविशेषणस्य होमस्य आर्थभावनानिष्ठप्रवर्तनानिरूपितमुख्यविशेष्यतानिरूपितदधिनिष्ठोपादेयत्व-

विषयतावच्छेदकत्वरूपं होमस्याश्रयत्वमेव केवलं न तूपादेयत्वेन विधिविषयताख्यं विधेयत्वमपि। न हि 'सोमेन यजेत' इत्यादिविशिष्टविधिषु विधीयमानस्य यागस्य 'नासाधित'मिति न्यायेन करणत्वाक्षिप्तसाध्यत्वपर्यवसानाय करणाकाङ्क्षायां सोमेन यागं कुर्यादिति पार्ष्ठिकविशेषणविधिकल्पनावत् सिद्धस्वभावस्य दध्नो होमरूपकरणाकाङ्क्षा समस्ति येन होमेन दधि भावयेदित्यर्थकं विध्यन्तरं कल्प्येत? प्रकृते च वधविशिष्टयागे विधौ अभ्युपगम्यमाने हि 'नासाधित'मिति न्यायेन यागस्य करणत्वाक्षिप्तसाध्यत्वपर्यवसानवेलायां करणाकाङ्क्षया 'वधेन यागम्' इति विशेषणविधौ कल्प्यमाने प्रकृतभावनेतिकर्तव्यताकाङ्क्षायास्तेनैव प्राकरणिकेन वाक्येन पूरणाद् गृहमेधीयन्यायेन 'पशुं सञ्ज्ञपयती'ति वाक्यान्तरादतिदेशेन प्राप्तविधायकस्यास्य इतराङ्गपरिसंख्यायकत्वं केन वार्यताम्।

अतो विशिष्टविधिमभ्युपगम्यापि अत्र वाक्ये विशेषणविधिकल्पनाप्रत्याशा दुराशैव सर्वथा हेया विपश्चिद्भिः। अत एव सर्वत्र मीमांसाग्रन्थेषु एतादृशस्थले यागस्यैव केवलस्य विधेयत्वमुच्यते, न वधस्य वधविशिष्टयागस्य वेति निर्मत्सरैरालोचनीयम्। तथा हि—पशुसोमापूर्वताधिकरणे भाट्टदीपिका—

'यावद्धृदयादियागा एव विधीयन्ते, तांश्च लक्षणया आलभतिना अनूद्याग्नीषोमदेवता विधीयते'।

'आलभतिना शक्त्या यागानुवादासम्भवादाह—**लक्षणयेति**'। इति तट्टीका।

ईषालम्भाधिकरणेऽपि—

'वायव्यं सौर्यम्' इत्यादितद्धितान्तपदवैयर्थ्यापत्तेर्द्रव्यदेवतासम्बन्धानुमितो याग एवालभतिनिर्वपतिधातुलक्षितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयते। अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते'—भाट्टदीपिका।

'विशये प्रायदर्शनात्' इत्यधिकरणेऽपि—

'आलभतेः स्पर्शमात्रवाचित्वात्'—भाट्टदीपिका। एवमेवान्यत्रापि मीमांसा-ग्रन्थेषु सर्वत्र समस्ति। प्रत्युत 'आलभतेः स्पर्शमात्रवाचित्वात्' इत्यन्तिमोदाहरणेन अमरकोशादीनां लाक्षणिकार्थपरत्वमेव मीमांसकसम्मतं प्रतिभाति। पुण्डरीक-शब्दस्य वेदस्थस्य रक्ताम्भोजपरत्वेन पूर्वोत्तरमीमांसाभाष्यकारैर्व्याख्याततत्वेन 'पुण्डरीकं सिताम्भोजम्' इत्यमरकोशस्य मीमांसाविरुद्धार्थे बाधस्यैव सम्प्रतिपत्तव्यत्वादित्यलम्।

यद्यपि तत्र तत्र शारीरकभाष्यादिग्रन्थेषु 'मा हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रम् 'अग्नीषोमीयं पशुमालभेत' इति विशेषशास्त्रेण हिंसाविधायकेन

बाध्यत इत्युल्लेखदर्शनाद् अग्नीषोमीयादिवाक्ये आलभेतेत्यस्य वधविधायकत्वम् अवश्याभ्युपगन्तव्यमित्येव प्रामाणिकानां मतम्, तथापि तत्र उत्पत्तिविधिवेलायां वधविशिष्टयागस्य लक्ष्यार्थस्य विधानेन सम्पादनीयम्, उक्तदूषणगणग्रासात्। किन्तु कल्पिताङ्गवाक्यैकवाक्यताकः प्रधानविधिरेव प्रयोगविधिरित्यभ्युपगमाद् अग्नीषोमीयादिवाक्यस्यैव प्रयोगविधितां गतस्य 'पशुं सञ्ज्ञपयती'त्यादिवधविधायकाङ्गवाक्यस्य प्रत्यक्षश्रुतत्वेन वधविशिष्टयागविधायकत्वाद् उपपादनीयम्। तदुक्तं लघुमञ्जूषायाम्—'न च अग्नीषोमीयं पशुमालभेते'त्यादियागीयहिंसाविधिर्निषेधस्य विहितेतरहिंसापरत्वं बोधयतीति वाच्यम्, विधिना प्रकरणेन च तस्या आप्तप्रेरणाविषयत्वेनेष्टहेतुत्वक्रत्वर्थत्वबोधनेऽपि उक्तरीत्या अनिष्टाहेतुत्वबोधने मानाभावेन निषेधस्य हिंसायां पुरुषानिष्टहेतुत्वबोधकत्वेन विरोधाभावात्। .....किञ्च आलम्भनमत्र स्पर्शः, अग्निहोत्रप्रकरणपठिते वत्समालभेतेति वाक्ये तदर्थकत्वनिर्णयात्। हिंसा त्वङ्गयागविशसनप्रकारोपदेशाभ्यामाक्षेपलभ्या'। इति।

ब्रह्मविद्याभरणेऽपि—

'अङ्गविधीनां प्रधानविध्येकवाक्यत्वे सति प्रवर्तकेन प्रधानविधिना बलवदनिष्टाननुबन्धित्वं बोध्यमानं साङ्गे प्रधानेऽन्वेतीति तदभिप्रायेयमपवादोऽग्नीषोमीयं पशुमालभेतेति भाष्योक्तिः'।

अयमेव चालम्भनपदार्थ इति श्रीमद्रामानुजाचार्यवल्लभाचार्यादीनामपि सिद्धान्तः। तथा हि वेदान्तवादावल्यां विधिवादे श्रीमद्रामानुजाचार्यमतमेवमाविष्कृतम्—

'अग्नीषोमीयं पशुमालभेते'त्यस्य यागविधायकत्वेन हिंसाविधायकत्वाभावात्' इति।

श्रीगोपेश्वरजीमहाराजकृते अणुभाष्यप्रकाशरश्मौ—

'आलभतिर्न हिंसार्थ इति सुबोधिन्याम्। डुलभष् प्राप्तावित्यालम्भः स्पर्शः'। (अ. १ पा. २ अ. ८ सू. २६)।

एतादृशालम्भनस्य मरणानुबन्धिता वक्ष्यमाणरीत्या कलियुगीयालम्भने भवतीति 'मां हिंस्या'दिति सामान्यशास्त्रमपवदत्यग्नीषोमीयशास्त्रमिति प्रवादः। कलियुगस्थमप्यपवादकं वक्तुं शारीरकभाष्यादिप्रवृत्तिरुपपद्यत एव। 'शतायुर्वै पुरुषः' इत्यादिश्रुतेः कलिपरताया भाट्टदीपिकादिषु वर्णनदर्शनात्। तच्चाग्रे स्फुटीभविष्यति।

तत् सिद्धं प्रधानोत्पत्तिवाक्ये न क्वापि वधविधानमिति सिद्धा गोरवध्यतेति।

अस्तु तर्हि 'पशुं सञ्ज्ञपयती'त्याद्यङ्गवाक्येषु गोवधस्य धर्म्यत्वमिति अङ्गवाक्याश्रयणेन अत्र परे पुनः प्रत्यवतिष्ठन्ते। अतोऽत्र विषये अङ्गवाक्यानामपि केन रूपेण वधविधायकत्वमिति विमर्शः प्रस्तूयते।

अङ्गवाक्यानां हि प्रकृतौ उपदेशविधया प्रवृत्तिः, विकृतावतिदेशत इति मीमांसकसिद्धान्तः। तत्र गवालम्भयागस्य वैकृतयागत्वेन तत्र संज्ञपनस्य उपदेशतः प्राप्तिर्वक्तुमशक्यैवेत्यतिदेशतस्तस्य प्राप्तिर्वाच्या। स चातिदेशः प्रकृते सम्भवति वा न वेत्यधुना विमृश्यते। तत्र 'प्रजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्यादिवाक्यविहितायां कृष्णलाख्यसुवर्णनिर्मितकलायद्रव्यिकायामिष्टौ इष्टित्वेन दर्शपूर्णमासविकृतिभूतायां प्रकृतिवद्विकृतिः कर्तव्येति कल्पितातिदेशवाक्यानुसारेण प्रकृतौ यागीयद्रव्येषु व्रीहिषु 'व्रीहीनवहन्ती'त्यादिना विहितोऽवघातः कृष्णलेष्वपि प्राप्तोऽपि वैतुष्यरूपस्य प्रकृतौ दृष्टस्यावघातप्रयोजनस्य कृष्णलेषु सम्पादयितुमशक्यत्वात् लुप्तार्थतया न कर्तव्य इति सिद्धान्तितं मीमांसकैः। तथा विकृतीष्टिविशेषे दक्षिणात्वेन श्रुतस्य वाससः प्रकृतौ दर्शपूर्णमासेष्टौ दक्षिणात्वेन श्रुते अन्वाहार्यौदने दृष्टस्य श्रपणस्य अतिदेशानुसारेण वैकृतदक्षिणायामस्यामपि करणमावश्यकमिति पूर्वपक्षस्य तत्प्रयोजनस्य ऋत्विगानतिसाधनस्य वस्त्ररूपायां दक्षिणायां पाकं विनाप्युपपत्तौ विधिगौरवापादकं पचनं लुप्तार्थत्वादेव न भवतीति सिद्धान्तितं तैः।

एवञ्च कलिवर्ज्यप्रकरणपर्यालोचनया युगान्तरकर्तव्यतया उपगते गवालम्भयागे कृष्णलवदशक्यत्वाद् वासोवदनावश्यकत्वाच्च संज्ञपनं मरणपर्यन्तं नातिदिश्यत एवेति प्रतिजानीमः।

तथा हि—'यस्तु कार्तयुगो धर्मो न कर्तव्यः कलौ युगे' इत्युपक्रम्य कलिवर्ज्येषु पठ्यमानस्य गोपशुकयागस्य कृतयुगकर्तव्यस्य गोप्राणवियोजकत्वं न कथमपि साधयितुं शक्यते। संज्ञपनस्य हि अक्षतमारणरूपत्वं रुद्रदत्तवृत्तिप्रभृतिश्रौतग्रन्थपर्यालोचनया ज्ञायते। 'सङ्गृह्य मुंखं तमयन्ति' इति कात्यायनश्रौतसूत्रादिभिः अक्षतमारणात्मकस्यैव सञ्ज्ञपनस्य विधानदर्शनात्। तथा चाक्षतमारणात्मके तस्मिन्ननुष्ठीयमाने पशोर्मरणं युगान्तरे कथमपि न सम्भवति। तथा हि—पराशरस्मृतिसुश्रुतसंहिताकश्यपसंहितादिवैद्यकग्रन्थपञ्चाङ्गनिर्मातृ-ज्योतिषिसमयजैमिनीयाश्वमेधश्रीमद्भागवतलिङ्गपुराणसत्यनारायणकथादिभिः कृतयुगे अस्थिगताः प्राणाः समुपलभ्यन्ते।

'कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः'।।पराशरस्मृतिः।
'निर्मांसस्त्वगस्थिभूतः सोमपरिग्रहादेवोच्छ्वसिति'। सुश्रुतसंहिता।

शिवलीलामृते प्राकृतप्रामाणिकग्रन्थेऽपि अस्थ्यादिगतप्राणानामुपपत्तिर्वर्ण्यते।

'कृतयुगे नारायणं नाम देहिनां संहननं शरीरमुत्पद्यते। तस्मात्तदाहुः—तस्य घनं निष्कपालं शिरः, अस्थीनि च सत्त्वास्पदानि, आकृतयो वज्रगरीयस्यः, हृदि चास्य महासिरा दशैव, त्वगस्य शिरश्चाभेद्यमच्छेद्यं, सर्वतोऽस्य शुक्रं, योजनं चास्योत्सेधः, सप्तरात्रं चास्य गर्भवासः, सद्योजातस्य चास्य सर्वकर्माणि शक्यानि भवन्ति, न चैनं क्षुत्पिपासाश्रमग्लानिशोकभयेर्ष्याऽधर्मचिन्ताधिजरा बाधन्ते, न च स्तन्यवृत्तिर्भवति, धर्मतपोज्ञानविज्ञानस्थितियुक्तिश्चातिभवति। तस्य पलितोपमार्धमायुरुत्कृष्टमिति। अथ त्रेतायामर्धनारायणं नाम देहिनां संहननं शरीरमुत्पद्यते। तस्यैकास्थिप्रायं शरीरमाकुञ्चनप्रसारणवर्ज्यं, गर्भवासोऽस्याष्टमासिकः, स्तन्यजीविका च, द्वे शिरःकपाले, पार्श्वयोरेकैकः सन्धिसरसि च, त्र्यस्थि पृष्ठम्, कोष्ठस्य सिरा विंशतिः, शुक्रञ्च पलितोपमचतुर्भागमायुरुत्कृष्टम्। पूर्वाच्चार्धगुणावसर्पणमिति। अथ द्वापरे कैशिकसंहननं शरीरमुत्पद्यते। केशमात्राणुसुषिरास्थि, प्रतिक्षिप्तसन्धिमहाहस्तिबलं शिरानुवेष्टितगात्रं गात्रसन्धिषु चास्य शुक्रं पलितोपमाष्टभागमायुरुत्कृष्टं पूर्वाच्चार्धगुणावसर्पणमिति। अथ कलियुगे प्रज्ञप्तिपिशितं संहननं शरीरमुत्पद्यते'। (कश्यपसंहिता शारीरस्थानम्)।

'वैशाखशुक्लपक्षे तृतीयायां रविवारे सत्ययुगोत्पत्तिः। तत्रावतारचतुष्टयम्। मत्स्यकूर्मवाराहनृसिंहाः। पूर्णं पुण्यम्। पापं नास्ति। कुरुक्षेत्रं तीर्थम्। ग्रहांशो ब्राह्मणः। मज्जागताः प्राणाः। इच्छामृत्युः। एकविंशतिहस्तपरिमितो मानवदेहः। लक्षवर्षं परमायुः—इत्यादि।

कार्तिकशुक्लनवम्यां सोमवारे त्रेतायुगोत्पत्तिः। तत्रावतारत्रयम्। वामनपरशुरामश्रीरामचन्द्राः। पुण्यं त्रिपादम्। पापमेकपादम्। पुष्करनामकं तीर्थम्। इत्यादि।

भाद्रकृष्णत्रयोदश्यां गुरुवारे द्वापरयुगोत्पत्तिः। तत्रावतारद्वयम्। कृष्णबुद्धौ। पुण्यमर्धम्। पापमर्धम्। नैमिषारण्यं तीर्थम्। नादीक्षो ब्राह्मणः। रक्तगताः प्राणाः'। इत्यादि।

माघीपूर्णिमायां शुक्रवारे कलियुगोत्पत्तिः। तत्रावतारः कल्किः। पुण्यमेकपादम्। पापं त्रिपादम्। गङ्गा तीर्थम्। ब्राह्मणो निरग्निः। अन्नगताः प्राणाः। इत्यादि। इति प्राचीनपञ्जिकासु। (शब्दकल्पद्रुमे)।

जैमिनीयाश्वमेधे च द्वापरयुगे बभ्रुवाहनकथायां धृतराष्ट्रनागस्य केवलास्थ्यवशिष्टस्य रणात्पलायनादि चरित्रं दृश्यते। भागवते च 'दंशितभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते' इति वर्णितम्। लिङ्गपुराणेऽपि नन्दिकेश्वरचरित्रमेवंविधम्। सत्यनारायणकथायाञ्च।

'कलावन्नगतप्राणा लोकाः स्वल्पायुषस्तथा'।

अत्रेदं बोध्यम्—प्राणनामकस्यातीन्द्रियस्य वस्तुनः स्थूलदेहातिरिक्तस्य उत्क्रमणं हि वैदिकानामेव केवल प्रसिद्धं वस्तु 'देहात्मवादरतानामसुराणां म्लेच्छानां च प्राणोत्क्रमणमसम्प्रतिपन्नमेव मरणस्थले। अत एव कबरादिस्थानेषु शवनिक्षेपणमासुरधर्म इति विराधवधप्रसङ्गे श्रीरामायणे वर्णितम्। आत्मपुराणे च कालान्तरे रसायनादिप्राप्तिसम्भावनैव तदुज्जीवनप्रत्याशाकारणतया तादृशशव-निक्षेपकर्मणि वर्णिता। अभ्युपगम्यते च बायबलकुराणादिषु कयामतदिवसे कबरादिनिक्षिप्तानां शवानामपि पुनरुज्जीवनम्।

युगान्तरे पद्मपुराणाद्युक्तरीत्या पुनरुज्जीवनस्य मर्यादितस्याभ्युपगमोऽस्मदीयो म्लेच्छानामप्यत एव न विप्रतिपत्त्यर्हो भवितुमर्हति।

अमरणहेतुरसायनान्वेषणरतानामाधुनिकवैज्ञानिकानामपि तथैव। अन्यथा प्रवृत्तिव्याघातदोषस्य दुरपह्नवत्वात्। केवलं सनातनधर्मानुयायिनां शास्त्रैकशरणानां प्राणोत्क्रमणवादिनां मतप्रक्रियामापाततः पर्यवष्टभ्य गोमेधविषये परैः क्रियमाणस्य प्रतारणस्य समीचीनं निरसनन्तु सुधियामाकाङ्क्षितं शास्त्रीयप्रक्रियामाश्रित्य क्रियते। तथा हि—

माधवीयपराशरस्मृतिभाष्यविद्वन्मनोहरादितट्टीकादर्शनेन पूर्वोक्तप्रमाणैरावेदितं मांसादीनामुपक्षयेऽपि प्राणानामव्याकुलतयाऽवस्थानमनेकवर्षसाध्यानशनादिरूपस्य तपसः कृतयुगे शक्यतायाम्, अन्नमयप्राणवति कलियुगे अशक्क्यतायाञ्च हेतुत्वेनोपन्यस्तमिति 'न ह्यत्रानूयाजान् यक्ष्यन् भवती'त्यादाविव अशक्यताहेतुकस्य कलिवर्ज्यनिर्णयस्य साधनाय विवक्षितस्वार्थमेवेति न अर्थवादा एव ते अविवक्षितार्थका इति गजनिमीलिकया अपह्नोतुमर्हम्।

किञ्च सामवेदीयवंशविधानब्राह्मणाध्ययने तदध्ययनफलत्वेन 'स कृतयुगे

जन्म लभते' इति फलविधानदर्शनात् 'स्वर्गकामो यजेत' इत्यादिवाक्येषु फलत्वेन श्रूयमाणस्य स्वर्गस्य स्वरूपविशेषजिज्ञासायां विध्युत्थापितायां तत्स्वरूपनिरूपणपरस्य—

'यत्र दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्'।।

इत्यादिवाक्यस्येव अस्यापि फलविशेषस्य कृतयुगजन्मनः सुखविशेषकरस्वरूपजिज्ञासायां विध्युत्थापितायां सत्यां तन्निरूपणपरस्य कृतयुगवर्णनात्मकस्य सर्वस्यापि पूर्वोक्तवाक्यजातस्य स्वार्थपरत्वं दुर्निवारमेव।

अतो विवक्षितार्थान्येव पूर्वोक्तानि वाक्यानीति सिद्ध्यति।

एवं सिद्धे मांसादीनामुपक्षयेणास्थिमात्रावशिष्टेऽपि देहे प्राणानामव्याकुलतयाऽवस्थाने पूर्वोक्तस्य पशुसंज्ञपनस्य 'पशुं संज्ञपयती'त्याद्यङ्गवाक्यसमधिगम्यस्य कथं मरणविधायकत्वं वक्तुमपि शक्यमिति सूक्ष्ममीक्ष्यताम्।

तथा हि—मरणस्वरूपमेव परैरङ्गतयाऽपेक्ष्यमाणं कीदृशं भवितुमर्हतीत्यादौ तावद्विमृशामः।

तत्र तावत् 'मृङ् प्राणत्यागे' इति स्मृत्यनुसारात् प्राणत्याग एव मरणपदार्थ इति तावन्निश्चप्रचम्। स तु त्यागो यदि स्वदेहादुत्क्रान्तिरूपः प्राणानां विवक्ष्यते, तदा लिङ्गशरीरस्य पूर्वशरीरसंयोगध्वंसः, तदनुकूलो विभागः, तदनुकूला लिङ्गशरीरक्रिया वा मरणमिति वक्तव्यम्। तथात्वे ब्रह्मविदः 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुत्या प्राणोत्क्रमणनिषेधात् तस्य मरणनिमित्तकमौर्ध्वदेहिकादि नारायणबल्यादिकञ्च प्रतिसांवत्सरिकाद्यनुष्ठानञ्च 'स उच्छ्वसत्याध्मायत्याध्मातो मृतः शेते' इति श्रुतौ मृतत्ववर्णनञ्च नोपपद्येत। यदि हृदयादिस्पन्दनिरोध एव मरणमित्युच्यते, तदापि असम्प्रज्ञातसमाधिनिष्ठस्य योगिनो निरुद्धसर्ववृत्तिकस्य प्राणस्पन्दाभावपक्षे मरणनिमित्तकानि कार्याण्यौर्ध्वदेहिकादीनि कर्तव्यानि भवेयुः। अत एव जीवनयोनियत्ननिरोध एव मरणमित्यपि न सङ्गच्छते, समाधिस्थस्य योगिनो मरणप्रसङ्गात्। अतो मरणस्वरूपं किं तावच्छास्त्राभिमतं भवितुमर्हतीत्यत्र विहाय स्वकपोलकल्पनां प्रामाणिकवाक्यानुसरणमेव ज्यायः। तस्मिन्नन्विष्यमाणे नैयायिका इत्थं मन्यन्ते। तथा हि—द्रव्यकिरणावलीप्रकाशे वर्धमानोपाध्यायैः परिष्कृतं तत्स्वरूपमित्थम्—

'ज्ञानजनकमनःसंयोगाजनकमनःक्रियाधीनविभागजन्यज्ञानजनकमनः संयोगध्वंसो मरणम्' इति स्पष्टमुपलभ्यते। इदं वाक्यं किञ्चित्स्पष्टी-

कृतिसापेक्षमित्युपपाद्यते। पूर्वोक्तवाक्ये केवलं मनःसंयोगध्वंसो मरणमित्यभ्युपगम्यमाने मनसश्चञ्चलत्वेन सर्वदैव जीवतोऽपि तादृशध्वंसवत्त्वान्मरणप्रसङ्गः, तद्वारणार्थं ज्ञानजनकमनः-संयोगाजनकमनःक्रियाधीनत्वं मनःसंयोगध्वंसे विशेषणं दत्तम्। जीवतो मनसश्चञ्चलत्वेन पूर्वसंयोगध्वंसस्यावश्यकत्वेऽपि जीवनकालीनस्योत्तरसंयोगस्य ज्ञानजनकत्वात् तादृशमनःसंयोगध्वंसस्य न ज्ञानजनकमनःसंयोगाजनकमनः-क्रियाधीनत्वमिति नातिव्याप्तिः। एवमपि प्राणोत्क्रमणानन्तरं मध्येमार्गं परलोक-पथिकस्य मनसो द्वितीयतृतीयादिकर्मभिः जायमानमनःसंयोगध्वंसस्योत्पत्तावपि अयमधुना म्रियत इत्यव्यवहारात् मरणानात्मकतया स्वीकर्तव्ये तादृशमनः-संयोगध्वंसे अतिव्याप्तिवारणार्थं ज्ञानजनकमनःसंयोगाजनकमनःक्रियाधीनध्वंस-प्रतियोगिमनःसंयोगे पुनर्ज्ञानजनकत्वविशेषणमुपात्तम्। मध्येमार्गं जायमानानां प्रथमद्वितीयादिमनःसंयोगानां ज्ञानाजनकतया तद्ध्वंसे नोक्तमरणलक्षणातिव्याप्तिरिति तदाशयः।

प्रोक्तलक्षणघटकं ज्ञानजनकत्वं ज्ञानजननस्वरूपयोग्यत्वरूपमेव विवक्षितम्, न फलोपधायकतारूपम्। तेन तार्किकमते सुषुप्तिकालीनपुरीततिनाड्यवच्छिन्नमनः-संयोगस्य ज्ञानाजनकतया तज्जनकमनःक्रियाधीनज्ञानजनकमनःसंयोगध्वंसस्य सुषुप्तिप्राक्क्षणस्थितस्य न मरणत्वापत्तिः। सुषुप्तिकालीनतादृशमनःसंयोगस्यापि 'सदेहस्यात्मनो विपच्यमानकर्माशयसहितस्य मनसा सह संयोगो जीवन'मिति प्रशस्तपादभाष्यटीकोक्तलक्षणानुसारेण जीवनरूपत्वेन जीवनयोनिलयजनकत्वेन ज्ञानजीवनयोनियत्नादिसाधारणात्मविशेषगुणत्वावच्छिन्नं प्रत्येव पूर्वोक्तजीवनत्वेन रूपेण मनःसंयोगस्य लाघवादेककार्यकारणभावस्याभ्युपगमेन सुषुप्तिकालीन-तादृशमनःसंयोगेऽपि ज्ञानजननयोग्यत्वाक्षतेः न तत्प्राक्क्षणोत्पन्नमनःसंयोगध्वंसे मरणलक्षणातिव्याप्तिः। यद्यपि विजातीयात्ममनःसंयोगत्वेन आत्मविशेष-गुणत्वावच्छिन्नं प्रति कारणत्वं तार्किकग्रन्थेषु तत्र तत्र उपलभ्यते, नोक्तजीवनत्वेन तथापि जीवनयोनियत्नादिप्रतिपादकप्रशस्तपादभाष्याद्यविरोधाय जातेः कारणतावच्छेदकत्वे लाघवाद् आत्मविशेषगुणजनकव्यवच्छेदकतया स्वीकर्तव्याया अपि तादृशजातेर्यथोक्तजीवनत्वसमनियतत्वमवश्याभ्युपगमनीयमेवेति न कश्चिद्विरोधः शङ्कनीयः।

असम्प्रज्ञातसमाधिनिष्ठस्यापि योगिनः समाधिसुखानुभवस्य आवश्यकत्वेन तत्कालीनमनःसंयोगस्यापि ज्ञानजनकत्वं नानुपपन्नम्। तदानीं वृत्तेः सर्वथा अभाव

एवेति पक्षेऽपि 'सति मूले तद्विपाको जात्यायुर्भोगाः' इति योगसूत्रानुसारेण समाधिरूपेण विपच्यमानस्यायुषः प्रारब्धादृष्टरूपस्य सत्त्वेन 'सदेहस्यात्मनो विपच्यमानकर्माशयसहितस्य मनसा सह संयोगो जीवन'मित्युक्तं जीवनत्वं तदानीन्तनमनःसंयोगेऽनपवादमेवेति ज्ञानजननस्वरूपयोग्यतायाः सत्त्वान्न समाधिस्थस्य योगिनो मृतत्वव्यवहारः।

'न तस्य प्राणा उत्क्रामन्ति' इत्युक्तं ब्रह्मविदो मरणमपि अधुना नानुपपन्नम्। प्राणानामुत्क्रमणाभावेऽपि प्रारब्धातिरिक्तस्य कर्माशयस्य 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिवचनानुसारेण ज्ञानेनैव विनष्टत्वावगमात् प्रारब्धस्य च भोगेनाधुना नष्टत्वेन विपच्यमानकर्माशयसहितत्वाभावेन तादृशमनःसंयोगस्य जीवनानात्मकतया ज्ञानाजनकत्वात् तादृशमनःसंयोगध्वंसे तादृशमनःसंयोग-प्राक्कालीनमनःसंयोगध्वंसे वा मरणत्वानपायान्मृतत्वव्यवहारोपपत्तिरौर्ध्व-देहिकाद्युपपत्तिश्चेति समस्तप्रामाणिकव्यवहारपर्यालोचनया पूर्वोक्त एव निष्कृष्टो मरणपदार्थः पर्यवसन्नः।

यस्तु सहगमनादिस्थले पत्न्याः प्राणोत्क्रमणे क्रियाविभागसंयोगध्वंसादिरूपे मरणत्वव्यवहारः, सोऽपि पूर्वोक्तमुख्यमरणसाध्यत्वाल्लक्षणयोपपाद्यः। प्रशस्त-पादभाष्ययोगभाष्यादिषु मृतशरीराद्विभागकारणस्य कर्मणः प्रायणस्य मरणोत्तरमेव निरूपणोपलम्भात्। तच्चाग्रे स्फुटीभविष्यति। प्रायणस्य पूर्वोक्तमनःसंयोगध्वंसस्य वा मरणपदमुख्यार्थत्वमित्यत्र विनिगमकं तु ब्रह्मविदोऽनुत्क्रान्तप्राणस्य और्ध्वदेहिकनिमित्तमरणश्रवणमेवेति प्रागेवोपपादितम्।

मरणं प्रायणञ्च कथमुत्पद्यत इत्यत्र प्रक्रिया तावदित्थमुपवर्णिता प्रशस्तपादभाष्ये—

'अपसर्पणकर्मोपसर्पणकर्म चात्ममनःसंयोगाददृष्टकारितात्। कथम्। यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयोऽन्योन्याभिभवो वा तदा जीवन-सहाययोर्वैकल्यात् तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे सत्यन्याभ्यां लब्धवृत्तिभ्यां धर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते'। इत्यादि।

सुखावबोधाय यथासम्प्रदायं भाष्यमेतदधुनोपपाद्यते—

यदा तावद्वर्तमानदेहसम्पाद्यभोगारम्भकयोः प्रारब्धरूपयोर्धर्माधर्मयोः क्षयः, अथवा प्रबलतरादृष्टान्तरेणाभिभवः, तदैव 'सदेहस्यात्मनो विपच्यमान-

कर्माशयसहितस्य मनसा सह संयोगो जीवनमिति पूर्वं लक्षिते जीवने घटकतां गतस्य विपच्यमानतारूपविशेषणविशिष्टकर्माशयस्य विशिष्टस्याभावः सम्पद्यते। आद्यः कालमरणस्थले विशेष्याभावप्रयुक्तो विशिष्टाभावः, द्वितीयस्तु रामराज्ये ब्राह्मणपुत्रस्य मरणस्थले शूद्रकृतधर्माभिभवेन स्थितजीवनादृष्टस्यापि ब्राह्मणपुत्रस्य विपच्यमानतारूपविशेषणाभावप्रयुक्तो विशिष्टाभावः। अत एव राजदण्डेन शूद्रस्य निष्प्राणतायां सम्पादितायामेव अभिभावकदुरदृष्टविनाशाद् ब्राह्मणपुत्रजीवनादृष्टस्य पुनर्विपच्यमानतायां स्थापितायां जीवनयोनियत्नोत्पादेन पुनर्जीवनं रामायणादावुपवर्ण्यते। शक्यञ्च अन्यकृतेनापि दुरदृष्टेन अन्यदीयजीवनादृष्टस्याभिभवनमुक्तरामायणकथाप्रामाण्याद्वर्णयितुम्। स्वीकृतञ्च मीमांसकैरपि श्येनयागादिस्थले यजमानदुर्भाग्यच्छेदकेन श्येनजन्यादृष्टेन शत्र्वायुश्छेदनात्मकं फलम्। तदुक्तं शास्त्रदीपिकाव्याख्यायां युक्तिस्नेहप्रपूरिण्याम्—

एवं श्येनजन्यमायुर्दुर्भाग्यच्छेदनमेव हिंसा न श्येनः। ........श्येनः स्वयं इष्टसाधनत्वादर्थात्मकोऽप्यनर्थानुबन्धी तत्फलस्य हिंसारूपस्यायुर्दुर्भाग्यच्छेदात्मकस्य विहितत्वान्निषिद्धत्वाच्च। (धर्मलक्षणविचारे-१।१।२)

एवञ्च पूर्वोक्तप्रकारद्वयेन विपच्यमानकर्माशयाभावरूपे विशिष्टाभावे सम्पादिते तादृशकर्माशयसहितस्य सदेहस्यात्मनो मनसा सह विशिष्टसंयोगरूपस्य जीवनस्याभावाज्जीवनयोनियत्ननिरोधः।

खड्गाभिघातादिना मरणस्थले तु जीवनघटकस्य विशेषणस्य देहस्य विनाशाद्यथोक्तविशेषणविशिष्टसंयोगात्मकस्य जीवनस्य विनांशः सम्भवदुक्तिक इति तत्रापि मरणं सम्भवदुक्तिकमिति पूर्वापरपर्यालोचनेन पूर्वोक्तं प्रकारत्रयमेव जीवनात्मकमनःसंयोगध्वंसस्यायाति।

त्रिविधेऽपि मरणे सम्पन्ने यथोक्तविशिष्टमनःसंयोगात्मकजीवनरूपकारणाभावाज्जीवनयोनियत्नस्य तत्कार्यस्याप्यभावे हृदयादिस्पन्दजनकप्राणादिक्रियाया अभावान्मृतशरीरस्य निष्पन्दत्वं धारकस्य जीवनयोनियत्नस्याभावात् पतनञ्च भवति। तत्र पूर्वापरपर्यालोचनेन एवमत्र क्षणप्रक्रिया सम्पद्यते।

प्रथमक्षणे जीवनादृष्टनाशः, अथवा अदृष्टान्तरेण जीवनादृष्टस्याभिभवः, अथवा खड्गाभिघातादिना देहविनाशो वा। द्वितीयक्षणे जीवनस्याभावात् जीवनयोनियत्नानुत्पत्तिः, पूर्वक्षणोत्पन्नस्य जीवनयोनियत्नस्य वर्तमानता ज्ञानजनकमनःसंयोगध्वंसात्मकं मरणञ्च। तृतीयक्षणे जीवनयोनियत्नसामान्याभावः। चतुर्थक्षणे प्राणपञ्चकसञ्चारानुत्पत्तिः, धारणहेतोर्यत्नस्याभावात् शरीरपतनञ्च।

तदुत्तरं यथोचितं पूर्वोत्पन्नप्राणक्रियाया विनाशे पञ्चमे षष्ठे सप्तमे वा क्षणे प्राणक्रियासामान्याभावः। अष्टमक्षणे कर्मवत्प्राणसंयोगादिरूपकारणाभावाद् हृदयादिस्पन्दानामनुत्पत्तिः।

अनेनान्तिमेन कार्येण पूर्वोत्पन्नं विशिष्टमनःसंयोगध्वंसात्मकं मरणमनुमीयते। यद्यपि एतादृशहृदयस्पन्दनिरोधादिकं समाधौ स्थितस्य योगिनोऽपि सम्पद्यत इति तन्मात्रस्य यथोक्तमरणव्यभिचरितत्वेन न पूर्वोक्तमरणानुमापकतासम्भवः, तथापि समाधियत्नाप्रयोज्यत्वविशिष्टतया निश्चितस्य हृदयस्पन्दादि-निरोधस्य तादृशविशिष्टवेषेण यथोक्तमरणानुमापकत्वमुपपन्नम् इति समस्तलौकिक-व्यवहारः समुपपद्यते।

तथा च पूर्वोक्तक्षणप्रक्रियानुसारेण विपच्यमानकर्माशयाभावाधीनमरणस्थले तत्प्रतिबद्धवृत्तिकयोर्भाविदेहारम्भकधर्माधर्मयोः प्रतिबन्धकीभूतवर्तमानदेहारम्भक-जीवनादृष्टस्य नाशादभिभवाद्वा लब्धवृत्तिकयोः प्रभावेण यथोक्तमनःसंयोगध्वंस-विशिष्टाद् वर्तमानशरीराद्विभागकारणं प्रायणाख्यमपसर्पणकर्म मनसि समुत्पद्यत इति वस्तुस्थितिः सम्पन्ना।

यस्मिन्नेव क्षणे विपच्यमानकर्माशयस्य शरीरस्य वा अभावः, तस्मिन् क्षणे हि ज्ञानजनकतावच्छेदकवैजात्यविशिष्टस्य मनस्संयोगस्य स्थितिरनावश्यकी। तदुत्तरं ज्ञानाद्यजननेन तादृशवैजात्यकल्पनायां प्रमाणाभावात्। तादृशवैजात्य-विशिष्टमनःसंयोगसत्त्वे उत्तरक्षणे जीवनयोनियत्नोत्पादेन शरीरपतनाभावप्रसङ्गाच्च। धर्माधर्मयोर्जीवनद्वारैव यत्नजनकयोः स्वातन्त्र्येण विशेषतस्तदकारणत्वेन तन्नाशेऽपि यत्नोत्पत्तौ क्षत्यभावात्। अतस्तादृशकर्माशयाभावक्षणे ज्ञानजनकमनःसंयोगाभावात् तत्प्रागुत्पन्नमनःकर्मणा ज्ञानजनकमनःसंयोगाजनकतया यथोक्तया निश्चीयमानेन ज्ञानजनकपूर्वोत्पन्नमनःसंयोगध्वंसस्योत्पत्तिः सुनिश्चितैव। तदुत्तरं ज्ञानाजनकमनः-संयोगान्तरे जाते पूर्वक्षणोत्पन्नजीवनादृष्टजन्यमनःकर्मणो विनाशे सति शरीरपतनादूर्ध्वं भाविदेहारम्भकधर्माधर्मजन्यस्य पूर्वदेहविभागजनकस्य मनःकर्मण उत्पत्तिः प्रक्रियायां पर्यालोच्यमानायां सुनिश्चितैव। अतः पूर्वं मरणम्, अनन्तरमेव चोत्क्रमणमिति स्थितेः पर्यवसन्नत्वात् 'मृतशरीराद्विभागकारणमपसर्पणकर्मोत्पद्यते' इति प्रशस्तपादभाष्योक्तिस्तदनुसारिणी योगभाष्योक्तिश्च सम्यगेवोपपद्येते।

एवं स्थिते सर्वत्रोत्क्रमणस्य मरणसापेक्षत्वे खड्गाभिघातादिना मरणस्थले विपच्यमानकर्माशयस्यानपायान्न सद्य एव उत्क्रमणं सम्भाव्यते। उत्क्रमण-कर्मकारणयोर्भाविदेहारम्भकयोर्धर्माधर्मयोर्विपच्यमानकर्माशयप्रतिरुद्धवृत्तिकत्वेन

कार्याक्षमत्वात्। तथा च तादृशविशिष्टमनःसंयोगध्वंसे सम्पन्नेऽपि न प्राणोत्क्रमणं, यावत् कर्माशयस्य वर्तमानदेहारम्भकस्य विपच्यमानतेति सिद्धम्।

अत एव भागवते तक्षकविषदग्धयोर्वृक्षस्थितयोर्मनुष्ययोर्मृतयोरपि न प्राणोत्क्रमणम्, सञ्जीवन्या चिकित्सया मन्त्रप्रयोगेण च पुनर्जीवनञ्च सिद्धम्। तादृशनिश्चेतनावस्थानस्यापि प्रारब्धोपभोगरूपत्वेन तत्काले विपच्यमानतायाः तदीयकर्माशयेऽनपायात्। अत एव महाभारते बभ्रुवाहनेन अर्जुनस्य मरणप्राप्त्या गङ्गाशापसार्थकीकरणेऽपि सञ्जीवकमणिस्पर्शेन पुनर्जीवनलाभश्च युज्यते।

जैमिनीयाश्वमेधे तु अर्जुनस्य शिरश्छेदे वृत्ते तस्य धृतराष्ट्रनागपुत्रेणापहरणे कृतेऽपि पुनश्शिर आनयने कृते सति तत्संयोजनपुरस्सरं सञ्जीवकमणिस्पर्शेन पुनर्जीवनवर्णनं जरासन्धादीनामिव, मयूरध्वजमहाराजस्य क्रकचच्छिन्नशरीरस्यापि पुनर्देहसंयोजन एव सति स्वाभिप्रायवर्णनाय वाक्यविशेषोच्चारणादिकथा चोपपद्यते। उक्तस्थलेषु सर्वत्र कर्माशयस्य विपच्यमानतायाः स्वीकारेण विच्छिन्नावयवसंयोजनेन देहसाकल्याद् विपच्यमानकर्माशयसहितस्य सदेहस्यात्मनो मनसा सह संयोगरूपजीवनस्य पुनर्लाभ एवोक्तकथासु प्रतिपाद्यः। न चोक्तस्य सर्वस्य कथाजातस्य अर्थवादतया अविवक्षितस्वार्थत्वं शङ्क्यम्, विवक्षितार्थतयैवोपपत्तौ उत्तरमीमांसास्थदेवताधिकरणन्यायविरोधेन तादृशकल्पनाया अयुक्तत्वात्। अत एव महिषासुरस्य च्छिन्नशिरस्कस्यापि शिरश्छेदनसमये परमानन्दमयदेवीमुखावलोकनैकाग्रचित्ततया लोकोत्तरानन्दानुभवमग्नस्य स्थिरान्तःशरीरतया अद्ययावत्सजीवत्वं नवरात्राद्यर्चनापद्धतिषु देवीपूजनावसरे गौरवितप्रीतिहेतुक्रियारूपपूजास्पदत्वञ्च महाकालसंहितोक्तमुपपद्यते। सप्तशत्यामपि—

'खड्गप्रभानिकरविस्फुरणैस्तवोग्रैः शूलाग्रकान्तिनिवहेण दृशोऽसुराणाम्।
यन्नागता विलयमंशुमदिन्दुखण्डयोग्याननं तव विलोकयतां तदेतत्'॥

इत्यादिना सूचितोऽयमर्थः।

ननु जरासन्धादिशरीरस्थले शरीरसाकल्योत्तरं जीवनस्य सम्भवदुक्तिकत्वेऽपि च्छिन्नकण्ठमहिषासुरशरीरस्थले शरीरस्यैवाभावे कथं जीवनसम्पत्तिं वदन् न वित्रपसे इति परेषामाक्षेपस्त्वत्र वृथैव, शरीरस्वरूपस्यैव तैरपरिज्ञानात्।

तथा हि—शरीरत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यात्; किन्तु भोगायतनत्वमेव तदित्युक्तं तार्किकैः। अत एव 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति गौतमसूत्रेण चेष्टाश्रयत्व-इन्द्रियाश्रयत्व-भोगाश्रयत्वेति लक्षणत्रयमेव प्रतिपाद्यते

शरीरस्य। महिषासुरवधस्थले च पूर्वदेहस्य खण्डने सम्प्रतिपन्नेऽपि सद्योनिष्पन्न-खण्डद्वयेऽपि स्थिरभोगायतनत्वस्य प्रमाणैः सम्प्रतिपत्तौ पीतामृतयो राहुकेत्वोरिव खण्डशरीरत्वमेव पुनरिष्यते। मीमांसकनये हि अवयवव्यतिरिक्तावयविनः अनभ्युपगम एव। चयनादिषु परस्परसंयुक्तेष्टकासमूहस्यावयविरूपत्वाभ्युपगमेन 'श्येनचितं चिन्वीत' इत्यादिविधिविषयतया 'चितिं प्रोक्षती'त्यादिविधिविधेय-प्रोक्षणविषयतया स्वीकारः। अन्यथा प्रतीष्टकं प्रोक्षणाद्यापत्तेर्दुर्वारत्वात्। तथा च घटत्वादिजातिपर्याप्त्यनुयोगितावच्छेदकं परस्परसंयुक्तकपालद्वयत्वादिकमित्यादिरेव तन्मतसरणिः। शरीरस्थले च भोगावच्छेदकत्वरूपशरीरत्वपर्याप्त्यधिकरणता-वच्छेदकपरस्परसंयुक्तावयवसमूहत्वं वैद्यकीयशारीरकस्थानाद्युक्तप्रक्रियानुसारेण मर्मस्थानानामविनाशे सति इतरेषामवयवानामुपचयापचययोः सतोरपि यथेच्छं विपरिवर्तनशीलमेव सम्प्रतिपत्तिविषयः। अत एव प्राणाधारत्वं मर्मत्वमिति वैद्यकसिद्धान्तः समुपपद्यते। अत एव च युगान्तरे वृक्षादिषु क्वचित् स्वकीयप्राणाधारत्वं परिकल्प्यार्जुनादिवीराणामकुतोभयत्वं जैमिनीयाश्वमेधोक्तम् उलूपीं प्रति अर्जुनस्य तादृशवृक्षपञ्चकप्रदर्शनं समुपपद्यते। अत एव च 'एकदेशविकृत-मनन्यवत्' इति न्यायोपपादनावसरे छिन्नपुच्छस्य शुनः उदाहरणप्रदर्शनं वैयाकरणानां सङ्गच्छते। युद्धादिमरणस्थले तु मर्मण्येव खड्गाद्यभिघातस्वीकारात् सद्योमरणं नानुपपन्नं खड्गाभिघातादिना व्रणपाकपरम्परया ब्राह्मणादेर्मरणस्थले तु कालान्तरप्राणहराणामेव मर्मणामभिहतत्वं वैद्यकशास्त्रानुसारेण कल्प्यत इति नात्र पूर्वापरासङ्गतिः शङ्क्या। अत एव च वातापेः खण्डितदेहस्य महर्ष्युदरप्रविष्टस्यापि ब्रह्मदत्तवरानुसारेण पुनर्जीवनलाभोपपत्तिः। तथा कचस्य मद्येन सह विचूर्ण्य पीतस्य शुक्राचार्योदरप्रविष्टस्य पुनर्देहसाकल्यात् 'भोः कुत्रासी'ति शुक्रेण पृष्टस्य 'अहमत्रास्मी'ति उदरादेव प्रतिवचनञ्च सङ्गच्छते। आयुर्वेदसम्प्रतिपन्नशरीर-व्यवस्थातिरिक्तराहुकेत्वादितुल्यशरीरस्वरूपप्रतिनिष्पत्तिस्वीकारस्तु युगान्तरे—

'यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम्।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम्'।।

इति वचनानुसारेण स्वच्छन्दमरणतावतां नानुपपन्नः। अत एव भीष्मस्यापि शरशय्यायां पतितस्य चिकित्सार्थं वैद्यानां पुनः समागमः श्रूयते उत्तरायणप्रतीक्षणं च भारतादिषु। विशुद्धसत्त्वमयशरीराणां तेषां सर्वेषामपि विपच्यमानकर्माशयानुगुणं सत्यसङ्कल्पतया आनन्दानुभवविशेषे जाग्रत्येकाग्रचित्तानां महिषासुरन्यायेन मरणस्य कथमपि वक्तुमशक्यत्वात्। युद्धादिमरणस्थले तु युगान्तरीये पराजितस्यास्मिन् देहेऽपकर्षज्ञानवत आनन्दानुभवस्यैवाभावात् अनेकाग्रचित्ततया मरणोपपत्तिः।

युगान्तरेऽश्वमेधादिषु शिरश्छेदनात्मकविशसनानन्तरमश्वादिपशूनां मरणोपपत्तिस्तु 'रणाश्वमेधे पशुतामुपेताः' इत्युदाहृत्य काव्यप्रकाशे 'पशुपदं कातर्यमभिव्यनक्ति' इति पशुस्वभावोद्गमवर्णनदर्शनात् क्षीणसत्त्वतयैव वाच्या। युधिष्ठिराश्वमेधादिष्वपि यज्ञीयाश्वस्य खड्गाभिघातोत्तरमेव तादृशकातर्योद्गमः सत्त्वसंक्षयश्चाभ्युपगम्यते, तेन मरणोपपत्तिः। अत एव जैमिनीयाश्वमेधादिषु अकालपरिपक्वस्य सिंहादिभिरपि मरणं तस्मिन् काले न सम्भवतीति वर्ण्यते। अत एव कालिदासेनापि—

'सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष'।।

इति वदता पूर्वोक्तः पौराणिकोऽर्थः समुपवर्ण्यते, उत्तरत्र च 'धेन्वा तदध्यासितकातराक्ष्या' इति वदता कातर्यमेव सुतरां दयालुतायां प्रयोजकतया वर्ण्यते। अत एव भावप्रकाशनादिसाहित्यग्रन्थे त्रयस्त्रिंशद्व्यभिचारिभावमध्य-प्रविष्टस्य मरणभावस्य शोकस्थायिभावके करुणरसे भयस्थायिभावके भयानकरसे भयव्यभिचारिके बीभत्सरस एव च वर्णनीयत्वमुच्यते। तदप्युक्तरीत्या मरणजनकस्य सत्त्वक्षयस्य विषादरूपदुःखविशेषानुभवसापेक्षत्वादेवोपपद्यते। तथा च स्वदेहविषये पराजितत्वबुद्ध्या विषादोदयाद्वीराणां मृतपुत्रादिदर्शनायोग्यत्वबुद्ध्या पित्रादीनां विषादोदयाच्छोकनिमग्नानां महाराजदशरथप्रभृतीनां पशूनाञ्च भयभीतानां प्राणोत्क्रमणोपपत्तिः। महिषासुरादीनां वीराणां तु शोकगन्धरहितानां देवीमुखावलोकनसाधने देहे विषादानुदयाच्छिन्नादपि ततोऽनुत्क्रमणञ्चोपपन्नम्। सर्वमेतदुक्तस्थायिव्यभिचारिभावानां स्वरूपविशेषनिर्वचनेन सम्यगवमृष्टेन स्फुटीभवति। तथा हि—प्रतियोगिनि प्रीत्या तन्नाशासहिष्णुत्वलक्षणद्वेषविशेष-वासनोदय एव शोकपदार्थः। तद्घटकप्रीतिपदार्थश्च प्रमदादिदर्शने सति जायमानसुखस्य पुंस इयमेतद्दर्शनादि वा सुखसाधनमित्यादिवासनैव। एतादृशशोककृतञ्च मरणं महाराजदशरथस्य पुत्रशोकेन, इन्दुमत्याः शोकेन अजमहाराजस्य सम्पन्नम्। तदुक्तम्—

'स्त्रीनीचादिषु शोकोऽयं मरणव्यवसायदः।
मध्यमानां भवेच्छोको मुमूर्षा मृतिरेव वा।।
उत्तमानामतिप्रौढो विवेकेनैव शाम्यति'।। इति।

उक्तरीत्या शोकाधीनं मरणं क्षीणायुषामेव, तेन शरीरस्य वर्तमानत्वेऽपि विपच्यमानकर्माशयलोपाज्जीवनलोपः। भयानकरसादिस्थले च पूर्वानुभूतदुःख-साधनताके वस्तुनि द्वेषविशेषवासना भयस्थायिभावपदार्थः। तद्धेतुकमरणञ्च

तादृशद्वेषविशेषात्मकविषादवासनोदयाधीनमेव। अत एव भागवते पुरञ्जनोपाख्याने गेहरूपदेहरक्षकस्य पञ्चशीर्षसर्परूपस्य प्राणस्य रोगादिभिः शत्रुभिरभिभूयमानस्य असहिष्णुतातिशयोद्गम एव जीवस्य शरीरादुत्क्रमणं वर्ण्यते। एतादृशभय-रूपवासनाविशेषस्योद्गमस्तु शरीरतादात्म्याभिनिवेशमूलक इति मोहस्यैव तत्र मृत्युहेतुत्वं पर्यवस्यति। तथा च ब्रह्मविदां कचादीनां निरस्तसमस्तमोहानां तिलशश्छिन्नशरीराणामपि 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुत्युक्तं प्राणानामनुत्क्रमणं यावत्प्रारब्धपरिपाकं जीवनमपि पूर्वोक्तकथादिषु वर्ण्यमानम् अत एव समुपपद्यते।

एवञ्च महिषासुरादीनां पूर्वदेहखण्डने संवृत्तेऽपि एकाग्रचित्ततया यावत्प्रारब्धपरिपाकं खण्डशरीरोत्पत्त्या जीवनानुवृत्तिदर्शनात् तादृशसत्त्वविशेषस्य खण्डशरीरेऽपि शरीरत्वोत्पादकत्वमेव, कातराणामनेकाग्रचित्तानां तु न खण्डशरीरोत्पत्तिरिति विपच्यमानकर्माशयसत्त्वेऽपि स्वभावभेदाधीनं जीवनमरणयो-र्व्यवस्थापनमेव शास्त्रसम्मतम्। कुत्र कातरस्वभावोद्गमः शरीरखण्डनोत्तरं भवति, कुत्र चैकाग्रताया उद्गम इति तु प्रारब्धकर्मविशेषाधीनं न पर्यनुयोज्यतामर्हति। प्रारब्धक्षयाधीनमरणस्थले तु सत्यामप्येकाग्रतायां सत्यपि देहे विशिष्टस्य जीवनस्याभाव एव पूर्वोक्तः स्वीक्रियते, तेन सर्वेषामपि स्थिरचित्तानां ब्रह्मविदामपि मरणं भाव्येव कस्मिंश्चित्क्षण इति न कोऽपि पूर्वापरविरोधोऽत्र शङ्क्यः।

तथा च प्राप्ताप्राप्तविवेकेन खण्डदेहादिस्थलेऽपि प्रारब्धस्य विपच्यमान-स्यानुवृत्तिरेवोपलक्ष्यत इति सर्वत्रैव सदेहस्यात्मनो विपच्यमानकर्माशयसहितत्वे मरणमनुपपन्नमिति सिद्धम्।

तथा सति मधुपर्कप्रकरणोक्तशतपथश्रुतौ 'क्षदन्ते' इति क्षदधातोर्निर्देशात् तदर्थस्य 'क्षद-विचूर्णने' इति धातुपाठानुसाराद् विचूर्णनार्थकत्वेऽपि वक्ष्यमाणरीत्या ब्रह्मज्ञानबलान्मरणानुपधायकत्वात् 'मा गामनागामदितिं वधिष्ट' इति श्रुत्यबाधेनानुष्ठानमुपपन्नम्।

इदञ्च सर्वं वर्तमानप्रारब्धस्य क्षये देहखण्डने वा जातेऽनुत्क्रान्तजीविता-नधिकृत्य सविस्तरमालोचितम्।

क्वचित्तु तादृशस्थले वर्तमानप्रारब्धस्य निरुद्धवृत्तिकत्वात् प्रतिबन्धकविगमेन प्राणानामुत्क्रमणं पुनर्जीवनलाभोऽपि वर्ण्यते। यथा श्रीकृष्णकृतमृतब्राह्मण-पुत्रानयनस्थले, सावित्रीकृतसत्यवत्पुनरुज्जीवनस्थले, पद्मपुराणीयब्राह्मणकन्या-

पुनरुज्जीवनोपाख्यानस्थले च। तथा च मरणे सत्यपि कर्माशयस्य विपच्यमानत्वाविपच्यमानत्वादिकं दुर्निरूपमेव स्थूलदृशाम्। अत एव कृतयुगादिषु मरणस्थले देहस्याक्षतस्यावस्थाने चत्वारिंशदादिदिनपर्यन्तं पुनर्जीवनप्रतीक्षणम् आशौचाद्यनागमविधानञ्च तावत्पर्यन्तं मृतशरीरस्य यथावदग्लायमानतया अवस्थितिविधानञ्च पद्मपुराणीयम्।

'शृणु राजन् प्रवक्ष्यामि गुह्यमेतन्महामते।
आ मण्डलं कृतयुगे शरीरं नावसीदति।।
पादोनमण्डलं त्रेतायुगे तिष्ठति तद्वपुः।
अर्धमण्डलपर्यन्तं तिष्ठति द्वापरे युगे।।
कलौ शरीरं मर्त्यानां तिष्ठत्यापादमण्डलम्।
चतुर्गुणा कृते बुद्धिस्त्रेतायां त्रिगुणा स्मृता।।
द्वापरे द्विगुणा चैव कलावेकगुणा स्मृता।
द्वादशाहात्परं मर्त्या गच्छन्ति यमसादनम्।।
इतीरितं तु यत्सद्भिः पापिनामेव तन्नृप।
इदञ्च शृणु राजेन्द्र गुह्याद्गुह्यं ब्रवीमि ते।।
यथा यमभटाः शीघ्रं गच्छन्त्यायान्ति वायुवत्।
ईश्वरानुग्रहादेवं गच्छन्त्यायान्ति केचन।।
यमस्यानुग्रहादेताः कन्या यमनिकेतनम्।
नरकान् यातनास्तत्र दृष्ट्वा च पुनरागताः।।
मासमासां शरीराणि रक्षितानि स्वमातृभिः।
तदा कृतयुगस्तस्माच्छरीराणि स्थिराणि च।।
दोषोऽलङ्करणात् पूर्वं प्रेतस्य न हि विद्यते।
प्रेतालङ्करणादूर्ध्वं शवस्पृष्टिर्विधीयते।।
माघस्नानोपवासादिमहापुण्यकृतो नराः।
एवं गच्छन्ति चायान्ति पुण्यं सर्वत्र कारणम्।।
पुष्करो नाम विप्रेन्द्रः पुरा गत्वा यमालयम्।
उत्थापयित्वा नरकान्नरान्नारकिणो बहून्।।
आगत्य पुनरत्रैव स्वगृहे पूर्ववत्स्थितः।
त्रेतायुगे कदाचित्तु रामे राज्यं प्रशासति।।

द्विजस्य कस्यचित्पुत्रो मृतो गत्वा यमालयम्।
पुनर्जिजीव पृथुकः किमेतन्न श्रुतं त्वया।।
देवकीतनयः कृष्णो गुरोः सान्दीपनेः सुतम्।
ग्राहग्रस्तं चिराद्गृह्य पुनः स गुरवे ददौ।।
एवमन्ये जनाः केचिद्यमलोकात्समागताः।
संशयोऽत्र न कर्तव्यः किं भूयः श्रोतुमिच्छसि।।

*(पद्मपुराणे, उत्तरखण्डे, २२९ अध्याये)*

कलियुगीयमरणस्थले तु शरीरस्य यत्र पुनरचिकित्स्यतानिश्चयस्तत्र कर्माशयस्य तदुत्तरं सुखदुःखसंवेदनात्मकमुख्यभोगजनकत्वस्य कथमपि वक्तुमशक्यतया विपच्यमानताविशिष्टकर्माशयलोप एव दृढनिश्चितोऽपि भवतीति सद्य एव और्ध्वदेहिकाद्युपक्रम उपपद्यते। न चैवं कलियुगे अकालमृतस्य रसायनाद्युपलब्धिसम्भावनया पुनश्चिकित्स्यतायाः सम्भावने सति जीवनादृष्ट-लोपानिश्चयादौर्ध्वदेहिकाद्यप्रवृत्तिः शङ्क्या। वाग्भटादिभिः 'उक्तानि शक्यानि महाफलानि युगानुरूपाणि रसायनानि' इत्युक्त्या रसायनानां परिगणितत्वेन अचिकित्स्यतानिश्चयस्य सुकरत्वात्।

एवं स्थिते 'पशुं सञ्ज्ञपयती'त्यादिविधिप्राप्तसंज्ञपने क्रियमाणेऽ-चिकित्स्यहृदयस्पन्दनिरोधवतः पशोर्मरणं यद्यपि सम्भवदुक्तिकम्, तथापि युगान्तरे जीवनादृष्टस्यायुषो नियतत्वेन—

'पिशाचासुरगन्धर्वा यक्षराक्षसपन्नगाः।
युगमात्रं तु जीवन्ति ऋते मृत्युं वधेन ते।।
मनुष्याणां पशूनाञ्च पक्षिणां स्थावरैः सह।
तेषामायुःपरिक्रान्तं युगधर्मेषु सर्वदा।।
अस्थितिस्तु कलौ दृष्टा भूतानामायुषस्तु वै।
परमायुःशतं त्वेतन्मनुष्याणां कलौ स्मृतम्'।।

इत्यादिनायुःस्वरूपमुक्त्वा—

गावो ह्यजा महिष्योऽश्वा हस्तिनः पक्षिणो नगाः।
उपयुक्ताः क्रियास्वेते यज्ञियास्विह सर्वदा।।
देवस्थानेषु जायन्ते तद्रूपा एव ते पुनः।
यथाशयोपभोगास्तु देवानां शुभमूर्तयः।।

तेषां रूपानुरूपैस्तैः प्रमाणैः स्थाणुजङ्गमैः।
मनोज्ञैस्तत्त्वभावज्ञैः सुखिनो ह्युपपेदिरे॥

*(वायुपुराणे, ६९ अ.)*

इत्यादिवायुपुराणादिवचनैरवगम्यमानत्वाज्जीवनादृष्टवतः पशोः संज्ञपनेनाक्षत-मारणात्मकेन यथोक्तं मरणं वक्तुमशक्यमेव। अक्षतस्य वपुषः सत्त्वे हृदयादिस्पन्दनिरोधे जातेऽपि जीवनयोनियत्नबलात् पुनरुज्जीवनस्य दुर्निवारत्वात्।

संज्ञपनविधिबलादेव आयुषो विपच्यमानताया अप्यपगमः कार्यकारण-भावप्रक्रियां पूर्वोक्तां सर्वामप्यनादृत्य कल्पनीय इति कथनन्तु अयुक्तम्। 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायेन शक्तिसहकारेण अर्थप्रतिपादकानां विधीनां निजसहकारिभूतशक्तिबोधने प्रमाणान्तरमुखापेक्षत्वात्। तत्र स्वातन्त्र्येण विधेः प्रामाण्यकल्पने हि कृष्णलाद्यवघातबाधोऽपि न स्यात्पूर्वोक्तः। तत्रापि विधिबलादेव वैतुष्यस्यापि प्रत्यक्षादिप्रमाणविरुद्धस्यातीन्द्रियस्य कल्पयितुं शक्यत्वात्। स्याच्च 'स्वर्गकामो यजेते'त्यविशेषश्रवणात् विष्णुक्रमाज्यावेक्षणादिषु अदृष्टशक्तिकल्पनेन पङ्ग्वन्धादीनामप्यधिकारप्रसक्तिरिति बहु व्याकुली स्यात्।

तदेव 'पशुं संज्ञपयती'ति विहितस्य संज्ञपनस्य करणेऽपि यथोक्तं मरणं तत्र नैव निष्पद्यते युगान्तरेऽपीति सिद्धम्। मरणफलस्याभावे तत्फलकव्यापाररूपस्य मारणात्मकस्य संज्ञपनस्यापि कथमुपपत्तिः किं वा प्रयोजनम् इत्येतावत्तु अधुना विमर्शमर्हति।

तत्र मीमांसकसिद्धान्तानुसारेण फलस्य क्वचिदपि धात्वर्थत्वं नास्त्येव, किन्तु तत्तत्फलजनकतावच्छेदकतया सिद्धो जातिरूपोऽखण्डोपाधिरूपो वा धर्मविशेष एव व्यापारगतः आकृत्यधिकरणन्यायेन धातुवाच्य इति सिद्धान्तस्थितिः। तस्यैव च धर्मविशेषस्य 'संज्ञपयती'त्यादिविधौ भावनायां करणत्वेन विधानम्, न तु मरणस्याणुमात्रेणापि विधानं तत्र शङ्कितुमपि शक्यते, धातोस्तत्र सर्वथा अवाचकत्वात्। मरणरूपफलानिष्पत्तौ 'पशु'मिति द्वितीयाविभक्त्यवगतं तादृश-फलानाश्रयस्य पशोः संज्ञपनकर्मत्वमनुपपन्नमिति तु न शङ्क्यम्, तद्विनापि तत्कर्मत्वोपपत्तेः। तथा हि—मीमांसकमते तावद् द्वितीयोपात्तस्य कर्मत्वस्य धात्वर्थकरणकभावनायामेव निरूपकतयाऽन्वयः सम्प्रतिपन्नः। तच्च कर्मत्वं अखण्डोपाधिरूपमेव, न तु धातुजन्यफलाश्रयत्वरूपम्। तथा सकर्मकधातुस्थले धात्वर्थकरणकभावनाकर्मत्वस्य यथोक्तस्य धात्वर्थनिरूपितकर्मत्वसमनियत-त्वाभ्युपगमेऽपि तत्कर्मत्वस्यापि अखण्डोपाधिरूपत्वादेव 'पशु'मिति द्वितीयोपपत्तिः।

धात्वर्थकर्मत्वस्यापि धात्वर्थव्यापारजन्यफलाश्रयत्वसमनियतत्वाभ्युपगमात् तादृशफलाश्रयत्वस्य च उपक्रमगतव्यापरात्मकतादृशफलवत्त्वप्रकारकेच्छाविषयत्वरूपगौणफलाश्रयत्वेनाप्युपपत्तिः 'काशीं गच्छन् पथि मृतः' इत्यादिस्थले वैयाकरणैः कल्प्यमाना मीमांसकैरप्यभ्युपगम्यत एव। तदुक्तं परमलघुमञ्जूषायाम्—

'ननु प्रकृतधात्वर्थग्रहणेनैवात्र वारणादुद्देश्यनिवेशः किमर्थ इति चेत्, न, तस्यासाधारणं प्रयोजनं काशीं गच्छन् पथि मृत इति काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात् कर्मत्वम्'।

तथा तन्त्रवार्तिकव्याख्यायां न्यायसुधायाम्—

'प्रवर्तना तावत् प्रयत्नरूपभावनाविषया सर्वत्रावधार्यते। गामानयेत्युक्ते गवानयने प्रयतमानस्य कुतश्चित्कारणाद्गवानयनासिद्धावपि मदाज्ञामयं कृतवानित्याज्ञप्तुर्व्यवहारदर्शनादि'ति।

नैयायिकैरपि हि 'कर्तुरीप्सिततमं कर्मे'ति सूत्रबलेन निरुक्तफलाश्रयत्वेनेच्छाविषयत्वरूपमपरमपि कर्मत्वं द्वितीयार्थ इति वदद्भिरयमर्थोऽङ्गीकृत एव। स्पष्टञ्चेदं व्युत्पत्तिवादगादाधर्यादिषु। तदेवं मतत्रये अत्र फलतो न कश्चिद्विशेषः समायातीति मरणाभावेऽपि पशोः संज्ञपनं कर्मत्वादिकञ्चोपपन्नमेव संज्ञपनविधिविहितम्। अत एव गर्भाधानपुंसवनादिकर्मभिर्गर्भपुमपत्यादिजनकतावच्छेदकवैजात्याश्रयैस्तत्तत्फलविकलैरप्यनुष्ठितैः स्त्रीशरीरसंस्कारनिष्पत्तिरविकलाऽभ्युपगम्यते। अन्यथा फलानिष्पत्तौ तच्छरीरस्यासंस्कृतत्वापत्त्या पुनस्तत्संस्कारावर्तनस्य शास्त्रलोकाचारविरुद्धस्यापि कल्पनीयता स्यात्। एवञ्च 'दाशगोघ्नौ सम्प्रदाने' इति सूत्रोक्तो जामातरि गोघ्नव्यपदेशोऽप्युक्तरीत्यैवोपपन्नो न गोर्मरणसाधक इति सिद्ध्यति। तथैव शमयति पशून् हिनस्तीति शमितेत्यृत्विग्विशेषस्य व्यवहारः 'पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्' इति व्यवहारश्च। 'उक्षाणं वा वेहतं वा क्षदन्ते' इत्यत्र 'क्षदन्ते हिंसन्ति' इति सायणोक्तिरप्येवमेवोपपद्यते। क्षदधातुर्विचूर्णनार्थक इति पक्षोऽपि पूर्वं समाहित एव। तथा नहुषोपाख्याने—

'य इमे ब्राह्मणाः प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम्'।

इत्यादिमहाभारतोक्तिरप्यत एव सङ्गच्छते। अत एव चर्मण्वतीनदीप्रभृतीनां रन्तिदेवकीर्तिरूपत्ववर्णनं सङ्गच्छते। गोभिः स्वयमेवोपस्थाय स्वोपकारार्थं याचितेन तेन गोमेधकरणस्य महाभारतादावुपलब्धेः, तस्य च पूर्वोक्तरीत्या वक्ष्यमाणरीत्या च गवामुपकारकत्वेन कीर्तिरूपतया परिणमनस्योपपत्तेः। सर्वत्रैव मरणनिष्पत्तिर्यथा न

स्यात्, तथाविधमारणस्यैव मां गामित्यादिनिषेधबलादङ्गीकरणीयत्वेन विरोधाभावात्। 'न वा उ एतन्म्रियसे' इत्यादिमन्त्रार्थोऽप्येवं सति समुपपन्न एव। उपक्रमोक्तस्य मरणाभावस्य सम्प्रतिपन्नत्वाद् उपसंहारोक्तस्य 'देवान् इदेषि पथिभिः सुगेभिः' इत्यस्य लब्धनूतनकामगमशरीरद्वारा सम्भवात्। अत एव हि तस्य मधुपर्के प्राक्तनदेहस्य रसायनकल्पवन्नूतनदेहता सम्पाद्यते। तथाविधं देहाप्यायनञ्च स्वत एव जीवनयोनियत्नबलाद् भग्नक्षतसंरोहणरूपतया वृक्षादिशरीराणामिव समुपपद्यते। हिरण्यकशिपुशरीरे ब्रह्मणः कमण्डलुजलप्रक्षेपणं तु शीघ्रसंरोहणार्थमेवेति न तद्विरोधोऽपि।

तथा च यज्ञे पशोर्मरणाभावेऽपि सञ्ज्ञपनकर्मत्वं वैधमुपपद्यते। अवैधस्थले धात्वर्थस्यैव भावनायां भाव्यत्वेनान्वयात् तत्र मरणस्य प्रयोजनत्वस्वीकारसम्भवेऽपि वैधस्थले धात्वर्थमुल्लङ्घ्य पुरुषार्थस्यैव कस्यचिद् भाव्यतया परिग्रहस्य मीमांसकसम्मतत्वात् संज्ञपनविधौ पशुमिति द्वितीयावगतभाव्यत्वमपुरुषार्थभूतस्य मरणस्य कथमपि न सम्भवतीति अन्यस्यैव कस्यचित्प्रयोजनत्वं वाच्यम्। तच्च भाव्यं 'व्रीहीनवहन्ती'त्यवघातविधौ तण्डुलनिर्वृत्तिप्रणालिकया व्रीहिसाध्ययागापूर्वसाधनतावेषेण लाक्षणिकेन व्रीहीणामिव 'हृदयस्याग्रेऽवद्यती'त्यादिवाक्यविहितहृदयाद्येकादशावदानगणनिर्वृत्तिप्रणालिकया पशोर्वाच्यम्। तदैव परम्परया पुरुषार्थानुबन्धित्वेन इच्छाविषयीभूतस्य तादृशविशिष्टपशुवेषस्य साधनतारूपाया इष्टसाधनतायाः संज्ञपने प्रवर्तनाविषयत्वेनानुमातुं शक्यत्वात् 'संज्ञपयती'ति विध्युपपत्तिः। तथा च एकादशावदानगण एव संज्ञपनभावनाप्रयोजनकोटौ निविष्टः। तदुक्तं युक्तिस्नेहप्रपूरिण्यां शास्त्रदीपिकाव्याख्यायाम्—

'किञ्चाङ्गहिंसायां पुरुषार्थत्वे सिद्धे कदाचिदनर्थोऽपि फलतया कल्प्येत। न चैवम्, प्रकरणविनियोगेन क्रत्वर्थत्वावगमात्, क्रत्वर्थत्वेऽपि चेयं पशुसंस्काररूपा न प्रयाजादिवदारादुपकारिका, हिंसापूर्वमेव विशसनादिसंस्कारानुष्ठानात् 'पशुं संज्ञपयती'ति पशोः प्राधान्यश्रुतेः। संस्कारत्वेऽपि वास्या अयं विशेषो यदयं दृष्टार्थ एवावघातादिवन्न प्रोक्षणादिवददृष्टार्थः। कोऽस्या दृष्टार्थ इति चेत्, क्रत्वपेक्षितैकादशावदाननिष्पत्तिरेव। न चासति हिंसासंस्कारे पशोरेकादशावदाननिष्पत्तिः सम्भवति, हिंसानन्तरमेव हृदयाद्यवदानसम्भवात्'। (१.१.२)

एवञ्च मरणस्योद्देश्यकोटावप्रवेशात्क्वचिज्जायमानमपि तद् आमिक्षोद्देशेन तप्तपयसि दध्यानयने क्रियमाणे वाजिनवदनुनिष्पाद्येव भवति न सर्वत्र नियतम्। अत एवानुनिष्पादिमरणानुकूलव्यापारो हिंसेति लक्षणं यागीयपशुमारणे क्रियते तान्त्रिकैः।

तथा च सिद्धे मरणस्यानुद्देश्यत्वे प्रागुक्तरीत्या वैकृतेष्टिविधिषु 'वासो ददाति' 'अनो ददाती'ति विहितवासः शकटादिषु दक्षिणासु प्रकृतौ अन्वाहार्यौदने श्रुतस्यापि श्रपणस्य नावश्यकत्वात् लुप्तार्थतया बाध इव मरणस्यानुद्देश्यत्वेन संज्ञपनविधावपि तदर्थव्यापारोऽनावश्यक एव प्रकृतिदृष्टोऽपि।

तथा च याजकानामृत्विजां युगान्तरीयाणां स्वीयसङ्कल्पविशेषादिप्रभावेण पशुजीवनादृष्टविपच्यमानताभिभवेन मरणपर्यन्ततानयनकल्पनमपि अयोग्यमेव। तादृशव्यापारस्य तपोविशेषादिगुणभेदेन कलियुगीयपशुसंज्ञपनविधौ विधीयमान-भावनातो विजातीयत्वेन कलियुगपर्यन्तपशुसंज्ञपनविधायकसंज्ञपनविधिना ग्रहीतु-मशक्यतया तद्विधाने तादृशसङ्कल्पादेरविहितत्वेन 'मा हिंस्या'दिति निषेधगोचरत्व-स्यानिवार्यत्वाच्च। तथा च युगान्तरे छागादिपशोरपि मरणस्यासम्भवदुक्तिकत्वे 'मा गामनागामदितिं वधिष्ट' इति विशेषतो निषिद्धवधायाः गोः मरणकल्पनं निर्युक्तिकमेव।

किञ्च प्रागुक्तरीत्या सद्य एव ब्रह्मज्ञानोद्भवेन वीतमोहतायाः संज्ञप्यमानपशौ युगान्तरे स्वीकर्तुं शक्यतयापि यावत्प्रारब्धोपभोगं पशोर्मरणकल्पना अनुपपन्नैव तिलशश्छिन्नेऽपि शरीरे। ज्ञानसाधनानि कथं तत्र समायान्तीति तु न शङ्क्यम्। 'सङ्गृह्य मुखं तमयन्ती'ति कात्यायनेन हि श्वासनिरोधनात्मकत्वमेव मारणस्योक्तम्। तस्मिन्ननुष्ठीयमाने प्राणवहनाडीनां मलिनानां प्राणगतिप्रतिरोधकतया देहगत-विषापसरणाक्षमत्वेन मर्मवैकल्यद्वारकजीवनक्षयहेतुत्वं वर्तमानयुग एव सम्पद्यते। युगान्तरे तु शुद्धशरीराणां कामरूपाणां जन्तूनां निरुद्धश्वासानां सुषुम्नायामेव सद्यः प्राणप्रवहणं योगशास्त्रसङ्केतसिद्धम्। तथा हि—षण्मुखीमुद्रामधिकृत्योक्तं हठ-प्रदीपिकाज्योत्स्नादिनिबन्धेषु—

'श्रवणपुटनयनयुगलघ्राणमुखानां निरोधनं कार्यम्।
शुद्धसुषुम्नासरणौ स्फुटममलः श्रूयते नादः'।।

'षण्मुखीमुद्रया नादानुसन्धानमाह। श्रवणेति। श्रवणपुटे। नयनयोर्नेत्रयोर्युगलं युग्मम्। घ्राणपदेन घ्राणपुटे। मुखमास्यमेषाम्। .......तेषां निरोधनं कराङ्गुलीभिः कार्यम्..... शुद्धा प्राणायामैर्मलरहिता या सुषुम्नासरणिः सुषुम्नापद्धतिस्तस्याममलो नादः स्फुटं व्यक्तं श्रूयते'। इति। (चतुर्थोपदेशे, ६८)

तथा च योगमार्गेण ब्रह्मानुभवः प्रोक्तपशुसंज्ञपनस्थले सम्भवदुक्तिक एव।

ननु षण्मुखीमुद्राकरणं मनुष्यैकसाध्यम्, पशुषु कथं मुद्रायाः सम्भव इत्यपि नाशङ्कनीयम्, तथा हि—'अथ नवमे मासि' इत्यादिना तत्रैव दत्तोत्तरत्वात्।

सांख्यमार्गेणापि स उपपद्यते। वेधदीक्षाप्रदातॄणां महर्षीणां याजकानां सत्त्वे तद्दृष्टिपातस्पर्शवेधादिना तदुपदेशसाहाय्येन सर्वस्यापि पूर्वोक्तस्य सम्भवाच्च। अनयैव च रीत्या—

'अनिलो मृगनाभिरेणुगन्धिर्हरवामाङ्गकुचोत्तरीयजन्मा।
हरते मरणश्रमं नराणामधिकाशि प्रणवोपदेशकाले'।।

इत्युपपादितो मरणोत्पत्तिक्षण एव ज्ञानलाभः 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु' इत्यादि-श्रुत्युक्तः—

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्'।

इत्यादिभगवद्गीतोक्तश्च स सङ्गच्छते। ध्वंसविशेषात्मकमरणप्राक्क्षणे ज्ञानजनकमनः-संयोगसत्त्वेन हरवामाङ्गकुचोत्तरीयजन्मानिलसंयोगविशेषजनितायां दुःखानुत्पत्तौ मोहहेतुशोकभयाद्यनुत्पत्तौ च सर्वस्यापि पूर्वोक्तपदार्थजातस्योपपत्तेः। एवञ्च बलिदानादिस्थाने खड्गाभिघातादिना शिरश्छेदनेन पशुघातनेऽपि तेषामुक्तरीत्या ब्रह्मज्ञानित्वे अमरणमेव युगान्तरे, वर्तमाने युगे च एषितव्यम्। अत एवाप्पय्यदीक्षितादिचरित्रेषु यागे दीक्षितेन्द्रैर्दृष्टिदीक्षया पशूनां ब्रह्मोपदेशः समुपवर्ण्यते। 'मा गामनागामदितिं वधिष्टे'ति विशेषतो निषिद्धवधायाः गोः संज्ञपनप्रसक्तौ एते नियमाः सर्वेऽपि परिपाल्यतयैव स्वीकर्तुमुचिताः।

'ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम्'।

इति वचनेन ब्रह्मज्ञानयोग्यतायास्तत्र विशेषतः समुपवर्णनदर्शनात्। अत एव च—

'पृथुपीनोन्नतश्रोणिस्तनुजङ्घा सुहृत्प्रिया।
पितृदेवार्चनरता दृढारम्भा प्रजाहिता।।
स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता'।।

इत्यादिगोशीलनिरूपणम्,

'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते।
कृच्छ्राय तपसे चेह प्रेत्यानन्तफलाय च'।।

इति ब्राह्मणशीलवर्णनञ्च समानमेव शास्त्रेषूपलभ्यते। गोसत्त्वस्य वैद्यकादिशास्त्रेऽपि देवादिसत्त्वतुल्यतया वर्णनञ्चात एवोपपद्यत इति सिद्धममुनापि प्रकारान्तरेण युगान्तरे गवां प्राणानुत्क्रमणस्य सिद्धेरमरणम्।

पूर्वोक्तस्य ब्रह्मज्ञानोदयस्य वेधदीक्षाकुशल-ऋत्विङ्मात्रकर्तृकत्वेन वाजिनवत् क्वचिदनुनिष्पादित्वात्सर्वत्र चानियतत्वात् प्रागुक्तरीत्या क्रत्वनङ्गत्वाच्च 'शामित्रञ्च

द्विजातीनाम्' इति कलिवर्ज्यप्रकरणे विप्रमात्रपर्युदासेन शामित्रविधानाभ्युपगमात् पशुयागस्य कलाववश्यानुष्ठेयताप्रतीतेः, तस्मिन्ननुष्ठीयमाने ज्ञानोदयवैकल्यात् पशुमरणसम्प्रतिपत्तावपि न कोऽपि शास्त्रलोकयोर्विरोध इति विभावनीयम्।

स्यादेतत्। युगान्तरीयवर्णनानुसारेणास्थिगतप्राणाद्युपगमे सहस्रसंवत्सरसत्र-विधायकवाक्येषु संवत्सरशब्दस्य अहःपरतया निर्णयनं षष्ठाध्याये मीमांसकानां विरुद्ध्येत। अतो युगस्वभाववर्णनं पुराणादिषु श्रूयमाणं मीमांसकानां सम्प्रतिपन्नमेवेति तन्मतानुसारेण गोर्मरणकल्पनं नानुपपन्नमिति।

अत्र प्रतिविधीयते। पूर्वोक्तसमस्तपुराणस्मृतिवैद्यकतन्त्राद्यभ्युपगतस्य युगस्वभाववर्णनस्य सामवेदीयवंशब्राह्मणाद्यध्ययनफलविधिसमाकाङ्क्षितस्यानभ्यु-पगमो मीमांसकानामिति कथनमेव निर्युक्तिकम्। सहस्रसंवत्सरसत्राधिकरणं तु कृत्वाचिन्तयैव प्रवृत्तमिति वस्तुस्थितिः। तदुक्तं भाट्टदीपिकायाम्—

'इदञ्च कृतादियुगान्तरेष्वपि मनुष्याणां शतमेव परमायुरिति कृत्वाचिन्तया। यदा तु स्मृतिपुराणेतिहासादौ श्रुतस्य प्रकृष्टतरज्ञापकबलेन सहस्रसंवत्सरपरिमित-स्यायुषोऽपि प्रकृतश्रुत्युपष्टब्धस्य प्रामाणिकत्वम्, एतज्ज्ञापकबलेनैव च 'शतायुर्वै पुरुष' इति श्रुतौ शतान्यायुर्यस्येति विग्रहः, कलियुगाभिप्रायकत्वं वाऽऽश्रयणीयं, तदा त्रिवृदादिशब्देनाहस्सङ्घमेव त्रिवृत्स्तोमकाहर्घटितत्वसम्बन्धेन लक्षयित्वा संवत्सरशब्दो यथाश्रुत एव। सत्रञ्च गोवधादिवद्युगान्तरस्थतावदायुष्कमनुष्यपरमिति ध्येयम्। न हि मीमांसकमते युगादिव्यवस्थाऽलीका, तत्तद्युगधर्मव्यवस्थापक-स्मार्तविधीनां निर्विषयत्वापत्तेरिति'।

तत् सिद्धं गोर्मरणमसम्भवदुक्तिकमेवेति।

'पशु'मिति द्वितीयोपपत्तये मरणरूपफलेच्छाधीनव्यापारविषयत्वरूप-फलाश्रयत्वे अभ्युपगम्यमाने मरणाश्रयत्वं कथं नाङ्गीक्रियत इति तु न शङ्क्यम्, गर्भाधानपुंसवनादिकर्मभिर्हि स्त्रीशरीरं संस्क्रियत इति सर्वतन्त्रसिद्धान्तः। तत्र धात्वर्थभूतस्य कर्मणो गर्भपुरुषप्रजादिजनकतावच्छेदकवैजात्याश्रयस्यैव केवलं निष्पत्त्या स्त्रीणां संस्कारोऽभ्युपगम्यते। न खलु दशरथस्त्रीणां बहुकालं पुत्रोत्पत्त्यभावेऽसंस्कृतत्वं सावित्रीश्रोतुर्वा कैश्चिदभ्युपगम्यते। तथा च तत्तत्फलेच्छायां सत्यां समनुष्ठितस्याऽपि व्यापारस्य दैवप्रतिबन्धात्फल-जननाक्षमत्वेऽपि भावनाभाव्यस्य निष्पत्तौ सत्यां विध्यर्थश्चरितार्थो भवतीत्येव सर्वैरङ्गीकर्तुमुचितम्। स च न्यायः संज्ञपनस्थलेऽप्यविशिष्ट एवेति।

तथा च कदाचिद् विसंवादिन्या अपीच्छायाः प्रयोजनविशेषोद्देशेन विधानं दृश्यते। यथा पुरुषपरीक्षायाम् इयं कथा श्रूयते।

आसीदुज्जयिन्यां पुरि विक्रमादित्यो नाम राजा। तत्र कश्चिदेको ब्राह्मणः शिरोवेदनाग्रस्तस्तस्य द्वारमाजगाम। ब्राह्मण उवाच—

अत्याज्यं हि व्रतं राज्ञः प्रजानां परिपालनम्।
दुर्गतव्याधितार्त्तानां ब्राह्मणानां विशेषतः।।२।।

ततो मां दुर्गतं व्याधिपीडितं ब्राह्मणं त्रायतां देवः। राजा तं ब्राह्मणं तथाविधं दृष्ट्वा करुणार्द्रहृदयः किमत्र भविष्यतीति जिज्ञासुर्वराहनामानं ज्योतिश्शास्त्रविदं प्रत्यब्रवीत्। हे वराह! कच्चिदयं ब्राह्मणो जीविष्यति? वराह उवाच— अकृतमद्यपानो न नीरुग् भविष्यति जीविष्यति पुरुषायुषम्। तदाकर्ण्य राजा चिन्तयामास। अहो! शास्त्रदृष्टिरसौ किं ब्रूते। कथमप्रसक्तमुपदिशति ब्राह्मणस्य कुतो मद्यपानप्रसङ्गः। भवतु पश्यामि तावत्। ततो राजा हरिश्चन्द्रनामानं भिषजमाहूयादिदेश—भोः कोऽस्य व्याधिः का वा चिकित्सा? भिषगुवाच—देव! व्याधिर्ब्रह्मकीटः प्रतिक्रिया काचिन्नास्त्येव। राजोवाच—व्याधेर्भेषजं न कृतं विधिनेत्यसम्भाव्यम्। भिषगुवाच—ब्रह्मकीटः शिरोरोगोऽस्य भवति तेनायं वेदनाविह्वलो विद्यते। स ब्रह्मकीटो नाग्निना दह्यते न लोहेन भिद्यते न जलेन क्लिद्यते केवलं मद्येन म्रियते। तन्मदिरैवास्य भेषजम्। राजोवाच—शान्तं पापम्। ब्राह्मणस्य मदिरा दातव्या। भिषगुवाच—तया बिना ब्राह्मणो न जीविष्यतीति निश्चयः। राजा परमधार्मिकः परदुःखं प्रतिचिकीर्षुः शबरस्वामिनमाचार्यं धर्मशास्त्रविदमाहूय पृष्टवान्—अयि! किमत्र विधेयम्? आचार्य उवाच— अन्यथाऽसाध्ये व्याधिप्रतीकारे मद्यपानैकसाध्यायां ब्राह्मणस्य प्राणरक्षायां यदि वैद्यो निश्चितज्ञानो भवति तदाऽस्य प्राणरक्षार्थिनो ब्राह्मणस्य मद्यपानेनापि न पापं भवति। वैद्य उवाच—यद्ययं मदिरापानं विनोपायान्तरेण जीवति ब्राह्मणस्तदाऽहं पातकी भवामि। ततो राजा तयोरुभयोरपि स्वस्वशास्त्रसिद्धान्तदार्ढ्यं श्रुत्वा ब्राह्मणाय मद्यं पातुमादिदेश। तत्रोपनीते च मद्ये तदाऽऽकाशवागभूत्। रे शबर! मा साहसं कार्षीः। तदाकर्ण्य शबरस्वाम्युवाच—पिब रे ब्राह्मण! मद्यम्। वाग्देवतेयं वर्णपदवाक्योपचयमात्रकुशला किं जानाति धर्मस्य निर्णयम्। तदनन्तरं शबरस्वामिनः शिरसि पुष्पवृष्टिर्बभूव। तया पुष्पवृष्ट्या श्रद्धालुः सभासद्भिः सहितो राजा शबरस्वामिनो वचनमादृत्य ब्राह्मणाय मद्यं दापयामास। ब्राह्मणस्य त्वाजन्मनो मद्यास्वादाज्ञतया तद्गन्धपराभूत एव ब्रह्मकीटो नासारन्ध्रेण भूमौ निपपात। निपतितं कीटं राजा वैद्यवचनपरीक्षाकुतूहली वह्नौ चिक्षेप। ततो वह्निक्षिप्तमदग्धं वारिणि प्रवेशितमक्लिन्नं विदारितमनवदीर्णं मद्यबिन्दुना विलीनं दृष्ट्वा सर्वे साश्चर्या बभूवुः। राजोवाच—भो वैद्य! कीदृशस्ते शास्त्रनिश्चयः। यतस्त्वया

मद्यपानमुपन्यस्तम्, व्याधिस्तु मद्यगन्धेनैव निराकृतोऽभूत्। वैद्य उवाच—देव! यदि मद्यगन्धग्रहणमेवोपन्यस्तं स्यात्तदा मद्यपात्रं ब्राह्मणः [illegible] एवञ्च मदिरागन्धोऽपि नास्य शिरसि यथावत् प्राविशत्। तदा मया [illegible] राजोवाच—साधु वैद्य साधु। सभासद ऊचुः—देव! साधूक्तं [illegible] तत्सर्वं सभ्यसाक्षिकमेव जातम्। शबरस्वामिना च [illegible]-वृष्टिसाक्ष्येव साधूक्तम्। ततः स्वस्वशास्त्रसिद्धान्तज्ञा एवामी त्रयोऽपि। तथा हि—

धन्यस्त्वं नृपतिर्धरा भगवती धन्यैव धन्या वयं
धन्या सर्वगुणान्वितैः सुकृतिभिर्जुष्टा तवेयं सभा।
रुग्भैषज्यबुधो यथार्थवचनः सन्देहनिर्णायको
यत्रायं भिषगस्ति यत्र गणको यत्रैष मीमांसकः॥३॥

ततो राज्ञा जाताहङ्कारेण पुलकितेन परमोत्साहचेतसा त्रयोऽपि शास्त्रविदः काञ्चनैः करिभिस्तुरङ्गैर्वासोभिश्च पूजितास्तस्य स्वायत्तसिद्धेर्नृपस्योपकरणानि बभूवुः। स नीरुग् ब्राह्मणोऽपि सुवर्णेनादरिद्रीकृत्य गृहं प्रस्थापित इति।

अत्र हि पानस्य गलविलाधःसंयोगानुकूलव्यापाररूपस्य तादृशसंयोगविशेषेच्छया अनुष्ठीयमानस्यैव तादृशेच्छाजन्यतावच्छेदकवैजात्याश्रयत्वेन रोगविशेषनिबर्हणक्षमत्वमिति तादृशेच्छाविशेषस्य विहितत्वेऽपि विसंवादित्वमेव विधिसम्प्रतिपन्नमित्यावेद्यते। तादृशान्तिमफलरूपगलविलाधःसंयोगात् प्रागेव फलसिद्धौ सत्यां लुप्तार्थतया तदूर्ध्वतनव्यापाराणामननुष्ठानञ्च प्रतिपाद्यते। अनेनैव न्यायेन 'पशुं संज्ञपयती'त्यादौ विसंवादीच्छाधीनव्यापाराणामेव धात्वर्थत्वाभ्युपगमान्न कापि क्षतिः। प्रयोजननिवृत्तौ सत्यां तदुपरितनव्यापाराणां लुप्तार्थतया बाधस्यैव शास्त्रसम्मतत्वात्। न हि 'कृष्णविषाणया कण्डूयती'ति विहितं कृष्णविषाणाश्रितकण्डूयननियमरूपमङ्गमाश्रयस्य कण्डूयनस्यानुत्पत्तावपि परमापूर्वोत्पत्त्यर्थमवश्यमनुष्ठेयमिति केचिदभ्युपगच्छन्ति। नियमादृष्टस्थले नियमव्यावर्तितद्रव्यगुणक्रियादीनां प्रयोगमध्यवर्तिनां यागादृष्टप्रतिबन्धकत्वस्यैव मीमांसकमतसिद्धत्वात् तत्परिहारमात्रस्यैवैवंविधस्थलेऽत्यन्ताभीप्सितत्वात्। तदुक्तं मीमांसाकौस्तुभे तेषामर्थाधिकरणे—

'न चैवं व्रीहियवव्यतिरेकेण गोधूमादिप्रकृतिकपुरोडाशादिघटितसामग्रीवशेनाग्नेयत्वादिरूपव्यापकधर्मावच्छिन्नोत्पत्तौ बाधकाभावेन वैगुण्यानापत्तिरिति वाच्यम्, व्रीह्यादिनियमविध्यनुरोधेन व्रीहियवेतरगोधूमादिप्रकृतिकत्वस्य व्यापकधर्मावच्छिन्नाग्नेयोत्पत्तौ वा प्रतिबन्धकत्वकल्पनात्' इति।

कण्डूयनाश्रितकृष्णविषाणानियमस्य स्वातन्त्र्येण यागापूर्वसाधनत्वे हि कण्डूयनरूपाश्रयरहितप्रयोगे उत्पत्त्यपूर्वानुत्पत्तिर्दुष्परिहरैव, अत एतादृशस्थले प्रतिबध्यप्रतिबन्धकभावविशेषस्यैव सूचकोऽयं कौस्तुभग्रन्थः। अस्तु वा प्रयोजनवत्प्रयोगीयापूर्व एव तादृशाङ्गानां कारणत्वमङ्गीकृत्य तादृशप्रतिबन्धकत्वानुपगमपक्षोऽपि भाट्टचिन्तामण्याद्यादृतः। तथापि लुप्तप्रयोजनस्थले नियमादृष्टमनपेक्षितमित्यत्र तु सर्वेषामविप्रतिपत्तिरेवेत्यत्र नास्ति संशयावकाशः।

अत एव असम्भवनादिनिरासार्थं 'श्रोतव्यो मन्तव्यः' इत्यादिवाक्येन मननादिनियमविधानेऽपि स्वतः सन्देहरहितानां मननादिलोप एवेत्युक्तं ब्रह्ममीमांसायाम्। अत एव पूर्वमीमांसायामपि प्रवृत्तिप्रतिबन्धकालस्यादिसत्त्वे तद्विगमाय अध्ययनविधिलभ्यार्थवादादिजन्यप्राशस्त्यज्ञाननियमस्य अङ्गतया स्वीकृतत्वेऽपि स्वत एव तादृशालस्यरहितानां प्रयोगे अर्थवादादिकृतप्राशस्त्यज्ञानस्य अनावश्यकताऽपि सिद्धा भवति। एतादृशप्रयोगभेदस्य प्रामाणिकत्वादेव च—

'अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः'।।

इत्यादिवचनानां प्रयोगान्यत्वपरतया उपपत्तिः। न हि स्वरूपतः अग्निहोत्रादिक्रियाणां भेदः शास्त्रसम्मतः। शब्दान्तरादिभेदकप्रमाणाभावे तत्स्वीकारस्य शास्त्रयुक्तिविरुद्धत्वात्। कलियुगीयसंज्ञपनघटितप्रयोगस्य मरणपर्यन्तव्यापारसाध्यत्वेऽपि श्रवणमननादिघटितब्रह्मज्ञानार्थप्रयोगस्येव अनासन्नफलतया एकपादधर्मत्वं कृतयुगादिप्रयोगाणाञ्च आसन्नफलतया चतुष्पात्त्वमित्यादिवर्णनमपि साधु सङ्गच्छते। तथा चोक्तप्रयोगभेदनियामकशक्तिभेदस्यापि युगभेदेनावश्याङ्गीकरणीयतयैव च दण्डापूपिकयैवास्थिगतप्राणादियुगान्तरीयस्वभाववर्णनानां स्वार्थपरत्वमप्यत एव सिद्ध्यति। तथा च संज्ञपननियमविधिबलादपि न सर्वत्र पशोर्मरणं कल्पयितुं युज्यत इति सिद्धम्।

वस्तुतस्तु 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यादौ 'इष्टकाभिरग्निं चिनुते' इत्यादिविध्यन्तरादेव इष्टकापाकाऽग्नीनां प्राप्तत्वात् प्राप्ताप्राप्तविवेकेन मन्थनप्रभवत्वमात्रमेव निर्मन्थ्यपदार्थैकदेशो विधेयः। तथा 'साकंप्रस्थायीयेन यजेते'त्यादौ प्रधानविधिनैव ऋत्विजां यागस्य तत्प्रचारस्य च प्राप्तत्वात् साकंप्रस्थायीयपदार्थैकदेशः सहत्वमात्रमेव विधीयते प्राप्ताप्राप्तविवेकेनेति मीमांसकानामभ्युपगमः। तथैव प्रकृतेऽपि 'हृदयस्याग्रेऽवद्यति' इत्यादिविधिभिः अवदाने विधीयमाने सति हृदयादिभ्यः प्राणवियोगानुकूलव्यापारस्यापि

नूतनं संयोज्य अभिनवभारतीग्रन्थानुपूर्वीमेवोद्धरति। अक्षराणि मेलयित्वा दृष्टवानस्मि, परं हन्त! तत्प्रक्रियां स्थिरीकर्तुं समयसौविध्यं न लभे। ग्रन्थानाञ्च दारिद्र्यं विद्यत एव। एतत्पूर्तये विद्वांसो मया प्रार्थिताः प्रायो न केचन तत्र अवदधते। पश्यामि कदा भगवदनुकम्पा समुदेति तत्पूरयितुम्।

८. रसविदामेव सरणिर्यदि लेखकैः स्वीकृता भवेत्, तदा न कमपि प्रत्यवायं तत्र पश्याम इति परीक्षणलेखः।

कथं प्रत्यवायदर्शनं स्यात्? धर्मस्य अधर्मस्य च तत्त्वं गुहायां निहितम्। कुसुमाञ्जलिग्रन्थस्य जीवेश्वराभेदे शुद्धचैतन्ये च न तात्पर्यम्। तादृशा-सत्यतात्पर्यवर्णनद्वारा अधिकारिजनभ्रमापादने प्रत्यवायानुमानं केन वार्यताम्, यदि हि असत्याद् भवति प्रत्यवायः।

इदन्तु अवधीयतां पाठकैः—स्वीया कल्पनेति चेत् लेखकमहोदयानां तदा समीचीनैव। अन्यैरपि एतादृशी प्रक्रिया उपस्थाप्यते, परं प्राक्तनैरंशैरेषा ततो विशिष्टा अन्यदर्शनानां ग्रन्थाभिप्रेतोऽयं प्रकार इत्येव न सम्भवति, अन्यदर्शन-ग्रन्थानामद्वैतदर्शनसिद्धान्तस्य खण्डने प्रवृत्तत्वात्।

९. यस्तु क्वचिन्नैयायिकमतखण्डनाभिनिवेशो वेदान्तिनां दृश्यते, स तु पारमार्थिकत्वाभिनिवेशवतां भेदवादिनामेवेति परीक्षणलेखः किमभिप्रैतीति न प्रतिभाति। किं न्यायसांख्यादिखण्डनाभिनिवेशवतः श्रीशङ्करभगवतोऽपि भेदवादिनो वदति?

१०. विचारकमहोदयस्य मते तु इत्यादीनि परीक्षणवचनानि तु दुरभिसन्धिमन्ति, मुद्रितानि अपि ममाक्षराणि परिवर्त्य अभिप्रायान्तरारोपपराणि विचारलेखे स्फुटं लिखितानि सत्यानि, शारीरकभाष्यादेव प्रतीयते यद् दर्शनान्तराणामपि उपनिषदां भाष्याणि वृत्तयोऽध्यापनप्रणाली वा आसीदेव। वैदिकदर्शनानि सर्वाणि उपनिषदनुसाराणि, केवलमुपनिषदां व्याख्याभेदः, सोऽपि व्याख्याभेदो दर्शनग्रन्थेषु सङ्क्षेपेण सूच्यते, ते च ग्रन्था व्याख्यायाः कालक्रमाद्विलुप्ताः, यथा कुसुमाञ्जलिलेखकमहोदया लिखन्ति—'बौद्धधर्मानुसारिणां राज्ञां काले वर्णाश्रमिणां विद्याः क्रमशो विलुप्यमाना आसन्' इत्यादि। अहन्तु बौद्धदर्शनग्रन्थेषु वैदिकदार्शनिकानां नामैव लभे, यस्य इतिहासेऽपि चर्चा नास्ति, तस्य ग्रन्थानां का दशा? गीतोपनिषदोः किमाश्चर्यं भाष्यविधानं ब्रह्मसूत्रस्यापि द्वैतभाष्यमधीयत एव, अतो न दार्शनिकग्रन्थसमन्वयपुरस्सरं सर्वेषां दर्शनाना-मद्वैतदर्शने तात्पर्यवर्णनं सम्भवति।

११. उदयनाचार्यप्रदर्शितः चरमवेदान्तमतोपसंहारोपेक्षया न्यायमतोपसंहारः सप्तमभूमिकायामिति परीक्षकस्य मनसि नारोहति, तत्र किं मया कर्तव्यम्? ग्रन्थस्तु क्रमशो विचारलेखे समुद्धृत एव वर्तते।

केवलोऽपि आत्मा न विकल्पत इति निर्विकल्पकविज्ञानवस्तु आदाय चरमवेदान्तमतोपसंहारः प्रतिपादितः। तस्य निर्विकल्पकवस्तुनः स्वयं निर्वाणावस्थामादाय न्यायमतोपसंहार उक्तः, तथा च भूमिकाभेदोऽवश्यं वर्तते। तत्र किं मया समर्थनीयम्? किं निर्विकल्पावस्था? निर्विकल्पावस्थाया निर्वाणञ्च एकस्यां भूमिकायां सम्भवति? किं वस्तु तन्निर्वाणयोर्न स्वरूपतो विरोधो येन भूमिकाभेदोऽसम्भवः? सा च न हेया इति कथनेन उपादेयत्वं तस्यावश्यमायाति परं निर्वाणेन साकं तस्या विरोधः, तत्प्रयुक्तो भूमिकाभेदश्च कथमपसरति? मोक्षनगरगोपुरसदृशत्वप्रतिपादनेनापि न न्यायमतचरमत्वं तस्य आयाति, यतो हि गोपुरमेव न अन्तःपुरम्। अन्तःपुरन्तु न्यायमतचरमं निर्वाणम्। स्वयमेव निर्वाणमित्यत्र एवकारेण अवश्यं कर्तव्यान्तरं वारयति, परं वस्तुस्वाभाव्यात् स्वयं परिवर्तनन्तु स्फुटं वक्ति। अत्र उपसंहारशब्दार्थः परीक्षकनिर्दिष्टो नास्ति, किन्तु चरमं प्राप्यं वस्तु समाप्तिपर्यवसितम्। अनेन दर्शनेन आत्मोपासनया इदं वस्तु प्राप्यम्, तदनन्तरमात्मोपासना समाप्नोतीत्यर्थः।

१२. नित्यसुखखण्डनन्तु भाट्टमतनिरसनाभिप्रायेण पूर्वं कृतमाचार्यैः, इत्यादिपरीक्षणलेखो निरीक्ष्यतां पाठकैः। ग्रन्थस्य मूले भाट्टमतं वेदान्तिमतञ्च किमपि नास्ति। नित्यसुखस्य खण्डनं विद्यते। तद्भाट्टमतनिरसनाभिप्रायकमेवेति कुतोऽवधार्यते? भाट्टसम्मतं नित्यसुखं खण्ड्यते, वेदान्तिसम्मतञ्च नित्यसुखमङ्गीक्रियत इति कुतो ग्रन्थादायाति? एवमेव निस्सारमेव लिखित्वा वृथा श्रममर्पयति परीक्षकः। दीधितिकृता नित्यसुखमङ्गीक्रियते, एतावता उदयनाचार्यस्य किमागतम्? कः प्रसङ्गो दीधितिकारस्य? प्रथमलेखकेन उदयनाचार्यस्यैव वेदान्तप्रवणता प्रतिपादिता, अहञ्च उदयनाचार्यग्रन्थविरोधं प्रादर्शयम्। तत्र दीधितिग्रन्थः किं कुर्वीत?

आत्मनो नित्यसुखरूपतायामुपनिषद्विरोधः प्रतिपादित एव। आत्मनः सुखरूपतामवभासयन्त्याः श्रुतेरपि तात्पर्यं स्फुटं प्रदर्शितमास्ते। मूले ग्रन्थे श्राद्धोऽसीत्यादेस्तात्पर्यं मम विचारलेखे वर्तत एव कृतप्रदर्शनम्।

१३. प्रतीकोपासनाप्रसङ्गेन 'सत्यपि भेदे उपपद्यत इति। तत्रापि न नैयायिकविरोधि किमपि प्रतीयते' इत्यादिपरीक्षणलेखोऽपि आलोक्यताम्।

आर्षोपदेशं विना न किमपि प्रतीकमुपासनायै अङ्गीकुर्वते आस्तिका वैदिकाः। जठराग्नेरुपासनायां शास्त्रं वर्तते तदङ्गीकुर्वते। नोपादानगोचरापरोक्षचिकीर्षा-कृतीनामीश्वरत्वेन उपासना शास्त्रसम्मता, न वा उदयनाचार्यप्रतिपादिता, नापि तादृक् प्रतिपादयितुं प्रभवति आचार्यः। तथा च तादृशी उपासना सर्वशास्त्र-विरुद्धा। किमु वक्तव्यं नैयायिकविरोधित्वम्।

१४. 'अधीत्य गौतमीं विद्या'मित्यादिना न्यायशास्त्रमाक्षिपति परीक्षकः। अद्वैतदर्शनस्य अद्वैतसम्प्रदायस्य च निन्दा पुराणेषु नोपलब्धा, तेन प्रसिद्ध-दार्शनिकग्रन्थेऽपि समुद्धृता सा नोपलब्धा चेद् ग्रन्थनिर्देशमात्रं विधास्यामि स्वयञ्च निन्दाविमुखः साम्प्रदायिककलहे न पतिष्यामि। प्रामाणिकास्तु विद्यारसिका-स्तत्तच्छास्त्राणां प्रशंसावचनानि अनुरुध्य निन्दावचनानां तात्पर्यगतीर्वर्णितवन्त एवेति किमत्र समुद्धरणेन।

१५. आनन्दरामायणस्य समुद्धरणं हठादेव प्रतिभाति। वेदोपनिषदामर्थे न्यायाध्ययनस्य प्रशंसामेव विदधाति। सर्वाणि हि वैदिकदर्शनानि वेदोपनिषदामर्थे वर्तमानानि, अत एव वैदिकदर्शनानि, वेदोपनिषद्विरोधप्रतिभानन्तु सम्यक् परिशीलनमन्तरा दर्शनानां सिद्धान्तभेदस्तु वेदोपनिषदां व्याख्याभेदात्। सर्वाणि हि वैदिकदर्शनानि ब्रह्मजिज्ञासां कुर्वन्ति, ब्रह्म विवेचयन्ति च।

अतः कण्ठपाशः सत्यापलापिनामेव कण्ठमभिलपति, न तु वैदिक-दर्शनाध्येतृणाम्, अतः सर्वथा निस्सारमेवेदं परीक्षणम्। अलमत्र विशेष-विद्योतनेनेति।



# न्यायकुसुमाञ्जलिविचारपरीक्षण-यथार्थ्यानुसन्धानम्

**श्रीहरिरामशुक्लः**
श्री-व॰ शा॰ साङ्गवेदविद्यालयः
काशी



(प्राचीनैः पाठकैः एकदा पुनरपि गतवर्षीय'संस्कृतम्'पत्रस्याङ्का निरीक्षणीयाः। तत्र २५-२६ संख्ययोः काशिकपण्डितराजश्रीराजेश्वरशास्त्रिद्राविड-महोदयस्य 'न्यायकुसुमाञ्जलिः' इति शीर्षकेण प्रकाशित एको लेखः। तत्र ३१-३२-३३ संख्यासु 'न्यायकुसुमाञ्जलिस्तदुपरि विचारः' इति शीर्षकेण पटना-गवर्नमेन्टसंस्कृतकालिजाध्यापकश्रीकेदारनाथ-ओझामहोदयस्य लेखः प्रकाशितः। तत्र ४२ संख्यायां 'न्यायाकुसुमाञ्जलिलेखविचारपरीक्षणम्' इति शीर्षकेण सुप्रसिद्धकाशिक-श्री व॰ शा॰ साङ्गवेदविद्यालया-[ विशुद्धसंस्कृतविश्वविद्यालया ] ध्यापकस्य श्रीहरिरामशुक्लमहोदयस्य प्रकाशितो लेखः। तत्र 'न्यायकुसुमाञ्जलि-विचारपरीक्षणनिरीक्षणम्' इति शीर्षकेण ४६-४७ संख्ययोः श्री-ओझामहोदयस्य लेखः पुनः प्रकाशितः। इत्थं ८ लेखानां प्रकाशनानन्तरमयमपूर्णविचार एव शास्त्रार्थः स्थगितोऽभूत्, यतः संस्कृतपरीक्षाणां समयो निकटे वर्तते स्म। अद्य श्रीशुक्लमहोदयेन स्वपक्षः पुनः स्थिरीक्रियते श्री-ओझामहोदयस्य निरीक्षण-मनुसन्दधानेन। अयमत्युत्कृष्टो दार्शनिकः शास्त्रार्थो महाविदुषां हर्षाय भविष्यतीति मे प्रत्ययः।—सम्पादकः)

संस्कृतपत्रपाठकमहोदयानां पुरतः पूर्वस्मिन् लेखे दार्शनिकानां भूमिकाद्वयं प्रदर्शयता कुसुमाञ्जलिभूमिकायां दर्शनानामेकवाक्यत्वभूमिकैव समादृतेत्युपस्थापितं मया। तदुपरि विचारकमहोदयेन भूमिकां तद्विषये मदीयं वक्तव्यञ्चाभिलक्ष्य ये विचारा उपस्थापितास्तत्र स्वीयमभिप्रायमुपाहरामि, पाठकमहोदया एव स्वीयं निर्णयमत्र विधास्यन्तीति विश्वसिमि।

१. उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमति उदयनाचार्यस्य स्फुटं तात्पर्यमुक्त्वा पश्चान्नित्यज्ञानादिरूप ईश्वर उदयनाचार्यसम्मत इति भूमिकालेखे विरोधमुद्भावयति विचारकमहोदयः।

अत्र विचार्यतां पाठकमहाभागैः कोऽत्र विरोधः? रूपशब्दो हि असाधारण-धर्मार्थकः, स च धर्मस्तादात्म्येन सम्बन्धी भवत्यन्यसम्बन्धेन वेत्यत्र नाग्रहः। न हि तादात्म्येन सम्बन्धिन एव रूपशब्दार्थत्वं नान्यसम्बन्धेन सम्बन्धिन इत्यत्र प्रमाण-मस्ति। प्रत्युत निम्नलिखितो गौडब्रह्मानन्दीग्रन्थः अस्मदुक्त एवार्थे प्रमाणभूत इति सहजतः स्फुटीभवति। तथा हि 'ननु तन्निषेधप्रतियोगित्वं स्वरूपेण उतासद्वि-लक्षणस्वरूपानुपमर्देन' इति अद्वैतसिद्धिवचनव्याख्यानावसरे 'स्वं निषेधप्रतियोगि तस्य यद्रूपमसाधारणो धर्मः दृश्यत्वादिः' (गौ॰ ब्र॰ निर्ण॰, पृ॰ ११४) इति।

किञ्च दूरत आत्मतत्त्वविवेकव्याख्यायां दीधितिकारा अपि 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इति श्रुतेरेव मानत्वात्, परमात्मनो बन्धमोक्ष-स्याप्यभावाद् आनन्दमिति श्रौतो लिङ्गपरित्यागः, रूपं धर्मः (आत्म॰ दी॰ ९३२) इत्यादिना रूपशब्दस्य उक्तार्थकतामाहुः। भास्कररायप्रभृतयोऽपि भगवत्यास्त्रीणि रूपाणि स्थूलं सूक्ष्मं परञ्चेति वर्णयन्तो भेदेऽपि रूपशब्दस्य प्रयोगमनुमन्यन्त एव।

२. यश्च चतुर्थस्तम्भे 'ईश्वरतत्त्वमुभयाविरुद्धं साधयन्ति' इति भूमिकांशमधि-कृत्य विचार उपक्षिप्तो विचारकेण तद्विषये अवान्तरमतभेदे सत्यपि स्वतो ग्राह्यत्वं मीमांसकैरेकस्वरेणोच्यते यथा तद्वदेवेयमुक्तिरिति भूमिकायां स्पष्टीकृतं पाठक-महाभागा विचारयिष्यन्त्येव।

३. एवं सुषुप्तौ ज्ञानाभावप्रतिपादिका आचार्योक्तिरपि न वेदान्तविरुद्धा यतो हि जीवनयोनियत्नः सुषुप्तौ नैयायिकैः स्वीक्रियत एव। यत्नस्यापि ज्ञानरूपत्वमिति हि वेदान्तसिद्धान्तः, न्यायरत्नावलीदर्शनेन स्फुटीभवति हि स्वनिरूपिताज्ञाना-विषयत्वप्रयोजकविशिष्टचिदभिन्नसाक्षिण एव ज्ञाधात्वर्थत्वं प्रतिपादितम्। साक्षिण एवेश्वररूपत्वं तत्रैवाभिहितम्। ज्ञानकृताज्ञानापसरणकालीनेच्छाकृतीनां ज्ञानत्वं तत्रैव स्वीकृतम्। नैयायिकाभिमतस्य जीवनयोनियत्नस्य 'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना' इत्यादि-भागवतानुसारेण ईश्वरकृति-रूपताया एव वेदान्तिभिरभ्युपेतत्वात् तादृशकृतेश्चापरोक्षज्ञानरूपतायां तेषाम-विवादात्। तस्माद् ज्ञानपदस्य उभयोर्मते विभिन्नार्थकत्वमेवेति नात्र कश्चिद्विरोधः। एवं सुषुप्तिकाले अदृष्टमप्यङ्गीक्रियते नैयायिकैः। तदपि ईश्वरेच्छारूपमेवेति वेदान्तसिद्धान्तः, अतो नात्र कश्चिद्विरोधः।

४. यानि चोदाहरणानि आत्मतत्त्वविवेकस्थानि वेदान्तविरुद्धानीति कृत्वा उदाहृतानि, तद्विषयेऽपि इदमेव निवेदनीयमस्ति। न्यायशास्त्रग्रन्थे स्वीयं विचार-मुद्भावयन्तोऽपि आचार्यमहोदयास्तथा प्रयतन्ते यथा स्वीया वेदान्तप्रवणता तत्रावश्यमेव प्रकटिता भवेदित्येव भूमिकायामभिप्रेतम्। तदनुसारेणालोचनं क्रियतां पाठकमहाभागैः आदौ 'न ग्राह्यभेदमवधूये'त्यादिपदघटके 'वलिनि' 'वेदनये' इति पदद्वयमाचार्याणां कीदृशीं वेदान्तप्रवणतां द्योतयति। (न्यायादेर्वेदनयत्वे सत्यपि) वेदान्तनये इत्यनुक्त्वा वेदनये इति पदं वेदमुख्यतात्पर्यविषयत्वं कस्य नयस्य द्योतयति। तत्रत्यं 'वलिनि' पदं च तस्यैव नयस्य बलवत्त्वं नान्यस्येति न सूचयति किम्?

आचार्यैः खलु वेदान्ताविरोधो यथा द्योतितः स्यात् तथा कियदत्र ग्रन्थे प्रयतितमिति कानिचन वाक्यान्युपस्थाप्य निवेदयामि। (आत्मतत्त्वविवेके, पृ.३७५) 'उत्पन्नश्च धर्माधर्मप्रचयो भोगेन क्षीयत इति न्यायानुसारेण सङ्क्षेप आम्नायसार-सङ्क्षेपस्तु अशरीरं वा वसन्तमित्यादि'। अत्र आम्नायान्तरसङ्क्षेप इति पदं किं न सूचयति वेदान्ते महतीं श्रद्धाम्?

५. अत्रैव ४४५ पृष्ठेऽपि आचार्याणामुल्लेखोऽवधेयः पाठकैः, तत्र हि 'श्राद्धोऽसि चेदुपनिषदं पृच्छे'ति ग्रन्थो न दर्शयति उपनिषच्छ्रद्धाम्, अग्रेऽपि च— 'नैयायिकोऽसि चेन्न वैषयिकसुखस्वभाव इति निश्चिनुयाः' अत्र न सुखस्वभाव इत्यनुक्त्वा वैषयिकपदोपादानं किं द्योतयति? 'वैषयिकसुखातिरिक्ते लौकिकानां सुखव्यवहारो नास्ति' इयमप्याचार्योक्तिर्वेदान्ताविरोधायैव।

६. यच्च तादृशसर्वज्ञत्वस्य योगजधर्मजन्यत्वेनानीश्वरत्वफलकत्वं बौद्धानां पक्ष इति भूमिकालेखो बौद्धग्रन्थसन्दर्भेण साधनिकामर्हतीति विचारकमहोदये-नाकाङ्क्षितमस्ति, तत्रेदमेव वक्तव्यमस्ति बुद्धस्येश्वरत्वं बौद्धमतसिद्धमिति आचार्यैः कुसुमाञ्जलिग्रन्थ एव प्रतिपादितं यदस्ति तदतिरिक्तस्य बौद्धग्रन्थोद्धरणस्य आचार्याभिप्रायविवरणे का आवश्यकता? बुद्धस्य सर्वज्ञत्वखण्डनं भट्टपादोक्तं न्यायमञ्जर्याद्युक्तञ्चेममेवार्थं पुष्णाति।

७. कर्मणो जडस्य परिणतिमात्रत्वं मीमांसकपक्ष इति कथनमपि उपासना-रूपस्य कर्मणः सर्वज्ञत्वफलकतायास्तत्र तत्र वेद एव प्रतिपादितत्वान्न विरोधभावं भजते। अत्र हि भूमिकायां परिणतिशब्दो न साङ्ख्यसम्मतपरिणामवाचकः; अपि तु फलवाचक एव। परिणामशब्दस्य फलरूपेऽप्यर्थे बहुलः प्रयोग उपलभ्यते। यथा 'उचितमनुचितं वा कुर्वतां कर्मजातं परिणतिरवधेया' इत्यादौ।

८. विचारकमहोदयेनोदयनाचार्यग्रन्थसन्दर्भाः दर्शिताः, मया च न प्रदर्शिता इति योऽयमुपालम्भस्तद्विषये इदमेव निवेद्यते न हीयं ममैव परीक्षणशैली प्राचीनानां समेषां विदुषामासीदियमेव शैली। न हि प्राचीनेषु ग्रन्थेषु 'टीकाकृतस्तु' 'इति मिश्रः' इत्यादिलिखितवद्भिरपि ग्रन्थस्य नामोल्लेखस्तत्रत्यप्रकरणाद्युल्लेखो वा क्रियते स्म, यत्रेदमेव कारणं प्रतिभाति यदात्मतत्त्वविवेकग्रन्थं तद्दीधिति-ग्रन्थञ्चाधीतवतामपि अस्मादृशां मेधाशक्तिह्रासवशात् तद्ग्रन्थस्याध्यापन-परिशीलनाद्यभाववशाच्च तेषां तेषां ग्रन्थभागानामन्वेषणे आलस्यम्।

९. यदपि विचारकमहोदयः 'जीवेश्वराभेदे उदयनाचार्यस्य तात्पर्यमुपवर्णितं लोकेन मया च विचारकेणोदयनाचार्यलेखानुद्धृत्य तद्विरोधः साधितस्तत्परीक्षायां दीधितिकारस्य मुक्तावलीकारस्य च कः प्रसङ्ग' इति लिखति।

तत्रेदं विचारयन्तु पाठकमहाभागाः—उदयनाचार्याभिप्रायप्रकाशिकायामात्म-तत्त्वविवेकव्याख्यायां दीधितिकारस्य यो लेखस्तत्प्रदर्शनमप्रासङ्गिकमिति कः सहृदयो वदेत्। तथा हि (आत्मतत्त्वविवेकदीधितौ, पृ॰ ७२६) 'वस्तुतस्तु न वा अरे पत्युः कामाय पतिः प्रियो भवति' इत्यारभ्य यदपि 'एतस्यैव महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः' इत्यादीश्वरधर्मकथनं तदपि जीवेश्वराभेदबोधनाय। अग्रे च 'तत्त्वमसि श्वेतकेतो' इति जीवेश्वराभेदप्रतिपादनं तदपि ईश्वराभिन्नतया आत्मभावनं मोक्षहेतुरिति ज्ञापनाय इति ग्रन्थेन हि स्पष्टमेतदवगम्यते यदभेदभावनायाः कर्तव्यत्वं दीधितिकाराः प्रतिपादयन्ति 'अतिसङ्क्षिप्तचिरन्तनोक्तिरिति वक्तुर्मुक्तावलीकारस्य चोल्लेख उदयनाचार्याविरुद्धस्यार्थस्य प्रतिपादनेन उक्तार्थस्य दृढीकरणस्य सर्वजनप्रसिद्धोदाहरणप्रदर्शनायैव चेति नात्रानवसरे किञ्चित्प्रतिपादितमस्ति। एतेन अयं दीधितिकारस्योल्लेखो व्यामोहमात्रमिति कथनन्तु कियन्मूल्यमावहतीति पाठका एवात्र प्रमाणम्।

१०. मुक्तावलीग्रन्थस्य संवादप्रदर्शनं दुस्साहसमिति कथनं तु सर्वेषां दर्शनानां तत्तद्भूमिकायां स्थितानां तेषाम् अधिकारिणां कृत एवोपयोग इति तथाविधाधिकारिणां कृते उपयुक्तोऽयं न्यायशास्त्रे लेखो न कामपि क्षतिमावहति।

११. बुभुक्षूणां दर्शनानि इत्यस्य कटुशब्दत्वं यदि तदा मीमांसादर्शन-विचारावसरे 'प्रथममित्यादि'। बुभुक्षुतादशायां ग्रामपशुहरिणादीनां निरन्तरमभ्यर्थ्य-मानत्वेन समुत्कटवासनावशात् प्रथमत एव भासन्त इत्यर्थः। (आत्म॰ दी॰, ९४३) इति वदन्तो दीधितिकारा एवोपालब्धव्या नाहम्।

१२. रसास्वादसरणिमप्रविष्टोऽपि परीक्षक इत्यादिना उपालम्भवचनम्, तत्र—

एते प्रेमादयो भावाः शृङ्गारालम्भनाश्रयाः।
भट्टाभिनवगुप्तार्यपादैरेव प्रकाशिताः।।
भट्टाभिनवगुप्तार्यपादप्रोक्तेन वर्त्मना।
अयं प्रबन्धः कथितः शारदायाः प्रसादतः।।

इत्यादिना भावप्रकाशने प्रतिपादयन्तः शारदातनयादयो विशिष्टा विद्वांस एव लक्ष्यीकृता विचारकेण। नित्याषोडशिकार्णवव्याख्यातारो महापण्डिता भास्करराया: स्वीये ग्रन्थे निम्नलिखितामध्यापनपद्धतिं शास्त्रीयां मन्यन्ते—

तथा हि 'ततश्च जगदाप्तपरमशिवप्रणीतत्वाविशेषेण सर्वासां विद्यानामधिकारिभेदेन प्रामाण्यमेवेति स्पष्टं सूतसंहितादौ। अधिकारश्च यथा नास्तिकानामेवार्हतादिदर्शनेषु, त्रैवर्णिकानामेव वैदिकमार्गेषु इति पुरुषभेदेन व्यवस्थितस्तथा एकस्यापि पुरुषस्य चित्तशुद्धितारतम्यादपि कश्चिद्व्यवस्थितः। वर्णभेदेनेव आश्रमभेदेनापि धर्मव्यवस्थादर्शनात्। एवञ्च यानि तत्तद्विद्याप्रशंसकानि वचनानि तानि तत्तदधिकारिणं प्रत्येव प्रवर्तकानि। यानि च तन्निन्दकानि तानि तत्तदनधिकारिणं प्रति निवर्तकानि न पुनर्नहि निन्दान्यायेन विधेयस्तावकानि।.....'

तदयं मथितोऽर्थः—जातमात्रस्य त्रैवर्णिकस्य क्रीडाधिकारे निवृत्ते अक्षराभ्यासः, ततश्छन्दोभाषाज्ञानार्थं काव्याध्ययने प्रवर्तकानि 'अदोषं गुणवत्काव्य'मित्यादीन्यग्निपुराणवचनानि। व्युत्पन्नस्य काव्यालापांश्च वर्जयेदिति निर्बन्धः। काव्याध्ययनजन्यप्रयोजनस्य जातत्वेनोत्तरभूमिकायामेवावताराततां विहायायुः क्षपयतोऽनिष्टं भवतीति तदर्थः। ततो देहाद्यतिरिक्तत्वेनात्मनो ज्ञानार्थं न्यायशास्त्राध्ययने विधिः शुङ्गेनात्मानमन्विच्छेदित्यादिविधिः। इत्यादि।

१३. 'अभेद उन्मील्यते इत्यसत्या वार्ता' इति कथनन्तु—

'व्यापारोऽस्य विभावादेर्नाम्ना साधारणीकृतः।
तत्प्रसादेन यस्यासन् पाथोधिप्लवनादयः।।
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।।

इति साहित्यदर्पणादिप्रामाणिकसम्मतप्रकारात्सर्वथा विरुद्धमिति नादरणीयतामर्हति।

१४. अभिनवगुप्तपादप्रक्रियैव सर्वमतापेक्षया निर्दुष्टा समीचीना चेति तासां तासां काव्यप्रकाशादिव्याख्यानां दर्शनेन स्फुटीभवत्येवेति नात्र विषये विशेषतो वक्तव्यमवशिष्यते।

१५. अभिनवगुप्तपादग्रन्थव्यसनी यदि कश्चित् स्यात्, तर्हि अस्तु नाम, तावता किमभिनवगुप्तपादैर्विमर्शो रस इति यदि क्वचिल्लिखितमस्ति, तथापि स्थायिभावस्य रसरूपत्वं तत्सम्मतमिति तदीयः सिद्धान्तः कथमपलपितुं शक्यः।

१६. उदयनाचार्याणामद्वैतवेदान्तसिद्धान्ते महानादर इति लेखनं यदि प्रत्यवायजनकं स्यात्, तर्हि 'किञ्चोक्तवाक्यं बौद्धनिराकरणकं न त्वद्वैतमत-निराकरणपरम्, अद्वैतमतस्य सर्वमतश्रेष्ठताया बौद्धाधिकार एवोक्तत्वादित्यादिना, किञ्चोदयनाचार्याणां वेदान्तदर्शन एव महती श्रद्धा बौद्धाधिकार एव सर्वदर्शनानि निराकृत्य वेदान्तदर्शनमेव पुरस्कृतं तैः' इत्यादि-वदन्तो गौडब्रह्मानन्दादयोऽपि प्रत्यवायभागिन इति वक्तव्यमापतितं भवेत्। तच्च विचारकमहोदयस्यैव शोभते।

१७. उदयनाचार्यप्रदर्शितचरमवेदान्तमतोपसंहारापेक्षया न्यायमतोपसंहारः सप्तमी भूमिका इति विचारको लिखति; परन्तु तस्याः स्वरूपं न प्रकटीकर्तुं शक्नोति, यतो हि निर्विकल्पकावस्था या वेदान्तिभिः स्वीक्रियते, तस्या निर्वाणं स्वयमेव भवतीति तैः स्वीक्रियत एव चरमविद्यावतः क्षणस्य अविद्यातत्प्रयुक्त-दृश्यकालपूर्वत्वाभावनियमस्य तैरेवोक्तत्वात्, नैयायिकैरपि योग्यविभुविशेषगुणानां स्वेतरवृत्तित्वविशिष्टगुणनाश्यत्वस्वीकारात्, अतः कोऽत्र भेद इति पाठकमहोदया एव विचारयन्तु।



# 'अथ' - शब्दजिज्ञासा*

**प्रो० वि० वेङ्कटाचलम्**
पूर्व-कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



अस्ति कश्चित्सम्प्रदायानुगतः समुदाचारो वेदान्ताध्ययनाध्यापनपरम्परायां यत् प्रस्थानत्रयभाष्याध्ययने प्रतिदिनपाठक्रमे उपक्रमोपसंहारयोरनुष्ठीयमानः शान्तिपाठविधिर्नाम। अस्त्यन्योऽपि चैतत्सम्बद्ध एव समुदाचारो यत्पक्षान्तेऽनध्यायदिवसेषूपस्थितेषु त्रयोदश्यां तिथौ विशिष्टविधानक्रमेण पक्षाध्ययनस्य माङ्गलिकपूर्तिविधित्सया आचार्यान्तेवासिभिरुभयैरवगुण्ठितशिरोभिः सम्भूयानुष्ठीयते विशिष्टं किमपि शान्तिकर्म। तस्य चान्ते पठ्यन्ते ब्रह्मानुसन्धानपराणि पद्यानि त्रीणि माङ्गलिकानि। तेषु चाद्येन श्लोकद्वयेन 'कल्याणतमं'[१] 'शान्तं शिवमद्वैतं चतुर्थम्'[२] इत्यादिश्रुतिभिर्बहुधा गीतं परस्य निर्विशेषब्रह्मणः परममाङ्गलिकत्वमित्थमुपगीयते—

अशुभानि निराचष्टे तनोति शुभसन्ततिम्।
स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं परम्॥

अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात्।
स्मर्तृणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः[३]॥

अथ चान्ते प्रकृतनिबन्धविषयजीवातुना तृतीयश्लोकेन 'पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्'[४] इत्याद्यभियुक्तोक्तरीत्या परमपवित्रत्वेन परममङ्गलत्वेन च श्रुतिस्मृतीतिहासपुराणादिषु सर्वत्र गीयमानवैभवस्य, क्लेशकर्मविपाकाशयैरपरामृष्टस्य[५] परमेश्वरस्य वाचकतया भगवता पतञ्जलिना उपश्लोक्यमान-

---

* निबन्धोऽयं श्रीमद्भिः आचार्यवेङ्कटाचलमहाशयैर्ब्रह्मभावगमनाद् दिनद्वयात्प्रागेव अस्मभ्यं प्रदत्तः। स चायं तत्रभवतामाचार्याणां पवित्रस्मृतौ श्रद्धात्मकतया प्रकाशमानीयते—सं०।

महिमोत्कर्षस्य, 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति सौन्दर्य-तत्त्वसारमर्मविन्महाकविमाघोपदर्शितसौन्दर्यलक्षणानुसारं 'प्रणव'नाम्नैव प्रतिक्षण-नवताप्रकर्षव्युत्पादनमुखेन समुद्घोषितपरमसौन्दर्यपरकाष्ठास्वरूपस्य ओङ्काराक्षरस्य आविर्भावरहस्यार्थवादकथया ओङ्कारात्मकस्य परब्रह्मणः परममाङ्गलिकत्वं स्थूणानिखननन्यायेन पुनर्दृढीक्रियते—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ।। इति।

तस्यास्य तृतीयश्लोकस्य पाठोत्तरं च तस्मिन् माङ्गलिकत्वेन वर्णितयोः 'ओम्'-'अथ'-शब्दयोः त्रिरुच्चारणात्मा उपांशुजपः क्रियते—'ओमथ', 'ओमथ', 'ओमथ' इति। इत्थं कृतेन रहस्यात्मकशब्दद्वयपारायणेनोपसंह्रियतेऽसौ सम्प्रदायानुगतो भाष्यपाठशान्तिक्रमः प्रतिपक्षम्।

अत्रेदमवधेयम्—इहत्ये तृतीये पद्ये ओङ्कारेण सह 'अथ'-शब्दस्यापि समानं माङ्गलिकत्वं प्रतिज्ञायते। तत्र च कारणमभिधीयते, सर्गादौ जगत्स्रष्टुः कण्ठभेदनेन साक्षान्निर्गतौ शब्दावमू इति। अनेनेदमुक्तं भवति—सामान्यतस्तावद् वैदिका लौकिकाश्च शब्दाः सर्वे ब्रह्मणो मुखान्निरगुः, तद्वैलक्ष्येणेमौ शब्दौ तु निरगातां ब्रह्मणः कण्ठभेदनेन, ईदृशेन च वैशिष्ट्येनानयोर्माङ्गलिकत्वं सिद्धमिति। एवमवस्थिते श्लोकतात्पर्ये तत्र समुत्तिष्ठन्ते नैके विचिकित्सारूपाः प्रश्नाः।

यदि ब्रह्मकण्ठनिर्गतत्वेन माङ्गलिकत्वं तर्हि प्रणवाथशब्दयोः समानयोग-क्षेमतया समानमाङ्गल्यत्वेन समानमाहात्म्येन च भाव्यं, न तु तथा दृश्यते वेदे लोके वा। यथा किल ओङ्कारस्य लोकोत्तरं माहात्म्यमुपगीयते बहुधा बहुशो बहुत्र श्रुतिस्मृतीतिहासपुराणादिषु, धर्मशास्त्रेषु, अन्येषु चानन्तेषु तन्त्रादिग्रन्थेषु प्राचीनेष्व-र्वाचीनेषु च शिष्टजनप्रणीतेषु, न तथा प्रतायन्ते गुणाः क्वचिदप्यस्य 'अथ'-शब्दस्य ओङ्कारसोदर्यस्यापि वराकस्य। तत्कस्य हेतोरित्यत्र समाधानं मृग्यं भवति। तदिदमीषदिह निबन्धे विमृशामः। तत्र च श्लोकनिर्दिष्टेनैव क्रमेण प्रथममोङ्कारस्य माहात्म्यमाङ्गल्यं लोकशास्त्रसिद्धं निरूप्यते। तथा हि—

१. ओङ्कारस्य निर्विशेषब्रह्मरूपत्वं, सर्वप्रपञ्चसारत्वं, ब्रह्मकृतजगत्सर्ग-बीजत्वं, यज्ञादीनामग्निहोत्रादीनां वैदिककर्मणां चारादुपकारकत्वम्, ओङ्कारजपेन ब्रह्मप्राप्तिरित्यादयो भूयांस उत्कर्षा वितत्य सङ्केतितास्तैत्तिरीयोपनिषदि, ततोऽपि विततरं प्रतिपादिताश्छान्दोग्ये। इत्थं ह्यनुश्रूयते शिक्षावल्ल्याम्—

'ओमिति ब्रह्म। ओमितीदं सर्वम्।.....ओं शोमिति शस्त्राणि शंसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्रह्मा प्रसौति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति'[८]।

२ः छान्दोग्योपनिषदि प्रणवमाहात्म्यगाथायास्तु काप्यसाधारणी धोरणीतिं निगदव्याख्यातं परिशीलितोपनिषदाम्। इयन्तावदुपनिषदनुपदं विशेषतो महयत्योङ्कारं बहुधैवारम्भप्रभृति तत्र तत्र नैकेषु प्रसङ्गेषु क्रियासमभिहारेणेति न क्षममुद्धर्तुं सर्वमिति विस्तराद् बिभ्यद्भिर्नामग्रहणमात्रेणैव सन्तोष्टव्यम्। ओङ्कारात्मन उद्गीथस्य उपासनाक्रमविस्तरश्चास्या एवोपनिषदः प्रातिस्विकविशेष इत्यप्यवधारणीयम्।

३. कठवल्लीषु तु ओङ्कारस्य सर्ववेदसारत्वं सर्वतपसां चरमलक्ष्यरूपत्वं चाभिधाय सर्वातिशायिसाधनमाहात्म्यं सर्वातिशायिफलात्मकत्वं चोपगीयते 'यो यदिच्छति तस्य तत्'[९] इति—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिन्येतत्[१०]॥

इत्यारभ्य 'ब्रह्मलोके महीयते'[११] इत्यन्तेन सन्दर्भेण। भगवता श्रीकृष्णेन उपनिषदुन्मथननिर्गतहैयङ्गवीनकल्पायां गीतायां[११] यथाक्षरमुद्धृतोऽयं मन्त्र इतीदमपि विशेषतः समुल्लेखनीयम्।

४. प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्[१२]॥

इति प्रसिद्धमन्त्रेण च धनुः-शर-धानुष्क-तल्लक्ष्य-रूपकालङ्कारमेदुरेण सुकुमारतरकाव्येन अलङ्कारमुखवस्तुशतध्वनेः परमोदारोदाहरणेन ब्रह्मसाक्षात्कारं प्रति प्रणवस्यान्तरङ्गसाधनत्वसमुद्घोषगर्भेण अध्यात्मसाधनशिखरप्रतिष्ठामर्पयति अणोरणीयानिति प्रतीयमानेऽपि वस्तुतो महतो महीयसि प्रणवाक्षरे मुण्डकोपनिषद्द्रष्टा ऋषिकविर्भगवानङ्गिराः।

५. ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः[१३]।

इति च परब्रह्मवाचकेषु त्रिषु प्रथमनिर्देशेनाप्यस्य महामन्त्रस्य प्रणवस्य रूपधेयमुपवर्णयति भगवान् गीताचार्यः। एवं 'ओमित्येकाक्षरं ब्रह्म'[१४] इत्यादिना च प्रणवस्य निर्विशेषब्रह्मरूपत्वं देहत्यागकाले अर्थस्मरणेन सह ओङ्कारोच्चारणेन मोक्षप्राप्तिं चापि प्रतिजानीते—'स याति परमां गतिम्'[१५] इति।

६. ओङ्कारस्य ईश्वरवाचकत्वं कण्ठोक्तैरेव शब्दैराह 'तस्य वाचकः प्रणवः'[१६] इति शास्त्रेण योगदर्शनमार्गदर्शी महर्षिर्भगवान् पतञ्जलिः।

७. उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवा गिराम्[१७]॥

इति सर्वश्रुतिमुखत्वमभिदधानो महयत्योङ्कारं महाकविगणनासु कनिष्ठिकाधिष्ठितः कविवृषा ऋषिकल्पः कालिदासः कुमारसम्भवे ब्रह्मस्तुतौ।

८. ओङ्कारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम्।
आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम्[१८]॥

इति च देवीनवरत्नमालायां पञ्जररूपकचारुणा काव्येन परशक्तिसाक्षात्कारे ओङ्कारोपासनाममोघं साधनं निरूपयति भक्तिशिखरमारूढः सरसकवितासाम्राज्य-मूर्धाभिषिक्तो महाकविः कालिदासो देवीवरप्रसादरूपेण प्राप्तालौकिकप्रतिभोन्मेषो देशे समग्रेऽपि किंवदन्तीशतैर्देवीभक्तरूपेण ख्याप्यमानः।

दिङ्मात्रमिदमुदाहारि। उपलक्षणैरेभिरुदाहरणैरेतत् सिद्धं भवति—आश्रुति-सीमन्तशिखराद् आकाव्यनाटकप्रपदं धर्मदर्शनादिसंस्कृतवाङ्मयजालं सर्वमित-स्ततोऽभिव्याप्य तिष्ठत्योङ्कारस्य माहाभाग्यमिति। किं बहुना, वेदबाह्यैरपि जैनबौद्धप्रभृतिभिर्महीयते स्वग्रन्थेषु प्रणवाक्षरमिति, धार्मिकेषु प्रसङ्गेषु च सम्पूर्णे भारते कक्षीकृतनानाधर्माणो जनाः श्रद्धालवः सर्वेऽपि समनुतिष्ठन्ति पदे पदे प्रणवोच्चारणमङ्गलमिति च लोके शास्त्रे च सूर्यप्रकाशवत् सर्वतः सहजसिद्धमिममर्थमागमयितुं नावसरो बहुपराक्रमस्येति दिक्।

एवमवस्थिते श्लोकोक्तशब्दयोः प्रथमस्योङ्कारस्य माङ्गलिकत्वे तत्सहोच्चा-रितस्य 'अथ'शब्दस्य माङ्गलिकत्वकथा शास्त्रे वा लोके वा कीदृशीति सम्प्रति विमृश्यते किञ्चित्।

'अथ'शब्दस्य माङ्गलिकत्वमूरीकुर्वन्तः प्राचीनाः सूत्रकारा ऋषिकल्पा आचार्यास्तावत् प्रायशो नैयत्येन स्वीयान् सूत्रग्रन्थान् अथोपक्रमानकार्षुर्न प्रणवोपक्रमानिति स्पष्टमेव सूत्रपारम्पर्यविदाम्। अशोकवनिकान्यायेन अथवा स्थालीपुलाकन्यायेन पञ्चषानुदाहरामः। 'अथातो धर्मजिज्ञासा'[१९] इत्युपक्रमते भगवान् जैमिनिः पूर्वमीमांसादर्शनम्, 'अथातो ब्रह्मजिज्ञासा'[२०] इति च ब्रह्ममीमांसां बादरायणो मुनिर्भगवान्। 'अथातो दर्शपूर्णमासौ व्याख्यास्यामः'[२१] इति, 'अथ कर्माणि, आचाराद् यानि गृह्यन्ते'[२२] इति, 'अथातः सामयाचारिकान् धर्मान्

व्याख्यास्यामः'[२३] इति च भगवानापस्तम्बः समारब्ध स्वसूत्राणि। 'अथातो धर्मं व्याख्यास्यामः। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'[२४] इति च वैशेषिकसूत्रकृत् कणादो मुनिः पदार्थतत्त्वदृक्। 'अथ योगानुशासनम्'[२५] इति चोपचक्रमे भगवान् पतञ्जलिर्योगसूत्राणि। न केवलमित्थं षड्दर्शनीकृत्सु नैक आचार्याः प्राचीना अन्ये च सूत्रकाराः स्वोपज्ञग्रन्थानां माङ्गलिकत्वं समपीपदन्नथशब्दं प्रयुञ्जाना ग्रन्थमुखे; किन्तु तदर्वाग्भवाः कतिपये एकद्वा भाष्यकारा भाष्यव्याख्यातारश्चापि 'अथ'-शब्देनोपचक्रमिरे स्वग्रन्थान्। तथा हि—भगवान् पतञ्जलिर्व्याकरणभाष्यकारस्तावद् 'अथ शब्दानुशासनम्'[२६] इत्यथशब्देन प्रारेभे लोकोत्तरसुषमवाग्वैभवमात्मनो महाभाष्यं यथार्थाक्षरमहदुपपदम्। एवमेव च सर्वतन्त्रस्वतन्त्रः 'पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः' इति कल्पतरुणाप्युपश्लोक्यमानवैदुष्यनिधिर्वेदान्तभाष्यव्याख्याता वाचस्पतिमिश्रोऽपि भामतीमात्मनः कृतिमतल्लिकां प्रास्ताविकैर्देवतागुर्वादिस्तुति-परैर्मङ्गलपद्यैर्भूषितपूर्वामपि पुनरथशब्देनैव प्रारेभे माङ्गल्याय—'अथ यदसन्दिग्धमप्रयोजनञ्च न तत्प्रेक्षावत्प्रतिपित्सागोचरम्, यथा समनस्केन्द्रिय-सन्निकृष्टः स्फीतालोकमध्यवर्ती घटः करटदन्ता वा'—इति तन्मात्रसुलभेन अनितरसाधारणवाग्विलासप्रतिभोन्मेषचारुणा विलक्षणेन गजराजगतिगभीरेण गद्यबन्धेन।

काममिदं सर्वं सत्यं, तथापि सर्वमप्येतद् 'अथ'शब्दस्य ओङ्कारेण सह दूरसांदृश्यसाधनायापि नालमिति, तत्तुल्यताकथा तु दूरापास्तैवेति च निश्चप्रचम्। तथा हि—सप्ताष्टानाम् उपशतानामपि वा ग्रन्थानामुपक्रमेषु माङ्गलिकत्वाय 'अथ'-शब्दस्य प्रयोगमात्रेणैवास्य ओङ्कारसमानतेति शैशवमुग्धेयं भवेद् वाचोयुक्तिः। क्व नाम ओङ्कारः? क्व च वराकोऽथकारः? यथा किल प्रणवस्य निर्विशेषब्रह्म-वाचकत्वं सगुणेश्वरवाचकत्वं वा ऐककण्ठ्येन सर्वैः शास्त्रैर्लोकैश्च समुद्घोष्यते, तथा किं माहात्म्यलेशोऽपि श्रुतः स्मृतो वास्य 'अथ'शब्दस्य क्वचिल्लोके शास्त्रे वा? यथा खल्वोङ्कारशब्दस्य अकारोकारमकाररूपखण्डत्रयेण विभज्य तस्य जन्मस्थितिभङ्गमूलत्वेन 'जन्माद्यस्य यतः' इति बादरायणसूत्राभिमततटस्थ-लक्षणलक्षितेन परमेश्वरेणाभेदः प्रदर्शित उपनिषत्सु, तन्त्रेषु, अन्येषु च तेषु तेषु विविधेषु ग्रन्थेषु, तथा किमथकारस्य क्वापि किमपि व्युत्पादनमन्यद्वा दृष्टं क्वचित्? किञ्च यथा देवपूजासु पुष्पार्चनप्रसङ्गेषु ओङ्कारमादौ कृत्वा ॐ सुमुखाय नमः, ॐ एकदन्ताय नमः इत्यादि-महागणपतिषोडशनामपूजायाम्, अथवा भगवतः श्रीमहाविष्णोः ॐ केशवाय नमः, ॐ नारायणाय नमः इत्यादि-चतुर्विंशतिनामपूजायाम्, अथवा ॐ शिवाय नमः, ॐ महेश्वराय नमः इत्यादि-

शिवाष्टोत्तरशतनामावल्याम्, अथवा ॐ श्रीमात्रे नमः, ॐ श्रीमहाराज्ञ्यै नमः, ॐ श्रीमत्सिंहासनेश्वर्यै नमः इत्यादि-श्रीललितासहस्त्रनामार्चने, अथवा ईदृशेषु लक्षार्चनेषु कोट्यर्चनेषु च यथा नियमेन प्रतिनाम प्रणवयोजनमनुष्ठीयते धर्मबुद्ध्या समनुष्ठीयते शिष्टैरर्धशिष्टैरशिष्टैश्च लोके साम्प्रतमपि किं तथा ओङ्कारस्थाने अथकारं कृत्वा अथ सुमुखाय नमः, अथैकदन्ताय नम इत्यादि पुष्पोपचारः क्वाप्यदर्श्यश्रावि वा किमासेतुहिमाचले भारते? अथवा यथा 'ओमिति ब्रह्म, ओमितीदं सर्वम्' इत्येवमोङ्कारस्य महत्त्वमुपवर्ण्यते, किं तथाविधः 'अथेति ब्रह्म, अथेतीदं सर्वम्।....' इत्यादिर्वा अन्यविधो वा 'अथ'शब्दस्य सर्वव्यापकत्व-सर्ववेदसारत्वादिप्रख्यापकः सन्दर्भः सुमहत्युपनिषज्जाले प्रधानायां गौण्यां वा कस्यामप्युपनिषदि केनाप्यवालोकि? अथवा यथा किल भगवद्गीतायाम्—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥

इत्यनुश्रूयते सर्वकर्मानुष्ठानैरविनाभावसम्बन्धः प्रणवस्य तथा किं क्वापि स्मृतावितिहासपुराणे वा 'अथ'शब्दोच्चारणमनुष्ठेयतया विधीयते? अथवा यथा प्रणवमन्त्रजपं स्वधर्मतया नियतमनुतिष्ठन्ति सर्वे संन्यासिनो यतिधर्मपालनपराः, तथा किमथकारमन्त्रं जपति कश्चिन्मस्करी धर्मक्षेत्रेऽस्मिन्? यदि नास्त्येतत्सर्वं तत्कस्य हेतोरिति क्षणमप्यविमृश्यैव कश्चिच्चाक्षुषी निमील्यैव विस्रब्धं प्रतिजानीयादोङ्कारसमानतामथकारस्य, स कथं श्रद्धेयवचनः स्यात्?

तदेवमोङ्काराथकारयोर्निबन्धमुखसमुद्धृतसाम्प्रदायिकश्लोकरीत्या ब्रह्म-कण्ठनिर्भेदनार्थवादबलाद् यत्समानमिव माङ्गलिकत्वं प्रतिभासते, तदेतदविचारित-रमणीयमिति विभावनीयम्। अस्त्यनयोर्माङ्गलिकत्वे समुद्रपल्वलयोरिव महदन्तरमिति निरूपितमेव बहुभिः प्रमाणैरुपरिष्टात्। इदन्तु स्पष्टमवधारणीयं यदित्थं वदन्तो वयं न माङ्गलिकत्वमथशब्दस्य सर्वात्मना निषेधामः; किन्तु तस्मादोङ्कारस्य बहुतरोत्कर्षो बहुतरप्रमाणसिद्ध इति उभयोः समानत्वं न वाच्यमिति परमागृह्णीमः। तर्हि उदाहृतश्लोके अविशेषेण समानरूपेण कण्ठोक्त्या विभाव्यमानस्य समानमाङ्गलिकत्वस्य का गतिरिति चेत्, तत्कथञ्चिदन्यथा व्याख्येयमिति वदामः। प्रतिपादयिष्यते चेदं परस्तात्। वस्तुतस्तु सूक्ष्मेक्षिकया परीक्षणे तु उभयोः शब्दयोर्माङ्गलिकत्वं समानमिति श्लोके कण्ठगतैरक्षरैः क्वापि नोक्तमिति सुज्ञेयमेव सुधियाम्। तथा हि—इयन्मात्रं खल्विह श्लोकार्थः। विधातुः कण्ठान्निर्गतावोङ्कारश्च 'अथ'शब्दश्चेति, उभावपि तस्मान्माङ्गलिकाविति। शब्दावमू

युगपदेककालावच्छेदेन निर्गताविति वा, समानमार्गेण समानक्रमेण समानप्रयोजनेन समानरूपेण च विनिर्गतावित्यपि वा क्वापि नोक्तं श्लोके। अनयोः समानत्ववाचकः शब्दस्तु नास्त्येव कश्चित्। अत एवानयोः समानमङ्गलत्वं नाभिधाविषयः श्लोकाक्षराणामिति स्पष्टम्। एकप्रयत्नोच्चारितवाक्यमात्रबलेन कैश्चिदविमृष्टवाक्यगतिविधानैरुन्नीतः सोऽर्थः। इत्थमुन्नीतोऽर्थः सर्वत्र प्रमाणसिद्ध इति तु न शक्यमास्थातुम्। ईदृशेषु वाक्यसन्दर्भेषु यमर्थमुद्दिश्य योऽर्थो विधीयते तस्मिंस्तस्य साम्यं वैषम्यं चेत्युभयमपि सम्भवत्यपि। क्वचित् क्वचिद् घुणाक्षरन्यायेन साम्यं भवति चेत्, भवतु नाम। न तेन सर्वत्र साम्यं प्रतिज्ञातुं शक्यम्। भूयिष्ठं तु भवति वैषम्यं विधेयगुरुलाघवे। तदिदं करबदरवत् स्पष्टीभविष्यत्यनुपदं वक्ष्यमाणैर्दृष्टान्तैः। तथा हि—यदा कश्चिद् ब्रूयादास्वादिताम्रः 'उभे अपीमे आम्रफले मधुरे' इति, तेन भिन्नप्रजात्योरुभयोराम्रयोर्माधुर्यमात्रमभिमतं वक्तुः, न तु तयोरुभयोर्माधुर्यं समानमित्यपि। स्थितेऽप्युभयोर्माधुर्ये 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्' इत्युक्तक्रमेण सम्भाव्यत एव भूयिष्ठमन्तरमेनयोर्माधुर्ये। यथा वा मूर्खं गुरुशिष्यद्वन्द्वं प्रति कश्चिदाह स्म सोपहासम्—'उभावप्यश्रुतग्रन्थौ' इत्यादि, न तेनैव निर्णेतुं शक्यमुभयोः शास्त्रविषयकमज्ञानं मौर्ख्यं वा सर्वात्मना तुल्यमिति। गुरुशिष्ययोरज्ञाने ईषन्महतो वा अन्तरस्य दुरपह्नवत्वात्। गुरोरध्यापनायोग्यत्वं प्रत्युक्तेयं काव्यातिशयोक्तिरिति को नाम न वेत्ति सचेताः? अथवा यथा लोकव्यवहारक्रमेण प्रवर्तमानां छात्रपरीक्षां लक्ष्यीकृत्य कश्चिद् ब्रूयात् पिता प्रतिवेशिनम्, 'उभावपि मत्पुत्रौ परीक्षामुत्तीर्णौ' इति, तदा एकस्य प्रवरश्रेण्यामपरस्यावरश्रेण्यामुत्तरणं च सर्वथा न निवार्यते। तथैव प्रकृतेऽपि 'माङ्गलिकावुभौ' इति सत्यामपि उभयोद्देश्यकैकधर्मविधेयतायाम् ओङ्कारस्य 'अथ'शब्दस्य च माङ्गलिकत्वे गौरवलाघवतारतम्यप्रयुक्तं महदन्तरं न दण्डवारितमिति निष्कण्टकः पन्थाः श्लोकव्याख्यानस्येति किमधिकेन?

किञ्च प्रकृतश्लोको न वस्तुयाथात्म्यकथनपरः; किन्तु प्रशंसार्थवादरूप इत्यापातदर्शनेऽपि स्फुटम्। अन्यथा यथाक्षरं याथार्थ्यस्वीकारे ब्रह्मणः कण्ठभेदनमेव नितरां दुरुपपादं स्यात्। कथन्नु नामेदं हिंसात्मकं कण्ठभेदनं तपस्विनो ब्रह्मणो व्याख्यायताम्? कथन्तरां च तादृशपरदेवतारूपस्य जगत्स्रष्टुः हिंसाक्लेशमुत्पाद्य बहिर्विनिर्यातयोः शब्दयोर्माङ्गलिकत्वम्? अथ च तथा भिन्नकण्ठस्य तस्य तपस्विनो ब्रह्मणः परस्तात् कीदृशी कष्टा दशा समुपागता स्यात्? तस्मादस्यार्थवादवाक्यस्य उभयोः शब्दयोर्माङ्गल्यप्रशंसामात्रे तात्पर्यं न तु तुषादप्यधिकं किञ्चिदित्यवधारणीयमस्य श्लोकस्य तात्पर्यं निर्णिनीषुभिर्विवेचकैरिति प्रतिभाति।

अथान्ते परमप्रकृतस्य 'अथ'शब्दस्य अर्थनानात्वविषये, माङ्गल्यार्थं प्रति वाचकत्वं वा व्यञ्जकत्वं वेति विषये च पूर्वाचार्याणां यन्मनीषितं तदेव किञ्चित्संक्षिप्य उपचिक्षिपामः। प्रायशः सर्वे कोशकारा 'अथ'शब्दस्य 'अथो'शब्दस्य समानार्थत्वं स्वीकृत्य उभयमपि एकधैव व्याचक्षाणा उभयोरपि नानार्थानुदाहरन्ति। कोशवाक्यानीमानि निगदव्याख्यातानीति नात्र विशेषतो व्याख्यापेक्षा कापि। अत एव कोशगतानि वाक्यानि यथोपलम्भमुदाहरामः—

१. सर्वत्र प्राप्तप्रचारः सर्वेषामभिमतप्रामाण्यञ्च अमरसिंहप्रणीतस्तन्नामैकदेशेन ख्यातोऽमरकोशः पञ्चार्थानुदाहरति—

मङ्गलानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ। इति।

२. अमरकोशस्य प्रसिद्धटीकायां व्याख्यासुधायां रामाश्रमीति विद्वद्गोष्ठीषु ख्यातायामुद्धृतो मेदिनीकोशस्तु अत्र संशयाधिकारविकल्पसमुच्चयान् चतुरोऽर्थान् अधिकान् संयुञ्जानो नवार्थान् ब्रूते—

अथाथो संशये स्यातामधिकारे च मङ्गले।
विकल्पानन्तरप्रश्नकात्स्न्यारम्भसमुच्चये।। इति।

एके वदन्ति—अत्र वस्तुत संशयः समुच्चयश्चेति द्वावेवार्थावधिकाविति। विकल्पस्य संशये, अधिकारस्य आरम्भे चान्तर्भावः सुवच इति तेषां हृदयम्।

३. वैजयन्तीकोशकाराः यादवाचार्यास्तु षडर्थान् मन्यमानाः प्राहुः—

अथाथोऽनन्तराप्यर्थविकल्पारम्भमङ्गले। इति।

अत्र 'अप्यर्थ' इति पदेन प्रश्नः समुच्चयश्चेत्युभयमपि सङ्गृहीतमित्यवधेयम्। मेदिन्युक्तेषु नवस्वर्थेष्विह कात्स्न्याधिकारसंशया इति त्रयोऽर्था न्यूना इत्यवसेयम्। यदि तु पूर्वोक्तप्रकारेण संशयाधिकारयोर्यथाक्रमं विकल्पे आरम्भे चान्तर्भावोऽङ्गीक्रियते तर्हि कात्स्न्यमेकमेव न्यूनं भवेत्।

४. अमरकोशस्य शेषभूते त्रिकाण्डशेषे पुनर्मूलानुक्ताः पञ्चार्थाः समुदलेखिषत। तेनाहत्य दशार्थाः पर्यवस्यन्ति। त्रिकाण्डशेषकारोऽसौ 'अथो'शब्दस्य केवलस्य अन्वादेशरूपमतिरिक्तमर्थमप्याचष्ट इति विभावनीयम्। इदमत्र त्रिकाण्डशेषवचनम्—

अङ्गीकारेऽधिकारे च समुच्चयविकल्पयोः।
मतान्तरेऽप्यथाथो च अन्वादेशे त्वथो इति।। इति।

५. मल्लिनाथप्रणीतायाममरव्याख्यायाममरपारिजाताख्यायां गोपालितकोशः समुद्धृतो यस्मिन्नमरनिर्दिष्टेषु पञ्चस्वर्थेषु कात्स्न्यार्थं परित्यज्य संशयार्थञ्च संयोज्य पञ्चार्था लिखिताः—'अथ कल्याणानन्तरसम्प्रश्नारम्भसंशयाद्येषु' इत्यार्याच्छन्दसा। अत्र आद्य'शब्दमन्ते प्रयुञ्जानेन लेखकेन इतरेषामर्थानां कोशान्तरनिगदितानां ग्रहणार्थमवकाशः सूचितः। षड्दर्शनीपारगाद् विद्वत्कुलेषु सुप्रथितान्मल्लिनाथादसौ तन्नामभृद् लेखको भिन्न इति ध्येयम्।

आसतामिमेऽन्ये च कोशास्तेषां मतभेदाश्च। एतावत्तु निर्विवादमेव यत् प्रकृते 'अथ'शब्दस्य माङ्गल्यार्थे न कश्चिद्विवदते कोशकृदिति; किन्तु मङ्गलार्थोऽयमथ-शब्दस्य वाच्यार्थो वा लक्षणालभ्यो व्यङ्ग्यार्थो वेति विषये न कोऽपि किञ्चिदभिमतमभिव्यनक्ति। युक्तं चैतत्। शब्दानां पर्यायपरिगणनं, नानार्थशब्दानामर्थपरिगणनमात्रं च कोशानां प्रयोजनम्, तत्र नास्ति कथाप्रसङ्गोऽपि वाचकत्वव्यञ्जकत्वचर्चायाः। तस्मादथशब्दस्य मङ्गलार्थं प्रति वाचकत्वं वा व्यञ्जकत्वं वेति निर्णयार्थमन्ये प्रामाणिका अन्वेष्टव्याः। अत एवेह उभयोरपि पक्षयोः समर्थकस्य एकैकस्य आचार्यस्य मतमत्रोदाहरामः।

तथा हि वैशेषिकसूत्रोपरि उपस्करव्याख्याकृतः शङ्करमिश्रा वाचकत्वपक्ष-मेवाद्रियन्ते। 'अथातो धर्मं व्याख्यास्यामः' इति काणादप्रथमसूत्रव्याख्यायामित्थं लिखन्ति ते—

'अथेति शिष्याकाङ्क्षानन्तर्यमाह। अत इति। यतः श्रवणादिपटवोऽन-सूयकाश्चान्तेवासिन आसेदुरित्यर्थः। यद्वा 'अथ'शब्दो मङ्गलार्थः। तदुक्तम्—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ।। इति।

युक्तं चैतत्। कथमन्यथा सदाचारपरम्परापरिप्राप्तकर्तव्यताकस्य मङ्गलस्य वैशेषिकशास्त्रं प्रणयतो महामुनेरनाचरणं सम्भाव्यते?' इत्यादि।

अस्मिन् वाक्यसन्दर्भे 'अथ'शब्दस्य आनन्तर्यार्थं मङ्गलार्थं च समानरूपेणैवोपक्षिपतां शङ्करमिश्राणामुभयोर्वाचकत्वमेवाभिमतमिति प्रतिभाति। इयान् परं भेद उभयोः पक्षयोः। आनन्तर्यार्थपक्षे तस्य वाक्यार्थेनान्वयः सुवचः, माङ्गल्यार्थपक्षे तु न तथा। माङ्गल्यपक्षे शिष्टेन वाक्येनान्वयो न घटत इति चेन्मा घटतां, का हानिः। अथेति स्वतन्त्रं पदं केवलं मङ्गलप्रयोजनार्थं प्रयुक्तं सूत्रकारेण इति व्याख्यायतामिति तेषां हृदयम्।

श्रीशङ्करभगवत्पादैस्तु प्रश्नोऽयमुत्थाप्य सुष्ठु परिहृतः स्वीये ब्रह्मसूत्रभाष्ये। तत्र प्रथमसूत्रभाष्ये 'अथ'शब्दं व्याचक्षाणास्ते स्पष्टं बभाषिरे यद् 'अथ'शब्द इह माङ्गल्यार्थः कामं प्रयुक्तः स्यात्; किन्तु तस्य सूत्रार्थे अन्वयासम्भवात् तस्य 'अथ'-शब्दवाच्यत्वं कथमपि नास्थेयमिति। अत एव आनन्तर्यार्थे प्रयुक्तस्यापि सतोऽथशब्दस्य निसर्गत एव मङ्गलात्मकस्य श्रवणमात्रेण सूत्रारम्भेऽपेक्षितं मङ्गलकार्यमपि सम्पत्स्यत इति तेषां हृदयम्। तदिदमुक्तं भाष्ये—'अर्थान्तरप्रयुक्तो ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति' इति। प्रसङ्गमिमं व्याचक्षाणैश्च वाचस्पतिमिश्रैः सम्यगुपपादितं सर्वमेतदिति भाष्यटीकासन्दर्भौ यथाक्षरमुद्ध्रियेते—

अयमत्र शाङ्करो भाष्यसन्दर्भः—'तत्राथशब्दः आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः ब्रह्मजिज्ञासाया अनधिकार्यत्वात्। मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति।' इति।

अयञ्चात्र प्रकृतभाष्यानुगामी भामतीसन्दर्भोऽनुपदोद्धृतसन्दर्भे मङ्गल-स्येत्यादेर्भवतीत्यन्तस्य खण्डद्वयस्य अर्थकथनविमर्शनात्मकव्याख्यानरूपः—'पदार्थ एव हि वाक्यार्थे समन्वीयते। स च वाच्यो वा लक्ष्यो वा। न चेह मङ्गलमथशब्दस्य वाच्यं वा लक्ष्यं वा, किन्तु मृदङ्गशङ्खध्वनिवदथशब्दश्रवण-मात्रकार्यम्। न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थः।

तत्किमिदानीं मङ्गलार्थोऽथशब्दस्तेषु तेषु न प्रयोक्तव्यः? तथा च—

'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ।।'

इति स्मृतिव्याकोपः, इत्यत आह—'अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति'। अर्थान्तरेषु = आनन्तर्यादिषु प्रयुक्तोऽथशब्दः श्रुत्या = श्रवणमात्रेण, वेणुवीणाध्वनिवन्मङ्गलं कुर्वन् मङ्गलप्रयोजनो भवति अन्यार्थमानीचमानोदकुम्भदर्शनवत्। तेन न स्मृतिव्याकोपः'। इति।

अत्रेदमवधेयम्—अथशब्दप्रयोगः करणम्। माङ्गल्यसिद्धिः फलमिति च स्थितम्। तत्रेमौ प्रश्नाववतरतः। यद्यथशब्दश्रुतिः करणं तर्हि तस्य व्यापारो वक्तव्यः, करणस्य व्यापारवत्त्वनियमात्। किञ्च, अत्र माङ्गल्यरूपं फलं कस्य केषां वा सिद्ध्यति? अत्रोच्यते—भामतीकाराणामभिप्राय इत्थं व्याख्येयः। मङ्गलस्य वाच्यत्वलक्ष्यत्वयोरनुपपत्तेर्व्यञ्जकत्वं व्यापार आस्थेयः। स चालङ्कारिकोक्तरीत्या अभिधामूलव्यञ्जनारूप एव भवितुमर्हति। तथा हि—गङ्गायां घोष इत्यादौ

गङ्गाशब्दस्य वाच्यार्थस्तावदत्यन्तबाधित इति प्रवाहस्य वाक्येऽन्वयकथैव नावतरति। तथापि गङ्गातीररूपो लक्ष्यार्थः पुनः वाक्ये सुखमन्वेति, 'गङ्गातीरे घोष' इति वाक्यार्थश्च फलति। एवमेव शैत्यपावनत्वादिरूपो व्यङ्ग्यार्थोऽपि 'गङ्गातीरे शैत्यपावनत्वाद्यनेकगुणोत्कर्षशाली आश्रमः' इत्यादिरूपे वाक्यार्थे अन्वेति। तथा चाविवक्षितवाच्ये लक्षणामूलध्वनौ व्यङ्ग्यार्थस्य वाक्यार्थेऽन्वयः सूपपादः; किन्तु विवक्षितान्यपरवाच्यभेदस्य असंलक्ष्यक्रमव्यङ्ग्यस्योदाहरणरूपो रसस्तु कार्यज्ञाप्य-भिन्नत्वेनालौकिकः सन् वाक्यार्थबोधानन्तरभावी सन्नपि अविदितक्रममेवोदीयमानः सर्वसहृदयप्रत्यक्षो वाक्यार्थे यथा कथमपि नान्वेति, तथैवात्राप्यथशब्दव्यङ्ग्यो मङ्गलार्थः सूत्रार्थेनानन्वितोऽपि माङ्गल्यमभिव्यनक्ति। सा चेयं माङ्गल्याभिव्यक्तिः सूत्रकारस्येव भाष्यकारस्य, भाष्यकारस्येव तद्व्याख्यातृवर्ग-तच्छ्रोतृशिष्यवर्गादीनां सर्वेषां समानेति चतुरश्रम्। तदिदं सर्वमभिप्रेत्यैव बभाषिरे भाष्यकाराः—'श्रुत्या मङ्गलप्रयोजनो भवति' इति। अत्र सामान्यरूपेण 'श्रुत्या मङ्गलप्रयोजनः' इति ब्रुवतां, केषां केषामिति च विशेषमनिर्दिशतां च भाष्यकाराणामयमाशयः स्पष्टो येषां येषामथशब्दश्रवणलाभस्तेषां सर्वेषामेव मन्तृ-वक्तृ-श्रोतृप्रभृतीनां माङ्गल्यलाभ इति।

तदयं निर्गलितोऽर्थः सूत्रस्थस्य अथशब्दस्य माङ्गल्यार्थावधारणे। रसध्वनि-चर्चायामभिनवगुप्ताचार्यैः 'कार्यज्ञाप्यभिन्नं न क्वचिद् दृष्टमित्यलौकिकसिद्धे-र्भूषणमेतन्न दूषणम्' इत्यादर्शितपथेन कार्यज्ञाप्यभिन्नस्य अलौकिकस्य काव्यरसस्य वाक्यार्थेऽनन्वीयमानस्यापि रसस्य यथा काव्यार्थत्वमव्याहतं तथैव माङ्गल्यस्य सूत्रार्थेऽनन्वीयमानस्यापि अथशब्दव्यङ्ग्यत्वं सूत्रार्थत्वं चाव्याहतमिति।

निबन्धोऽयं भारतीयदर्शनेषु नियतनिरूढया अधिकरणपद्धत्या विषय-विशय-पूर्वपक्ष-सिद्धान्तपक्ष-प्रयोजनाख्यपञ्चाङ्गक्रमेण अथवा तेषु सङ्गतिमेलन-जातषडङ्गक्रमेण वा नारचितो यद्यपि, तथापि नेदमस्थाने स्याद् यद्येतन्निबन्धार्थः समग्रोऽपि प्राचीनसूत्रकारपद्धत्यनुकारिभिरल्पाक्षरैरसन्दिग्धैः सारवद्भिः सूत्रकल्पैर्वाक्यैः सङ्गृह्येतेति स्वान्तःसमुदितचापलेन प्रचोदिताः प्रायतिष्म बहुसूत्रै-र्वाक्यपूगैर्निबन्द्धुं निबन्धार्थजातम्। इदमेवाभिसन्धाय प्राचीनसूत्रसच्छायं शीर्षकमुपाचीक्लृपाम निबन्धस्येति विभावयन्तु रसिकाः सुधियः। तदेभी रसगुणमितैः स्वोपज्ञैः सूत्रैरुपसंजिहीर्षामो निबन्धमेनम्।

अथातः 'अथ'शब्दमाङ्गल्यजिज्ञासा।

ब्रह्मकण्ठनिर्गमस्मृतेः परमं माङ्गल्यम्।

उद्भवे ओङ्कारसाहचर्यस्मरणाच्च।

प्राचामार्षेयसूत्राणां भूयिष्ठमथोपक्रमदर्शनात्।

वेदान्तशास्त्राध्ययनाध्यापनेषु ओमथयोर्गुरुशिष्याभ्यां सहोच्चार-समुदाचाराच्च।

प्रस्थानत्रयभाष्यशान्तिपाठेष्वद्यापि दृश्यते।

पक्षान्तानध्यायजविच्छेदात् पूर्वम्।

सत्सम्प्रदायरक्षाप्रसितेषु विशिष्टशिष्टेषु केवलम्।

वैदेशिकसंस्कारवात्यागृहीतेषु तु सर्वविप्लवः सर्वलोपः।

पाणिनिसूत्रेऽतथात्वमिति चेदन्यथोपपत्तेः।

वृद्धिपदेनैव तत्र माङ्गल्यसिद्धेः।

मात्रालाघवाभिनिवेशात्।

वृद्धेस्तु शास्त्राङ्गत्वेनोपनिबन्धनान्न लाघवभङ्गः।

अपवर्गसूत्रेऽप्यनर्थकावृत्तिवर्जनकौशलम्।

अत्राहापरः प्रणवतुल्यत्वमसहमानः।

ओङ्कारेण सहोत्थानमकिञ्चित्करम् 'अथ'कारस्य।

दृश्यते हि सहोत्थानं सहोच्चारणं च लोके बहुधा न्यूनाधिकानामपि। एकत्रावस्थानेऽपि नास्ति प्रणवतुल्यता सुवर्णेनैकतुलारूढगुञ्जाफलवत्।

दुरुत्तरं प्रणवान्न्यूनत्वं प्रमाणपौष्कल्यात्।

तस्यैवेश्वरवाचकत्वमाह पतञ्जलिर्योगी।

अकारोकारमकारैर्जन्मस्थितिभङ्गव्यञ्जनात् स तु ब्रह्मलक्षणम्।

दृश्यते च मुख्योपनिषत्सु प्रणवस्यैव माहात्म्यमाहाभाग्यम्।

गौणोपनिषत्सु चापि बहुधोपगीयते बहुषु।

त्रिविधब्रह्मनिर्देशेषु गीताचार्योऽपि प्रणवस्य प्राथम्यमुपनिबबन्ध।

यज्ञदानतपःक्रियासु च प्रयोगविधानम्।

संन्यासिदिनचर्यासु प्रणवजपानुष्ठानसम्प्रदायाविच्छेदः।

वेदबाह्यानामपि ग्रन्थेष्वाचारेषु च प्रणवे संवादभूमा।

जपन्ति च ससंरम्भं बाह्या अपि सदाचाररता योगानुष्ठानपरमाः साधकाः।

विस्तरानन्त्यादियत्तयेदृक्तया वा दुष्करः कृत्स्नप्रपञ्चः।

'अथ'कारस्य तु नातः सारूप्यकथाप्रसङ्गः।

मङ्गलार्थकत्वं त्वव्याहतमविप्रतिपत्तेः।

वियन्नयनभूमि(१२०)मितासूपनिषत्सु ग्रहाग्नि(३९)मिता 'अथ'-पदोपक्रमा माङ्गल्यार्थम्।

प्राचीनसूत्रग्रन्थाश्च बाहुल्येन।

नैके चान्ये ग्रन्थाः प्राचीनार्वाचीनाः।

आनन्तर्यस्यैव वाच्यार्थव्यवस्थापनान्माङ्गल्ये व्यञ्जकत्वमात्रम्।

उदकुम्भवदुदकुम्भवत्।। इति।

## सन्दर्भग्रन्थसङ्केताः

१. ईशावास्योपनिषदः षोडशे मन्त्रे 'तेजो यत्ते रूपं कल्याणतमम्' इत्युत्तरार्धे प्रयुक्तमिदं विशेषणम्। बृहदारण्यकोपनिषदः पञ्चमाध्यायस्य पञ्चदशे ब्राह्मणेऽप्युपलभ्यते मन्त्रोऽयं यतो हि पञ्चदशेऽस्मिन् ब्राह्मणे त एव चत्वारो मन्त्राः पठिता यैरुपसंह्रियते ईशावास्योपनिषदिति विभावनीयम्।

२. माण्डूक्योपनिषत्, ७।

३. शाङ्करसम्प्रदायानुसारिशान्तिपाठक्रमे पठ्यमानाः श्रौता मन्त्राः इतरे श्लोकाश्च **ईशादिविंशोत्तरशतोपनिषदः** इति नाम्ना निर्णयसागरमुद्रणालयप्रकाशिते ग्रन्थे आदौ मुद्रिताः। तत्र 'अथानध्यायमङ्गलपाठः' इति शीर्षकेण त्रय इमे श्लोकाः पठिताः। महामहोपाध्यायविरुदभूषितैः अनन्तकृष्णशास्त्रिभिः सम्पादिते भामतीकल्पतरु-परिमलटीकात्रययुते ब्रह्मसूत्रशाङ्करभाष्यसंस्करणेऽपि 'आरम्भे मङ्गलपाठक्रमः' इति शीर्षकेण कतिपयांशाः पठिताः। तत्रापीमे त्रयः श्लोका अन्ते समुद्धृताः।

४. महाभारतस्य अनुशासनपर्वणः एकोनशताधिकपञ्चाशत्तमे अध्याये यद् विष्णुसहस्रनामस्तोत्रं लोके सुप्रथितं पठितं तस्य पूर्वपीठिकायां प्रयुक्तमिदं विशेषणद्वयं परब्रह्मस्वरूपस्य भगवतो विष्णोः। महाभारतम्, अनुशासनपर्व, १४९.१०।

५. पातञ्जलं योगसूत्रम्, १.२४।

६. शिशुपालवध-महाकाव्यम्, ४.१७।

७. दृश्यतां तृतीया पूर्वटिप्पणी। तत्र निर्दिष्टे श्लोकत्रये तृतीयोऽयं श्लोकः।

८. तैत्तिरीयोपनिषत्, १.८।

९. कठोपनिषत्, १.२.१६

१०. कठोपनषत्, १.२.१५ भगवद्गीतायामस्य मन्त्रस्योत्तरार्धभागः 'ब्रवीम्योमित्येत-दित्यन्त्यभागवर्जं यथाक्षरमनुकृतः 'यदक्षरं वेदविदो वदन्ति....' इत्याद्यष्टमाध्यायैकादशेन पद्येन। तत्र केवलं छन्दोऽनुरोधादन्ते 'प्रवक्ष्ये' इति पदं प्रयुक्तम्।

११. कठोपनिषत्, १.२.१७।

१२. मुण्डकोपनिषत्, २.२.४।

१३. भगवद्गीता, १७.२३।

१४. भगवद्गीता, ८.१३।

१५. भगवद्गीता, ८.१३।

१६. पातञ्जलं योगसूत्रम्, १.२५।

१७. कुमारसम्भवम्, २।

१८. कालिदासीयत्वेन लोके विख्याता देवी (श्यामला?) नवरत्नमाला, केचिदस्याः स्तुतेः कर्तारं रघुवंशशाकुन्तलादिप्रणेतुः कालिदासादर्वाग्भवं कालिदासान्तरमामनन्ति।

१९. जैमिनिप्रणीतं पूर्वमीमांसासूत्रम्, १.१.१।

२०. बादरायणप्रणीतं ब्रह्मसूत्रम्, १.१.१।

२१. आपस्तम्बश्रौतसूत्रम्, १.१.१ प्रथमप्रश्ने प्रथमकण्डिकायां प्रथमं सूत्रम्। महामहोपाध्याय-शास्त्ररत्नाकर-पण्डितश्रीचिन्नस्वामिशास्त्रिभिः सम्पादितं धूर्तस्वामिभाष्यसहितं, बरोडा-प्रतिष्ठेन 'आरिएन्टल् इन्स्टिट्यूट्'-संस्थानेन १९५५ वर्षे प्रकाशितम्।

२२. आपस्तम्बगृह्यसूत्रम्, १.१.१ प्रथमपटले प्रथमखण्डे वा प्रथमं सूत्रम्। (अत्र समग्रो ग्रन्थः अष्टसु पटलेषु, त्रयोविंशतौ खण्डेषु च स्वातन्त्र्येण विभक्तः। खण्डाः पटलानां नावान्तरविभागा इति ध्येयम्।) पण्डितश्रीचिन्नस्वामिशास्त्रिभिः अनाकुला-तात्पर्यदर्शननामभ्यां व्याख्यानाभ्यां सहितं सम्पादितं हरिदास-संस्कृत-ग्रन्थमालायां चौखम्बाप्रकाशकैः काश्यां १९२८ वर्षे प्रकाशितम्।

२३. आपस्तम्बधर्मसूत्रम्, १.१.१.१ प्रथमप्रश्ने, प्रथमपटले (प्रथमकण्डिकायां वा) प्रथमं सूत्रम्। पण्डितश्रीचिन्नस्वामिशास्त्रिभिः पण्डितरामनाथशास्त्रिभिश्च उज्ज्वलाव्याख्यया सह सम्भूय सम्पादितं चौखम्बाप्रकाशकैः काश्यां १९३२ वर्षे प्रकाशितम्।

२४. वैशेषिकसूत्रम्, प्रथमाध्याये प्रथमाह्निके प्रथमद्वितीयसूत्रे अमू। शङ्करमिश्रकृतया उपस्कारनाम्न्यां व्याख्यया ढुण्ढिराजशास्त्रिकृतया 'प्रकाशिका'-हिन्दीव्याख्यया च सहितम्। श्रीकाशीसंस्कृतग्रन्थमालायां १९५ तमग्रन्थत्वेन प्रकाशिते द्वितीयसंस्करणे पञ्चमैकादशपृष्ठयोः। (१९६९)

२५. पातञ्जलं योगसूत्रम्, १.१।

२६. पातञ्जलमहाभाष्यस्य उपक्रमवाक्यम्।

# श्रीगुरुचरणानां शास्त्रप्रीतिः

**म.म. श्रीविश्वनाथशास्त्रिदातारः**
अध्यक्षचरः, प्राचीनराजशास्त्रार्थशास्त्रविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।

प्रातःस्मरणीयानां गुरुवर्याणां पण्डितराजानां श्रीराजेश्वरशास्त्रिचरणानां प्रायशः सम्पूर्णं चरितं शास्त्रमात्राधीतिबोधसमन्वितमेवाभूत्। तेषां चरितेषु क्वचिदपि मनस्यन्यद् वचस्यन्यदित्युक्तिसमाश्लिष्टत्वं नाभूत्। मनोवाक्कायकर्मणामैकरूप्येण सम्पत्तिस्तस्यैव सम्पूर्णेषु कर्मसु भवति, यत्र सर्वथा शास्त्रमात्रप्रमाणानुयायित्वं चकास्तीति नीतिः।

अस्मद्गुरुचरणाः शास्त्रमात्रैकशरणाः सन्तोऽपि न प्रत्यक्षानुमाने विरुध्य शास्त्रीयकर्म कर्तुं प्रायतन्त; अपि तु तत्संवादेन सह यत्कर्माचरितुं शास्त्रमन्वमोदत सानन्दं तदनुबन्धिन्येव तेषां प्रवृत्तिर्महतो यशसः प्राप्तये साधनं बभूव। तेषां यशोराशीनामुपष्टम्भकाः सर्वाः कृतयो नास्माभिस्तच्छिष्यैरुत्तरवयस्कैर्ज्ञातुमर्हास्तथापि ममायं परिकरो निरपवाद एव मन्तव्यः। 'नभः पतन्त्यात्मसमं पतत्रिणः' इत्युक्तत्वात्। तदाहुः पुष्पदन्तमहाभागा हरभक्ताः—

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्
ममाप्येष स्तोत्रे हर! निरपवादः परिकरः।। इति।।

गुरूणामेतेषां विवेकबहुलायां मतौ यद्यत् शास्त्रमवगाह्यमानं सज्जागरूकं बभूव, तन्न भगवतः श्रीकृष्णाद्रामाद्वाऽन्यद्बभूव, यत्र वस्तुगत्या शास्त्रप्रीति-

स्तत्रैव प्रभोर्वासः, यत्र वा प्रभोर्वासस्तत्रैव शास्त्रं प्रत्युच्चतमा प्रीतिः सामनैयत्यात्।

तथा सत्येवात्मसम्पद्गुणानां तदैवाभ्युदयोऽप्यवश्यम्भावीति नैतिकः पन्था अप्यस्मद्गुरुचरणचरितेषु तदानीन्तनैः सामाजिकैरवालोक्यत। तद्यथा—तेषु धैर्यं, शौर्यं, विद्या, पाण्डित्यं, प्रतिभा, श्रद्धा, विवेकः, उदारता, सहिष्णुता, सत्यनिष्ठता, वसुधैव कुटुम्बकमिति भावः, बुद्धेरष्टौ गुणाः, शुश्रूषादयः, शमः, ब्राह्मण्यं, गुरुत्वमसङ्ग इत्यादयो दैवसम्पद्गुणाश्च संवासिभिर्विद्वद्भिस्तत्रान्वभूयन्त। सत्यप्येवं तेषु मन्त्रित्वार्हगुणानामेव प्राधान्यं बभूव इति ते समराङ्गणे शस्त्रादिग्रहणं विप्रस्वभावानर्हमित्यस्माकं पुरतो निरूपयन्त आसन्।

किञ्च यत्र धैर्यादय उपर्युक्ता गुणा विराजन्ते, तेषामाकृतिः कृतिर्मनः-प्रवृत्तिर्वाणी च लोकोत्तरैव भवति स्म। तदाहुः—

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम्।
लोकोत्तराकृतिरिहाकृतिरार्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः।।इति।

सत्स्वप्येतेषु गुणेषु केवलं प्रधानतमं विद्यावत्त्वादिगुणजातं गुरुत्वसम्पादकं कीदृक् तेष्वासीदिति विमृश्यते।

अधीतायामपि विद्यायां गुरुत्वं जीवेष्वनन्तेषु पितुर्मातुरात्मनः पुण्यपरिपाकेनेशानुग्रहेण च क्वचिदेवोदेति। सोऽयमुदयोऽस्मद्गुरुवरेषु तदन्ते-वासिभिः संवासिभिर्विद्वद्भिः स्वजनैश्चानुभूतः, तस्य निदर्शनमेतावदेव यद् गुरुवर्याः शास्त्रप्रामाण्यं वेदापौरुषेयत्वं प्रति अर्थतोऽनुष्ठानं प्रति च बद्धादराः सन्तो न स्वस्थानाद् विचेलुः। इदमविचलनमपि सन्तोषसुखानुभवात्मकं मतिभाव-प्रकाशकं सत् तेषु विवेकानुमापकमिति निर्णयेन वक्तुं शक्यते। तद्विवेक-प्रकारस्तैरध्यापितः सोऽप्यवसरप्राप्तत्वात् संक्षिप्योच्यते, तथा हि—आचार्यमते विध्यर्थः प्रेरणापर्यायो भावना भवति, तस्याः धातुप्रत्ययार्थकृतान्वयः स्वात्मकहेतु-ज्ञानाधीनेष्टसाधनत्वबलवदनिष्टानुबन्धित्वाभावकृतिसाध्यत्वत्रितयानुमितिप्रयोज्यत्व-सम्बन्धेनाचार्यैर्निरणीयत। एवं भूतेष्टसाधनत्वाद्यनुमितिः शास्त्रोदितविधिमन्तरा सर्वत्र आभासशून्या प्रमात्मिकैवेति न वक्तुं शक्यते। इति शास्त्रमेव सफलां प्रवृत्तिं प्रति शरणमित्यकामेनापि वक्तव्यम्। नियमस्यास्य प्रत्ययार्थमेव गुरुभिर्धर्मशास्त्रोदित-

विधिहेतौ तद्विशेषणतया नीतिशास्त्रोक्तदिशा प्रत्यक्षानुमानेऽपि इष्टसाधनत्वाद्यनुमितिप्रमात्वरक्षायै प्रवेशिते। अनुभूतञ्चैतत् तैः अर्थशास्त्रोदिते प्रत्येकस्मिन् विधौ। अत एव ब्रह्मपरम्परया प्राप्तं चाणक्यपरिगृहीतमर्थशास्त्रं धर्मशास्त्रान्नातिरिक्तमिति आचार्या गुरव उद्घोषयामासुः। एवं रीत्या परिभाषितशास्त्रार्थमादृत्य देशकालानुशक्तीः सम्यगनुसन्धाय ते मन्त्रिकार्यं निर्वर्तयामासुः। अनुबभूवुश्च त्रिवर्गफलसम्माननं कीर्तिं यशश्च। तदिदं कथं तैरर्जितमिति प्रकाश्यते—

मीमांसकैः साधितेऽपि वेदापौरुषेयत्वानुमाने वचननैरपेक्ष्येणान्वयव्यतिरेकसहकृतं कार्यकारणभावमात्रमवलम्ब्यैतिहासिकानां पुरतः कथङ्कारं साधनीयमिति चिन्तयन्तो गुरवो बहून् संवत्सरान् हापयामासुस्तत्रानेके विकल्पाश्चिन्तिताः। तेष्वन्तिमो विकल्पोऽनुभूत ऐतिहासिकसमीक्षया, तदा ते विश्रान्तिसुखमन्वभवन्। स च 'शान्ति का अग्रदूत'-ग्रन्थस्य द्वितीयभागे मुद्रितो वर्तते; किन्तु मनसि तुष्टेऽपि विद्वांसो यदि नानुमन्येरन् तर्हि स्वचिन्तितमपार्थमेव भवति, तन्निरासः पुण्यपत्तने सङ्घटितायां महत्यामैतिहासिकपरिषद्युपस्थितानां समेषां पुरतो वेदापौरुषेयत्वमन्वयव्यतिरेकमात्रप्रचुरतर्कप्रकाशनेन साधितम्। तं विषयमाकर्ण्य उक्तपरिषद्युपस्थितैर्विद्वद्वरेण्यैर्यदानुमोदितं तदा गुरवो जीवनसाफल्यं कृतकृत्यताञ्चामन्यन्त।

वेदापौरुषेयत्वसाधनकार्ये पूर्णतां गतेऽपि तेषु पूर्वप्राप्तो विद्याशोधसम्बन्ध्युत्साहः शमं न लेभे। तदनुसारेण लोके अधर्मस्याभिवृद्धस्य विरामाय नैतिकः पन्थाः क इति चिन्तयन्त आसन्, तत्रोत्तरमिदं ते अनुबभूवुः—'नीतिं विना फलं नास्ति' इति वचनेन। सा च नीतिः लोकेषु विलुप्तप्राया तां को वा वक्तुमर्हेदिति चिन्तायां जागरूकायां गुरवः—'शास्त्रेणैकान्तिको नयः' इति निरणैषुः। तदा—

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपालेशमात्रेण तस्मै श्रीगुरवे नमः॥

इति विचारयन्त एवासन्, तदैव नीतिप्रतिपादकं पुस्तकमेव सटीकमुपलेभिरे। लब्धेऽपि पुस्तके नीतिमधिकृत्य याष्टीका उपलभ्यन्ते, तासु परम्पराप्राप्तस्य पदार्थस्य परिचयो गुरुवर्यैः परिशीलितः; किन्तु तमधिकृत्य याः शङ्का उदिता भवन्ति भूताश्च तासां समाधानं दुर्लभमासीत्। यतः सहस्रवर्षद्वयवर्षात्मकेऽस्मिन् दीर्घकाले धर्मपक्षग्राहिणो विद्वांसः शङ्कासमाधानपुरस्सरां नीत्यध्ययनपरम्परामपि

विसस्मरुः। न्यायमीमांसादिप्रभृतिवेदाङ्ग-तत्क्रोडपत्राध्ययनमेवावशिष्टं तदप्यधुना नीतिसम्बन्धिशङ्कासमाधानाभावाद् अप्रमाणभावं भजते। तदुक्तम्—

आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते।
सत्येऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे।।इति।

तथैवार्थशास्त्रेऽपि—'दण्डमूलास्तिस्रो विद्याः', 'आन्वीक्षिकी-त्रयी-वार्तानां योगक्षेमसाधनो दण्डः' इति च।

विद्यानां गुणप्राधान्यानुरोधेन क्षात्रधर्मतदितरधर्मा अङ्गयङ्गिभावं भजन्ति। तथा चाहुः—

'क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः'।

अत्र हि क्षात्रधर्मपदेन न क्षत्रियस्यैव धर्मः; किन्तु अहिंसादयः सामान्यधर्मा एवाभिधीयन्ते, व्यवहारप्रकाशादौ तथैव निर्णीतत्वात्। यदायं धर्मो विद्याप्रचार-प्राचुर्याल्लोके स्थिरोऽभूत्, तदा राज्ञोऽभावेऽपि न क्षतिर्देशस्य बभूव। यदा तु अत्रालस्यप्रमादादिदोषात् क्षात्रधर्मा विलुप्ततां गता भवन्ति, तदा राजशासन-सापेक्षता लोकेनानुभूयते, ततो राजशासने स्थापिते राजा कार्यानुशासनेन स्वधर्म-स्थापनं विदधाति, दण्ड्यान् दण्डयतीति क्रमेण क्षात्रधर्मो लोके प्रसरति, स एवाङ्गी प्रधानमन्ये धर्मास्तद्गुणभूता इति नीतिमर्यादा। तां दृष्ट्वैवास्मद्गुरवः शास्त्रिचरणा नीतिशास्त्रोद्धरणाभिलाषुकाष्टीकान्तराण्युपजीव्य प्रत्यक्षानुमानशब्दप्रमाणप्रमितत्वं नैतिककर्मसु शङ्कासमाधानपुरस्सरं यथा सम्भवेत् तथा प्रयतमाना राजशास्त्रमध्यापयामासुः। तथा सत्येव ब्रह्मतेजोबलं विप्रेषु वर्धिष्णुर्भवति, आसीच्च तत्तेष्विति विद्वत्संवादे न तिरोहितं विदुषाम्।

विवादावसरे सिद्धान्तपक्षमभिनिविश्य स्थापयत्सु तेषु सरस्वतीपुत्रेषु स्वयमेव तर्कप्रमाणसम्बद्धतया अज्ञातोऽप्यर्थस्तथा स्मृतिपथमावर्तत यथा तेषां ब्रह्मवर्चस्वित्वं न विस्खलेत्। इदमप्येकं तेषां सङ्गे उपस्थितानामन्तेवासिनां कृते अतिमोदावहमभूत्। अनेकेषु दुरूहतरेषूहितेष्वपि—

'लोकज्ञस्य सर्वशास्त्रविदुषो धर्मे मतिर्दुर्लभा'।

इत्यादिसूक्तं प्रायश आधिक्येन विद्वत्स्वनुभूयमानं ज्ञायते तदपवादो गुरुषु जीवन-समस्यायामुपस्थितायामपि स्थिर आसीदित्यहो ब्रह्मवर्चस्वित्वसंवलितस्य ज्ञानस्यायं महिमा।

यदा किल शासकः क्षात्रधर्मपालनाद्विमुखो भवति, तदा विष्णुभक्तिसहचारिण्या विद्याया लोके प्रकाशोऽपि अस्तमितो भवति। तदानीं जीर्णतां गताया विद्याया गवेषकास्तद्गवेषणां परिचिन्तयन्ति, तदा ते क्वचिदेवास्मद्गुरुसदृशदुर्गेषु तद्विद्यां प्राप्यैव सन्तोषमनुभवन्ति। तस्य दुर्गस्य तदाश्रिताया विद्यायाश्च कीदृशी स्थितिरिति 'धर्मविजयनाटके' स्पष्टीकृतम्। तदाहुः—

दारिद्र्यदुर्ललितदूषितभाग्यभोगा-
प्याश्रित्य धैर्यमवलम्ब्य मनस्विताञ्च।
अभ्यासतीव्रधिषणा गुरुभक्तिभाजां
स्वान्तः प्रविश्य गिरिदुर्गमिवाधिशेते।।इति।

अस्मद्गुरुचरणाः स्वप्रेरणया नीतितत्त्वं पालयन्तो वृत्तिसाङ्कर्याद् विमुखा विष्णुभक्तिसहचरिताया विद्याया विश्रामस्थानमभूवन् काशीक्षेत्रे। एकां धनुर्विद्यां विहायापरेषु विद्यास्थानेषु सर्वत्रैव तेषां शेमुषी निर्बाधा विचरन्ती सुखमामोदं च प्राप।

राजनीतौ स्वमण्डले समासां प्रकृतीनां सङ्घटनाय राज्ञां कृते प्राधान्येन सत्त्वबुद्धी उपदिष्टे—'सत्त्वबुद्धिव्यपाश्रयम्' इत्यादिवचनेन। तत्र सत्त्वं व्यसने अभ्युदये च यदविकारकरं, बुद्धिश्च शुश्रूषादिलक्षणा इत्यादिव्याख्यानं जानन्तोऽपि सत्त्वस्वरूपमधिकृत्योदितायास्तद्विषयकजिज्ञासाया उपशमनाय यदा प्रयतिरे, तदानीं तैः सत्त्वरूपमेवमुपालभ्यत यत्—

'ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते' इति। अस्यायमाशयः— समस्तशास्त्राणामेकवाक्यतया यदर्थज्ञानं निष्पन्नं भवति, तत्र नाप्रामाण्यशङ्कावसरः, नाप्याहार्यता तद्विरोधे प्रमाणान्तरस्यैवाप्रमाणत्वमित्यादि स्फुटम्। एवंविधं ज्ञानं यदि ईश्वरस्य तेजोद्वारेण जीवे समुदेति तदा तज्ज्ञानं प्रभेत्युच्यते, तत्र यद्यानन्दप्रभाया मिश्रणमपि भवति तदा सा ज्ञानप्रभा सत्त्वमूलं भवति। सैव बुद्धिसत्त्वसहचरिता नीतेर्मूलं भवति। सा यदा राजमन्त्र्युभयाधिष्ठिता भवति तदा नीतिर्निर्बाधा सञ्चाल्यते। एतदनुसन्धाय—

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः।
साधयन्त्याशु कार्याणि काककूर्ममृगाखुवत्।।

इत्याभाणकमुपपन्नं भवति। तदेतदनुष्ठानतो गुरुवरैः सोत्साहैर्मन्त्रकुशलैः साधितमित्यन्वभूवन् अन्तेवासिनः—

यस्य प्रसन्नो भगवान् गुणैर्मैत्र्यादिभिर्हरिः।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम्।।

इति भागवतपद्ये यदुक्तं तद् गुरुचरणानां चरित्रेऽपि स्फुटं व्यलोक्यतान्तेवासिभिः। तद्यथा—पंढ़रपुरक्षेत्रे बारकरीसम्प्रदायसहितेनापारजनसमूहेन बृहत्यां सभायां सभजिताः। काश्यां तदानीं वाराणसीस्थसाङ्गवेदविद्यालये विद्वद्भिः प्रतिष्ठितैर्नागरिकैरन्तेवासिभिश्च आयुष्याभिवृद्धिः प्रार्थिता, मया दृष्टा स्मर्यते।

अध्यापनावसरे अविश्रममपरिमितघटिकापर्यन्तं व्यावहारिकीं कथामुज्झित्यैकाग्रेण चेतसा पाठयन्त एव बभूवुः, नासीत्तेषां तदानीं समययापनमानं न वा श्रमानुभवः।

अत्रावधेयम्—प्रायशो विद्या अधीत्यापि तज्जनितमदाक्रान्तिर्भवतीति दृश्यते, सा यथा न भवेदन्तेवासिषु तथैव ते सदा उपदिदिशुः। तत्र प्रमाणत्वेन विद्या ददाति विनयमिति सर्वेऽपि वदन्त्येवं। तत्र हेतूपन्यासं कुर्वद्भिर्गुरुभिराद्यशङ्कराचार्यमतं पौनःपुन्येन श्रावयाञ्चक्रिरे। तथा हि (प्रश्नोत्तरमालिका)—

'दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्विधं भद्रम्।। इति।

यदि भद्रता विद्यां प्राप्य उदेति तर्हि तथाविधेषु विद्यावत्सु परस्परं गुणवतां गुणिभिः सह सख्यस्थैर्यं नासुलभं भवति। अन्यत्र तु—

न नटा न विटा न गायका न परद्रोहनिविष्टबुद्धयः।
नृपसद्मनि नामके वयं कुचभारान्नमिता न च स्त्रियः।।

इत्येवादधति सर्वे। अत्र सर्वत्रापि निर्धना अपि गुरवो विवेकधनवन्तो दाढ्येंन वक्तुं शक्यते। यदा किल जीविकासमस्यामधिकृत्य ते चिन्तयामासुः, तदा तत्समस्यासमाधानं वक्तुं यदा प्रावर्तन्त तदा तद्वचनरचनायामधोलिखितम्—

'का चिन्ता मम जीवने यदि हरिर्विश्वम्भरो गीयते'। इति पद्यमेव प्राधान्येनास्माभिरश्रावि।

किञ्च—जीवनादृष्टमधिकृत्य ते प्रोचुः समाधानान्तरम्। तस्यायमाशयः— यदि जीवः स्वतन्त्रो भूत्वा जीवनोपायं समीक्षते तदा जीवनादृष्टं सुप्तमिव मौनं भजते। यदा स एव जीवो जीवनादृष्टमेव तत्परस्सन्नवलम्बते तदा तथाविधं जीवं जीवयितुं प्रयतमानमदृष्टं कमपि प्रेरयित्वा दिव्यान्तरिक्षभूमिमार्गतो जीवनसाधनं प्रापयत्येव।

भगवानीशोऽपि तथाविधं जीवं दृष्ट्वा असकृत् तं प्रणमति। तदुक्तं भागवतेऽपि—

सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित्।
अहीयमानः स्वाद् धर्मात् सह्यस्याखिलकामधुक्।।इति।
विप्रान् स्वलाभसन्तुष्टान् सर्वभूतसुहृत्तमान्।
निरहङ्कारिणः शान्तान् नमस्ये शिरसाऽसकृत्।। इति च।

यद्यप्यत्र विप्रनिरुक्तिरस्ति, तथापि विप्रस्वरूपे तेजस्विता, निःस्पृहता च प्रकाशिता भवति, तर्हि तत्प्रभावमहिम्ना इतरे सर्वे ब्राह्मणपदवीमनुवर्तमाना भगवति भावं भजन्त इति ते सर्वेऽपि ईशस्य नमस्कार्या एव। तदिदं वृन्दावने नन्दाश्रितानां गोपालानां गोपीनां च चरितं चिन्तयतां नाविदितमिति।

अथैकः प्रश्न ईशप्रसादविषयेऽवशिष्टो यत् सः कथं प्रसन्नो भविता, कथं वाऽस्माभिस्तत्प्रसादो विज्ञेय इति। तत्रेदं गुरवोऽवदन् यद् ईश्वरो यमर्थं कामयते स एवास्माभिरीशभक्तिमनुरुध्य अनुष्ठितः। सम्प्रदानकारकमीश्वरो भवति, तर्हि अवश्यमीशप्रसादो भविष्यत्येव। तदनुष्ठानं भागवतेनैव स्फुटीकृतम्—

भिक्षोर्धर्मः शमोऽहिंसा तपोऽन्वीक्षे वनौकसाम्।
गृहिणो भूतरक्षेड्या द्विजस्याचार्यसेवनम्।। इति।

अन्यच्च लोकमनोरञ्जनार्थं वर्णाश्रमस्वराज्यसङ्घस्य माध्यमेन एते गुरवो बहुषु स्थलेषु गत्वा धर्मतत्त्वं प्रकाशयामासुः। तत्र सर्वत्रापि अभीप्सितानुसारं फलप्राप्तिमदृष्ट्वा स्वराष्ट्रे तत्प्रतिष्ठायै निर्णीतं कार्यजातं शास्त्रानुमोदितं किमास्ते इति यदा चिन्तयामासुः, तदा एतत् कर्म नैतिकमिति मत्त्वा चिन्तापसारणाय नीतिशास्त्रमालोडयामासुः। तदानीं ते स्वराष्ट्रस्य सङ्घटनार्थं प्रथमोपायत्वेन 'विद्यावृद्धैः सार्धं विद्याचिन्तेति' अपश्यन्। तदाहुः—अप्रतिष्ठितराज्यस्य परराज्यात्मसात्करणासम्भवात् स्वराज्यप्रतिष्ठापनार्थमयं प्रथमोपायो यत्— 'विद्यावृद्धैः सार्धं विद्याचिन्तेति'। अत एव तदनुष्ठान एव ते रेमिरे।

किञ्च विद्याभिः सह तत्तादात्म्यभावापन्नचेतसां गुरूणां शृङ्गारोऽपि तेषां वचनरचनैवासीत्। अत एव तेषां कृते विद्याभूषणं भूषणं बभूव। अन्ये अलङ्कारा असन्तोऽपि तेषु नैयून्यं भाषयितुं न क्षमा बभूवुः। तथा चाहुः क्वचित् क्वचिद् गुरव एव—

'नास्माकं कटका न वाजिमुकुटाद्यालङ्क्रिया सत्क्रिया
नोत्तुङ्गस्तुरगो न कश्चिदनुगो नैवाम्बरं सुन्दरम्।
किन्तु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषां
चेतस्तोषकरी शिरोनतिकरी विद्यानवद्यास्ति नः।।इति।

एवंविधान् मन्त्रिगुणसम्पत्तिमतो विद्याभिर्विद्योतमानान् विवेकवृत्त्यवच्छिन्न-चिद्वृत्तिमतो गुरून् प्रणम्य तेषां चरणसरोरुहेष्वेव इमं 'श्रीगुरुचरणानां शास्त्रप्रीति'-सम्बद्धं वाक्कुसुमोपहारं समर्प्य विरमामि।



# सम्प्रदायरक्षकाः पूजनीयास्तातपादाः

## श्रीविश्वेश्वरद्राविडः (पण्डितराजानां द्वितीयः पुत्रः)

वाराणसी



अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।

प्रातःस्मरणीयानां पूज्यपादानामस्मत्तातपादानां वर्णनं विद्वद्वरैर्धूपकर-शास्त्रिमहोदयैरनेन श्लोकेनाकारि—

'अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम्।
लोकोत्तरा कृतिरिहाकृतिरार्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः'।।

विद्वद्रत्नैर्यशःकायैर्ब्रह्मश्रीश्रीपाददीक्षिततापसमहोदयैस्तातपादानां स्तुतिरित्थं कृता—

'दृष्टे यद्वदने सुधांशुमुकुटप्रेक्षास्पृहा शाम्यति
स्पृष्टे यत्पदरेणुके सुरधुनौ को नाम सिष्णासति।
धर्मत्राणपणीकृताखिलनिजप्राणान् बुधेन्द्रेडितान्
तान् राजेश्वरशास्त्रिदेशिकवरान् मूर्ध्ना नमामोऽन्वहम्'।।

वर्णनमिदं न केवलमतिशयोक्तिः, अपि तु वस्तुस्थितिस्तादृशी आसीत्। अत एव परमशिवरूपैः काञ्चीशङ्कराचार्यैः श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामिपादैर्दक्षिण-भारतात्काशीयात्रार्थमागच्छद्भ्यः साग्रहमुच्यते स्म यद् व्यासकाश्यां जङ्गमव्यासरूपा राजेश्वरशास्त्रिणः सन्ति, तेऽवश्यं द्रष्टव्याः, तेषां दर्शनं विना काशीयात्रा पूर्णा न भविष्यतीति।

'अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद्रूपम्'।

इति साङ्ख्यकारिकोक्तं सात्त्विकं स्वरूपं तेषु प्रत्यक्षीक्रियते स्म। ज्ञानं निश्चयात्मकमासीत्। ज्ञानेन साकं धर्मवैराग्यैश्वर्याणां समवाय: प्रायेण दुर्लभो भवति। स तातपादेष्वासीत्। सुश्रुतसंहितोक्तं ब्रह्मकायलक्षणं तातपादेषु पूर्णरूपेण समन्वितं भवति स्म। 'ऋच: सामानि यजूंषि। सा हि श्रीरमृता सताम्' इति वेदोक्ताया अमृताया: श्रिय: संरक्षणायाजीवनं तै: प्रयास: कृत:। काशिराजानां पुण्यश्लोकानां महामहिमश्रीविभूतिनारायणसिंहशर्मदेवमहाभागानामाग्रहेण तेभ्यस्तातपादै: श्रीमद्भागवतं श्रावितम्। तत्प्रभावेण तेषामात्मजरूपेण श्रीमतामनन्तनारायणसिंहशर्मणां प्रादुर्भावो जात:। तेषां सामवेदाध्ययनकाले समागते अन्येषां सहाध्यायिनामलाभस्थितावहं सामवेदाध्ययने योजित:। माध्यन्दिनीय-शतपथब्राह्मणस्याध्ययनेऽस्मदनुजो गणेश्वरो योजित:। तातपादैराजीवनं निरलसं विद्यादानं कृतम्। 'पाषाणादपि पीयूषं स्यन्दते यस्य लीलया' इति तातपादानां वैशिष्ट्यमासीत्।

'योऽन्धं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत्।
तमेवाध्यापकं मन्ये इतरे नामधारका:'।।

इति श्रीरघुनाथशिरोमणिवर्णितरीत्या तातपादेषु गुरुनाम सार्थकमभूत्। 'को गुरुरधिगततत्त्व: शिष्यहितायोद्यत: सततम्' इति भगवत्पादोक्तं गुरुलक्षणं तेषु समन्वितम्।

'शान्ति का अग्रदूत'-ग्रन्थस्य प्रस्तावनायां श्रीमद्भि: वि.वि. देशपाण्डेमहोदयैस्तातपादानां जीवनविषये इत्थं वर्णितम्—

'श्री शास्त्री जी समस्त भौतिक वस्तुओं का आत्यन्तिक त्याग, विद्योपासना कें लिए घोर तपश्चर्या और पराकाष्ठा की प्रसिद्धि-पराङ्मुखता के मूर्तिमन्त प्रतीक हैं'।

पितामहचरणैस्तातपादेभ्य इयं शिक्षा प्रदत्ता—

'का चिन्ता मम जीवने यदि हरिर्विश्वम्भरो गीयते
नो चेदर्भकजीवनाय जननीस्तन्यं कथं निस्सरेत्।
इत्यालोच्य मुहुर्मुहुर्यदुपते! लक्ष्मीपते! केवलं
त्वत्पादाम्बुजचिन्तनेन सततं कालो मया नीयते'।।

इमां शिक्षामनुसृत्य तातपादैर्भगवद्भक्तिमाश्रित्य विद्यादानमाजीवनं कृतम्। यदाऽन्नव्यवस्था न भवति, तदानीं शोभाञ्जन(शिग्रु)पत्राणि जलेन पिष्ट्वा कल्केन

निर्वाहः कृतः। एकस्मिन् दिने सायङ्कालपर्यन्तं गृहे अशनार्थं किमपि नासीत्। सपरिवारास्तातपादास्तथैव स्थिताः। सायङ्काले आन्ध्रदेशतः कश्चित्तेषां दर्शनार्थमागतः, तेन स्वकीयप्रश्नानामुत्तराणि तातपादेभ्यः प्राप्तानि, अन्ते च तेन तेभ्यः शतं रूप्यकाणि समर्पितानि, तद्द्वाराऽन्नव्यवस्था रात्रौ जाता। 'ब्राह्मणेन निष्कारणं सषडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति नियमपालनं तैः कृतम्। बाल्ये वेदाध्ययनं किञ्चिज्जातम्। वार्धक्ये पूर्णं कृतम्। श्रीवामाचरणभट्टाचार्यप्रभृतिभिर्विद्वद्वरैः शास्त्रावताररूपेण तातपादा आद्रियन्ते स्म। चमत्कारकर्तृणां सर्वाः कलास्तातपादानां पुरस्ताद्विफलतां गताः। एवमेवान्यैः कृताः कारिताश्चाभिचारिकप्रयोगा अपि। पूज्यन्यायाचार्यश्रीबदरीनाथशुक्लमहोदयैः साग्रहं वारं वारमस्माकं सर्वेषां राजकीयपरीक्षाप्रदापनाय निवेदितैस्तातपादैस्तेभ्यो निःशङ्कं यदुत्तरं प्रदत्तं तद्वास्तविकमित्यनुभूतम्।

'ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च'।।

इति शास्त्रोक्तसिद्धान्तः समग्रतया तातपादेषु दृष्टः। तैः साङ्गवेदविद्यालयस्य संरक्षणार्थं काशिराजवंशस्य सर्वविधसमुन्नत्यै च सर्वेषामैहिकसुखानां त्यागः कृतः। तातपादानां हार्दपरिज्ञानाय साङ्गवेदविद्यालयस्य रजतजयन्तीमहोत्सवे तैः प्रदत्तं दीक्षान्तभाषणमत्रोद्ध्रियते—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्।।

मान्या जगद्गुरुचरणाः सभापतयो महाराजा विद्वांसः सहृदयाश्च!

श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयस्य परीक्षासूत्तीर्णानां वर्षाशनदानमधुनैव भविष्यति। रजतजयन्तीमहोत्सवोऽयममुना रूपेण मूर्तिमान् पुरतः प्रकटीभविष्यति। 'नटनर्तकमल्लेषु दत्तं भवति निष्फल'मिति न्यायेन धनस्य रजतस्य सत्पात्रविनियोगोऽयमेव महोत्सव इति मे मतिः। 'आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत्। नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते'।। इति वदन् भगवान्मनुः स्नातकेषु वर्षाशनदानं प्रशंसति। अक्षयो 'यावज्जीविक' इति व्याख्याय टीकाकृद्भिर्यावज्जीववर्षाशनदानं कर्तव्यत्वेन मनुना उच्यत इति व्यवस्थापितम्। इदं यावज्जीववर्षाशनदानं महाराष्ट्रसाम्राज्ये शतसंवत्सरात्पूर्वं प्रचलितं, भारतवर्षे सर्वथा विलुप्तं सत्सम्प्रति काशिमहाराजैर्मेहतापरिवारेणान्यैश्चोदारैर्दातृभिः समुज्जीव्यत इति दृष्ट्वा मनोर्हृदयमेतदुद्योगकर्तृष्वेतेषु क्रियत्प्रसीदतीति भवतां नाविदितं स्यादिति मन्ये।

सुविशुद्धोऽयं धर्मो धार्मिकजनहृदयतुष्टिमिव समाजस्थितिमप्यनल्पां वितनोतीति मे मतिः। संस्कृतिरक्षणदृष्ट्या सुस्थितिरक्षणदृष्ट्या च द्विविध उपकारः समाजस्य स्नातकैर्वर्षाशनजेतृभिः क्रियते। तत्राद्या संस्कृतिरक्षणदृष्टिः साहित्यविद्भिर्विशेषतः समपेक्ष्यते, तथा हि काव्यदोषेषु विद्याविरोधदोषापेक्षयाऽपि च्युतसंस्कृतित्वं गुरुतरदोष इति विविच्यते। व्याकरणसंस्कारहीनानां शब्दानां तदेकाभिव्यङ्ग्यजातिविशेषानभिव्यक्तौ विप्रपङ्क्तिमध्यगतस्य चण्डालस्येव उद्वेजकतया रसाभिव्यक्तिविरोधिता च्युतसंस्कृतित्वेन भवति यथा, तथैव शास्त्रीयसंस्काररहितस्य देहस्य 'चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत्स्याज्जातकर्मादिभिर्नृणाम्'।। इति वचनानुसारेण अभिव्यञ्जकसंस्कारहीनतया जातिविशेषानभिव्यक्तौ म्लेच्छशिक्षया च विपरीतजात्यभिव्यक्तौ सत्यां रसोद्बोधप्रतिबन्धात् संसारमण्डले समुद्वेगजनकत्वमेव भारतवर्षीयस्य देहस्य सम्पद्यते। कृष्णपीतवर्णदेहा अबीसीनियाजापानप्रभृतयः पाश्चात्त्यशिक्षादीक्षिता अपि क्रैस्तवमोहम्मदादिमतप्रविष्टा अपि केनापि कारणेन, रसोद्बोधप्रतिबन्धादेव वर्तमानराजनीतौ समुद्वेजकाः सम्पन्नाः, विलोप्यन्ते च जगतीतलादित्यत्र स्वीयधर्मसंस्कृतिराहित्यादन्यत्कारणं किमपि नास्ति। प्रह्लादस्य हि भगवच्छरणस्य वह्निविषशस्त्रादिभिः कैरपि न प्रतीपमाचरितम्। अतो धर्मसंस्कृतिबलमेव परमं बलं निश्चीयते।

भारतीयराजनीतौ मुहम्मदधर्माभिनिविष्टाः परं सङ्घटिता एव अभ्युदीयमाना इत्यत्रापि स्वसंस्कृतिरक्षणादन्यत्किमपि कारणं न पश्यामः। अस्मदीयसंस्कृते रक्षणं स्नातकैः क्रियत इति तेऽस्माकमभ्यर्हिताः।

समाजस्य सुस्थितिदृष्ट्याऽप्येतेषामुपयोगिताऽनल्पैव प्रतिभाति। अस्ति व्याकरणमित्यवैयाकरणा अपि ऊहं क्रतुषु प्रयुञ्जते, अस्ति ज्योतिषमिति पुण्याहेषु कर्म कुर्वते। यथा अस्ति राजेति दूरस्था अपि जनपदा न मर्यादामतिवर्तन्ते, तथा तत्तच्छास्त्रवित्सुकृतबुद्धिषु केषुचित्स्नातकेषु स्थितेष्वेव तदीयविदग्धव्यवहारं दृष्ट्वा राष्ट्रस्य तत्तद्विद्याफलयोगक्षेमलाभो भवति, अत एव श्रुत्या 'आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामि'ति स्नातकस्य ब्राह्मणस्य आरम्भे राष्ट्रे समाशंसनं विधाय योगक्षेमो नः कल्पतामित्युपसंहारे राष्ट्रे योगक्षेमसमाशंसनं विहितम्। राजन्यादि-मध्यस्थितपदार्थनिर्माणं तु राष्ट्रीययोगक्षेमोपयोगि ब्रह्मवर्चसिनो ब्राह्मणस्यैव अनुबन्धभूतमिति श्रुतेरभिप्रायः, उपक्रमोपसंहारपर्यालोचनया प्रत्याहारन्यायेन चावगम्यते। अत एवाहुः शङ्करभगवत्पादा अपि—'ब्राह्मणत्वस्य हि रक्षणेन

रक्षितः स्याद्वैदिको धर्म' इति भगवानपि तद्रक्षणायैवावतरतीति च। भौमस्य ब्रह्मणो गुप्त्यै, वसुदेवादजीजनदिति पुराणांशमुपन्यस्य तैर्व्यवस्थापितम्। अतः समाजस्य योगक्षेमसाधनाय स्नातका अत्यन्तमपेक्षिता इति सिद्ध्यति। बुद्धिभेद-निवर्तनमपि स्नातकानां महत्तमं कार्यं तथा हि कर्तव्यनिश्चयरूपायाः संस्कारविशेषतां गतायाः प्रत्यक्षायमाणकर्तव्यज्ञानजनन्याः प्रतिभापदव्यपदेश्याया बुद्धेरधीना लोकयात्रा इति वयं पश्यामः। शङ्काजननं निर्भर्त्सनञ्च भेद इति कौटिल्य आह। बलवदनिष्टसाधनत्वप्रतिभानं शङ्का बलवदनिष्टसाधनत्वनिश्चय-जन्यदृढतमसंस्कारेण निवृत्तौ सत्यामभिव्यज्यमानः सुखविशेषसंस्कारो निवर्त्यविषये जुगुप्सापदव्यपदेश्यो निर्भर्त्सनपदार्थः। यथोक्तायाः शास्त्रीयकर्तव्यविषयाया बुद्धेर्यथोपवर्णितरीत्या शङ्काजननेन जुगुप्सोत्पादनेन च भेदनं पाश्चात्त्यशिक्षया अधुना प्रबलेन वेगेन समारब्धमिति को वा न जानाति। यत्र ब्राह्मणान्नसत्रलोपः, मन्दिराणां परिभवः, गवां परिभवः, राज्ञां परिभवः, व्यवहाराध्यायपरिवर्तनेन समाजस्थितिपरिभवश्च, धनिकानां तत्परिचाल्य-मानसंस्कृतपाठशालानाञ्च लोकमतानुवर्तिशासनसभाद्वारा पाश्चात्त्यनीतिप्रवर्तित-वृत्तपत्रप्रकाश्यमानक्रैस्तमोहम्मदथिऑसफी-आर्यसमाजब्राह्मसमाजप्रार्थनासमाजादि-पाखण्डिलोकमताभासपराधीनत्वं च सर्वात्मना प्रत्यहमुपचीयते। एवं-विधेऽतिभयङ्करे बुद्धिभेदने कियती अरुचिर्भगवत इत्ययमंशः 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्', 'सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः' इति गीतावचनद्वयेनावगम्यते। यथा तथा वास्तु। सोऽयं भगवतोऽत्यन्तानभिप्रेतोऽपि बुद्धिभेदोऽधुना नरीनर्ति भारताङ्गणे कालमाहात्म्यादिति पश्यामः। परस्परप्रीत्या सहधर्मचारिण्या वर्णसङ्करोऽनाचारश्च भगवतोऽत्यन्तानभिप्रेतौ भारतवर्षे साम्राज्यं विधातुमुत्सुकौ दृश्येते। एवंविधायां दुरवस्थायां का गतिरित्यालोच्यमाने—

'मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्'॥

युधिष्ठिरोक्तिर्विशुद्धसंस्कृतविद्यास्नातकमेवास्यां परिस्थितौ भेषजत्वेन व्यपदिशति।

चिरादाहतस्वातन्त्र्ये भारते वर्तमानाया परिस्थितेः क्रुद्ध-लुब्ध-भीतापमानिता इति चत्वारो वर्गास्समुत्पन्नास्तिष्ठन्ति, स्वबुद्ध्यनुसारं किञ्चित्कर्तुमुत्सुकाश्च। तेषु क्रुद्धस्य लुब्धस्य भीतस्य च सदसद्विवेकराहित्यादनुपदेश्यत्वेऽपि अपमानितस्य वर्गस्य किं कर्तव्यमिति जिज्ञासमानस्य अयमेवोपदेशो यत्स्नातकनिर्माणम्।

अपमानितस्य हि मान एवाकाङ्क्षितः—

'वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्'॥

इति स्थितिः। सामान्यजनस्य धनापेक्षित्वेन धनिकपराधीनत्वेऽपि धनिकानां जनसमूहपराधीनत्वमेव। समूहश्च दृढानुभवशालिभिर्वृद्धैरेव कैश्चित् स्वायत्तीकृतः सर्वत्रावलोक्यते। वृद्धानाञ्च समूहहितकरणे साक्षादसमर्थानां द्वारतया कर्मठा अपेक्षिता इति तत्पराधीनत्वे स्थिते कर्मठानाञ्च कर्मसु क्रियमाणेषु समस्तविध्यपराधदोषनिवृत्त्यर्थतया पर्यन्ते विद्वत्पराधीनत्वमेव भवति। रोगिणो ह्येकस्य नरस्य चिकित्सार्थं धनं वृद्धानुयायिना समाजेनाबहिष्कृतम्, तथा कर्मकुशलचिकित्सकसम्पत्तिः, चिकित्सके विद्यातिशययोगश्चापेक्षितः। धनाद्यभावेऽपि विद्यातिशययोगिनि चिकित्सके सानुकूले स्थिते तदुपदिष्टलङ्घनादिना धनादिनिरपेक्षेणाप्युपायेन रोगनिवृत्तिः सम्भवति कथञ्चित्। तस्य विद्यातिशयहीनतायां तु सर्वमन्यद्विद्यमानमपि निरर्थकमेव भवतीति दृष्टान्तमवलोकयतां नः पूर्वोक्ते धनादिपञ्चके यथोक्तो विद्याया गरीयस्त्वातिशयो न अस्फुट इति भाति। अतो मानिनां कृते अपमानदुःखादुद्धारकं कष्टदशां गतस्य भारतस्य शिर उन्नतिकारकं सर्वोच्चपरीक्षोत्तीर्णस्नातकानपेक्षि अन्यत्सर्वविधमपि कृत्यजातं सिकताकूपखननमेवेत्यत्र नास्ति संशयलेशस्यावकाशः। अतोऽपमानितस्य भारतीयस्य समाजस्यैकमेवैतत्कृत्यं यद्भारतीयविद्यानां समुन्नयनम्। 'शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिये'त्यादिपद्यैर्युधिष्ठिरेणेदमेवाविष्कृतम्। अतोऽस्यैव ब्रह्मवर्चसस्य सम्पत्त्यै सर्वात्मना भारतीयैः सर्वैः प्रयतनीयम्। 'वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते' इति सुभाषितं हृदि निधाय संस्कृतभाषायामितरभाषाणां क्रोडीकारं विधाय तस्या राष्ट्रप्रधानभाषात्वनिर्माणं भारतीयविद्याकलानां साहित्यस्य चात्युत्कृष्टप्रचारो विद्वत्परिषदां तर्करीतिनियन्त्रितानां प्रवर्तनेन संशयतिमिरच्छेदनं न्यायसौलभ्यनिर्माणेन साहित्यनिर्माणेन विदग्धव्यवहारातिशययोगमवलम्ब्य भारतीयविदुषां विद्याक्षेत्रे परमोत्कर्षसम्पादनं भारतीयसमाजस्य तद्द्वारा मानवसमाजस्य समस्तविधिहितसम्पादनञ्च इत्येतानि कार्याणि विद्यास्नातकैर्विद्यालयेन च सम्पादनीयानि वर्तन्ते। एतत्समष्टिः धर्मवृद्धिश्च इत्येतद्द्वयमेव मिलितं चेद् ब्रह्मवर्चसमिति व्यपदिश्यते। तत्रापि 'ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः। कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः'॥ इत्युक्तनयेन सर्वोच्चपरीक्षोत्तीर्णविद्वांसस्तेषु च बौद्धादिकृतकालुष्यनिवर्तकाः कृतबुद्धयस्तार्किकाः,

तेष्वपि धर्मतोऽध्यापनादिस्वकर्मरता उत्तरोत्तरं सत्त्वोत्कर्षशालिनः समाजस्य स्पृहणीया वन्द्याः पूजनीया विश्वविद्यालयपरीक्षयाऽधुना प्रकटिता भवन्तीति महत्प्रमोदस्थानमेतत्, पूर्वपूर्वस्नातकानामुत्तरोत्तरकर्तव्यनिर्देशकञ्च। एवंविधानेव स्नातकानधिकृत्य मनुनाऽप्युक्तम्—

'सान्तानिकं यक्ष्यमाणमध्वगं सर्ववेदसम्।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः॥
नवैतान् स्नातकान् विद्याद् ब्राह्मणान् धर्मभिक्षुकान्।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्या विशेषतः'॥इति।

समाजधर्माणां राजधर्माणां वैश्यधर्माणां शूद्रधर्माणाञ्च निरूपणानन्तरम् 'अतः परं प्रवक्ष्यामि प्रायश्चित्तविनिर्णयम्' इति प्रतिज्ञया प्रायश्चित्तप्रकरणमुत्थाप्य पूर्वोक्तानां नवविधानां स्नातकानां विद्याविशेषपरीक्षां कृत्वा तेभ्यः सर्वविधवृत्तिप्रदानवर्णनमकरणे राजसहितस्य सर्वस्य समाजस्य प्रायश्चित्तनिमित्ततां सूचयितुमिति मनोराशयस्तट्टीकाकृद्भिराविष्कृतः। तया च सर्वोच्चवैदिकपरीक्षाया अकरणेन विश्वविद्यालयशलाकापरीक्षाया अकरणेन तादृशपरीक्षायोग्यविदुषां वर्षाशनव्यवस्थाया अकरणेन च राज्ञः प्रजाश्च एतावत्कालपर्यन्तं ग्रसतो मनुना सनिर्बन्धमुक्तरीत्या प्रदर्शितात्प्रत्यवायाद् मोचिताः स्मः, महाराजसञ्चालितेन मेहतावंशस्थापितेन अन्यैश्चोदारैः सर्वैः पोषितेनामुना विद्यालयेन वयं सर्वेऽपीति।

'यश्च रामं न पश्येत्तु यञ्च रामो न पश्यति।
निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते'॥

इत्युपवर्णिता भगवतो मर्यादापुरुषोत्तमस्य रामचन्द्रस्य स्थिती रामनगराधिपतिपरिपालितेन रामघट्टस्थितेन विश्वनाथानुध्यातेन अमुना विद्यालयेन प्रकाश्यत इति मे मतम्।

तत्सहृदयाः सर्वेऽपि भवन्तोऽनुमोदन्तामिति प्रार्थयमानः स्नातकेभ्यः सर्वविधानि मङ्गलान्याशासे।

विद्यासंरक्षणार्थं वैदिकानां विदुषां वृत्तिव्यवस्थार्थं च तैर्बहुधा प्रयत्नः कृतः, यत्र वैदिकत्रिपूरुषवर्षाशनवृत्तिप्रदानपर्यन्तं व्यवस्था सम्पन्ना। तैर्गीर्वाणवाग्वर्धिनी-सभाद्वारा विविधविषयेषु व्यवस्थाप्रदानमकारि। तेषां शिष्यैः श्रीहरिराम-शास्त्रिशुक्ल-रामचन्द्रशास्त्रिखणङ्ग-केशवशास्त्रिलोकरे-गणपतिशास्त्रिहेब्बारो-पेन्द्रशास्त्रिराजहंस-रामचन्द्रशास्त्रिहोसमने-विश्वनाथशास्त्रिदातार-जयरामशास्त्रि-

शुक्ल-जनार्दनशास्त्रिखुण्टे-गंजाननशास्त्रिमुसलगाँवकर-सीतारामशास्त्रिकुरुन्दकर-काशीनाथशास्त्रिकोडणीकरप्रभृतिभिर्न्यायादिविद्यानामध्ययनाध्यापनपरम्परा संरक्षिता। काशीनरेशानामाध्यक्ष्ये तातपादानां नियामकत्वे च सम्पन्नानि क्षयाधिमासविचारसभा-भारतीयराजनीतिविचारगोष्ठीप्रभृतीनि कार्याणि अनितरसाधारणानि जातानि। तातपादानां वियोगोत्तरं तच्छिष्यैर्गुरुवरैः श्रीगणपतिशास्त्रिहेब्बार-श्रीरामचन्द्रशास्त्रिहोसमनेमहोदयैर्दर्शितदिशा साङ्गवेदविद्यालयस्य गीर्वाणवाग्वर्धिनीसभायाश्च कार्यनिर्वाहोऽस्माभिः सर्वैस्तातपादानामनुग्रहेण क्रियते। न केवलं काश्यामपि तु भारतवर्षे साम्प्रतं या विद्यापरम्परा दृश्यते सा तातपादानां शिष्यप्रशिष्यतच्छिष्यद्वारा स्थिरा वर्तत इति हि न तिरोहितं विदुषाम्। पुण्यश्लोकैः काशीनरेशैस्तातपादानां स्मारकग्रन्थप्रकाशनायेच्छा व्यक्तीकृताऽऽसीत्। तत्र विस्तरेण तातपादानां कार्यविवरणं प्रकाशितं भविष्यति। इदानीं संक्षिप्तं तातपादजीवनवैशिष्ट्यं निबन्धेऽस्मिन् प्रस्तुतम्। तदिदं वाक्कुसुमं तातपादेभ्यः समर्प्य विरमामि।



# तपोमयं जीवनं तातपादानां वैशिष्ट्यम्

**श्रीगणेश्वरशास्त्रिद्राविडः**
**(पण्डितराजानां तृतीयः पुत्रः)**
वाराणसी



गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परब्रह्म तस्मै श्रीगुरवे नमः।।

प्रातःस्मरणीयानां पुण्यश्लोकानां यशःकायानां पूज्यपादानां तातपादानां श्रीगुरुचरणानां शास्त्ररत्नाकर-पण्डितपञ्चानन-पद्मभूषण-पण्डितराजश्रीराजेश्वर-शास्त्रिद्राविडमहाभागानां पावनस्मरणेनात्मानं धन्यं मन्ये। अनितरसाधारणवैदुष्येण सह तपोमयं जीवनं तातपादानां वैशिष्ट्यम्।

'तपः श्रुतं च योनिश्च त्रयं ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'।।

इति महाभाष्योद्धृतवचनानुसारं ब्राह्मणमातापितृजन्यत्वरूपा योनिर्वेदवेदाङ्गाद्यध्ययनरूपं श्रुतं कृच्छ्रचान्द्रायणादिव्रतरूपं तपश्चेत्येतत्त्रयं ब्राह्मणव्यपदेशनिमित्तं तातपादेषु आसीदिति वृद्धविदितम्। पूजनीयानां धर्मप्राणश्रीलक्ष्मणशास्त्रिद्राविडानामात्मजास्तातपादाः। प्रतिपक्षमेकादशीव्रतं निर्जलोपवासरात्रिजागरणभगवद्भजनरूपेण पितामहचरणैरनुष्ठीयते स्म। पुण्यश्लोकानां महामहोपाध्यायानां श्रीविद्योपासकानां श्रौताग्निहोत्रिणां पूज्यपादानां श्रीसुब्रह्मण्यशास्त्रिद्राविडमहाभागानां पुत्र्याः सौ॰ अन्नपूर्णायाः कुक्षितस्तातपादानां प्रादुर्भावः। 'पुत्रेणायं लोको जय्यः' इति. बृहदारण्यकोपनिषद्वर्णितरीत्या धर्मप्राणैः सम्प्रदायरक्षणार्थं व्रतादिकमनुष्ठाय सत्पुत्ररूपेण प्राप्ता अस्मत्तातपादाः। 'सरस्वत्या वरदपुत्रः' इति भृगुसंहितायां तेषां कृते उल्लेखः कृतः। ललितार्चनावसरे तातपादानां जनिरभूत्। 'ॐ राजराजेश्वर्यै नमः' इति मन्त्रेण कुङ्कुमार्चनसमये तातपादानां प्रादुर्भावात् 'राजेश्वर' इति नाम स्थापितम्। प्रादुर्भावोत्तरं सपदि जिह्वायां वाग्भवबीजं पितृपादानां मातामह-

चरणैर्लिखितम्। षाण्मासिक्यामवस्थायां शैशवे मातुर्वियोग आपतितः। तृतीयवर्षे मातामहचरणैस्तातपादेभ्यस्तर्कसङ्ग्रहस्य न्यायबोधिनीपाठ आरब्धः। अष्टमे वर्षे उपनयनोत्तरं वेदाध्ययनमारब्धं तदानीं किञ्चिदधीतञ्च। विशेषतः शास्त्राध्ययने रुचिस्तदानीमासीत्। व्याकरणाद्यध्ययनानन्तरं न्यायसिद्धान्तमुक्तावलीपाठः पितामह-चरणसकाशे तातपादैः समापितः। तेषामेव सविधे व्याप्तिपञ्चकादिग्रन्थाध्ययनं कृतम्। पञ्चदशदिनाभ्यन्तरे व्याप्तिपञ्चकमाथुरी सक्रोडपत्राऽधीता। अध्ययना-वस्थायां प्रत्यहं द्वादशशतीसङ्ख्याकगायत्रीजपनियमस्तेषामासीत्, येन विद्यायां तेजस्विता समागता। चतुर्दशवर्षे न्यायमध्यमा परीक्षा सम्पूर्णा समुत्तीर्णा। न्यायशास्त्रस्य प्रौढग्रन्थानामध्ययनं प्रातःस्मरणीयानां महामहोपाध्यायानां पूज्यपादानां श्रीवामाचरणभट्टाचार्याणां सविधे कृतम्। एकोनविंशे वर्षे न्यायशास्त्रस्योत्तमा परीक्षा समुत्तीर्णा न्यायाचार्यपदवी च लब्धा। न्यायसिद्धान्तमुक्तावलीप्रकाश-तरङ्गिणीत्यपरपर्यायरामरुद्रीटीकायाः शब्दखण्डोत्तरभागे पूर्तिस्तातपादैरेकोनविंशे वर्षे कृता। एतावत्पर्यन्तं न्याय-वैशेषिक-साङ्ख्य-योगदर्शनान्यधीतानि।

मीमांसादर्शनस्याध्ययनं तेषु तेषु प्रकरणेषु तदानीं कृतम्। तदनन्तरं पितामहचरणेभ्यस्तातपादैर्वेदान्तशास्त्रस्याध्ययनं कृतम्। अद्वैतवेदान्तेन साकं मतान्तराणां परिशीलनमपि चतुर्विंशतिवर्षाभ्यन्तरे कृतम्। अष्टाविंशतिवयसि काश्यां ब्राह्मणमहासम्मेलने समुपस्थितानां सर्वेषां प्रश्नानां सप्रमाणं सयुक्तिकं मौखिकमुत्तरं तैः प्रदत्तम्। तदानीं तेभ्यः 'पण्डितराज'पदवी विद्वद्भिः प्रदत्ता। ब्राह्मणमहासम्मेलनपत्रिकायाः प्रकाशने वर्णाश्रमस्वराज्यसङ्घस्य कार्ये च तातपादानां महान् सहयोग आसीत्। तातपादानां युवावस्थायां काश्यां रामघट्टे स्थापितस्य श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालयस्य कार्यनिर्वाहस्तैरेव क्रियते स्म। श्रीगीर्वाणवाग्वर्धिनीसभाया अनेका व्यवस्थास्तेषां नेतृत्वे लोकेभ्यस्तत्तत्काले समुपलब्धाः। सतीर्थ्यस्य कृते राजकीयविद्यालयस्य न्यायशास्त्राध्यापकपदं सहर्षं त्यक्तम्। धर्मशास्त्रविरोधिसर्वकारनियमविरोधे लाहौरनगरे कृष्णध्वजः प्रदर्शितः। एकत्रिंशे वर्षे तातपादानां गुरुपादानां च दारुणवियोग आपतितः। सप्तदशसहस्ररूप्यक-ऋणे विद्यमानेऽपि धर्मादायनिधेः कपर्दिकाऽपि न गृहीता। तदानीं सर्वाधिकारे सत्यपि छुटकामलगोकुलचन्ददातव्यौषधालयस्य पञ्चाशत्सहस्र-रूप्यकाणि श्रीमते लालाबाबूदामोदरदासखन्नामहोदयाय तथैवार्पितानि। पितामहदेहपातोत्तरं तैः प्रवर्तितानां सर्वेषां कार्याणां यथावन्निर्वाहस्तातपादैः कृतः। देवालयप्रवेशान्दोलने शास्त्रीयमतं प्रकटितम्। प्रातःस्मरणीयानां परमशिवावताराणां

पूज्यपादानां जगद्गुरूणां काञ्चीकामकोटिपीठाधीश्वराणां श्री१००८-श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामिचरणानां काशीयात्राप्रसङ्गे तेभ्यो वेदरक्षणार्थं तातपादैर्निवेदनं कृतम्। तन्निशम्य प्रमुदितान्तःकरणैः श्रीचरणैर्मठीयस्वर्ण-सिंहासनादेर्वेदरक्षणार्थं विनियोगः कृतः, मठे वेदरक्षणार्थं निधिस्थापना च कृता, यत्प्रभावेणाद्यापि दक्षिणभारते वेदाध्यायिनः समुपलभ्यन्ते। षट्त्रिंशद्वर्षाभ्यन्तरे गायत्रीपुरश्चरणं कृतम्। तदनन्तरं वर्षत्रयं यावन्मीमांसाशास्त्रस्य विशिष्याध्ययनं कृतम्। यत्र प्रत्यहं द्वादशहोरापर्यन्तः कालो गच्छति स्म। भाट्टदीपिकादिग्रन्थाः कण्ठस्था आसन्।

अष्टादशे वर्षे न्यायशास्त्राध्यापनमारब्धमासीत्। बहवश्छात्रा नैयायिका विद्वांसः सञ्जाताः। षट्त्रिंशद्वर्षप्रभृति वेदान्ते मीमांसायां च बहवो विद्वांसः अध्यापिताश्छात्राश्च सुयोग्या विद्वांसः कृताः। अस्मिन्नवसरे साहित्यशास्त्रस्य राजशास्त्रस्य च विशिष्टाध्ययनम्, भगवतः श्रीरामचन्द्रस्य श्रीदक्षिणामूर्तेश्च सान्निध्ये आरब्धम्। तेनैव साकमष्टादशविद्यास्थानेषु धनुर्वेदातिरिक्ताः सर्वा विद्या आमूलचूलं परिशीलिताः। प्राच्यविज्ञानेन सह पाश्चात्त्यविज्ञानस्य परिशीलनमपि तैरारब्धम्। द्वादशवर्षपर्यन्तं कामन्दकीयनीतिसारकौटिलीयार्थशास्त्रयोरध्ययनं कृतं शिष्या-श्चाध्यापिताः। भारतभूगोहितत्वविमर्शनिबन्धप्रणयनं कृत्वा प्राक्तने काले भारते गोवधो न भवति स्मेति तातपादैः स्थापितम्। प्राच्यनव्यगणितानुसारितिथ्यो-र्विवादप्रशमनाय विंशतिवर्षपर्यन्तं नक्तव्रतं तैः कृतम्। योगासनप्राणायामौ त्वावश्यकौ प्रत्यहं तैः कृतौ। वार्धक्ये नक्तव्रते स्थित्वा कौटिलीयार्थशास्त्रस्य वैदिकसिद्धान्तसंरक्षिणीनाम्नी टीका जयमङ्गलाक्रोडपत्रं च विहिते। भारतीय-राजनीतिशास्त्रस्य दिग्दर्शकरूपेण 'शान्ति का अग्रदूत'-ग्रन्थस्य वेदानामपौरुषेयत्व-साधकस्य 'वेदों का अपौरुषेयत्व'-ग्रन्थस्य 'वेदशास्त्रयोः प्रदीपवत्सर्वार्थविद्योतित्वं जगद्धितैषित्वं च' इति ग्रन्थस्य च निर्माणं तैः कृतम्। पाश्चात्त्यैतिहासिकपद्धतौ वैचारिकी त्रुटिः कथं भवतीति तैः प्रदर्शितम्। हिन्दुधर्मस्वायोगस्य प्रश्नानामुत्तराणि तैः प्रदत्तानि। धर्मविषयेऽत्यन्तं श्रद्धा तेष्वासीत्।

एकस्मिन् दिवसे कश्चिदागत्य वर्णाश्रमधर्मविषये विविधाः शङ्कास्तेभ्यः पृष्टवान्। तासां समाधानं तैः प्रदत्तम्। होराद्वयं तत्र व्यतीतम्। अन्ते तेनोक्तं भवादृशानां विद्यमानतया देशस्य विप्लवो भवतीति। तच्छ्रुत्वा तातपादैस्तस्मै प्रोक्तम्—अस्माकं स्थित्या देशस्य विप्लवो भवति चेत्—अहं, मदीया पत्नी,

मदीयास्त्रयः पुत्राः, कनीयसी कन्या चेति वयं सर्वे एकस्यां पङ्क्तौ तिष्ठामः, देशस्य सुस्थितये त्वमस्मान् सर्वान् हत्वा गच्छेति तन्निशम्य स तूष्णीं तथैव निर्गतः। इयं घटना मया प्रत्यक्षं दृष्टा। घटनयाऽनया तातपादानां धार्मिकी आस्था कीदृशी आसीदिति स्पष्टं भवति।

तातपादानां जीवनकाले भूमिविषयेऽन्त्यजैः सह विवादस्त्रयोदशवर्षपर्यन्तं न्यायालये प्रवृत्तः। भूमिस्तातपादानामासीत्। न्यायालये प्रतीपं तिष्ठतामन्त्यजानां गृहे यदाऽशनादिव्यवस्था न भवति स्म तदाऽन्त्यजैरागत्य तातपादेभ्यो निवेदने कृते तैस्तेषामन्त्यजानां कृतेऽशनव्यवस्थाऽन्नदानेन क्रियते स्म। त्रयोदशसु वर्षेषु घटनेयं बहुवारं जाता। वर्णाश्रमधर्मस्य दृढः पोषको ब्राह्मणः स्वशत्रुभ्योऽन्त्यजेभ्योऽन्नदानं करोतीत्युदाहरणं दुर्लभम्। ईदृशी घटना सतां श्रीमतामेकनाथमहाराजानां चरित्रे श्रूयते। अनया घटनया तातपादाः सत्पुरुषा आसन्निति विज्ञायते। श्रीमद्भिर्विनायकरामचन्द्ररटाटेमहोदयैर्मह्यं प्रोक्तं यदेकदा तातपादाः साङ्गवेदविद्यालयं प्रति गृहात् प्रस्थिताः। मध्येमार्गं केनचित् ताम्बूलचर्वणकर्त्राऽट्टालिकातः ष्ठीवनं कृतम्, तद्दैवात्तेषामुपरि पतितम्, शिरःप्रभृति पादान्तं वस्त्राणि ताम्बूललालासिक्तानि जातानि। तातपादैः ष्ठीवनकर्त्रे किमप्यनुक्त्वा गङ्गां गत्वा स्नात्वा गृहमागत्य वस्त्रान्तरं धृत्वा मार्गान्तरेण साङ्गवेदविद्यालयं प्रति समागतम्। द्वितीयदिने नैत्यिकमार्गेण समागमनकाले ष्ठीवनकर्त्रा शरणमागत्य तेभ्योऽपराधविषये क्षमापनार्थमुक्ते तैस्तस्मै अभद्रमनुक्त्वा तथैव स क्षमापितः। ईदृशमुदाहरणमेकनाथमहाराजानां चरित्रे दृश्यते।

एकदा ग्रामान्तरं तातपादा गताः। सह श्रीगोविन्दबुवा उपासनीनामकाः शिष्या आसन्। शिष्यैः पाककाले सूपव्यञ्जने लवणभ्रमेण रङ्गवल्ल्यर्थं स्थापितमश्मचूर्णं निक्षिप्तम्। प्रथमं भोजनार्थं केवलं तातपादा आसन्। पात्रे सूपपोलिका-(रोटी)परिवेषणं शिष्यैः कृतम्। तैः शिष्येभ्यः किमप्यनुक्त्वा तथैव भुक्तम्। अनन्तरं गोविन्दबुवा उपासनीमहोदया यदा भोजनार्थमुपविष्टास्तदा तैर्विदितम्। तैरागत्य तातपादेभ्यः अपराधक्षमापनविषये उक्ते तातपादैरुक्तम्–त्वया बुद्धिपुरस्सरं सूपव्यञ्जने रङ्गवल्लीचूर्णं न निक्षिप्तं, प्रमादवशात्तत्र पतितं, प्रमादवशात् सर्वेषामेव हस्तेन कदाचिदेवं भवति, त्वया दुःखं न कर्तव्यं, तव दोषो नास्तीति। इयं घटना गोविन्दबुवा उपासनीमहोदयानां पुत्रेण धरणगाँवस्थितेन मुकुन्दबुवा उपासनीमहोदयेन उक्ता।

उपनिषदि 'अन्नं न निन्द्यात्। तद्व्रतम्', 'अन्नं न परिचक्षीत। तद्व्रतम्' इत्यादिव्रतान्युक्तानि। तेषां पालनं तातपादैः कथं क्रियते स्मेत्यनया घटनया स्पष्टम्। एकदा रात्रौ प्रत्यहमिव मया तातपादेभ्यः पातुं क्षीरं दत्तम्। तद्दिने प्रातःकालिकं क्षीरं रात्रौ विपरिणतं जातम्। क्षीरं तिक्ततां गतम्। तेभ्यः क्षीरं वारत्रयं पात्रे दत्तम्। तैः कस्मिन्नपि समये क्षीरं विपरिणतमिति मह्यं नोक्तम्। तेषां क्षीरपानोत्तरं सपदि मयाऽवशिष्टक्षीरतः पातुं किञ्चित् क्षीरं मुखे निक्षिप्तमपि मम कृतेऽसह्यं जातमिति मया तद्बहिर्निस्सारितम्। तद्दिने तातपादेषु दत्तात्रेयोक्तः 'जितं सर्वं जिते रसे' इति सिद्धान्तो मयाऽनुभूतः।

पितामहपादानां समये एका घटना जाता—प्रपितामह्या दृष्टिदौर्बल्यात् प्रमादेन एकस्मिन् दिने तण्डुलानां पाककाले तण्डुलैः सह भूयांसः कीटा अपि पाचिताः। भोजनकाले पितामहपादैः सह तातपादाः केवलं तद्दिने पङ्क्तावुपविष्टाः। पात्रे प्रपितामह्या ओदनं परिविष्टम्। परिवेषणोत्तरं तातपादैः पितामहेभ्यः पृष्टं यद् ओदने बहवः कीटा अपि पाचिताः, किं कर्तव्यमिति? पितामहचरणैस्तातपादेभ्यः प्रोक्तं यदेतदर्थमेव नित्यं वैश्वदेवकर्म कर्तव्यं भवति, हस्तेन कीटानपसार्य अन्नं सम्प्रोक्ष्य भोक्तव्यमिति। अनन्तरमुभाभ्यां तथैव भुक्तम्, प्रपितामह्यै किमपि नोक्तम्। तदूर्ध्वं प्रपितामह्या भोजनसमये सर्वं विदितम्, तदनन्तरं कस्मिन्नपि दिने ईदृशी घटना न जाता। अस्मिन् वृत्तान्ते पितामहचरणानां मातृभक्तिः कीदृशी आसीदिति ज्ञायते। तच्छिक्षणस्य तातपादानां जीवने कियान् प्रभावः पतित इति विषये किमपि वक्तव्यं नास्ति, परिविष्टस्यान्नस्य निन्दा कदापि न कार्येति शिक्षाऽत्र पितामह-चरणैर्दत्ता। 'न मातुः परदैवतम्' इति शास्त्रे सिद्धान्तः। मातुः क्लेशो यथा न स्यात्तथा पुत्रेण वर्तितव्यमित्याचरणद्वारा पितामहपादैरुपदेशः कृतः।

तातपादानां पितृभक्तिः कीदृशी आसीदिति विषये एका घटनाऽत्र वर्ण्यते। पितामहपादैरारब्धानां सर्वेषां कार्याणां निर्वाहस्तातपादैः शक्तिमनुसृत्य क्रियते स्म। 'लोकपुत्रधनागारवित्तचिन्तां व्युदस्य च' इति भागवतमाहात्म्यवर्णितरीत्या सर्वामपि चिन्तां त्यक्त्वा पितामहपादैः स्थापितस्य श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्या-लयस्य संरक्षणार्थं प्रयतितम्। भगवद्भक्ताः सर्वानपि क्लेशान् सोढ्वा भगवद्भक्तिं यथा कुर्वन्ति, तथैव तातपादैः साङ्गवेदविद्यालयस्य सेवा कृता। निर्वेतनं साङ्गवेदविद्यालयाध्यक्षपदे स्थित्वाऽऽजीवनं विद्याधर्मप्रचारः कृतः। एकदा अहमदाबादविश्वविद्यालयकुलपतिपदं स्वीकर्तुं तातपादेभ्यः प्रार्थना तत्रत्यैः कृता।

तैस्तातपादेभ्य उक्तं यत्—भवन्तः काश्यामेव तिष्ठन्तु, वर्षे एकदाऽत्रागन्तव्यं द्वित्रिदिनार्थं, काश्यामेव स्थित्वा अहमदाबादस्थितस्य विश्वविद्यालयस्य कुलपतिपदं भूषयन्तु, प्रतिमासं सहस्रपञ्चकरूप्यकाणि भवद्भ्यो विश्वविद्यालयेन समर्पयिष्यत इति। प्रार्थनेयं साग्रहं तातपादेभ्यः कृता। तन्निशम्य तातपादैरुक्तं यन्मम साङ्गवेदविद्यालयाध्यक्षपदे स्थितावेव सन्तोष इति।

एकदा साङ्गवेदविद्यालये लक्ष्मणपुस्तकालयेऽपराह्णसमये गीर्वाणवाग्वर्धिनी-सभाया विचारः प्रवृत्तः, यत्र तातपादैः साकं तेषां प्रवराः शिष्याः श्रीहरिरामशास्त्रि-शुक्ल-श्रीरामचन्द्रशास्त्रिखणङ्ग-श्रीगणपतिशास्त्रिहेब्बार-श्रीरामचन्द्रशास्त्रिहोसमने-श्रीजयरामशास्त्रिशुक्ल-श्रीजनार्दनशास्त्रिखुण्टे-श्रीविश्वनाथशास्त्रिदातारप्रभृतयो विचारे निमग्नाः। तस्मिन् दिनेऽष्टमी तिथिरासीत्, अतः साङ्गवेदविद्यालये वैदिका नागताः। विचारकाले केनचिदागत्य तातपादेभ्यः प्रार्थितं यदद्य कश्चिच्छ्रेष्ठी विद्वद्भ्यः प्रभूतान्नवस्त्रहिरण्यानि दातुं वाञ्छति, भवद्भिः सर्वैः कृपया समागत्य तत् स्वीकार्यम्, होराभ्यन्तरे कार्यं पूर्णं भविष्यतीति। तन्निशम्य तातपादैस्तस्मै प्रोक्तं यदद्य वयं सर्वे विचारे निमग्नाः, कस्यापि समयो नास्ति, कोऽपि इतो नागमिष्यति, त्वमन्यत्र गच्छेति। एवमुक्त्वा तातपादा विचारे प्रवृत्ताः, अर्धहोरापर्यन्तं ते विचारे एकाग्रा जाताः, प्रार्थयित्रा विचारितं यदेतेषां विचारः किञ्चित्काले पूर्णः स्यादिति स तथैव स्थितः। अर्धहोरानन्तरं तातपादानां दृष्टिस्तदुपरि पतिता, तैस्तस्मै उक्तं त्वमत्रैव तिष्ठसि? न गतवान्? सर्वे विचारे मग्नाः, कस्यापि समयो नास्ति, त्वमन्यत्र गत्वा विदुष आह्वयेति। तद्दिने सर्वेषां गृहस्थानां शिष्याणां सद्मनि अन्नव्यवस्था नासीत्, तथापि विचारार्थं तैस्त्यागः कृतः। तातपादानां सारस्वताराधने कीदृशी निष्ठा, शिष्याणां च कीदृशी गुरुभक्तिरित्यनया घटनया ज्ञातुं शक्येत। तदनन्तरं दशदिनोत्तरमन्यः श्रेष्ठी समागतः, तद्दिने गीर्वाणवाग्वर्धिनीसभाया विचारो नासीत्, तस्मिन् दिने आह्वानमागतम्। सर्वेभ्यः प्रभूतान्नवस्त्रहिरण्यानि लब्धानीति तातपादानां तपसः प्रभावः। इयं घटना श्रीजयरामशास्त्रिशुक्लैर्मह्यमुक्ता।

एकदा कलिकातायां कस्मिंश्चित्कार्यक्रमे आगन्तुं तातपादाः प्रार्थिताः। मध्याह्ने काशीतः प्रस्थातव्यम्, विमानद्वारा कलिकातास्थितं कार्यजातं निर्वर्त्य सायं काश्यामागन्तव्यम्, पञ्चहोराकालो गमिष्यति, सहस्रद्वयरूप्यकाणि सम्भावनारूपेण प्राप्तानि भवेयुः, भवद्भिरवश्यमागन्तव्यमिति तातपादेभ्यः प्रार्थने कृते तैरुक्तं मम समयो नास्तीति। अनन्तरमाह्वयिता गतः। तदानीमान्ध्रदेशीया वैदिकविद्वांस

आञ्जनेयघनपाठिनस्तातपादानां दर्शनार्थमागता आसन्। आह्वयितुः परावर्तनोत्तरं तातपादेभ्य आञ्जनेयघनपाठिभिः पृष्टम्—भवतां कृते अन्नवस्त्रव्यवस्था न वर्तते, भवद्भिरेकं दिनं कलिकातायां गतं चेत् सहस्रद्वयरूप्यकाणि लब्धानि स्युः, तद्द्वारा भवद्भिर्वर्षपर्यन्तं निर्वाहः कृतः स्यात्, भवद्भिः कुतो न गतम्? इति। तातपादैराञ्जनेयघनपाठिभ्य उक्तम्—कलिकातां गतेऽत्र सर्वेषामध्ययनं न भवेत्? अतो मया न गतमिति। विद्यास्थापनस्य कृते ईदृशं त्यागस्योदाहरणं दुर्लभम्। इयं घटनाऽस्मभ्यमाञ्जनेयघनपाठिभिरुक्ता। केनचिच्छिष्येण गृहस्थितानि सर्वाणि रजतपात्राणि चोरितानि। तातपादैः स तथैव त्यक्तः, तस्मै दण्डप्रदानं न कृतम्, न वा तानि पात्राण्यागतानि।

रामनगरे 'रामनन्दनविश्वकर्मा' इति नामकः कश्चित्तक्षाऽऽसीत्। तस्य गृहे भूतबाधा जाता। बहुषूपायेषु कृतेषु सा यदा न निवृत्ता तदानीं कस्यचिदुपदेशेन स तातपादानां सविधे आगतः, तेन तातपादेभ्यो भूतबाधा श्राविता। तातपादैस्तस्मै प्रत्यहं सायङ्काले आगन्तुमुक्तम्। स प्रत्यहं रामनगरस्थिते साङ्गवेदोद्याने तातपादानां पुरत उपविशति स्म। तातपादैस्तस्मै गणेशपुराणोपासनाखण्डान्तर्गतमहागणपतिप्रोक्तगणेशसहस्रनामस्तोत्रं श्राव्यते स्म। अस्मिन्नवसरे रामनन्दनार्थं तातपादैर्द्विवारं गणेशसहस्रनामस्तोत्रपाठः क्रियते स्म। अयं क्रमः सप्तवर्षपर्यन्तं प्रचलितो मया दृष्टः। रामनन्दनेनोच्यते स्म यत् स्तोत्रश्रवणेन मम शान्तिर्भवतीति। अयं निष्कामकर्मयोगः सप्तवर्षान्तं सम्पन्नः। येषां प्रश्नानां समाधानं ग्रन्थे न लभ्यते, तेषां प्रश्नानामुत्तरप्रदानं तैर्निर्जलमुपोष्य तपःप्रभावसम्प्राप्तप्रातिभज्ञानेन क्रियते स्म। अस्मिन् क्रमे कदाचित् सप्ताहपर्यन्तोऽपि कालो निर्जलमुपवासे व्यतीतो भवति स्म। अस्य तपस उल्लेखः श्रीमद्भिर्देवनायकाचार्यैः साङ्गवेदविद्यालयस्य रजतजयन्तीविशेषाङ्के साङ्गवेदविद्यालयस्य विशेषताया वर्णनावसरे कृतः।

गौतमधर्मसूत्रे चत्वारिंशत्संस्कारानुक्त्वाऽष्टानामात्मगुणानां वर्णनं कृतम्। ते चेमे—

'दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचम्, अनायासः, मङ्गलम्, अकार्पण्यम्, अस्पृहा च'। एते आत्मगुणा यद्यायान्ति तर्ह्येव मोक्षप्राप्तिरिति तत्र वर्णितम्। एते गुणाः प्राचुर्येण तातपादेष्वासन्। यावत्पर्यन्तं ब्राह्मणेषु वंशशुद्ध्या सह सर्वशास्त्राध्ययनरूपश्रुतसम्पत्तिः, कृच्छ्रादिरूपं तपश्च न स्यातां तावत्पर्यन्तं तेषु विश्वगुरुत्वं फलोपधायकं न भवेत्। अस्माकं भाग्यवशात्तातपादा एव देशिका

आसन्। तेषां तपःप्रभावेणानुग्रहेण च साम्प्रतं कथञ्चित्पूर्वारब्धकार्याणां निर्वाहः क्रियते। गुरुभक्तिः, ईश्वरभक्तिः, वेदप्रामाण्यबुद्धिः, स्वधर्मनिष्ठा, परोपकारः, विनयः, निरलसं सरहस्यं योग्यपात्रे विद्यादानं, वित्तस्य सत्पात्रे व्यय इत्यादिगुणास्तातपादानामस्माभिर्ग्राह्याः। बहवो विषया वर्णनीयाः, तथापि समयाभावादत्र न वर्ण्यन्ते। ते तावत्पण्डितराजश्रीराजेश्वरशास्त्रिद्राविडस्मारकग्रन्थे आगमिष्यन्ति। अस्मदाराध्यपादेभ्यस्तातपादेभ्यः प्रणम्य वाक्सुमानीमानि तेभ्यः समर्पयामि।

अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च।
यत्कृपालेशमात्रेण नमोऽस्तु गुरवे सदा।। इति।



# कौटिलीयमर्थशास्त्रम् : पण्डितराजचिन्तनम्

**श्रीजगन्नाथशास्त्रितैलङ्गः**
के. ३०/४० गङ्गाधरशास्त्रिभवनम्, घासीटोला
वाराणसी



श्रीमत्या भारताम्बाया यूरोपीय-कुशिक्षया कवलितायाः शृङ्खलाबन्धनेन भृशमुद्विग्नचेतसां तस्याश्च उत्सङ्गे वर्णाश्रमधर्मस्वाराज्यं प्रतिष्ठापयितुकामानाम्, अत एव आङ्ग्लशासकैः सबहुमानं प्रदत्तं महामहोपाध्यायपदकमपि परित्यज्य तदर्थं प्राणार्पणेनापि सङ्घर्षरतानां धर्मप्राणानां विद्वन्मूर्धन्यानां श्रीलक्ष्मणशास्त्रिपादानां तनुजनुषः पण्डितराजाः श्रीमन्तो राजेश्वरशास्त्रिद्राविडाः परतन्त्रभारतस्य दुरवस्थां निवारयितुं तत्र दण्डनीतेः शिक्षणमावश्यकमिति निर्णीय प्रायशः पञ्चचत्वारिंशद्वर्षेभ्यः पूर्वं काशीस्थ-व.शा.साङ्गवेदविद्यालये महामहिमकाशिराजानां शिवस्वरूपाणां श्रीमतां विभूतिनारायणसिंहशर्मदेवानां सान्निध्ये तत्कालीनविहारराज्यपालानां श्रीमाधवहरि-अगेमहाभागानां करकमलाभ्यां प्राचीनराजशास्त्रवर्गः प्रतिष्ठापितः। तत्र हि विद्वन्मूर्धन्याः श्रीमन्तो रामचन्द्रशास्त्रिखनङ्ग-हरिरामशास्त्रिशुक्ल-जयरामशास्त्रिशुक्ल-गणपतिशास्त्रि-हेव्वार-रामचन्द्रशास्त्रिहोसमने-विश्वनाथ-शास्त्रिदातार-प्रो.देशपाण्डे-शम्भुनाथमिश्र-नटराजऐयर-सुधाकरदीक्षितप्रभृतयः पण्डितराजानां चरणयोरन्तेवसन्तः कामन्दकीयनीतिसार-कौटिलीयार्थशास्त्र-रामचरितमानसप्रभृतिग्रन्थरत्नानि सम्यग-धीतवन्तः।

पण्डितराजैस्तदीयान्तेवासिभिश्चाखिलभारतवर्षे व्याख्यानमालाभिः प्राचीनराजशास्त्रं प्रचारितं प्रसारितञ्च। फलतश्च वाराणसेये संस्कृतविश्वविद्यालये प्राचीनराजशास्त्रार्थशास्त्रविभागः प्रारब्धः, यः प्रारम्भे पण्डितराजानां ब्रह्मघट्टस्थ-भवन एव प्रावर्तत। अत्रान्तरेऽध्ययनाध्यापनपुरस्सरं शास्त्रिपादैः श्रीशङ्कराचार्य-विरचितायाः कौटिलीयार्थशास्त्रस्य 'जयमङ्गला'व्याख्यायाः क्रोडपत्रं, स्वतन्त्रतया च वैदिकसिद्धान्तसंरक्षिणीव्याख्या विरचिते। विद्वन्मूर्धन्यैस्तदीयैरन्तेवासिभिः

पण्डितश्रीविश्वनाथशास्त्रिदातारैरेतस्य व्याख्यायुगलस्य सङ्कलनं सम्पादनं च म.म.टी.गणपतिशास्त्रिकृत'श्रीमूला'-शङ्कराचार्यविरचित-'जयमङ्गला'-योग्घमाचार्य-प्रणीता 'नीतिनिर्णीति'व्याख्याभिः सह व्यधायि। पण्डितराजानां व्याख्यायुगलमिदं विनयाधिकारिकस्य 'गूढप्रणिधि'नामाध्यायं यावद् विद्यते। कौटिलीयार्थशास्त्रस्य संस्करणमिदं प्रथमभागस्य सम्पुटद्वये १९९१ ई.वर्षे सम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेष-योजनान्तर्गतं विश्वविद्यालयानुयोगतः प्राप्तेन वित्तीयसाहाय्येन प्रकाशितम्। तस्य प्रथमसम्पुटमादितो वृद्धसंयोगपर्यन्तं विद्यते। तदेवावलम्ब्य विशेषतः पण्डितराजानां व्याख्यायुगलमाधृत्य किमपि चिन्तनं प्रस्तूयते।

**ॐ नमः शुक्रबृहस्पतिभ्याम्**

ओमिति ब्रह्मणो वाचकम्। तदभिन्नं ब्रह्म वाच्यम्। ब्रह्मणस्त्रिविधो नामनिर्देशो वेदान्तेषु विहितः। तदुक्तं गीतायाम्—

'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः'। (१७।२३) इति।

भगवान् श्रीकृष्णः पार्थं समुपदिशति—

'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्'।। इति।
(गीता-८।१३)

'गिरामस्म्येकमक्षरम्' (गीता-१०।२५) इति 'गिरां वाचां परलक्षणानाम् 'एकमित्योङ्कारस्य ब्रह्मप्रतीकत्वेन सदभिधानत्वेन च प्रधानत्वमुच्यते'। (शाङ्करभाष्यम्)

बृहस्पतिः (गुरुः) शुक्रश्च उभावपि भगवत्तेजोंऽशरूपत्वाद् ब्रह्मरूपौ। 'गुरुर्गुरुसमो धाम' इति विष्णुनामसु 'गुरु'नामधेयं विष्णुसहस्रनामस्तोत्रस्य भाष्यकाराः श्रीमच्छङ्करभगवत्पादा इत्थं निरवोचन्—'सर्वविद्यानामुपदेष्टृत्वात् सर्वेषां जनकत्वाद् वा गुरुः' (बृहस्पतिस्वरूपो विष्णुः)। इति।

भगवान् श्रीकृष्णः स्वयं स्वीकुरुते स्वीयांशत्वं बृहस्पतेः—

'पुरोधसां च मुख्यं मां विद्धि पार्थ! बृहस्पतिम्'। इति।
(गीता-१०।२४)

तथैव भगवता वेदव्यासेन उशनसः शुक्राचार्यस्यापि भगवत्तेजोंऽशत्वं विष्णुसहस्रनामस्तोत्रस्य 'वेदाङ्गो वेदवित्कविः' इति विष्णुनामसु कवि-

रित्यन्यतमनाम्ना ख्यापितम्, व्याख्यातं च स्वीये भाष्ये शङ्कराचार्यवर्यैः—'क्रान्तदर्शी कविः' इति। 'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः' इति अमरकोशे शुक्राचार्यस्य विभिन्ननामानि रूढानि। 'कवीनामुशना कविः' (गीता १०।३७) इति श्रीकृष्णोक्तिं व्याख्यातवद्भिः श्रीशङ्करभगवत्पादैस्तच्छिष्यप्रवरैरानन्दगिरिभिश्च यथाक्रममेव व्याख्यातम्—'कवीनां क्रान्तदर्शिनामुशना कविरस्मि' इति, 'उशना शुक्रः, कविशब्दोऽत्र यौगिको न रूढः, पौनरुक्त्यात्' इति च।

सर्वमेवं हृदयङ्गमय्य पण्डितराजा एवं व्याख्यातवन्तः—'ओमिति शुक्रबृहस्पत्योर्विशेषणम्। ब्रह्मरूपाभ्यामिति तदर्थः। शुक्रेति। भीष्मेण इदमेवौशनससम्मतमर्थशास्त्रमद्य यावत् प्रचलितमस्तीति महाभारते उक्तत्वात् तत्समयपर्यन्तमौशनसशास्त्रस्य प्रचारनिश्चयात् सञ्जीवनीमन्त्रस्य शुक्रेणैवोपलब्धत्वाच्चादौ तन्नामग्रहणम्। .......एतन्नमस्कारो गुरुनमस्कारवद् भगवन्नमस्काररूपः शुक्रबृहस्पत्योर्भगवत्तेजोंऽशरूपत्वात् सिद्ध्यति। .......शुक्रे बृहस्पतौ च वर्तमाना भगवत्कला नमनेन प्रसन्ना सती बुद्धिस्फीतिं प्रतिभां च विस्तारयतीति सिद्ध्यति'। (वै. सं.; कौ. अ., भा. १, सं. १, पृ. ४)

'प्रतिभासम्पत्तिर्मङ्गलस्यासाधारणं फलमिति। तथा हि—प्रतिभासम्पत्तिरहितोऽधीतशास्त्रोऽपि अदृष्टकर्मा कस्मिन्नपि पदेऽधिष्ठातुमयोग्यो भवति। अतः समाजशास्त्रेष्वधीतेष्वपि प्रतिभासम्पत्तेरपेक्षा वर्तत एव। सेयं गुर्वादीनां पूज्यानां प्रसादाधीनेति'। (जय.क्रो., कौ.अ., भा.१, सं.१, पृ.१३)

## कौटिलीयमर्थशास्त्रम्

नन्दवंशं समूलमभिचारवज्रेण समुत्पाट्य आटविकं भूपालं पर्वतकं च पराजित्य ततश्च हिमवत्समुद्रान्तरवर्तिनीं भारतभूमिमाहृत्य आचार्यविष्णुगुप्तः प्रथमं तत्र चन्द्रगुप्तमौर्यं क्षात्रकुलोद्भवं भारतसाम्राज्यस्य चक्रवर्तिपदे प्रतिष्ठापयामास। ततश्च तदीयं महामात्यपदमलङ्कुर्वाणो मातृभूमे रक्षाया उपायरूपेण ब्राह्म-नारदीय-वैशालाक्ष-ऐन्द्र-बार्हस्पत्य-औशनसप्रभृतीनाम् अर्थशास्त्राणां नवनीतं सारसर्वस्वं स्वतन्त्रमर्थशास्त्रं नृपाणामर्थसिद्धये प्रणीतम्। तदुक्तं जयमङ्गलायाम्—

'ब्रह्माध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
तच्छङ्करेण शक्रेण गुरुणा भार्गवेण च॥
सङ्क्षिप्तं मनुना चैव बहुभिश्च तपोधनैः'॥ इति।

'प्रजानामायुषो ह्रासं विज्ञाय च महात्मना।
सङ्क्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये'॥ इति च।

'न्यायकुसुमाञ्जलि'प्रणेतारः श्रीमन्त उदयनाचार्यास्तु—

'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्'॥

इति सम्प्रदायस्य ह्रासकारणं ख्यापितवन्तः। आचार्यचाणक्यस्य शिष्योत्तमेन कामन्दकेन कौटिलीयार्थशास्त्रमहोदधिं निर्मथ्य नीतिसारग्रन्थरत्नममृतं विश्वकल्याणाय समुपहृतम्। सोऽपि स्वगुरुमेवं प्रणमति—

'वंशे विशालवंशानामृषीणामिव भूयसाम्।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः॥
जातवेदा इवार्चिष्मान् वेदान् वेदविदां वरः।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवत्॥
यस्याऽभिचारवज्रेण वज्रज्वलनतेजसः।
पपाताऽऽमूलतः श्रीमान् सुपर्वा नन्दपर्वतः॥
एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम्॥
नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे॥ इति।

(काम.नी.सा. १।२-६)

'प्रथनात् पृथिवी' इति निर्वचनमनुसृत्य तत्स्वभावाया विस्तारलक्षणायाः पृथिव्या लाभपालनोपायरूपेण ग्रन्थरत्नं चिकीर्षुः कौटिल्यः प्रयोजनपुरस्सरं प्रतिजानीते—'पृथिव्या लाभे पालने च यावन्ति अर्थशास्त्राणि पूर्वाचार्यैः ख्यापितानि, प्रायशस्तानि सङ्गृह्य एकमिदमर्थशास्त्रं कृतमि'ति।

कौटिल्यः स्वयं तन्त्रयुक्तौ अर्थशास्त्रपदमेवं व्याख्यातवान्—'मनुष्यवती भूमिरर्थः। तस्या मनुष्यवत्या भूमेर्लाभपालनोपायभूतं शास्त्रमर्थशास्त्रमि'ति। (कौ.अ., अधि. १, अ.१)

पण्डितराजानां मते—यस्या लाभाय पालनाय च अर्थशास्त्रप्रणयनम्, सा पृथिवी चतुर्वर्णाश्रमवती भूमिः, तस्या लाभः स्वस्य करादिग्रहणाद्युपयोगि-स्वत्वोत्पादः, पालनं च चतुर्वर्णाश्रमाणां मनस आकर्षणानुकूलो भयनिवृत्तिपोषणादिव्यापारः' इति (वै.सं., पृ. २५)।

## नीतिशास्त्रम्

नीतिशास्त्रमिति अर्थशास्त्रस्यैव नामान्तरम्। नीतेः (राजनीतेः) शास्त्रं नीतिशास्त्रम्। कामन्दकीयनीतिसारस्य टीकाया उपाध्यायनिरपेक्षाया मते—'प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यमुपायंसाधनविनियोगलक्षणा क्रिया नीतिः'।

'जयमङ्गला'मते—'प्रत्यक्षानुमानागमप्रमाणदेशकालशक्तिपुरस्सरार्थसाधनविनियोगलक्षणा क्रिया नीतिः'! पण्डितराजानां मते—'उभयमतसाधारण्येन प्रत्यक्षादिप्रमाणत्रयनिर्णीतेष्टसाधनताककर्मानुष्ठानं नीतिः'।

नीतेः = राजनीतेः शास्त्रं नीतिशास्त्रम्। नीतिलक्षणे आगमपदसन्निवेशः शब्दप्रामाण्यमभिव्यञ्जयति। पण्डितराजानां मते—'पुराणबुद्धिप्रसृतेषु अर्थेषु अप्रामाण्यम्। परमेश्वरस्तु यमर्थमुपदिशति, तत्र कार्यकरत्वस्य नैयत्यात् तस्य नैयत्ययुक्तस्य राज्यबीजभूतस्य सत्त्वस्य लाभाय शब्द(आगम)प्रमाणं नीतिलक्षणे घटकतयोक्तम्' इति, 'तथैव ऐतिहासिकराज्यघटनानां प्रामाण्यं ख्यापयितुं तत्र असम्भावना-विपरीतभावनयोर्निरासाय नीतिशास्त्रेण यत् प्रयत्यते, यच्च प्रजापरिपालनोपायानुष्ठानार्थं विधीयते, तदर्थं नीतिलक्षणे प्रत्यक्षानुमानप्रमाणयोर्निवेशो व्यधायि' इति च। अर्थशास्त्रस्य नवमाधिकरणे स्वयं कौटिल्येन 'शक्तिदेशकालबलाबले' इति पठितत्वाज्जयमङ्गलासम्मतनीतिलक्षणे देशकालशक्तीनामपि सन्निवेशः।

## राजवृत्तिः

'राजवृत्ति'रित्यधिकारः। 'आत्मसम्पद्गुणैराभिगामिकगुणैश्च जनरञ्जनाद् राजा' इति 'नीतिनिर्णीति'कारः। 'राजा प्रकृतिरञ्जनात्' इति हि कविकुलगुरुः कालिदासः। तस्य वृत्तिर्वर्तनं राजवृत्तिः। जयमङ्गलामते—'सर्वमेतच्छास्त्रं राजवृत्तिः, राजाऽनेन वर्तत इति कृत्वा। यतः पुरुषकारो ज्ञानकर्मलक्षणः। ज्ञानपूर्वकं कर्म, ज्ञानं शास्त्रपूर्वकमिति। ......अथवा तन्त्रमधिकृत्यायमधिकारः। कृत्स्नस्य शास्त्रस्य राजवृत्तित्वेऽपि विशेषग्रहणं स्वकुटुम्बस्थापनार्थम्'। इति।

(जयमङ्गला, पृ.७५-७६)

पण्डितराजानां मते—'ग्रन्थोऽयं द्विधा विभक्तः। एकः 'ॐ नमः' इत्यारभ्य 'विमुक्तग्रन्थविस्तरमि'त्यन्तमुद्देशग्रन्थः, अपरो 'राजवृत्ति'रित्यारभ्य अन्तर्निर्देशग्रन्थः। तदारम्भे मङ्गलं निर्दिशति—'राजवृत्ति'रिति। ऐश्वर्यसम्पन्नत्वाद् 'देव' इति राजकीर्तनमेवात्र मङ्गलात्मकम्' इति। (वैदिक.सं., पृ.७२)

विष्णुसहस्रनामस्तोत्रस्य शाङ्करभाष्ये 'उद्भवः क्षोभणो देवः' इत्यादि-विष्णुनामसु 'देव'नाम्नो निरुक्तिरित्थम्—'यतो दीव्यति सर्गादिभिः विजिगीषते असुरान्, व्यवहरति, सर्वभूतेषु आत्मतया द्योतते, स्तूयते स्तुत्यैः, सर्वत्र गच्छति तस्माद् देवः' इति। नीतिसारकारः कामन्दकोऽपि देवं महीपतिमेवं प्रणमति—

'यस्य प्रभावाद् भुवनं शाश्वते पथि तिष्ठति।
देवः स जयति श्रीमान् दण्डधारी महीपतिः'।। इति। (१।१)

'यस्य महीपतेः कोशदण्डजन्यतेजःप्रभावद् उत्साहमन्त्रशक्त्योश्च प्रतापाद् अखण्डभूमण्डलं स्वं स्वं मार्गं नातिक्रामति, स विष्णुस्वरूपो दण्डधरो महीपतिर्देवो जयति' इति तदर्थः।

एवञ्च महीपतिर्देवो विष्णुस्वरूप एव। विष्णुसहस्रनामस्तोत्रे 'कृतज्ञो मेदिनीपति'रिति 'क्षितीशः पापनाशनः' इति विष्णुनामसु मेदिनीपतिः, क्षितीशश्चेति द्वौ राजपर्यायौ। तत्र शाङ्करभाष्ये यथाक्रमं मेदिन्या भूम्याः पतिर्मेदिनीपतिरिति, 'क्षितेर्भूमेरीशः' इति तयोर्व्याख्यानम्।

'विष्णु'नामधेयं वारत्रयं विष्णुसहस्रनामसु समायातम्—'ॐ विश्वं विष्णुर्वषट्कार' इति, 'वृषादी वृषभो विष्णु'रिति, 'अनिर्देश्यवपुर्विष्णु'रिति च। शाङ्करभाष्यं च तत्र तत्रैव विराजते—

१. वेवेष्टि व्याप्नोतीति विष्णुः, देशकालवस्तुपरिच्छेदशून्य इत्यर्थः।

२. विष्णुर्विक्रमणात्।

३. रोदसी व्याप्य कान्तिरअभ्यधिका स्थिता यस्य स विष्णुः,

'व्याप्य मे रोदसी पार्थ! कान्तिरभ्यधिका स्थिता।
क्रमणाद् वाऽप्यहं पार्थ विष्णुरित्यभिसंज्ञितः।।

(महा., शा.प. ३४१।४३)

विष्णुस्वरूपो महीपाल न केवलं देवः, अपि तु श्रीमान्। विष्णुसहस्रनामस्तोत्रे 'श्रीमानि'ति पदं वारचतुष्टयमावृत्तम्—'नारसिंहवपुः श्रीमान्' इति, 'अग्रणीर्ग्रामणी श्रीमानि'ति, 'श्रीमाँल्लोकत्रयाश्रयः' इति, 'अनिर्देश्यवपुः श्रीमानि'ति च। तत्र च यथाक्रमं निरुक्तं चतुर्धा नामेदं शाङ्करभाष्ये—

१. यस्य वक्षसि नित्यं वसति श्रीः सः श्रीमान्। 'श्रीः कैटभारिहृदयैक-कृताधिवासा' इति सप्तशती (४।११)।

२. ऐश्वर्यलक्षणा समग्रा श्रीर्यस्य सः श्रीमान्।

३. श्रीः कान्तिः सर्वातिशायिनी यस्य सः श्रीमान्।

४. श्रियः अस्य सन्तीति श्रीमान्।

इमामेव श्रियं वैष्णवीं शक्तिं मार्कण्डेयमुनिः 'त्वं वैष्णवीशक्तिरनन्तरूपा' इत्यादिपद्यैस्तुष्टाव दुर्गासप्तशतीस्तोत्रे।

कविकुलगुरुः कालिदास इमामेव श्रियं चक्रवर्तिनि दिलीपे साक्षात्करोति—

'स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः'।। इति।
(रघु. २।७)

इयमेव वैष्णवी शक्तिर्विष्णुस्वरूपराजनि सङ्क्रमते यस्या निरूपणं भावप्रकाशने इत्थं वर्तते—

'परस्मादात्मनो भान्ति ज्ञानानन्दक्रियाप्रभाः।
ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते।।
क्रियाप्रभा रजःसत्त्वात् शक्तिः स्यात्तु तमःप्रसूः'।।

इति सर्वातिशायिन्या अस्याः श्रियः कान्तेः प्रभात्रयलक्षणायाः सत्त्वान्महीपतिरपि 'श्रीमान्'। कामन्दकीयजयमङ्गलामते तु 'धर्मार्थकामत्रिवर्गसुखलक्षणा श्रीश्च राजनि दण्डधारणादाविर्भवति, यस्याः प्रभावात् चतुर्वर्णाश्रमलक्षणो लोको यथास्वं मार्गं नातिक्रामति'।

विष्णुस्वरूपो महीपतिर्धर्मार्थकामलक्षणे त्रिवर्गेऽधिकृतः सन् राजनीति-महालक्ष्म्या स्वयंवृतो धर्मावतार एव भवति। स च प्रजापालनाय दण्ड्यान् दण्डयतीति विष्णोः स्थितिकारित्वशक्तिः तत्रस्सङ्क्रमते, प्रसूतये राजवंशरक्षायै वा परिणयतीति तत्र ब्रह्मदेवस्य सृष्टिकर्तृत्वशक्तिरपि विद्योतते—

'स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः'।। (रघु. १।२५)

इति तदुभयमपि चक्रवर्तिनि दिलीपे साक्षादकरोत् कविकुलगुरुः कालिदासः।

'दण्डो हि दमनम्'। दण्डं धारयतीति दण्डधारी महीपतिर्विष्णुरेव। विष्णु-सहस्रनामस्तोत्रे 'दण्डो दमयिता दमः' दमनश्चेति विष्णुपर्यायाः। तत्र दण्डः—

'दण्डो दमयतां दण्डः' इति। 'दण्डो दमयतामस्मी'ति गीतोक्तिं व्याकुर्वन्नाचार्यशङ्करः प्राह—'दण्डो दमयतां दमयितॄणामस्म्यदान्तानां दमकारणम्' इति। अत्राह आनन्दगिरिः—'अदान्तानुत्पथान् पथि प्रवर्तयतां दण्डोऽहम्। अथ प्रवृत्तो निग्रहहेतुरित्यर्थः' इति।

(दमयिता—वैवस्वतनरेन्द्रादिरूपेण दण्डार्हान् दण्डयतीत्यर्थः।)

दमनः—'स्वाधिकारात् प्रमाद्यतीः प्रजा दमयितुं शीलमस्य वैवस्वतादिरूपेण (इति) दमनः'।

'यतो हि इन्द्र-वायु-यम-सूर्य-चन्द्र-वह्नि-वरुण-कुबेराणां दिव्या तेजोंऽशा राजन्यनुप्रविष्टाः, अतः सः सदा नमस्कार्यः, नालोऽपि नावहेलनीय इत्याह भगवान् मनुः। पितृवत् प्रजापालनं राज्ञः प्रधानं कर्तव्यम्। कविकुलगुरुर्हि कालिदासः—

'प्रजानां विनयाधानाद् रक्षणाद् भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः'।। (रघु. १।२४)

इति दिलीपसम्राजः पितृत्वस्य सार्थक्यं ख्यापयति स्म। तत्र विनयो नाम शास्त्रनिश्चयः। यथाह कामन्दकः—

'नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः।
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति'।। इति।

कौटिल्योऽप्याह—'दण्डमूलास्तिस्रो विद्याः। विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः' इति। आचार्यकामन्दकोऽपि स्वगुरोः पन्थानमेवं समनुवर्तते—

'आन्वीक्षिकीत्रयीवार्ताः सतीर्विद्याः प्रचक्षते।
सत्योऽपि हि न सत्यस्ता दण्डनीतेस्तु विप्लवे।।
दण्डनीतिर्यदा सम्यङ् नेतारमधिगच्छति।
तदा विद्याविदः शेषा विद्याः सम्यगुपासते'।। इति।

चाणक्योऽप्याह—'आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधना दण्डः' इति। तस्य दण्डस्य नयनाद् दण्डनीतिः (राजनीतिः)। अत एव दण्डनीतिरित्येका विद्येत्यौशनसाः। तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धाः' (कौ.अ. १।२) इति।

दण्डनीतिर्हि—

'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्'।।

इति चतुर्विधं राजवृत्तं विशदयति। विनयो नाम विद्यार्जनम्। तदर्थं राज्ञा विद्यावृद्धाः शिष्यभावेन सदा पालनीयाः, प्रजाश्च विनेयाः।

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते'।।

इति त्रयीसमाविष्टचतुर्दशविद्या राजा विद्यावृद्धानां चरणयोरन्तेवसन् अधीयात्। विनयो हि द्विविधः—कृतकः स्वाभाविकश्च। तत्र स्वाभाविकविनये सति वृद्धसंयोगः, विद्याप्राप्तिः, ततः कृतकविनय उत्पद्यत इति पण्डितराजानां सम्मतिः। आविवाहाद् मेधानुसारेण अध्ययनक्रममेवमाह चाणक्यः—'वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत, वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः' इति।

पण्डितराजानां मते—'कुटुम्बभरणे प्रवृत्तानां गृहस्थानां कृतेऽर्थशास्त्रोक्तमध्यक्षप्रचारादारभ्य योगवृत्तान्तं कर्म सर्वाङ्गोपसंहारेण प्रकृतिकर्मत्वा'दत्यन्तमुपयुक्तं भवतीति ज्ञेयम्। (जयमङ्गला-क्रो., पृ. ७७) इति।

चाणक्यस्त्वाह—'एष त्रयीधर्मः चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः'।

'तस्मात् स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं सन्दधानो हि प्रेत्य चेह च विन्दति'।। इति।

दण्डनीतेर्यथायोग्यं प्रणयनेनैव लोकश्चतुर्वर्णाश्रमलक्षणः स्वस्ववर्त्मसु तिष्ठन् कुलक्रमागतेषु स्वधर्मकर्मस्वभिरमत इति चाणक्यः स्पष्टमुद्घोषयति—

'चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्त्तते स्वेषु वर्त्मसु'।। इति।

पण्डितराजानां मते—'चतुर्वर्णाश्रम इति लोकविशेषणं भारतवर्षचक्रवर्ति-क्षेत्राद् बहिःक्षेत्रव्यावृत्त्यर्थम्'। (वैदिकसिद्धान्तसंरक्षिणी, पृ. ३८२)

अत एव कामन्दकीय'जयमङ्गला'कारः 'यस्य प्रभावाद् भुवनम्' इति नीतिसारमङ्गलपद्यस्थितं भुवनपदं 'चतुर्वर्णाश्रमलक्षणो लोक' इति विवृणोति। उपाध्यायनिरपेक्षाकारस्तु—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'।।

इति मानवधर्मसंहिताया आदर्शमेव सर्वत्र प्रसारयितुकामः 'भुवनं जगदिदम्' इति व्याकुर्वन् सनातनवैदिकधर्मस्य सार्वभौमं महत्त्वं ख्यापितवान्। आचार्यकौटिल्यः स्पष्टमुद्घोषयति—

'व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति'।। इति।

'तस्माल्लोकयात्रार्थी (नृपः) नित्यमुद्यतदण्डः सन् लोकं स्वस्ववर्त्मनि प्रवर्तयेत्' इति च। आचार्यकामन्दकस्तु दण्डनीतिप्रयोगविषये—

'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते।
दण्डेन नृपतिस्तस्माद् युक्तदण्डः प्रशस्यते'।।

इत्याह। विद्यार्जनलक्षणेन विनयेन सम्पन्नो नृपतिस्तु स्वराष्ट्रे सौराज्यं स्थापयति—

'विद्याविनीतो नृपतिः प्रजानां च हिते रतः।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः'।। इति।

(कौ.अ. १।५-६)

वस्तुतः—

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति।।
सुनिपुणमुपसेव्य सद्गुरुं शुचिरनुवृत्तिपरो विभूतये।
भवति हि विनयोपसंहितो नृपतिपदाय शमाय च क्षमः'।। इति।

(कामन्दकीयनीतिसारः)



# पीलुपाकवादे पण्डितराजराजेश्वरशास्त्रिपादानां दृष्टिः

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



शांस्त्राध्ययनधिया देशस्य प्रायः सर्वेभ्योऽपि कोणेभ्यः काशीं प्रत्यागताः सुधीवरास्तेषु तेषु शास्त्रेषु वैदुष्यं समासादितवन्तः समासादयन्ति चाद्यापि, इतीदं काश्या माहात्म्यं नास्ति तिरोहितं कस्यापि। तेषु केषाञ्चिद् अत्रैव स्थितानां गौरवमयी वंशपरम्पराऽपि दृश्यते। तादृश्येव काऽपि परम्परा द्राविडकुलोत्तंसानां श्रीलक्ष्मणशास्त्रिपादानां, येषां पुत्रत्वेनावतीर्णाः पण्डितराजराजेश्वरशास्त्रिपादा (१८९९-१९७७) नैयायिकत्वेन प्रसिद्धिं गता अपि नैकशास्त्रविचक्षणा इति विदितमेव। विश्वनाथपञ्चाननविरचितन्यायसिद्धान्तमुक्तावल्या दिनकरी-(प्रकाश) व्याख्यानमाश्रित्य रामरुद्रभट्टाचार्याणां रामरुद्री (तरङ्गिणी) इति व्याख्यानं शब्दखण्डान्तमेव पूर्तिं गतमिति तदेव पण्डितराजैः पूरितमित्यपि विदितमेव। तत्रैव क्रमे तैः पीलुपाकमतमाश्रित्यातिगहनो विचारः कृतः। स एवात्र संक्षेपेण प्रस्तूयते।

पाकप्रक्रियामाश्रित्य वैशेषिकानां सिद्धान्तः पीलुपाकवाद इत्युच्यते। पीलवः परमाणवः, तत्रैव पाको भवति न त्ववयविनि इति हि तेषां मतम्[१]। तथा हि स्वकारणीभूतसंयोगाश्रयत्वसम्बन्धेनावयव्याश्रितेषु अवयवेषु पाको न सम्भवति स्पर्शवद्द्रव्यसंयोगं प्रति समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगस्य प्रतिबन्धकत्वात्। पाको नाम रूपान्तरोत्पादकतेजःसंयोगः। स एवात्र स्पर्शवद्द्रव्यसंयोगपदेन गृह्यते। तं प्रति समानावच्छेदकत्वप्रत्यासत्त्या स्पर्शवत्संयोगः—अवयविकारणीभूतावयवसंयोगः प्रतिबन्धकः। तथा चावयवसंयोगे विद्यमाने पाको न सम्भवतीति। तदुक्तम्—'अवयविनाऽवष्टब्धेषु अवयवेषु पाको न सम्भवति'[२]

इति। अत्रावष्टब्धेष्वित्यस्य स्वप्रयोजकीभूतसंयोगाश्रितेष्वित्यर्थ इति [1]केचित्। यदि चोक्तरीत्या स्वकारणीभूतसंयोगाश्रितेष्वित्यर्थः क्रियते, तदा कपालयोः घटावष्टब्धत्वसत्त्वेन तत्र पाकासम्भवेऽपि कपालिकादिषु पाकः स्यात्, कपालिकानां घटं प्रति साक्षात्कारणत्वाभावेन स्वकारणीभूतसंयोगाश्रितत्वाभावात्। प्रयोजकत्व-घटितोक्तावष्टब्धत्वोक्तौ तु कपालिकादेरपि घटावष्टब्धत्वसम्भवात् प्रयोजकत्वस्य जनकजनकतावच्छेदकसाधारणत्वेन कपालिकादिसंयोगानामपि घटप्रयोजकत्वात्। तथा च कपालिकादेरपि कपालादिरूपावयवव्यवष्टब्धतया न तत्र पाकापत्तिरिति। तदयुक्तम्—अवयविनाऽवष्टब्धेषु अवयवेषु पाको न सम्भवतीत्युक्तं न त्वन्त्यावय-विनाऽवष्टब्धेष्विति। तथा च कपालिकादेरपि कपालादिरूपावयव्यवष्टब्धतया तत्र पाकापत्त्यभावात्।

इत्थञ्च कपालिकादौ पाकासम्भवेन तद्गतश्यामरूपस्य न नाशः, श्यामरूपनाशं प्रति पाकस्य कारणत्वात्। श्यामरूपस्यानाशे कपालिकागत-श्यामरूपबलात् क्रमशः कपालघटादावपि श्यामरूपोत्पादः, ततो घटे श्याम-रूपसत्त्वे रूपान्तरोत्पाद एव न स्यात्, रूपान्तरोत्पत्ति प्रति रूपस्य प्रतिबन्धकत्वात्। तस्माद् वह्निसंयोगेन द्व्यणुकपर्यन्तमवयविनाशः, ततः स्वतन्त्रेषु आरम्भकसंयोगरहितेषु तेजःसंयोगप्रतिबन्धकीभूतसंयोगरहितेषु वा परमाणुषु पाकः। नन्ववयविनि घटादौ नष्टे पुनः कथं तत्प्रतीतिरिति चेत्, उच्यते—पक्वपरमाणु-संयोगाद् द्व्यणुकादिक्रमेण पुनः घटाद्युत्पत्तिः। अतो न तदप्रतीत्यापत्तिः। उत्पादविनाशयोरतिशीघ्रं जायमानत्वेन न तत्प्रतीतिः।

इदमत्र विचार्यते—अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवतीत्यनेन वैशेषिकैः किमाक्षिप्यते? अवयविनि पूर्वरूपनाशो न स्यादिति रूपान्तरोत्पत्तिर्न स्यादिति वा? पाकस्य पूर्वरूपनाशं प्रत्येव हेतुत्वं रूपान्तरोत्पत्तिं प्रत्यपि वा? तत्र द्वितीयः पक्ष एव युक्तः प्रतिभाति, अन्यथा पूर्वरूपनाशं विधायाग्नि-संयोगनिवृत्तौ रूपान्तरोत्पादः किं प्रयुक्तः स्यात्, पूर्वरूपनाशमात्रस्य तु न तत्र हेतुत्वं तस्य प्रतिबन्धकाभावमुद्रया तत्र हेतुत्वात्, पूर्वरूपस्योत्तररूपोत्पादे प्रतिबन्धकत्वात्। न हि केवलः प्रतिबन्धकाभावः कार्योत्पत्तावलं, तस्य कारणान्तर-सापेक्षत्वात्। अत एव पण्डितराजैः पाकः—रूपान्तरोत्पादकतेजःसंयोग इत्युक्तम्[3]। तस्मात् पाको न सम्भवतीत्यस्य पूर्वरूपनाशरूपान्तरोत्पादौ न सम्भवत

इत्याशयो वक्तव्य:। अत्र यद्यपि रूपनाशापत्त्यैवाभीष्टसिद्धौ रूपान्तरोत्पत्तेश्च तत एव प्राप्तिसम्भवे तदापादनमनावश्यकम्, तथापि देशविशेषावच्छेदेन कपालेऽग्नि-संयोगसम्भवे तद्बलात् तत्र श्यामरूपनाशेऽपि अवयवान्तरे श्यामरूपस्यानाशे तदीयश्यामरूपबलाद् अवयविनि कपालेऽपि श्यामरूपोत्पत्तिसम्भवे तेन च प्रतिबन्धात्र तत्र रूपान्तरोत्पत्तिरिति रूपान्तरोत्पत्तिरेव वैशेषिकै: मुख्यतया प्रतिक्षेप्तव्येति पाको न सम्भवतीत्यनेन रूपान्तरोत्पादो न सम्भवतीत्येवापत्तिर्युक्ता प्रतिभाति।

तथा च घटकारणीभूत: कपालसंयोगो यावदस्ति तावद् घटे रूपान्तरोत्पादक-तेजःसंयोगो न सम्भवति, यत: स्पर्शवद्द्रव्यसंयोगं प्रति स्पर्शवत्संयोग: प्रतिबन्धक:। एवञ्च कपालसंयोगावच्छेदेन पाकस्यासम्भवे कपालसंयोगावच्छेदक-कपालिकादौ पूर्वरूपनाशस्याभावेन तत्र विद्यमानेन श्यामरूपेण कपालेऽपि न श्यामरूपनाश:, अवयवश्यामरूपस्यावयविश्यामरूपं प्रति हेतुत्वेन अवयविनि श्यामरूपनाशासम्भवादिति भाव:। तथा चावयविनि श्यामरूपनाशाभावे न तत्र रक्तोत्पत्ति:, रूपान्तरोत्पत्तिं प्रति प्रथमरूपस्य प्रतिबन्धकत्वात्। एवमेव कपाले रूपान्तरोत्पादाभावे श्यामरूपस्यैव सत्त्वादुक्तरीत्यैव घटेऽपि न रूपान्तरोत्पत्ति:।

अत्रास्मत्पितृव्यपादानामयमाशय:—पाको न सम्भवतीत्यनेन वैशेषिकै: रूपान्तरोत्पाद एव मुख्यतया प्रतिक्षिप्यते, न पुन: पूर्वरूपनाशोऽपि। यतो यत्र घटे कपालबहिर्देशावच्छेदेनाग्निसंयोगो जात:, तत्र घटे पूर्वरूपनाशो भवतु, एवमेव कपालेऽपि पूर्वरूपनाशो भवतु, तत्राप्यग्निसंयोगस्य सत्त्वात्। किन्तु तत्र कपालेऽन्यदेशावच्छेदेन श्यामरूपस्य विद्यमानत्वेन तद्बलात् कपालादौ श्यामरूपोत्पत्तिरेव न तु रक्तरूपोत्पत्ति:। अतोऽवयविनाऽवष्टब्धेष्ववयवेषु अग्निसंयोगस्य सम्भवेऽपि तत्फलभूतो रूपान्तरोत्पादस्तु न सम्भवतीत्याशयेन पाको न सम्भवतीत्युक्तम्। तथा च तादृशाग्निसंयोगस्य रूपान्तरोत्पत्त्यजनकतया न तस्य पाकरूपता रूपान्तरोत्पादकतेज:संयोगस्यैव पाकरूपत्वात्[४]।

अत्रेदं विचार्यते—कपालेऽग्निसंयोगवशात् श्यामरूपनाशे घटादौ रूपान्तरोत्पादे किं बाधकम्। कपालावयववृत्तिश्यामरूपस्य कपालगतश्यामरूपं प्रति

कारणत्वेन कपालावयवे श्यामरूपनाशाभावे तद्बलात् कपालेऽपि श्यामरूपस्यैवोत्पन्नत्वात् तस्य च घटादौ रूपान्तरोत्पत्तिं प्रति प्रतिबन्धकतया घटादौ न रूपान्तरोत्पत्तिरिति वक्तुं न शक्यम्, यतो हि कपालिकागतश्यामरूपस्य कपालगतप्रथमश्यामरूपं प्रति कारणत्वेन प्रथमश्यामरूपनाशे पुनस्तेनैव कपालिकारूपेण कपाले श्यामरूपान्तरोत्पादाङ्गीकारे एकस्यैव कपालिकाश्यामरूपस्य कपालगतश्यामरूपद्वयं प्रति कारणत्वमङ्गीकार्यं स्यात्, तथा च कपालिकागतश्यामरूपेण युगपत् श्यामरूपद्वयोत्पत्तिः प्रथमरूपसत्त्वदशायामेव द्वितीयश्यामरूपोत्पत्तिर्वा स्यादिति तद्वारणाय रूपस्य रूपान्तरोत्पत्तिं प्रति प्रतिबन्धकत्वं पूर्वरूपनाशस्योत्तररूपं प्रति खण्डपटन्यायेन कारणत्वं वा वाच्यम्। कपालगतोत्तरश्यामरूपं प्रति यदेव कपालिकारूपं कारणं तदेव कपालगतप्राग्रूपं प्रत्यपि तथैव कारणं यथा खण्डपटं[५] प्रति कारणीभूतो यस्तन्तुसंयोगस्तस्य महापटं प्रत्यपि कारणत्वम्। तथा च यथा तत्र महापटोत्पत्तिप्राक्क्षणेऽपि खण्डपटारम्भकतन्तुसंयोगस्य सत्त्वेन महापटोत्पत्तिकाल एव खण्डपटोत्पत्तिप्रसङ्गवारणाय खण्डपटं प्रति महापटनाशस्यापि कारणत्वं स्वीक्रियते, तथैवात्रापि प्रथमश्यामरूपकाले द्वितीयश्यामरूपोत्पत्तिवारणाय द्वितीयश्यामरूपं प्रति प्रथमश्यामरूपनाशस्यापि कारणत्वं वक्तव्यम्। तथा च कपाले प्रथमश्यामरूपनाशोत्तरमेव कपालिकाश्यामरूपेण तत्र द्वितीयश्यामरूपोत्पत्तिसम्भवेन प्रथमश्यामरूपनाशकाल एवाग्निसंयोगबलाद् घटे रूपान्तरोत्पादे न किमपि बाधकमिति चेत्? मैवम्, तथा सति कपाले प्रथमरूपनाशकाले घटे रक्तरूपोत्पत्तिसम्भवेऽपि तदुत्तरक्षणे कपालिकाश्यामरूपेण श्यामरूपान्तरोत्पत्तौ बाधकाभावेन घटे रक्ततादशायामपि कपाले श्यामरूपप्रत्यक्षापत्तिः स्यात्। अतः स्वसमवायिसमवेतत्वसम्बन्धेन श्यामरूपं समवायसम्बन्धेन रक्तरूपं प्रति प्रतिबन्धकमवश्यं वाच्यमतो नोक्तापत्तिः। घटो यथा स्वसाक्षादवयवे कपाले समवायेन तिष्ठति, तथैव स्वावयवावयवेषु परमाणुपर्यन्तेष्वपि समवायेनैव तिष्ठति। अन्यथा यत्र घटे तदवयवेषु कपालादिषु (परमाणुं विहाय) च युगपदेव बहिरग्निसंयोगो जातस्तत्र घटे तदवयवादिषु च युगपदेव रूपनाशस्तत्र यद्यपि परमाणुगतश्यामरूपेण प्रतिबन्धाद् द्व्यणुके न रूपान्तरोत्पत्तिः, तथापि तत्काले कपाले पूर्वरूपस्यासत्त्वेन घटे रूपान्तरोत्पत्तिः स्यादेव, समवायेन रूपान्तरोत्पत्तिं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन रूपस्य प्रतिबन्धकतया कपालगतश्यामरूपस्यैव घटगतरूपान्तरोत्पत्तिं प्रति प्रतिबन्धकत्वेन

तत्काले कपाले रूपाभावेन घटे रूपान्तरोत्पादस्याशक्यपरिहारात्। घटस्य स्वावयवेष्वपि समवेतत्वस्वीकारे च नोक्तापत्तिः, तथात्वे परमाणुरूपस्यापि घटीयरूपान्तरोत्पत्तिं प्रति प्रतिबन्धकत्वात्। अत एव परमाणौ घट इत्यनुभवोऽपि सङ्गच्छते। एवं कपालद्वयोत्पत्त्यव्यवहितप्राक्क्षण एव यत्र यावदवयवानां युगपदेव संयोगस्तत्र तदुत्तरक्षणे घटोत्पत्तिरवश्यं स्वीकर्तव्या, साऽपि क्षणविलम्बेनैव, अन्यथा कारणस्य कार्यपूर्वभावित्वसिद्धान्तहानिः स्यात्। तथा च तादृशघटं प्रति कपालस्य तदवयवानाञ्च कारणत्वमवश्यं स्वीकार्यं विनिगमनाविरहात्। एवञ्च घटं प्रति कपालस्येव परमाण्वादीनामप्युपादानत्वात्तत्र समवायेनैव घटस्य विद्यमानत्वेन परमाणुगतश्यामरूपस्यानाशे तेनैव घटेऽपि तत्सजातीयश्यामरूपस्योत्पाद-सम्भवेन तस्य च रूपान्तरोत्पत्तिं प्रति प्रतिबन्धकत्वात् तत्र पाकासम्भवकथनं युक्तमेव[६]।

तथा चावयविनि पाकासम्भवे वैशेषिकैस्तत्रेयं पाकप्रक्रिया स्वीक्रियते—प्रथममवयविनि घटादावग्निसंयोगः[७], ततस्तादृशाग्नि-संयोगवशाद् अवयविन आपरमाण्वन्तं नाशः, तत आरम्भकसंयोगरहितेषु परमाणुषु पाकः, ततस्तत्र पूर्वरूपनाशरूपान्तरोत्पादाविति। नन्वेवं घटादौ कथं रूपान्तरदर्शनमिति चेत्? इत्थम्—पक्वेषु परमाणुषु अदृष्टवशात् क्रियाविशेषोत्पत्तिः, ततस्तत्र द्रव्यारम्भकसंयोगोत्पादः, ततो द्व्यणुकादि-क्रमेण घटाद्युत्पत्तिरिति। तथा च तद्रीत्या श्यामघटाद् भिन्न एव रक्तघट इति। तेजसामतिशयितवेगवशात् पूर्वघटनाशो घटान्तरोत्पत्तिश्च। अस्यां प्रक्रियायां वैशेषिकैः क्षणव्यवस्थाऽपि प्रदर्शिता निपुणं विवृता च पण्डितराजैः; किन्त्वत्र विस्तरभयान्न प्रतिपाद्यते। अस्मिन्नेव क्रमे प्रसङ्गात् समागता नैकेऽपि परैरपरिशीलिता विचाराः पण्ड़ितराजैस्तत्र तत्र समुपस्थापिताः सूरिभिस्तत्रैव अनुशीलनीया इत्यलं विस्तरेण।

## सन्दर्भाः

१. 'तत्रापि परमाणौ स्यात् पाको वैशेषिके नये'। (कारिकावली, का.सं. १०५)

२. न्या.सि. मुक्तावल्यां, तत्रैव।

३. रामरुद्र्यां, तत्रैव, पृ. ३९६।

४. द्र.पं. हरिरामशास्त्रिकृत-रामरुद्रीटिप्पणी, पृ.सं. ३९६।

५. महापटात् किञ्चित्तन्त्वपसारणेऽवशिष्टः पटः खण्डपट उच्यते।

६. विस्तरस्तु रामरुद्र्यां द्रष्टव्यः।

७. केवलमग्निसंयोगो न तु पाकः।



# वाक्यलक्षणविमर्शः

**प्रो॰आद्याप्रसादमिश्रः**
पूर्व-व्याकरणविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



भर्तृहरिणा वाक्यपदीये ब्रह्मकाण्डे शब्दस्वरूपं तज्ज्ञानप्रयोगफलञ्च संक्षेपेणोपपादितम्। तस्य च सामान्येन वाचकत्वमपि विचारितम्। तत्र शब्दस्य वाचकत्वं पदवाक्योभयसाधारण्येन व्यवस्थापितम्। वैयाकरणास्तु सर्वत्र व्यवहारे प्रवृत्तिनिवृत्तिहेतुत्वाद् वाक्यस्यैव प्राधान्यमङ्गीकुर्वन्ति। यद्यपि वर्णस्फोट:, पदस्फोट:, वाक्यस्फोट:, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षा सिद्धान्तसिद्धा:, तथापि वाक्यस्फोटातिरिक्तानामन्येषामवास्तवत्वं ध्वनयितुं वाक्यस्फोटस्यैव मुख्यत्वमङ्गीक्रियते। वाक्ये पदानि कल्पितानि पदे च प्रकृतिप्रत्ययभागं प्रकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिता एव। वाक्यस्फोट इति कथनेन वाक्यं चासौ स्फोटश्चेति वाक्यस्फोट:, वाक्यरूपः स्फोट इत्यर्थः सम्पद्यते। तत्रोच्यते—अर्थबोधनाय प्रयुज्यत इति विग्रहे वच्परिभाषणे इति धातोः कर्मण्यर्थे ऋहलोर्ण्यदिति सूत्रेण ण्यत्प्रत्यये उपधावृद्धौ चजोरिति कुत्वे शब्दस्य संज्ञायां वाक्यमिति रूपं निष्पद्यते। शब्दसंज्ञात्वाभावे 'वचोऽशब्दसंज्ञायाम्' (७.३.६७) इति सूत्रेण कुत्वाभावे वाच्यमिति रूपं भवति।

तादृशस्य वाक्यस्य किं लक्षणमित्येतद्विषये शास्त्रकाराणां नैके मतभेदाः प्रवर्तन्ते। तद्यथा—पदसमूहो वाक्यम्, सुप्तिङन्तचयो वाक्यम्, एकतिङ् वाक्यम्, एकतिङ्विशेष्यकं वाक्यम्, पदसमूहो वाक्यमर्थसमाप्तौ—इत्यादीनि। तादृशानां मतभेदानां सङ्ग्रहाय सिद्धान्ते युक्त्या तत्प्रतिपादनाय च भर्तृहरिर्वाक्यपदीयस्य वाक्यकाण्डमारभते। तत्र नैयायिकादीनां मते पदे वाचकत्वम्, शाब्दिकानां मते वाक्यस्य वाचकत्वमिति सर्वं लक्षणसमुच्चयार्थमादौ कारिकया व्याचष्टे, तद्यथा—

आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्त्तिनी।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः।।

पदमाद्यं पृथक् सर्वं साकांक्षमित्यपि।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम्।।

अयमर्थो यद् न्यायवादिनाम् = न्यायो वाक्यविषयकस्तर्कस्तेषां विदुषाम्, वाक्यं प्रति = वाक्यविषये, बहुधा = अष्टधा, मतिर्भिन्नेति। ते चाष्टौ विभागा इमे—

१. आख्यातशब्दो वाक्यम्।
२. सङ्घातो वाक्यम्।
३. सङ्घातवर्तिनी जातिर्वाक्यम्।
४. एकोऽनवयवः शब्दो वाक्यम्।
५. क्रमो वाक्यम्।
६. बुद्ध्यनुसंहतिर्वाक्यम्।
७. आद्यं पदं वाक्यम्।
८. पृथक् सर्वं पदं वाक्यम्।

**१. आख्यातशब्दो वाक्यम्**

यत्र कारकशब्दप्रयोगं विना केवलाख्यातशब्दप्रयोगेऽपि वाक्यार्थावगतिस्तत्र केवलाख्यातशब्दोऽपि वाक्यम्। यथा—पिधेहि इति, वर्षति इति। तत्र पिधेहि इति कर्मप्रयोगाभावेऽपि द्वारमिति कर्माक्षेपात् 'द्वारं पिधेहि' इति वाक्यं भवत्येव। एवं 'वर्षति' इत्युक्तेऽपि 'देवः' इति कर्त्तुः, जलमिति कर्मण आक्षेपाद् देवो जलं वर्षतीति वाक्यं भवति। तदाह—

आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते।। (वा.प.२/३२६)

आख्यातशब्दो वाक्यमिति कथनेन सर्वथा आख्यातशब्द एव वाक्यमिति नाभिप्रायः, अन्यथा 'देवदत्त गामभ्याज दण्डेन' इत्यादौ सुप्तिङन्तचये सार्वजनीन-वाक्यत्वव्यवहारस्यासङ्गत्यापत्तेः। अत एव 'आख्यातशब्दो वाक्यम्' इति कथनेन क्वचिदाख्यातशब्दोऽपि वाक्यमित्यभिप्रायः। अतो यदुक्तम्—

तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयते।

अत्र 'तदप्येकं वाक्यम्' इति कथनेन अन्यदपि वाक्यमस्तीति ध्वन्यते।

**२. सङ्घातो वाक्यम्**

'सङ्घातो वाक्यम्' इत्यस्य पदसङ्घातो वाक्यमित्यभिप्रायः। एषां मते पिधेहीत्यादौ न केवलाख्यातस्य वाक्यत्वम्, अपि तु द्वारमित्याहृत्य तत्संहतस्यै-

वेति। केवलाख्यातस्य वाक्यत्ववत् केवलसुबन्तस्य द्वारमित्यादेरपि वाक्यत्वन्तु न, तत्र नियमेन पिधानक्रियाया अनुपस्थितेः। तदाह—

गुणभावेन साकांक्षं तत्र नाम प्रवर्तते।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते।। (वा.प.२/४८)

## ३. सङ्घातवर्त्तिनी जातिर्वाक्यम्

'सङ्घातवर्त्तिनी जातिर्वाक्यम्' इति वादिनां मते 'देवदत्त गामभ्याज दण्डेन' इत्यादिपदसङ्घाते वाचकत्वं न सम्भवति, तत्र शक्तेरानन्त्यव्यभिचारदोषप्रसङ्गात्। अत एव पदसङ्घातगताया एकस्या जातेरेव वाचकत्वम्, तस्या एव च वाक्यत्वम्। तदाह—

यथाक्षेपविशेषेऽपि कर्मभेदो न गृह्यते।
आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः।।

वस्तुतस्तु 'देवदत्त गामभ्याज दण्डेन' इत्यादिपदसङ्घातरूपवाक्येषु अस्ति कश्चन प्रतिवाक्यं भिद्यमानो जातिविशेषः, येन प्रतिपुरुषं प्रत्युच्चारणं प्रतिक्षणं भिद्यमानोऽपि 'देवदत्त गामभ्याज दण्डेन' इति वाक्य एकत्वप्रतिज्ञा भवति। सा च पदसङ्घातवर्त्तिनी जातिरेवेति।

## ४. एकोऽनवयवः शब्दो वाक्यम्

'एकोऽनवयवः शब्दो वाक्यम्' इति केषाञ्चिन्मतम्। एतन्मते वाक्यस्फोटोऽखण्डः, तत्र वर्णपदायोद्धारकल्पनायामपि वस्तुतो वर्णाः पदानि वा न सन्ति।

यथैक एव सर्वार्थप्रत्ययः प्रविभज्यते।
दृश्यभेदानुसारेण वाक्यार्थानुगमस्तथा।। (वा.प.२/७)

## ५. क्रमो वाक्यम्

'क्रमो वाक्यम्' इति केषाञ्चिन्मतम्। तन्मते पदानां क्रमः पौर्वापौर्यम्, पूर्वापरीभूतानि पदान्येव वाक्यमिति ज्ञेयम्। 'देवदत्तस्तण्डुलं पचति' इत्यादौ देवदत्तस्य कर्तृत्वम्, तण्डुलपदार्थस्य कर्मत्वम्, पचतीत्येव क्रिया। एते विशेषा वाक्यार्थीभावात् प्रागपि अनभिव्यक्ताः सन्त्येव। पश्चात् क्रमेण प्रतीतेभ्योऽवगम्यन्त एवेति व्यतिरेकेण शब्दात्मकं वाक्यं नाभिधायकम्, किन्तु क्रम एव वाक्यम्। उक्तञ्च—

सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः।
ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम्।। (वा.प.२/४९)

### ६. बुद्ध्यनुसंहृतिर्वाक्यम्

अत्र कल्पितानां पदबुद्धीनामनुक्रमेण संहृतिः अनुसंहृतिः। अस्मिन् कल्पे वाक्यमखण्डम्। तत्र पदानि न सन्ति, किन्तु पदानि = पदबुद्धयश्च कल्पितानि। तत्र पदबुद्धीनां कल्पितानामनुक्रमेण संहारः = उपसंहार इति पदसमुदायरूपत्वं बुद्ध्या प्रकल्प्य वाक्यत्वव्यवहारः।

### ७. आद्यं पदं वाक्यम्

आद्यं पदं वाक्यमिति केषाञ्चन मतम्। अस्मिन् पक्षेऽनेकपदारब्धं सखण्डं वाक्यम्। अस्मिन् पक्षे प्रथमोपस्थितत्वात् शक्ततावच्छेदकानुपूर्वीकल्पनायां लाघवाच्च आद्यं पदमेव वाचकम्, इतराणि तु तत्सहकारीणि तच्छक्तिद्योतकानि। यथा—'साक्षात् क्रियते' इत्यत्र साक्षत्पदमेव वाचकम्, क्रियते इति तु पूर्वपदस्य तदर्थे शक्तिद्योतकत्वमित्याद्यपदस्यैव वाक्यत्वमिति।

### ८. पृथक् सर्वं पदं साकाङ्क्षं वाक्यम्

'पृथक् सर्वं पदं साकाङ्क्षं वाक्यम्' इति वादिनामयमाशयः—पृथक् = वाक्यात् पृथक्कारे, साकाङ्क्षम् = पदान्तरसाकाङ्क्षम्, सर्वम् = आद्यं मध्यमन्त्यञ्च समुदितं वाक्यम्।

इत्थं हि अष्टौ वाक्यलक्षणं यथायथं व्याख्यातम्। इत्येतदतिरिक्तमपि वाक्यलक्षणमस्ति। भगवता भर्तृहरिणा स्वोपज्ञवृत्तावुक्तम्—उदाहरणमात्रमेतत्। अन्यान्यपि वाक्यलक्षणानि दर्शयिष्यतीति। तत्र वार्त्तिककारीयं पारिभाषिकं शास्त्रमात्रोपयोगिवाक्यलक्षणमस्ति। तद्यथा—

'[1]आख्यातं साव्ययकारकं विशेषणं वाक्यम्'। अस्यार्थः—अव्ययेन कारकैर्विशेषणेन च सहितमाख्यातं तिङन्तं वाक्यमिति। तद्यथा—मृद प्रपचति स्थाल्यां तण्डुलमिति। अत्र प्रेत्यव्ययम्। स्थाल्यामित्यधिकरणकारकम्, तण्डुलमिति कर्मकारकम्। मदु इति आख्यातस्य विशेषणम्। एतच्च साव्ययकारकविशेषणं यथासम्भवं बोध्यम्, न तु नियतम्।

द्वितीयम् 'एकतिङ् वाक्यम्[2]'। इत्यपि वार्त्तिककारीयं शास्त्रमात्रोपयोगि पारिभाषिकं लक्षणमस्ति।

---

१. महाभाष्यम्, २।१।१ वा. ९।

२. तत्रैव, २।१।१, वा. १०।

अस्याभिप्रायः—एकं तिडन्तं यस्मिन् पदकदम्बके स्यात् तदपि वाक्यं भवति। यथा—गच्छति, पचतीत्यादयः। एतच्च लक्षणं प्रायोऽभिप्रायेण। पचति भवति, पश्य मृगो धावति इत्यादौ यत्रानेकं तिङन्तं तत्र 'एकतिङ् वाक्यम्' इत्यस्यैकतिङ्विशेष्यकं वाक्यमित्यर्थकरणेन वाक्यत्वं सम्भवति।

अन्यदपि लौकिकं वाक्यलक्षणं मीमांसकशिरोमणिना जैमिनिना[१] उक्तम्—

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्। अस्यार्थः—यत् पदकदम्बकं परस्परान्वितपदार्थकं तदर्थैकत्वादेकं वाक्यम्, विभागे = तद्घटकपदानां विभागे = ततः पृथक्कारे साकाङ्क्षम् = पृथक्कृतपदार्थविषये साकाङ्क्षं यदि स्यादिति। अनयोर्द्विविधयोरपि शास्त्रीयलौकिकवाक्यलक्षणयोः पदसङ्घातो वाक्यमिति पक्षेऽन्तर्भावः।

एतेष्वष्टसु वाक्यविकल्पेषु पक्षद्वयमस्ति—सखण्डवाक्यपक्षोऽखण्डवाक्यपक्षश्चेति। तत्र मूलं 'पदप्रकृतिः संहिता' इति निरुक्तम्। अस्यार्थः—पदानि पदप्रकृतिर्यस्या इति सखण्डपक्षः। तत्र पदमेव शक्तम्। अथवा पदानां प्रकृतिः कारणमित्यखण्डपक्षः समुद्भवति। तत्राखण्डवाक्यलक्षणे त्रीणि लक्षणानि। तानि च इमानि—

१. जातिः सङ्घातवर्त्तिनी।
२. एकोऽनवयवः शब्दः।
३. बुद्ध्यनुसंहृतिः।

सखण्डवाक्यस्फोटलक्षणे पञ्च लक्षणानि—

१. आख्यातः शब्दः।
२. सङ्घातः।
३. क्रमः।
४. आद्यं पदम्।
५. पृथक् सर्वं वाक्यम्।

इत्थं सङ्कलनया अष्टौ लक्षणानि जातानि। सूक्ष्मेक्षिकया विचारे स्फोटो द्विविधः—

१. बाह्यः।
२. आभ्यन्तरश्चेति।

---

१. जैमिनिसूत्रम्, २।१।४६।

तत्राद्यः परश्रवणगोचरः। आभ्यन्तरस्तु मनोमात्रगोचरः। बाह्योऽपि जातिव्यक्तिभेदेन द्विविधः। तत्र जातिलक्षणस्य स्फोटस्य 'जातिः सङ्घातवर्त्तिनी' इति लक्षणम्। व्यक्तिलक्षणस्य तु 'एकोऽनवयवः शब्दः' इति निर्देशः। आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरिति लक्षणम्।

तत्र पञ्चसु सखण्डवाक्यलक्षणेषु सङ्घात-क्रम इति लक्षणद्वयेऽभिहितान्वयवादः। आख्यातशब्दः पदमाद्यम्, पदं सर्वं साकाङ्क्षमिति लक्षणत्रयेऽन्विताभिधानवादः। अभिहितान्वयवादे पदमेव शक्तं न तु वाक्यम्। वाक्यार्थभूतः पदानां संसर्गस्तु आकाङ्क्षाभास्यः। आकाङ्क्षा च तत्तच्छाब्दबोधं प्रति नियतः पदानां समभिव्याहार-विशेषः। अभिहितयोः शक्त्योपस्थितयोः पदार्थयोरन्वय आकाङ्क्षाभास्य इत्यभि-हितान्वयवादिनामभिप्रायः।

अन्विताभिधानवादिनां मते कार्यान्विते इतरपदार्थान्विते वा स्वार्थे पदानां शक्तिरित्यन्वयरूपः संसर्गोऽपि शक्तिभास्य एव। तत्रान्वयत्वेनान्वयसामान्यं शक्ति-भास्यम्, तादात्म्यादिरूपः सम्बन्धविशेषस्तु लक्षणया लभ्यत इति। तदुक्तम्—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः।
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम् ॥

वाक्यलक्षणविचारप्रसङ्गे वाक्यार्थस्यापि निरूपणमावश्यकमिति धिया वाक्यार्थविषयेऽपि किञ्चिद्विचार्यते। तत्राखण्डवाक्यस्फोटपक्षे जातिः सङ्घातवर्त्तिनी, एकोऽनवयवः शब्दः, बुद्ध्युसंहतिरिति त्रिष्वपि लक्षणेषु प्रतिभा वाक्यार्थः। प्रतिभायाश्च लक्षणमाह—

विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम्॥(वा.प.२.१४२)

अयमाशयः—अखण्डाद् वाक्याद् बुद्ध्यापोद्धृतेभ्यो देवदत्तादिपदेभ्यः स्वार्थानां विच्छेदग्रहणकाल एव देवदत्तादिपदार्थातिरिक्तैव काचन अखण्ड-वाक्यार्थविषया असत्यैरेवोपाधिभूतैर्देवदत्तादिपदार्थैरुपपादिताऽभिव्यञ्जिता प्रतिभा जायते, तां वैयाकरणा वाक्यार्थविषयकत्वाद् वाक्यार्थ इत्याहुरिति। प्रतिभायाः स्वरूपम्, कारणम्, मूलम्, भेदाश्च विस्तरेण वाक्यपदीये निरूपिताः।

सखण्डवाक्यस्फोटपक्षे पञ्चसु वाक्यलक्षणेष्वाख्यातशब्दो वाक्यमित्यस्मिन् पक्षे क्रिया वाक्यार्थः। तदाह भर्तृहरिः—

क्रिया क्रियान्तराद्भिन्ना नियताधारसाधना।

प्रक्रान्तां प्रतिपत्तृणां भेदाः सम्बोधहेतवः।। (वा.प. २।४१७)

अस्यार्थः—क्रियावाचके पदमात्रश्रवणे सति नियताधारा नियतसाधना च क्रिया। अत एव च क्रियान्तराद्भिन्ना प्रथमतरमेव प्रतिपत्तृणां बुद्धौ प्रक्रान्ता, वाक्ये साधनभेदा आधारभेदाश्च प्रयुज्यमानाः प्रतिपत्तृणां सम्बोधहेतवः, प्रतिपत्तृणां या क्रियाविशेषप्रतिपत्तिस्तत्संवादिबोधहेतवः, तेन प्रतिपत्तृणां प्रक्रमोपजातक्रियाविशेषप्रतिपत्तिसंवादमात्रं फलं भवतीति। अन्यच्चोक्तम्—

प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम्।

फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः।।

पदानां सङ्घातो वाक्यम्, पदानां पौर्वापर्यरूपः क्रमो वाक्यमिति च पक्षद्वये पदार्थानां संसर्गो वाक्यार्थः। स च—

सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते।

वाक्यार्थमेतं सम्प्राहुरनेकपदसंश्रयम्।।

पदमाद्यम्, पृथक् सर्वं पदं साकाङ्क्षमित्यस्मिन् पक्षद्वये संसृष्ट एव प्रथमतरं प्रक्रम्यते वाक्यार्थः। तदुक्तम्—

तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते[1]।

तेषां तु कृत्स्नः = सकलो वाक्यार्थः प्रतिभेदं प्रतिभागं प्रतिपदं प्रतिवर्णं वेति यावत् समाप्यते। अयमभिप्रायो यत् प्रयोक्ता विवक्षितस्यार्थस्य प्रत्यायनायोपक्रम एव विशिष्टस्यार्थविशेषान्वितस्वार्थवाचकत्वेन सामान्यार्थकाद् देवदत्तादिपदाद् विलक्षणस्य देवदत्तादिपदस्योदीरणकारक इति हेतोराद्य एव पदे, अविशेषेण प्रत्येकं वा पदेषु सकलस्य वाक्यार्थस्य समाप्तिर्भवतीत्यर्थः।

केषाञ्चिन्मते तु न वाक्यार्थ आकाङ्क्षाभास्यः कार्यानुमेयो वा, न च शक्तिभास्यः; किन्तु पदार्थः पदार्थाभिधेयः, 'वाक्यार्थस्तु वाक्यप्रयोजनम्। तदेव आचष्टे भर्तृहरिः—

अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्[2]।

अयं भावः—पदार्थः पदस्याभिधेय इति। वाक्यश्रवणे पदार्था योग्यतया परस्परं सम्बाध्य प्रतीयन्त इति न पदस्य वाक्यस्य वा वाक्यार्थे शक्तिः; किन्तु

१. वा.प. २।१८; २. वा.प. २।११४।

वाक्यश्रवणे प्रतीयमानो वाक्यार्थो वाक्यप्रयोजनम्। इत्थं हि प्रतिभा, क्रिया, संसर्गः, संसृष्ट एवार्थः, पदार्थः, प्रयोजनञ्चेति षड्विधो वाक्यार्थो ह्यत्र निर्दिष्ट इति।

वस्तुतस्तु वैयाकरणानां मते नित्य एव शब्दोऽखण्ड एव वाक्यस्फोटः, प्रतिभैव वाक्यार्थः, अध्यास एव च सम्बन्ध इति। वाक्ये पदविभागः, पदे प्रकृतिप्रत्ययादिकं काल्पनिकम्। अर्थाद् वाक्यप्रतिपत्तिद्वारकम्। तदुक्तञ्च स्वोपज्ञवृत्तौ—

'विभागैः प्रक्रियाभेदमिति भेदग्रहणं हि तस्यार्थात्मनः शब्दात्मनश्चाभिन्नस्य प्रतिपत्तिद्वारम्'। अपि चोक्तम्—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।

अतो वाक्ये पदादिभेदकल्पनमखण्डवाक्यबोधद्वारकमेवेति बोध्यम्।




●

# पाणिनीयव्याकरणस्य महत्त्वं महनीयत्वञ्च*

**डॉ.आदित्यनाथभट्टाचार्यः**
अध्यक्षः, संस्कृतविभागस्य
वर्धमानविश्वविद्यालये



दृश्यमानेऽस्मिन् विश्वप्रपञ्चे शब्दमन्तरा व्यवहारप्रयोजकं ज्ञानं नैव सम्पद्यते। पदवाक्यप्रमाणपारावारीणानां वैयाकरणमीमांसकनैयायिकानामयमविचलः सिद्धान्तः। तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।

उक्तञ्च,

इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।

तत्र लौकिकानां वैदिकानाञ्च सर्वेषां शब्दानां सुष्ठु विज्ञानं संस्कृतसाहित्यादवगम्यते। किन्त्वनन्ता एवात्र शब्दाः शिष्टव्यवहारसिद्धा विलसन्ति। तथा चोक्तिर्महाभाष्यकृताम्—

'महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गा सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधा अथर्वणो वेदः, वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः'।

अनन्तानां शब्दानां प्रतिपदपाठेन ज्ञानार्जनं देवानामप्यसम्भवमित्याशयवती श्रुतिराह—

'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम'। दिव्यवर्षसहस्रेणापि देवानामपि यदीयमवस्था स्यात्तर्हि

---

* कलिकाताविश्वविद्यालयस्य संस्कृतविभागे समायोजितायां विद्वत्सङ्गोष्ठ्यां पर्यालोचितोऽयं निबन्धः।

मनुष्याणां स्वल्पेऽप्यायुष्काले सकलेषां शब्दानामधिगमः कुतः सम्भवेत्? तथा च प्रसिद्धिर्विद्वत्सु—

'अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः'॥

अस्त्यत्र वाग्योगविदामपि प्रवचनम्—

'अहञ्च भाष्यकारश्च कुशाग्रधियावुभौ।
नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः'॥

अधीतिबोधाचरणप्रचारणैरेव विद्यालाभः स्यादिति नियमः। तत्र अध्ययनकालेनैव मनुष्याणामायुः समग्रमेव व्ययितं भवति, अनन्तशब्दाम्बुधौ कतिपयप्रतिपदोक्तशब्दमात्राध्ययनं भवति। ततो बोधाचरणादेरवकाशस्तु नैव लभ्यते। तस्मात् प्रतिपदाध्ययनादिना शब्दतत्त्वज्ञानस्याशा दुराशैव। तत्र केवलं व्याकरणाध्ययनेन सामान्यविशेषनियमानुसारमापेक्षिकाल्पायासेनैवाखिलानामेव शब्दानां सम्यगविज्ञानं सम्भवत्येव। तथा च भाष्यवचनम्—

'किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्त्यम्, येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्'।

अन्यैरिन्द्रचन्द्रादेर्व्याकरणैः केवलं सकललौकिकशब्दानां प्रतिपत्तिर्भवति, न तु वैदिकशब्दानाम्। पाणिनेर्व्याकरणेन तु लौकिकानां वैदिकानाञ्च समेषां शब्दानां समधिगमः स्यादित्यतः पाणिनेर्वैशिष्ट्यं श्रेयस्त्वञ्च। उक्तञ्च, 'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्'। आम्नातञ्चोपनिषदि, 'वेदानां वेद' इति।

अयमाशयः—पदपदार्थावगमे व्याकरणस्यैव कारणत्वात्, तन्मूलत्वाच्च वाक्यवाक्यार्थावगमस्य, वैदिकप्रक्रियान्वितपाणिनिव्याकरणानुशीलनेनैव यथा लौकिकवाक्यमहावाक्यार्थबोधो भवति, तथा वैदिकवाक्यमहावाक्यार्थबोधोऽपि च सम्भाव्यते। अनधीते तु पाणिनीये व्याकरणे कर्मकाण्डज्ञानकाण्डात्मकानां वेद-वाक्यानामर्थपरिज्ञानासम्भवाद् यथा लौकिकः पारलौकिकश्चाभ्युदयो न सम्पत्स्यते, तथैव परमपुरुषार्थमोक्षोऽपि न लप्स्यते। अतोऽस्ति पाणिनीयव्याकरणाध्ययनस्य ऐकान्तिकोपयोगः। तदाम्नातं वेदे 'अनध्यायेष्वङ्गान्यधीयीते'ति। षडङ्गेषु पाणिने-र्व्याकरणस्यैव प्राथम्यं प्राधान्यञ्च विज्ञेयम्। तदुक्तम्—'मुखं व्याकरणं स्मृतम्'। अपि च 'ब्राह्मणेन शब्दा ज्ञेयाः' इति वेदविहितत्वेनावश्यसम्पाद्यतया पाणिनि-व्याकरणाध्ययनस्य नित्यकर्मत्वमेव सूचितम्। एतेन तावद् एतद्व्याकरणानध्ययने

पापसम्भवाद् दुःखातिशय्यम्, तदध्ययने तु प्रत्यवायपरिहारात् चित्तशुद्धिद्वारा परम्परया तस्य मोक्षसाधनत्वमस्तीति विज्ञापितम्।

अपि च वृद्धव्यवहारादेव प्रमाणाद् यद्यप्यादौ पदार्थबोधः, ततश्च वाक्यार्थबोधो भवितुमर्हति, तेन च व्याकरणस्याप्रामाण्यमेव आपतति, तथापि 'इयमस्य प्रकृतिः, अयञ्च प्रत्ययः। प्रकृतेरयमर्थः, प्रत्ययस्य चायम्। अतः प्रकृतिप्रत्ययविशिष्टस्य शब्दस्यायमर्थः सम्पन्नः' इत्येवंप्रकारेण पाणिनेर्नियमानुसारेण पदार्थानामन्वयमुखेन वाक्यार्थज्ञानपूर्वकशब्दप्रयोगे सति धर्मः स्यात्, इत्यस्माद्धेतोरस्य व्याकरणस्य व्यवहारतोऽप्यधिकोत्कृष्टो धर्मरूपप्रयोजनविशेषः शास्त्रकृद्भिर्विवक्षितः। एतदभिप्रेत्योच्यते 'शास्त्रेण धर्मनियम' इति भाष्यवार्त्तिकसन्दर्भः। अस्ति च सर्वानुमता अनुमिता श्रुतिरपि—'एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति'। अत्र वार्त्तिककाराः शब्दस्य ज्ञानपूर्वके प्रयोगे धर्ममास्थितवन्तः। भाष्यकृतस्तु शब्दस्य केवलज्ञाने धर्म इत्याहुः। तथा हि शाब्दिकानां मते श्रुतेरेव प्रामाण्यात् 'शब्दा ज्ञेयाः' इति श्रुतेः शब्दज्ञानस्यैव धर्मप्रयोजकत्वे प्रामाण्यम्, न पुनः शब्दप्रयोगस्य, श्रुत्यभावात्। 'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः'। इति श्रुतेरनुरोधाद् अपशब्दप्रयोग एवाधर्मः स्यात्, नापशब्दज्ञाने श्रुत्यभावादिति साम्प्रतं निश्चप्रचं वक्तुम्।

पतञ्जलिप्रमुखवैयाकरणमूर्धन्यमते शब्दस्य दुरधिगमब्रह्मरूपत्वात्, तस्य च प्रयोगाविषयत्वाद् व्याकरणाध्ययनस्य साक्षात्प्रयोजनतया केवलशब्दार्थज्ञानमत्र विवक्ष्यते। ततश्चान्ते शब्दब्रह्मस्वरूपनिश्चये मोक्षो भवति, कुतः केवलमभ्युदय ऐहिकः पारत्रिको वा? तदेवं भाष्यकृता पाणिनेर्व्याकरणाध्ययनस्य मोक्षरूपं परमं प्रयोजनं समुपस्थापितम्। सुष्ठु चोक्तं वाक्यपदीये—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः'॥

वाग्योगविदो वैयाकरणस्य सविधे वाक् स्वस्वरूपं प्रकाशते। तथा च श्रुतिः—

'उत त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा'। अपि च ज्ञानैकगम्ये शब्दब्रह्मणि सायुज्यं लभन्ते वैयाकरणाः। एतदभिप्रेत्य श्रुतिराह—

'यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते'। 'महो देवो मर्त्यां आविवेश' इति मन्त्रव्याख्यायां भाष्यकारः—'महान् देवः शब्दः, महता

देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणमि'ति व्याहृतवान्। उद्योतकारश्च तत्र व्याख्यातवान्—'परब्रह्मस्वरूपो 'देवो'ऽन्तर्यामिरूपः 'शब्दः' मर्त्येष्वाविष्टः। शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवति'। प्रारब्धक्षयं विना तदाविष्टत्वासम्भवाच्छब्दब्रह्मविज्ञानेन जीवन्मुक्तिर्भवतीति सूचितम्। तदुक्तं भर्तृहरिणा—

'अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते'।।
अथ 'शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः'।।

इत्यभिजातवचनप्रामाण्यात् केचन न्यायतन्त्रिणः शाब्दबोधं प्रति शक्तिग्रहस्याष्टौ कारणानि व्याकरणोपमानकोषाप्तवाक्यवृद्धव्यवहारविवृतिवाक्यशेष-सिद्धपदसान्निध्यानि मन्यन्ते। तत्तु विद्वद्भिः समीक्षणीयम्। लोके सर्वत्रैवं दृश्यते यद् वृद्धव्यवहारः खलु शब्दमयभाषाशिक्षणस्य मुख्योपायो भवति। पित्रोरन्यस्य चाभिज्ञव्यवहारमनुसृत्यैव शिशुरनायासेन भाषां शब्दसमूहान् च यथायथं शिक्षति। अतो भाषासाहित्यशिक्षायाः सहजतमं साधनं व्यवहारपदमुपादेयमस्तु, कृतं बह्वायाससाध्यव्याकरणाध्ययनेन। तत्रेदं प्रतिविधेयम्, अयमाक्षेपस्तदैव समीचीनः स्याद् यद्यस्माभिः सदा दैनन्दिनजीवने सर्वेषु कर्मसु वाग्व्यवहारकाले संस्कृतभाषा समाश्रीयेत; किन्त्वस्माकं दौर्भाग्यमिदं यदद्यत्वे नेयं तथा व्यवह्रियते। अतो लौकिकदृष्ट्यापि संस्कृतभाषायाः शिक्षायां वृद्धव्यवहारोऽनन्तशब्दराशिप्रतिपत्तौ नाभ्युपायो भवति। एवमुपमानाप्तवाक्यवाक्यशेषविवृतिसिद्धपदसान्निध्यानि अपि प्रत्येकं स्वतन्त्रतया शाब्दबोधं प्रति पुष्कलकारणानि न भवितुमर्हन्ति। यतो हि उपमानादितोऽपि संस्कृतभाषासाहित्यस्य पूर्णज्ञानं न भवति। केवलं कोषः व्याकरणञ्च संस्कृतभाषासाहित्यशिक्षायाः प्रकृष्टोपायौ भवतः। तत्र कोषतो मुख्यार्थमात्रबोधो भवति, व्याकरणतस्तु प्रकृतिप्रत्ययविभागमाध्यमेन प्रकृतिप्रत्ययो-भयार्थविशिष्टप्रकृतशब्दस्वरूपविज्ञानं भवतीत्यतः कोषव्याकरणयोरुभयोर्मध्ये व्याकरणस्यैव सकलशाब्दबोधप्रयोजकशक्तिग्रहसाधनतया प्रकृष्टत्वम्, तत्रापि पुनर्लौकिकवैदिकोभयशब्दविषयत्वात्, समुन्नतज्ञानविज्ञानदार्शनिकचिन्ताविजृम्भि-तत्वात्, वेदानुमोदितत्वात्, अभ्युदयनिःश्रेयससाधनत्वाच्च पाणिनीयव्याकरणस्यैव सर्वाधिकं सर्वसिद्धं प्रामाण्यमस्तीति दिङ्मात्रमत्र दर्शितम्।

अपि च व्याक्रियन्ते व्युत्पाद्यन्ते अनादिसिद्धाः साधवः शब्दा अपशब्देभ्यः पृथक्कृत्य ज्ञाप्यन्ते प्रकृतिप्रत्ययविभागद्वारा येन तच्छास्त्रं व्याकरणं नाम। वि-आङ्-कृधातोः करणे ल्युट्प्रत्यययोगेन निष्पन्नो व्याकरणशब्दः। अस्य पर्यायवाचितया पतञ्जलिना शब्दानुशासनशब्दः प्रयुक्तः। अस्य स्वरूपमेवं निरूपितं भर्तृहरिणा—

'विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतः।
ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम्'।।

अत्र शब्दानां साधुता तावदनादिसिद्धता, अभ्युदयजनकता, प्रकृतिप्रत्यय-व्युत्पन्नता वेत्याशयवता चोक्तं हरिणा वाक्यपदीये—

'अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता।
व्याकृतिर्व्यञ्जनीया वा जातिः कापीह साधुता'।।

आदौ मनुष्याणां वाक् पश्वादिवद् अव्याकृता अव्यक्ता प्रकृतिप्रत्यय-पदवाक्यादिविभागरहिता आसीत्। अथवा ब्रह्मस्वरूपा वागग्रे अखण्डा अपरिच्छिन्ना आसीत्। वागधिष्ठात्री देवता दुरूहस्वस्वरूपोन्मोचनाय अविभक्तां वाचं प्रविभक्तीकर्त्तुं देवाधिपतये इन्द्राय प्रार्थयामास। इन्द्रश्चादौ तामखण्डां वाचं व्याकृतां प्रकृतिप्रत्ययपदवाक्यादिरूपेण विभक्तां संस्कृतां व्यवहारयोग्यामकरोत्। तच्च सुविज्ञापितं तैत्तिरीये षष्ठखण्डे—

'वाग्वै पराच्यव्याकृता अवदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु इति। तामिन्द्रो व्याकरोत्। तस्मादियं व्याकृता वागुद्यते'।

शास्त्रे परापश्यन्तीमध्यमावैखर्यो वाचश्चतस्रो दशाः स्वीकृताः। अत्र ज्ञातं पदार्थं वक्तुमिच्छोः पुरुषस्येच्छया जातेन प्रयत्नेन यो योगस्तेन मूलाधारस्थस्य वायोर्विक्षोभरूपेण संस्कारेणाभिव्यक्ता परा वाक् केवलं योगिभिर्निर्विकल्पसमाधौ उपलब्धिगम्या भवति। नित्यशुद्धत्वान्निर्विकारत्वादनाहतत्वादपरिच्छिन्नत्वात्, अतः प्रकृष्टत्वाच्च सा 'परा' इति कथ्यते। परा वाग् अखण्डचैतन्यात्मिका आन्तरज्योतिब्रह्मस्वरूपा वाङ्मनसोरतीता नित्या। तत्र प्रकृतिप्रत्ययविभागा-वगतेरभाववशाद् वैयाकरणानामधिकारो नास्ति। उक्तञ्च हरिणा—

'स्वरूपज्योतिरेवान्तः परा वागनपायिनी।
तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तते'।।

मूलाधारत उद्गतस्य वायोर्नाभिप्रदेशाघातेन सम्पद्यमाना सम्मुग्धज्ञानरूपा वाक् पुनः सविकल्पसमाधौ योगिभिर्दर्शनीया 'पश्यन्ती'त्यन्वर्थनाम्ना व्यपदिष्टा। ततः पुनरपि समुद्गतो वायुः हृदयमध्ये समाहतः अर्वागृदृशाञ्च मनोमात्रगोचरीभूतां परेण च पुरुषेण प्रतिपत्तुमक्षमां 'मध्यमा'नाम्नीमर्थवहां वाचमुत्पादयति। ततोऽप्यूर्ध्वमुद्गतस्य वायोः कण्ठादिस्थानेषु 'विखरात्' आहतत्वाज्जायमाना सर्वैर्ज्ञायमाना 'वैखरी' वाग् उत्पद्यते।

अत्र पश्यन्तीमध्यमावैखरीषु प्रकृतिप्रत्ययपदवाक्यप्रविभागावगतेः सम्भवात् परापश्यन्तीवैखरीणां तिसृणां वाचामेव परमं पदं व्याकरणं प्रसिद्ध्यति। एतन्मत्वा सुष्ठ्वभिहितं वाक्यपदीये—

'वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्याः वाचः परं पदम्'॥

यो हि मनीषी वैयाकरणः सविकल्पसमाधिना अभिव्यक्तां पश्यन्तीपर्यन्तां वाचं विजानाति स निर्विकल्पसमाधिं प्राप्य नूनमेव स्वतःस्फुरितां मुक्तेः प्रयोजिकां चैतन्यस्वरूपां परामपि वाचमवश्यं विजानीयादित्यहो निरतिशयं माहात्म्यं पाणिनेः शब्दानुशासनशास्त्रस्य। अवितथमुक्तमेतल्लक्ष्यीकृत्य—

'आपः पवित्रं परमं पृथिव्यामद्भ्यः पवित्रं परमञ्च मन्त्राः।
तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः'॥

अथ व्याकरणे व्युत्पत्तिं विना प्रकृतः शब्दार्थबोधः, पदार्थबोधः, वाक्यार्थबोधश्च न सम्भवेत्, यथामति तत् संक्षेपतः किञ्चिदुपपाद्यते। तथा हि वैयाकरणैः 'एकतिङ् वाक्यम्' इति वाक्यलक्षणकरणात् तिङन्तपदमपरिहार्यं भवति वाक्ये। ततस्तिङन्तं पदमाश्रित्य क्रियानिष्पादकतया कर्त्रादिकारकाण्यपि वाक्ये नान्तरीयकानि भवन्ति। ततः पुनः कारकपदानां विशेषणतया प्रतियोगितया वा सम्बन्धबोधकं षष्ठ्यन्तं पदमपि वाक्ये प्रयोक्तव्यं भवति। तदेवं वाक्ये व्यवहृतानां सर्वेषामेव पदानां क्रियान्वयितया मिथः साकाङ्क्षाणां शक्त्या वाक्यवृत्त्या वाक्यार्थाभिधानं भवति। एवंभूतदृष्ट्या वैयाकरणानां मते क्रियया सह अन्वितानामेव पदार्थानां वाक्यैरभिधानादन्विताभिधानवादः प्रसज्यते। अथवा पदार्थस्य इतरपदार्थैरन्वयज्ञाप्यवाक्यस्फोटस्यैव वाक्यार्थबोधकत्वाद् वैयाकरणपतञ्जलिप्रमुखाणां मते अन्विताभिधानवादः सङ्गच्छते। यद्वा दृष्टिभेदेन परेषां वैयाकरणानां पदस्फोटवादिनां मते पदानि स्वस्वपदार्थान् अभिधया उक्त्वा विरतव्यापाराणि भवन्ति। तदनन्तरं 'पदार्थः पदार्थेनैवान्वेति' इति न्यायेन पदार्थानां

मिथः संसर्गबुद्धौ सत्यां वाक्यार्थभावना सम्पन्नेत्यनया दृष्ट्या अभिहितान्वय-वादोऽप्युपपद्यते। यद्यपि बलिष्ठा गुरुप्राभाकरमीमांसका विध्यर्थकलिङादि-प्रत्ययान्तपदस्थलेषु क्रियान्वितपदार्थानामेव शक्तिवाच्यतया शाब्दबोधजनकत्वाद् अन्विताभिधानवादमभ्युपगच्छन्ति, तथापि व्यवहारविदां भाट्टमीमांसकानां नैयायिकानाञ्च वाक्यगतपदार्थानां शक्तिवाच्यत्वाङ्गीकारेऽपि एकपदार्थस्य स्वेतरपदार्थेनान्वयस्य न शक्तिवाच्यत्वम्, किन्तु आकाङ्क्षाज्ञाप्यतया अभिहितान्वयवाद एवात्र प्रसरति। व्युत्पत्तिवादप्रारम्भे गदाधरभट्टेनाभिहितमेतत्।

मीमांसकमते पदार्थानां प्रत्येकं शक्तिलभ्यत्वात् ततस्तेषां मिथोऽन्वयविशिष्टः शाब्दबोधस्तु अभिधातिरिक्तया लक्षणारूपवाक्यवृत्त्यैवोपपन्नतरो भवति।

संक्षेपशारीरकस्याधोनिगदिते श्लोके त्वभिहितान्वयवाद एवोपपादितः—

'यत् केचिदाहुरभिधया निजान् पदार्थान्
एतावतोपरतवन्ति पदानि तेभ्यः।
पश्चाद्विशेषणविशेष्यतया तु तेषां
संसर्गबुद्धिरपरा प्रभविष्यतीति'।।

अत्र 'केचिदि'त्युक्त्या परमते अस्वारस्यमभिधित्सता अन्विताभिधानवाद एवाद्वैतवैदान्तिकैर्विवक्षित इति सूचितः। वाक्ये एकपदार्थस्येतरपदार्थैरन्वितो विशेष्यविशेषणभावावगाही एकार्थो वा महावाक्यादिबोध्यः स्यादित्यतोऽद्वैतमते जागरूक एवान्विताभिधानवादः। द्वैतवादिवेदान्तमते तु अभिहितान्वयवादः समास्थितः। वैयाकरणास्तु दृष्टिभङ्गिभेदेनोभयकोटिपक्षपातिन इत्युक्तपूर्वमेवेत्यास्तां विस्तरः।

अथ किं तावत् शब्दतत्त्वम्, किं शब्दानां स्वरूपतत्त्वम्, किं चार्थबोधजनकत्वम्, तदिदानीं किञ्चिद्विचार्यते। शब्दतत्त्वावबोधो हि व्याकरणज्ञानाधीन एवेति प्रोक्तं हरिणा वाक्यपदीये ब्रह्मकाण्डे—

'तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते'।

अर्थ एव शब्दस्य स्वरूपम्। अर्थज्ञानं विना शब्दाध्ययनमकिञ्चित्करमेव। तदुक्तं महाभारते—

'भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा'।।

पतञ्जलिप्रमुखाणां वैयाकरणानां मते अर्थवाचकः शब्दः, स च नित्यः स्फोटरूपः। नैयायिकानां मते शब्दो वर्णात्मको ध्वन्यात्मको वा स्यात्, स चोत्पादविनाशशीलः कार्योऽनित्यो वा; किन्तु शब्दस्यानित्यत्वपक्षे तस्य अर्थवाचकत्वमेव न स्यादित्याक्षेपो वैयाकरणानाम्। तथा हि शब्दोच्चारणात् परं शब्दानां शक्तिज्ञान-संसर्गज्ञानादिपुरःसरं वाच्यार्थलक्ष्यार्थादिशाब्दबोधकाले ध्वन्यात्मकशब्दानां विनष्टपूर्वत्वेनाविद्यमानत्वात् कथं तार्किकमते तेषामर्थवाचकत्वम्, कथं वा शब्दत्वम्? अपि च शब्दानां वर्णसमूहात्मकत्वे वर्णानां तृतीयक्षणध्वंसप्रतियोगित्वाद् अन्तिमवर्णोच्चारणकाले पूर्वपूर्ववर्णानां विनाशाद् वर्णसमष्टिरेव न स्यात्, समष्टेरेककालीनत्वनियमात्। अतो वर्णात्मकशब्दानामपि अर्थवाचकत्वानुपपत्तेः शब्दत्वं नोपपद्यते। तस्माद्वैयाकरणानामेतेषां मते वर्णनादाभिव्यङ्ग्यः स्फोटरूपः सर्वव्यापी नित्यः शब्दः नूनं स्वीकार्यः। स्फुटति प्रकाशते अर्थं यः स स्फोटः। अथवा स्फुट्यते व्यज्यते ध्वनिभिर्यः स स्फोटः।

मीमांसका ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमातिष्ठन्ते। वैयाकरणास्तु केचिद् वर्णव्यतिरिक्तं पदस्फोटं शब्दमिच्छन्ति, अन्ये पुनः पदस्फोटमनङ्गीकृत्य वाक्यस्फोटमेव शब्दमभ्युपगच्छन्ति, पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात्। अतो वर्णानामिव पदानामपि तत्त्वतोऽर्थवत्त्वं नास्ति। वक्तुर्विवक्षितार्थवाचकत्वाद् वाक्यस्फोटस्यैवास्त्यर्थवत्त्वम्। अतस्तत्त्वदृष्ट्या तस्यैव शब्दत्वमिति वैयाकरणवर्याणां मतम्। व्यवहारकाले तु ध्वनेरपि श्रवणादर्थप्रतीतेस्तस्यापि गौणतया शब्दत्वम्, अनादिप्रवाहपतिततया च नित्यत्वमभीप्सितम्। अत उक्तोभयविधशब्दयोरेव नित्यत्वमादाय प्रवर्त्तते भाष्यवार्त्तिकम्—'सिद्धे शब्दार्थसम्बन्धे' इति। तथैव हि व्याख्यातं तत्र भाष्यप्रदीपोद्द्योतकृद्भिः कैयटनागेशप्रमुखैः।

शब्दस्यार्थनिरूपणेऽपि दृश्यते मिथो नैयायिकमीमांसकवैयाकरणानां शाब्दिकानां मतपार्थक्यम्। 'शब्दानां प्रवृत्तिः चतुष्टयी'ति सुष्ठूपदर्शितं पतञ्जलिना महाभाष्ये प्रत्याहाराह्निके। अतो गवादिशब्दप्रतीतिजन्योऽर्थो न केवलं सास्नादि-द्रव्यविशेषः, न वा श्वेतकृष्णादिगुणविशेषः, नापि गमनशयनादिक्रियाविशेषः, नापि वा पुनर्गोत्वादिजातिविशेषः; किन्तु गवादिशब्दानां द्रव्यगुणकर्मसामान्यसमुदाय एव शक्तिः स्वीकार्या। अत्र मीमांसकैः केवलजातौ शक्तिरास्थिता। एतन्मते 'नागृहीतविशेषणा बुद्धिर्विशेष्येषूपजायते' इति न्यायानुसारं विशेष्यज्ञानं प्रति

विशेषणज्ञानस्यैव कारणत्वाद् 'अयं घटः' इत्याकारकज्ञानस्थले विशेष्यस्य घटस्य ज्ञानात् पूर्वमेवाभिधावृत्त्या तद्विशेषणस्य घटत्वस्य जातेर्भानं भवतु। ततश्च 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायाद् अभिधावृत्त्या विरतव्यापारत्वात् तया वृत्त्या विशेष्यस्य ज्ञानं भवितुं नार्हति; किन्तु धर्मधर्मिरूपशक्यार्थ-सम्बन्धमादाय लक्षणयैव धर्मिणो विशेष्यस्य ज्ञानं भवेत्। जातिशक्तिवादिमते 'गौर्जायते' 'गौर्म्रियते' इत्यत्र गोशब्दवाच्यगोत्वेन जननमरणयोरन्वयानुपपत्ते-र्वाक्यार्थबाधरूपलक्षणाबीजस्य सद्भावात् लक्षणावृत्त्या गोशब्देन गोव्यक्तेरपि बोधः स्यात्। एतन्मीमांसकमतं तु वैयाकरणा न सहन्ते। यतो हि 'अयं घटः अस्ती'त्यत्र घटव्यक्तेर्बोधाय लक्षणावृत्तेर्ग्रहणं व्यवहारविद्भिरुद्धमेव। घटशब्दोच्चारणमात्रेण सर्वसम्मताभिधावृत्त्यैव घटव्यक्तेर्बोधाद् वाक्यार्थबाधरूपलक्षणाबीजस्य असद्भावाद् मीमांसकानां लक्षणावृत्त्या घटव्यक्तेर्बोधोऽनुपपन्न एव। 'गामानय' 'गां वधान' इत्यादिस्थलेष्वपि व्यक्तौ शक्तिस्वीकारेणैवेष्टसिद्धेः लक्षणाबीजस्यान्वयानु-पपत्तेरसत्त्वात् कथं लक्षणया गोव्यक्तेर्बोधः? अस्माद्धेतोर्मीमांसकमतं व्युदस्तमेव। नैयायिकैः पुनर्जात्याकृतिविशिष्टो व्यक्तिरेव शब्दार्थ इत्यभ्युपगतम्; किन्तु विशिष्टे शक्तिस्वीकारे गौरवं स्यात्। अतस्तदपि न सहनीयम्। वैयाकरणास्तु तत्र व्यक्तिरेव हि शब्दप्रतीतिजन्यो मुख्योऽर्थ इति सङ्गिरन्ते। जातिश्च तदुपलक्षणतया अभिधावृत्त्यैव वेदनीया। यद्वा जातिं विना व्यक्तेर्बोधस्यासम्भवाद् अविनाभाव-सम्बन्धवशाद् अभिधावृत्त्यैव जातेरपि बोधोऽस्त्विति. सर्वं सुसमञ्जसम्।

अत्र पाणिन्यादिवैयाकरणानां माहात्म्यमिदमेव यत् केवलव्यक्तौ केवलजातौ वा न तेषां पक्षपातः। तेषां मते व्यवहारानुरोधादेव विवक्षया क्वचिज्जातेः क्वचिद्वा व्यक्तेर्बोधो भवतु। अत्र महर्षिपाणिनिना 'जात्याख्यायामेकस्मिन् बहुवचनमन्य-तरस्यामि'ति सूत्रकरणात् 'गौः पूज्यः, गावः पूज्याः' इत्यादिषु गोजातिरेव शब्दार्थ इति ज्ञापितम्, एवं 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रकरणाद् रामश्च रामश्च रामश्चेति स्वरूपव्यक्तीनामेकशेषे रामा इत्यत्र व्यक्तिरेव शब्दार्थ इति सूचित्। अतः पाणिनिमते जातिः, व्यक्तिश्चेति द्वयमेव शब्दार्थ इति लभ्यते। महाभाष्यकृन्मते जातिः, व्यक्तिः, लिङ्गं, संख्या, कारकञ्चेति पञ्चैव नामशब्दार्थाः। कैयटमते जातिः, व्यक्तिः, लिङ्गं, संख्या चेति चतुष्कं शब्दार्थः। वार्त्तिककारमते जातिर्व्यक्तिः लिङ्गञ्चेति त्रयं प्रातिपदिकार्थः। पाणिनिस्तु द्विपक्षपातीति सूक्तपूर्वम्। प्रवृत्तिनिमित्तं जातिर्वेत्येक एव शब्दार्थ इति व्याडेर्मतम्। व्यक्तिरित्येकः स इति प्राह व्याजप्यायनः। एवं शब्दार्थनिरूपणे वैयाकरणानामपि मतभेदो दृश्यते। यथोत्तरं

मुनीनां प्रामाण्यमित्यभ्युपगमात् पाणिनिकात्यायनपतञ्जलिषु पतञ्जलेर्मतमेवात्राधिकप्रामाण्यादुपादेयम्।

अथ अजाप्रभृतिस्त्रीप्रत्ययान्तशब्दानां प्रातिपदिकत्वमस्ति न वेति विचार्यम्। 'अप्रत्यय' इति निषेधाद् 'अर्थवत्'सूत्रेण स्त्रीप्रत्ययान्तशब्दानां न प्रातिपदिकत्वम्। न च स्त्रीप्रत्ययान्तशब्दास्तद्धितप्रत्ययान्तर्गताः, येन 'कृत्तद्धितसमासाश्चे'ति तेषां प्रातिपदिकत्वं स्यात्। 'ङ्याप् प्रातिपदिकात्' इति सूत्रे ङ्यापोः पृथग्ग्रहणात् ज्ञापकात् स्त्रीप्रत्ययान्तशब्दानां प्रातिपदिकभिन्नत्वमेव ज्ञाप्यते। एवमजादिशब्दानामप्रातिपदिकत्वे कथं तदुत्तरं प्रथमेति शङ्क्यते? तत्रोच्यते, 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति परिभाषया लिङ्गविशिष्टतया स्त्रीप्रत्ययान्तशब्दानामपि प्रातिपदिकत्वाद् अजादेरुत्तरं प्रातिपदिकार्थे प्रथमा। अत्र त्वियं विप्रतिपत्तिः—लिङ्गविशिष्टपरिभाषाङ्गीकारे 'ङ्याप्प्रातिपदिकात्' इति सूत्रे ङ्याब्ग्रहणं निरर्थकं स्यात्। अपि च 'विभक्तौ लिङ्गविशिष्टाग्रहणमि'ति निषेधपरिभाषया विभक्तिमाश्रित्य कृते कार्ये लिङ्गविशिष्टपरिभाषाया अप्रवृत्तेः अजादिशब्दोत्तरं प्रातिपदिकार्थे प्रथमा न स्यात्; किन्तु लिङ्गाधिक्ये प्रथमा अस्तु, इति केचिद्वदन्ति। अस्य समाधानकल्पे वक्तव्यम्, भाष्यकृन्मते प्रातिपदिकार्थमध्ये लिङ्गस्यान्तर्भावात् स्त्रीप्रत्ययान्तशब्दोत्तरं प्रातिपदिकार्थमात्रे प्रथमा विधेया। पुंस्त्वक्लीबत्ववत इव स्त्रीत्ववतोऽपि द्रव्यस्य वाचकं प्रातिपदिकम्, स्त्रीप्रत्ययस्तु स्वार्थे विहितः। अतः समीचीना अजादिशब्दे प्रातिपदिकार्थे प्रथमा। एवं लिङ्गस्य प्रातिपदिकार्थान्तर्गतत्वात् सूत्रे. लिङ्गस्य पृथगुपादानं ङ्याब्ग्रहणञ्च नोपयुक्तमिति विवक्षितं महाभाष्यादिग्रन्थेषु।

अपि च द्रोणो व्रीहिरित्यत्रापि प्रातिपदिकार्थे प्रथमा भवतु। कृतं सूत्रे परिमाणग्रहणेन। अथ कथ्यते, 'नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः' इति न्यायेन द्रोणो व्रीहिरित्यत्र प्रातिपदिकार्थमात्रे प्रथमास्वीकारे नामार्थयोरभेदसम्बन्धावगाहित्वाद् 'द्रोणाभिन्नो व्रीहि'रित्यनिष्टशाब्दबोधः प्रसज्येत। अतोऽत्र परिच्छेद्यपरिच्छेदकभावोपपत्तये परिमाणग्रहणमावश्यकमिति चेत्, तत्र प्रत्युच्यते, सिंहो माणवक इत्यत्रादौ शक्यार्थमादाय यथा सिंहशब्दे प्रातिपदिकार्थमात्रे प्रथमा जाता, ततो माणवकशब्देन सिंहशब्दस्याभेदान्वयानुपपत्तौ वाक्यार्थनिर्दिधीर्षया पशुविशेषार्थकसिंहशब्दस्य पराक्रमादिसादृश्यसम्बन्धवशाद् माणवके लक्षणा समाश्रीयते, एवमत्रापि द्रोणशब्दे शक्यार्थमादाय आदौ प्रातिपदिकार्थमात्रे प्रथमा अङ्गीकार्या। ततो द्रोणशब्दस्य परिमाणविशेषवाचकस्य परिमेयवाचकव्रीहिणा अभेदान्वयानुपपत्तौ वाक्यार्थोपपत्तये परिच्छेद्यपरिच्छेदकसम्बन्धमादाय द्रोणशब्दस्य

द्रोणपरिमिते लक्षणा स्वीकार्या। ततो द्रोणरूपपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति अभीष्टशाब्दबोधोऽपि सूपपद्यते। तदेवं परिमाणस्य प्रातिपदिकार्थे गतार्थत्वात् सूत्रे परिमाणग्रहणमपि व्यर्थं स्यादिति तत्त्वबोधिनीप्रौढमनोरमाकारादीनामभिप्रेतम्।

एवम् एकत्वद्वित्वादिसंख्यायाश्च महाभाष्यकारमते प्रातिपदिकार्थान्तर्भूततया 'एको द्वौ बहवः' इत्यत्र प्रातिपदिकार्थमात्रे प्रथमाविभक्तिसिद्धेः अर्थवत्सूत्रे वचनग्रहणमपि व्यर्थीभवति। लिङ्गपरिमाणवचनानां पृथग्ग्रहणं तु सूत्रे प्रपञ्चार्थं शिष्यबुद्धिवैशद्यार्थञ्चेति बोध्यम्।

अपि च 'अभिहिते प्रथमे'ति वार्त्तिकोक्तेस्तिङन्तकृदन्तादिभिः कर्मादीनामभिधानात् प्रातिपदिकार्थमात्रे प्रथमा भवतीति स्वीकृतं दीक्षितमहोदयेन। अतः क्रियान्वितशब्दनिष्ठशक्तिरूपाणि कर्तृकर्मादिकारकाणि प्रातिपदिकार्थमात्रे अन्तर्भावितानीत्येवं भाष्यकृत्सिद्धान्तेन भट्टोजिदीक्षितस्योक्तः समयः समन्वितो भवति। एतावदालोचनेन नामरूपशब्दस्य महती व्याप्तिरस्ति अर्थप्रकाशने इति प्राप्तं वैयाकरणानां पाणिनिप्रमुखाणां मते।

एवं भाष्यकृन्नये द्रव्यगुणजातिक्रियालिङ्गसंख्याकारकादिर्नामरूपप्रकृतेरेवार्थः। सुप्प्रत्ययस्तु तत्तदर्थद्योतकः, संख्याकारकादिबोधयित्री विभक्तिरित्युक्तेः। 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति नियमात् सुप्तिङ्प्रत्ययौ नामधातुशब्दोत्तरं क्रमेण प्रयुक्तौ पदत्वं लब्ध्वा प्रयोगार्हौ भवतः, 'नापदं शास्त्रे प्रयुञ्जीते'ति भाष्यकृदुक्तेः। अत्र फलव्यापारात्मकक्रियावाचको धातुः आख्यातमित्याख्यया व्यपदिश्यते। तत्र 'भावप्रधानमाख्यातमि'ति विधानाद् आख्याते प्रधानतया भावस्य (क्रियाया वा) उपयोगः। अन्येषाञ्च भावोपकारकाणां कर्तृत्वपुरुषत्व-तद्गतसंख्यादीनामप्रधानतयोपयोगः। धातोरुत्तरं विहिततिङ्लकारेण आख्यातस्योपस्थितिः। तत्र लकारार्थनिरूपणप्रसङ्गे दृश्यते मीमांसकनैयायिकवैयाकरणानां महती विप्रतिपत्तिः। अत्र लकारस्य द्योतनीयोऽर्थः कृतिर्भावना, यत्नः, व्यापारो वेति मीमांसकनैयायिकयोर्मतम्। कृत्याश्रयः कर्त्ता इति तु वैयाकरणानां मतम्। कर्त्तारं विना भावनाया असम्भवात् कर्त्तुरप्यर्थत आक्षेपेण लक्षणया बोध इति मीमांसकमतम्। तत्र मनोरमं मन्यन्ते वैयाकरणाः। भावनया सह कर्तृवत् कारकान्तरस्याप्यन्वयो भवति। अतः कर्त्रा सह नियतसम्बन्धाभावाद् भावनया न कर्त्तुराक्षेपः सम्भवति। वैयाकरणमते तु आख्यातस्य कर्त्रर्थवाचकत्वे भावनां विना कर्त्तुः क्रियासम्पादनाया असम्भवात् कर्त्तुर्भावनया सह नियतसम्बद्धत्वात् कर्तृद्वारा भावनाया नित्यमाक्षेपो भवेदिति न कोऽपि दोषः प्रसज्यते। किञ्च कर्त्ता यदि

आख्यातवाच्यो न स्यात्तर्हि कर्तृगतैकत्वादिसंख्याया बोधः कथं समुदेति? यतः शाब्दस्य शाब्देनैवान्वयः, नार्थेन। अतो मीमांसकमते कर्तुरार्थत्वे (आक्षेपलभ्यत्वे) एकत्वादिसंख्याया बोधो न स्यात्। किञ्च भावना यदि आख्यातवाच्या स्यात्, तर्हि देवदत्तः पचतीत्यादौ देवदत्तः पाकानुकूलकृतिरित्यनिष्टार्थोपस्थितिः स्यात्। तत्र सामानाधिकरण्याभावात् शाब्दबोधोऽपि न सङ्गच्छते। आख्यातस्य चार्थो यदि कर्त्ता स्यात्तर्हि तत्र देवदत्तः पाककर्त्ता इत्येवं सामानाधिकरण्यसत्त्वात् समीचीनः शाब्दबोध उपपद्यते। अपि च आख्यातेन यदि भावना अभिहिता स्यात्, कर्त्ता चानभिहितस्तर्हि अनुक्तकर्त्तरि 'कर्तृकरणयोस्तृतीये'ति तृतीया स्यात्। तेन च 'देवदत्तेन पचती त्यनिष्टप्रयोगश्चापद्येत। अतः प्रयोगानुरोधाल्लकारार्थो भावनेति मीमांसकमतं निराकृत्य वैयाकरणा लकारार्थः कर्त्ता स च सकर्मकाकर्मकोभयधातुविषयक इति सिद्धान्तं सुपरिगृहीतवन्तः। तथैव च कर्म लकारार्थः सकर्मकधातूनाम्, भावश्च केवलमकर्मकधातूनामिति व्यवस्थितवन्तः। यतः सकर्मकधातूनामपि यदि भावे लकारः स्यात्तर्हि कर्मण इव कर्त्तुरपि अनभिधानात् तत्रानुक्ते कर्मणि द्वितीयेव अनुक्ते कर्त्तरि तृतीया स्यात्, ततश्च 'देवदत्तेन घटं क्रियते' इत्यनिष्टप्रयोगापत्तिः। अतः सकर्मकधातूनां भावे लकारो न स्यादिति पाणिनेरभिप्रेतम्। तथा च सूत्रं 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति।

शिष्टव्यवहाराधीनमेव शब्दानामर्थनिरूपणं वैयाकरणैः। अनादिसिद्धो नित्य एव हि शब्दः, अर्थोऽपि च तावदत्यन्तसिद्धः। अतो नित्यः खलु शब्दार्थयोस्तादात्म्यसम्बन्धः। तथा च भाष्यवार्त्तिकं 'सिद्धे शब्दार्थसम्बन्धे'। मीमांसासूत्रञ्च—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः'। स च शब्दस्य सत्त्वे अर्थावगमः, तदसत्त्वे तु नावगम इत्यन्वयव्यतिरेकबलादुपपन्नः। द्रढयति तच्च भाष्यवार्त्तिकम् 'सिद्धं त्वन्वयव्यतिरेकाभ्याम्' इति। कैयटाचार्येण चोक्तम्—

'बुद्धिप्रतिभासः शब्दार्थो यदा यदा शब्द उच्चारितस्तदा तदार्थाकारा बुद्धिरुपजायत इति प्रवाहनित्यत्वादर्थस्य नित्यत्वम्'।

अतः शशशृङ्गादीनां सिद्धप्रकृतिभूतशब्दानां सत्त्वमेव हि अर्थविज्ञाने पुष्कलं कारणमस्तु। एतेन वस्तुसत्ता नास्ति इत्यतोऽर्थवत्ताभावादेषां शब्दानां प्रातिपदिकत्वं नास्ति, प्रयोगयोग्यता च नास्तीति न शङ्कनीयम्। मीमांसकैरप्युक्तम्—

'अत्यन्तासत्यपि ह्यर्थे शब्दः ज्ञानं करोति हि'।

तथा हि वैयाकरणैर्न केवलं बाह्या व्यावहारिका वा पदार्थाः स्वीकृताः। बौद्धा अपि पदार्थाः काल्पनिका आरोपिता वा क्रोडीकृताः

शशशृङ्गादिशब्दानां व्यावहारिकार्थवत्ताया असम्भवेऽपि रज्जुसर्पादिवद् मनःकल्पितत्वाद्बौद्धार्थत्वमारोपितार्थत्वं वाऽस्त्येव। यथा सर्पसादृश्याद् रज्जौ सर्पभ्रमः, एवं शृङ्गसादृश्यात् शशकर्णयोः शृङ्गभ्रमः। तस्मात् काल्पनिकार्थस्य सर्वसिद्धत्वात् शशशृङ्गरज्जुसर्पादिशब्दानां प्रातिपदिकत्वमर्थवत्सूत्रेणोपपन्नम्, इत्यतस्तदुत्तरं सुबुत्पत्तौ पदत्वसिद्धेस्तेषां लोकव्यवहारोऽपि सुसम्पादो भवतु।

अन्ते वक्तव्यम्, शब्दसङ्केतितानां द्रव्यगुणक्रियासामान्यानां समुदितानामेव नामशब्दजन्यप्रतीतिगोचरत्वं यद्यप्यभिमतं भाष्यकृद्भिस्तथापि नामशब्देन द्रव्यस्यैव प्राधान्यं प्रत्येतव्यम्। उक्तञ्च यास्काचार्येण—'सत्त्वप्रधानानि नामानि'। वस्तुवाचकत्वमिति प्रायः सर्ववादिसम्मतं नामलक्षणम्। वस्तु च द्रव्यम्। तच्चोपादानं कार्यस्य। यथा घटादेरुपादानं मृत्तिका, तथा यावतीयकार्याणामुपादानं निरतिशयसत्स्वरूपं ब्रह्मतत्त्वम्। तथा च श्रुतिः—

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति। अतश्चराचरजगदुपादानभूततया अखण्डसत्तालक्षणो महानात्मैव निखिलनामार्थरूपेण परिगृह्यते 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः। सुष्ठूक्तञ्च महाभाष्ये—

'न सत्तां पदार्थो व्यभिचरति'।

सत्त्वं नित्यब्रह्मस्वरूपमित्यभिप्रेत्योक्तं महाभाष्ये, 'द्रव्यं नित्यमाकृतिरनित्या' इति। स्पष्टीकृतञ्च तत्र कैयटेन प्रदीपटीकायाम्—'असत्योपाध्यवच्छिन्नब्रह्मतत्त्वमेव द्रव्यशब्दवाच्यमि'ति। सर्वमेतल्लक्ष्यीकृत्योक्तं माधवाचार्येण सर्वदर्शनसङ्ग्रहे पाणिनिदर्शनप्रकरणे, 'प्रातिपदिकार्थश्च सत्तेति प्रसिद्धम्। सा च सत्ता उदयव्ययवैधुर्यान्नित्या। सर्वस्य प्रपञ्चस्य तद्विवर्त्ततया देशतः कालतो वस्तुतश्च परिच्छेदराहित्यात् सा सत्ता महानात्मेति व्यपदिश्यते'। तदुक्तं निरुक्ते यास्काचार्येण—

'एष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यम्'। महर्षिपतञ्जलिमते जातेर्व्यावहारिकनित्यत्वेऽपि परमार्थत आविद्यकत्वेन तद्व्यञ्जकाकृतिवदसत्त्वादनित्यत्वमेव। स्फुटीकृतञ्च तद् वैयाकरणराजेन प्रदीपकारेण—

'ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, 'आत्मैवेदं सर्वमि'ति श्रुतिवचनात्'।

तदेतावता महाभाष्यकृत्प्रमुखैर्मनीषिभिर्वैयाकरणैः पारमार्थिकदृष्ट्या दृष्टिसृष्टिवादिवेदान्तमतमादाय सकलशब्दबोध्यस्य ब्रह्मरूपैकव्यक्तिरूपार्थस्य सत्यत्वं

नित्यत्वञ्चोपपादितम्। व्यावहारिकदृष्ट्या तु सृष्टिदृष्टिवादिवेदान्तमतमाश्रित्य सकलशब्दवाच्यस्य आकृतिव्यङ्ग्यजातिरूपार्थस्य सत्यत्वं नित्यत्वञ्च प्रतिपादितम्। शब्दतत्त्वनिरूपणे यादृशमेतद्वैदुष्यं प्रकटीकृतं पाणिनिव्याकरणे नैतादृशं कुत्राप्युपलभ्यते व्याकरणान्तरेषु। पाणिनीयप्रस्थानस्य महत्त्वे महनीयत्वे च परमं निदानमेतदेव। अवितथमुक्तं भर्तृहरिणा—

> तदद्वारमपवर्गस्य वाङ्मयानां चिकित्सितम्।
> पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।इति।





वाराणसेयसंस्कृतविश्वविद्यालये राजशास्त्रार्थशास्त्रपरिषदः प्रथमवार्षिकोत्सवे श्री ५ काशीनरेशैः सह श्रीशास्त्रिपादाः

# पाणिनीयमुकारनिर्वचनम्

**पण्डितश्रीमनुदेवभट्टाचार्यः**
उपाचार्यः, व्याकरणविभागे
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



प्रणमति धुरि वीणापाणिगर्भोत्सवश्रीः
पशुपतितनयः पित्र्येकनिष्ठः कनिष्ठः।
गिरिवरतनुजावामार्धशोभाभिरामं
किमपि खलु महस्तत्काशिविश्वेश्वराख्यम्।।

अथो इहं स्मारं स्मारं स्मरारिं पाणिनिव्याकरण उकारविषयकं किमपि सङ्गृह्णामि। अकारेकारौ विहाय उकार एव कथन्तरां पक्षपात इति चेद्? उकारस्य शिवनामकत्वादस्य च शास्त्रस्य तत्कृपापीयूषयूषबिन्दुविन्दुवन्द्यमानत्वादिति सङ्क्षेपः।

१. अ इ ऋ वर्णानाम् इव अस्य **उवर्णस्याष्टा**दश भेदा भवन्ति। तथा हि— आदौ ह्रस्व-दीर्घ-प्लुतास्त्रयो भेदाः, तत्र उदात्तानुदात्तस्वरितास्त्रयः पुनः प्रत्येकं भेदाः, त्रिगुणितास्त्रयो नव, तत्र अनुनासिकनिरनुनासिकौ पुनः प्रत्येकं द्वौ भेदावित्यष्टादश भेदाः। अयं भेदप्रकारः अ इ उ ऋ वर्णानामेव। तथा चोक्तं भट्टोजिदीक्षितैः, तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। तद्विधायकानि सूत्राणि यथा—ऊ३कालोऽज्झ्रस्वदीर्घप्लुतः (१.२.२७), उच्चैरुदात्तः (१.२.२९), नीचैरनुदात्तः (१.२.३०), समाहारः स्वरितः (१.२.३२), मुखनासिकावचनोऽनुनासिकः (१.१.८)।

२. अष्टादशाऽपि उकारा अकारादय इव परस्परं सावर्ण्यभाजः, तद्विधायकं शास्त्रम्—तुल्यास्यप्रयत्नं सवर्णम् (१.१.९)।

३. अष्टादशापि उकाराः 'उ'वर्णेन गृह्यन्ते। एतदेव सवर्णसञ्ज्ञायाः फलम्। तद्विधायकं शास्त्रञ्च—अणुदित्सवर्णस्य चाप्रत्ययः (१.१.६९)। अत एव प्रत्याहारसूत्रे 'उ'कार एवोच्चारितः। वस्तुतस्तु—

'प्रत्युच्चारणं शब्दो भिद्यते' (महाभाः) इति नियमात्, झलादीनामपि उच्चारणभेदेन भिन्नत्वात्, आनन्त्यात्, एकेन झकारेण सर्वझकारणां ग्रहणाय 'अणुदित्....' सूत्रे अण्-ग्रहणं प्रत्याख्याय प्रत्याहारसूत्रेषु जातिपक्ष एव आश्रितः, एवञ्च उपदिष्ट उकार उत्वजात्यवच्छिन्नमुकुलमुकुलं ग्रहीष्यतीति, ततश्च झलादिषु सर्वझकारग्रहणाय जातिपक्षस्यावश्यस्वीकरणीयतया अजादिष्वपि तस्यैव पक्षस्य युक्तत्वात्, अणुदित्सूत्रे अण्ग्रहणं प्रत्याख्यातम्—'सवर्णेऽण्ग्रहणमपरिभाष्यं जातिग्रहणात्' **(भा.प्रत्या. अणुदित्सू.)**।

४. अस्योकारस्यान्यस्य अच इव कलादिदोषदुष्टत्वमाशङ्क्य गर्गादिबिदादि-पाठात्तद्दोषनिवृत्तिः कृता भाष्यकृता **(भाष्ये प्रत्याहाराह्निकान्ते)**।

५. अस्योकारस्याष्टादशप्रकारकस्योच्चारणस्थानं कण्ठसहकृतौ ओष्ठौ। एष उच्चारणविधिः तिर्यग्भिन्नानामेव। **उपूपध्मानीयानामोष्ठौ** इति। (द्र.-भाष्ये तुल्यास्य.)

६. प्रयत्नः—आभ्यन्तरप्रयत्नस्य चतुर्धात्वपक्षे पञ्चधात्वपक्षेऽपि विवृतं प्रयत्नः (द्र.-शब्दकौस्तुभः, तुल्यास्यभाष्यञ्च)। विवृतमूष्मणां स्वराणाञ्च। (सि.कौ.) ईषद्विवृतमूष्मणां विवृतं स्वराणाम् (म.कौ.)।

७. बाह्यप्रयत्नस्तु—उदात्तः, अनुदात्तः, स्वरितः, अल्पप्राणाश्च। (लघुशे. उद्द्योत.)

८. अयमुकारः—अण्-इण्-उक्-अक्-अच्-अट्-अम्-इच्-अञ्-अश्-अल्-प्रत्याहारेषु गृह्यते। सूत्राणि यथा—८।४।५७; १।१।६९; ६।३।४५; ६।१।१०१; ६।१।७७; ८।४।२; ८।३।६; ६।१।१०४; ८।३।१९; १।१।५६। ('अञ्'प्रत्याहारस्य पृथक् प्रयोगो नापेक्ष्यते, **भाष्यकृता** 'ञमङणनम्, झभञ्' इत्यत्र सर्वान् मान्तान् प्रत्याहारान् ञान्तानङ्गीकृत्य मकारस्य प्रत्याख्यानात्)

९. द्विमात्राविशिष्टस्यास्य दीर्घसञ्ज्ञा भवति (ऊकालोऽच्.) अतः सवर्णदीर्घे (६.१.१०१), पूर्वसवर्णदीर्घे (६.१.१०२) च द्विमात्राविशिष्ट एवायं विधीयते (प्रदीपे)।

१०. द्विमात्राविशिष्टस्य द्विवचनान्तस्य ऊकारस्य प्रगृह्यसञ्ज्ञा (१.१.११), तत्फलं प्रकृतिभाव: (६.१.१२५), ततश्च सन्धिर्न भवति। भानू इमौ।

११. असवर्णेऽचि परे समासभिन्नस्थले अस्य ऊकारस्य 'इक्'-प्रत्याहारान्तर्गतत्वेन पाक्षिको ह्रस्वसहकृतप्रकृतिभाव:, तत्सामर्थ्याच्च न सन्धि:—तनू अस्ति, तनु अस्ति। (६।१।१२७, अत्रत्यवार्तिकञ्च)। अत्रेदं बोध्यम्—अयं विधि: पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वेऽपि भवति **(भा.प्र.उ.)**

१२. अन्यत्र अस्योकारस्यान्यस्य इक इव असवर्णेऽचि परे 'व्' इत्यादेशो भवति (६।१।७७)। तत्र स्थानत आनन्तर्यादुकारस्य 'व्' इति भविष्यतीति दीक्षितमतम् **(प्रौढमनो.)**, यथासङ्ख्येनाप्येतत्सिद्धमिति नागेशमतम् **(लघुशब्द.)**, प्रथमपक्षो यथासङ्ख्यसूत्रे भाष्ये। द्वितीयपक्ष: स्थानेऽन्तरतमसूत्रे भाष्ये।

१३. अनुनासिकस्यापि उँकारस्य स्थाने निरनुनासिक एव 'व्'कार:। एवमन्यत्रापि। सुँ + औ = स्वौ. (४।१।२)। 'सुँ' अस्योकारस्य अनुनासिकत्वे मानमन्यत्र द्रष्टव्यम्। विधीयमानत्वेन सवर्णाग्राहकत्वम्।

१४. प्रगृह्यसञ्ज्ञाभिन्नस्य अण: पाक्षिकानुनासिकविधानाद् अणन्त:पातित्वेनास्यापि पाक्षिकमनुनासिकत्वम्—मधुँ, मधु। अणोऽप्रगृह्यस्यानुनासिक: (८।४।५७)।

१५. **'उ'** विकरणविशेष:, यथा—'तनादिकृञ्भ्य उ:' (३।१।७९) अस्य उकारस्य पिति सार्वधातुके गुणो भवति, तनोति-करोति। (७.३.८४), अन्यत्र तन्व:, तनुव: (६।४।१०७)। विकरणमिदं कर्तरि लकार एवेति, अन्यत्र तन्यते (३।१।६७)। उकारान्तविकरणस्याप्ययं नियम:—'स्वादिभ्य: श्नु:' (७.१.७३)—सुनोति।

१६. 'उ' आदेश:—लोट्स्थानिकस्य तिप इकारस्य 'उ' इत्यादेश: (एरु: ३।४।८६)। सूत्रमिदं 'मेर्नि:' (३।४।८९) 'सेर्ह्यपिच्च' (३।४।८७) इत्यत्र न प्रवर्तते, इकारोच्चारणसामर्थ्यात् (भा.—उच्चारणसामर्थ्यादत्रोत्त्वं न भविष्यति ३।४।८६) करवाणि, जुहुधि।

१७. यत्र ह्रस्व एव ग्राह्यो भवति तत्र अन्योऽजिवायमपि तपरो भवति। यथा—उत् इति। (उदोष्ठ्यपूर्वस्य-७।१।१०२) उदन्तो भानुशब्द:, ह्रस्वोकारान्त इत्यर्थ:।

१८. 'उद्' उपसर्गो दान्त एव, स च स्वार्थस्य यथाप्रसङ्गं द्योतकः (१।४।५९-६०), उद्गच्छति, उद्भवति, उत्पश्यति, उच्चलति इत्यादिषु तत्तदर्थबोधदर्शनात्। उपसर्गसञ्ज्ञा चास्य क्रियायोगे एव भवति (१।४।५९), गतिसञ्ज्ञाऽपि तथैव (१।४।६०)।

१९. अयं ह्रस्व उकारो यदा कस्यापि शब्दस्य अन्तिमवर्णात् पूर्वत्र भवति, तदा स शब्दः 'उदुपध' इति कथ्यते (द्र.-उपधा,१।१।५६) एतत्प्रदेशो यथा—इदुदुपधस्य चाप्रत्ययस्य (८।३।४१)।

२०. यत्र धातौ ह्रस्वोकारस्य ('उत्' इत्यस्य) इत्सञ्ज्ञा (१।३।२) भवति, स 'उदित्' इति कथ्यते, तत्फलं क्त्वायामिड्विकल्पः (उदितो वा, ७।२।५६), तत्फलञ्च निष्ठायामिण्निषेधः (यस्य विभाषा, ७।२।१५)।

२१. 'उदित्'शब्देन ग्राहकशास्त्रे (१.१.६९) कुचुटुतुपूनां ग्रहणम्, तत्र यद्यपि नागेशेन उत् इत् यस्येति योगार्थसम्भावना व्यक्तीकृता, तथापि पूर्वाचार्यस्वीकृता रूढिसञ्ज्ञा इमाः **(द्र. ग्राहकसूत्रशेख.)**।

२२. 'उ'कारान्तेभ्यो धातुभ्यः कृदन्ते 'अप्'प्रत्ययो भवति, (ऋदोरप्, ३।२।५७) सूत्रे तपराभावात्, ऊकारान्तेभ्यश्च-यवः, लवः। 'मुखसुखार्थो दकारः' **(द्र. भा. ऋऌक्.)**।

२३. 'उ'वर्णान्तेभ्यः प्रातिपदिकेभ्यस्तद्धिते 'अञ्'प्रत्ययो भवति (ओरञ्, ४।२।७९), चतुर्षु अर्थेषु—तदस्मिन्नस्तीति देशे तन्नाम्नि, तेन निवृत्तम्, तस्य निवासः, अदूरभवश्च (४।२।६७, ६८, ७०, ७१) कक्षतुः अस्ति अस्मिन् देशे—काक्षतवम्, एवम् आरडवम् (**काशिका**, ४।२।७१) नदीसञ्ज्ञकेभ्यः अञ् न भवति, परत्वान्मतुप् इक्षुमती **(कौ. का.)**।

२४. 'उ'वर्णान्तात् प्रातिपदिकाद् 'अञ्'प्रत्ययो भवति (४।३।१३९) विकाराऽवयवयोरर्थयोः। अणोऽपवादः (का.) प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे **(बाल.) (बृहच्छेखरे नार्थो व्याख्यातः, भाष्ये नास्ति)**।

२५. 'उ'वर्णान्तात् तद्धिते सति 'भ'सञ्ज्ञकस्य अन्त्यस्य 'उ'कारस्य गुणो भवति (६।४।१४६)—राङ्कवो गौः।

२६. 'उ'वर्णान्तेभ्यो देशवाचिभ्यो भवाद्यर्थे ठञ् भवति (४।२।११९) नैषादकर्षुकः। सूत्रे तपराभावाद् दीर्घादप्ययम्। तत्र च 'केऽण' इति ह्रस्वः।

देशेऽर्थे एवायम्, अन्यत्र पटोश्छात्राः पाटवाः। पूर्वत्र 'काश्यादिभ्यष्ठञ्ञिठौ' (४।२।११६) इत्यतः ठञोऽनुवृत्तौ सिद्धायाम्, पुनरत्र तद्ग्रहणं ञिठो निवृत्त्यर्थम्। (कौ.)। अनेन 'वृद्धाच्छः' परत्वाद् बाध्यते (कौ.)। (इति का.) बृद्धादिति नानुवर्तते, उत्तरसूत्रे 'वृद्धात्प्राचाम्' इत्यत्र पुनर्बृद्धग्रहणात्।

२७. 'उ'वर्णान्तात् पूर्वदिग्वर्तिदेशविशेषवाचकाच्छब्दाद् बृद्धात् (१.१.७३) एव ठञ् भवतीति नियमः (४।२।१२०)—आढकजम्बुकः। (कौ.कां.) पूर्वदिग्वर्तिदेशविशेषवाचकातिरिक्ते तु अण्-मल्लवास्तु—माल्लवास्तवः।

२८. अत्र 'ओरोत्' इत्युक्त्याऽपि स्वेष्टरूपसिद्धौ गुणग्रहणेन 'सञ्ज्ञापूर्वको विधिरनित्य' इति ज्ञाप्यते, तेन 'स्वायम्भुवः' इत्युवङ्सिद्धः (का.)।

२९. 'उ'वर्णान्तेभ्यः प्रातिपदिकेभ्यो हितादिरूपेषु प्राक्क्रीतीयेषु अर्थेषु 'यत्'-प्रत्ययो भवति, 'उगवादिभ्यो यत्' (५।१।२)। शङ्कव्यं दारु। तपराभावाद्दीर्घादपि।

३०. 'उ'वर्णान्ताद् धातोः उवङ् भवति अजादौ प्रत्यये परे। 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (६।४।७७)। ङिच्चेत्यन्तादेशः—आप्नुवन्ति। तपराभावाद्दीर्घादपि।

३१. धात्ववयवसंयोगपूर्व 'उ'वर्णो न भवति, तदन्तस्यानेकाचोऽजादौ सुपि परे यण् भवति—'ओः सुपि' (६।४।८३) तपरो नास्ति। खलप्वः, खलप्वौ **(का.)** तपराभावः।

३२. 'उ'वर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णे परे इकारादेशः सनि—'ओः पुयण्ज्यपरे' (७।४।८०)—बिभावयिषति जिजावयिषति, तपराभावः।

३३. असकारान्तस्य 'अदस्' इति शब्दस्य दकारात् परस्य **'उ'** इत्यादेशो भवति। दस्य च मः—'अदसोऽसेर्दादुदो मः' (८।२।८०) तपराभावः, अमुम्, अमू।

३४. सन्नन्तेभ्यः आशंस-भिक्षाभ्याञ्च कृत् 'उ'प्रत्ययो भवति—'सनाशंसभिक्ष उः' (३।२।१६८)—चिकीर्षुः, आशंसुः, भिक्षुः।

३५. 'उ'प्रत्ययस्य अस्य योगे कर्तृकर्मणोः कृतिः (२।३।६५) इति प्राप्ता षष्ठी निषिध्यते—'न लोका....' (२।३।६९)—हरिं दिदृक्षुः। उकारान्ततदादि-ग्रहणेन इष्णुचोऽपि ग्रहणात् तद्योगेऽप्ययं विधिः—कन्यामलङ्करिष्णुः।

३६. इष्धातोर्विद्धातोश्च 'उ'प्रत्ययो निपात्यते, तत्र विदेर्नुमागमः, इषेश्छत्वम्—वेदनशीलो विन्दुः, एषणाशील इच्छुः—विन्दुरिच्छुः (३।२।१६९)। 'विदेर्नुमागम इषेश्छत्वमुकारश्च प्रत्ययो निपात्यते, तच्छीलादिषु कर्तृषु' (काशिका.)। वेत्ति तच्छीलो विन्दुः, इच्छति इच्छुः, **(कौमुदी)**। **भाष्ये** नास्ति।

३७. क्यप्रत्ययान्ताद् धातोश्छन्दसि विषये तच्छीलादिषु कर्तृषु 'उ'प्रत्ययो भवति। 'क्य' इति क्यच्-क्यङ्-क्यषां सामान्येन ग्रहणम्। क्याच्छन्दसि (३।२।१००) (काशिका)। मित्रयुः, देवाञ्जिगाति सुम्नयुः **(कौमुदी)**। 'सुम्नय' इति क्यजन्ताद् 'उ'प्रत्ययः **(बाल.)**। भाष्ये नास्ति। तपराभावेऽपि न सवर्णग्रहणम्, विधीयमानत्वात्, जातिपक्षेऽपि भाव्यमानेन सवर्णानां ग्रहणं नेति परिभाषणात्।

३८. 'उ'निपातः, यथा—उ उमेशः। अस्यार्थः—सम्बोधनम्। अ आ इ ई उ ऊ ए ऐ ओ औ सम्बोधने इति **प्रौढमनो.**। अस्य निपातसञ्ज्ञा 'प्राग्रीश्वरान्निपाताः'(१।४।५७) इत्यधिकृत्य 'चादयोऽसत्त्वे' (१।४।५७) इत्यनेन विधीयते। चादयो निपातसञ्ज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते **(काशिका)**। निपातत्वाच्चास्य अव्ययत्वम्—'स्वरादिनिपातमव्ययम्' (१।१।३७)। स्वरादयो निपाताश्चाव्ययसञ्ज्ञाः स्युः **(कौमुदी)**। 'अव्ययादाप्सुपः' (२।४।८२) इति सोर्लुक्। 'उ उत्तिष्ठ', 'हे उत्तिष्ठ' इत्यर्थात्। अयम् 'उकारः' अनुदात्तः। 'चादयोऽनुदात्ताः' **(फिट्सू.८४)**, 'आद्युदात्तत्वापवादोऽयमिति **लघुशेखरे, बृहच्छेखरे** च। निपातसञ्ज्ञकस्यास्य एकाचः (एकश्चासावच्च) 'उ' इत्यस्य प्रगृह्यसञ्ज्ञा भवति—'निपात एकाजनाङ्' (१।१।१४) एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् **(कौमुदी)**, तत्फलं प्रकृतिभावः।

३९. उ-उ(ञ्), अकारेत्सञ्ज्ञस्य **'उ'**इत्यस्य इति शब्दे परे पाक्षिकी **(शाकल्यमते)** प्रगृह्यसञ्ज्ञा भवति, तत्फलम्, प्रकृतिभावस्ततो न सन्धिः। उ इति विति। 'निपात एकाच्.' (१।१।१४) इति नित्ये प्राप्ते, 'उञः' (१।१।१७) इति सूत्रेण प्रगृह्यसञ्ज्ञा विकल्प्यते। अत्र 'उञ्' इति निपात एव, न तु प्रत्याहारः, अन्यथा हल्षु प्रगृह्यसञ्ज्ञायाः सन्ध्यभावरूपफलाभावाल्लाघवाद् 'उच्' इत्येव सूत्रं विदध्यात्—'उञ्' निपाते ञकारोच्चारणसामर्थ्याच्च **(बृ० शेखरे)**।

४०. ञकारेत्सञ्ज्ञस्य 'उ' इत्यस्य पक्षे दीर्घोऽनुनासिकादेशो भवति—'ऊँ' (१।१।१८)। उञ् इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च, 'ऊँ' इत्ययमादेशो वा। ऊँ इति **(कौमुदी)**। एवञ्च त्रीणि रूपाणि—उ इति, ऊँ इति, विति। अत्र किञ्चित्—'उञः ऊँ' इत्येकं सूत्रम् (१।१।१७)। भाष्ये योगविभाग आश्रितः—'उञ' इति योगविभागः कर्तव्यः। उञः **शाकल्याचार्यस्य** मतेन प्रगृह्यसञ्ज्ञा भवति। उ इति, विति। तत ऊँ। उञ ऊँ इत्ययमादेशो भवति। शाकल्याचार्यस्य मतेन दीर्घोऽनुनासिकः प्रगृह्यसञ्ज्ञकश्च 'ऊँ' इति। **(भाष्ये, पद०, न्यासे, बृ०शेखरे)** प्राप्तविभाषेयम् **(बृ. शेखरे)**।

४१. 'ञ'कारेत्सञ्ज्ञकस्य 'मय्'प्रत्याहारात्परस्य 'उ' इत्यस्य पाक्षिको 'व'कारो भवति, अचि परे—'मञ उञो वो वा' (८।३।३३) शमु अस्तु वेदिः, शम्वस्तु वेदिः, किमु आवपनम्, किम्वावपनम् **(काशिका)**। अत्र सङ्कलनया पञ्च रूपाणि—१. किम्विँति, २. किमूँ इति, ३. किम्विति, ४. किमु इति, ५. किं विति, इति (बृ. शेखरे)। **पदमञ्जर्यां** तु किव्विति।

४२. 'ञ'कारेसञ्ज्ञकः 'उ'शब्दः परश्चेद्, अवर्णपूर्वकस्य पदान्तस्य यकारस्य वकारस्य लोपो भवति—'उञि च पदे' (८।३।३१), यथा—'स उ एकाग्निः'। वकारोदाहरणं तु—'असा उ एकाग्निः' **(बृ०शेखरे)**।

४३. 'उ'—अन्तः, ह्रस्वोकारान्तः सखिवर्जः सर्वः शब्दो 'घि'सञ्ज्ञां लभते—'शेषो घ्यसखि' (१.४.७)। एतत्फलं यथा—'घेर्ङिति' (७।३।१११) इति गुणः। अन्तादेशः—'अच्च घेः' (७।३।११९)। वर्णसञ्ज्ञापक्षे तु घेरदादेशः **(कौ. लक्ष्मी)** द्वन्द्वे पूर्वनिपातः—'द्वन्द्वे घि' (२।२।३२)।

४४. ह्रस्वोकारान्तस्य 'क्रोष्टु'शब्दस्य तृज्वद्भावो भवति सम्बुद्धिभिन्ने सर्वनामस्थाने परे। 'तृज्वत्क्रोष्टुः' (७।१।९५), तत्फलम्—अनङ्-'ऋदुशनस्-' (७।१।९४), गुणः—'ऋतोऽङि-' (७.३.११०) दीर्घः—'अप्तृन्तृच्—' (६।४।११)।

४५. 'उ' (ह्रस्वः) उत् आदेशः। ऋदन्तशब्दानां ङसिङस्सम्बन्धिनि अचि परे एकमात्रिकः 'उ' इत्यादेशो भवति, 'ऋत उत्' (६।१।१११) सति उकारे रपरो भवति। 'उत्' इति तपरेण भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति, तत्फलम् अमूभ्यामित्यत्र दीर्घोकारविधानम् **(काशिका, परिभाषेन्दुः)**।

४६. ङसिङस्सम्बन्धिनि अचि परे 'खि-ति-खी-ती'शब्दानां सञ्जातयणामकारस्य 'उ' इत्यादेशो भवति—'ख्यत्यात्परस्य' (६।१।११२)। उत्त्वे सति रपरः—सख्युः, पत्युः।

४७. 'उ'कारान्तानामपि क्लीबशब्दानां भाषितपुंस्कानां टादावजादौ विभक्तौ पुंवद्रूपाणि वा भवन्ति। 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' (७.१.७४)—प्रभवे प्रभुणे वा, 'ब्रह्मणे' नमः अयं नियमः प्रवृत्तिनिमित्तैक्ये एव। पुंवद्भावेन नुम्प्रतिषेधः—प्रभवे।

४८. 'उ'कारान्तानां क्लीबशब्दानां 'नुम्' भवति अजादौ विभक्तौ—'इकोऽचि विभक्तौ' (७.१.७३)—मधुनी, मधूनि।

४९. दीर्घोकारान्तात् क्लीबे ह्रस्वादेशे 'उ' भवति। सुष्ठु लुनातीति सुलूशब्दः, सुलु- सुलुनी-सुलूनि। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१.२.४७)।

५०. 'उ'कारान्ताद् गुणवाचिनो वा ङीष् भवति स्त्रीत्वे। मृदुः, मृद्वी; पटुः, पट्वी। 'वोतो गुणवचनात्' (४.१.४४)।

५१ 'उ'कारान्ताद् मनुष्यवाचकात् प्रातिपदिकात्स्त्रियामूङ्प्रत्ययः। कुरु-कुरूः, ब्रह्मबन्धु-ब्रह्मबन्धूः। 'अत्र तपरकरणं मुखसुखार्थम्, न तु दीर्घनिवृत्त्यर्थम्, ऊकारान्तस्य मनुष्यजात्यभावादिति 'ऊङुतः' (४।१।७७) सूत्रे काशिका।

५२. 'उ'-'उण्'-'ञुण्'-'कु'-प्रत्ययाः उणादौ। तत्र 'उण्' 'ञुण्' 'कु' इत्यादीनामपि 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषणाद् 'उ' इत्यनेन सङ्ग्रहः। तेषु सत्सु ञित्णित्प्रयुक्तो वृद्ध्यादिर्विशेषः। यथा—

(क) 'कृ-वा-पा-जि-मि-स्वदि-साध्यशूभ्य उण्' (१।१)—डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने रक्षणे च, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ, अशू व्याप्तौ, एभ्यो धातुभ्यः कर्तरि 'उण्'प्रत्ययो भवति। 'उण्' इत्यत्र 'उ' इत्येव शिष्यते। णित्त्वाद् यथास्थानं च वृद्धी रपरश्च। करोतीति कारुः शिल्पी कारकश्च। वातीति वायुः, आतो युक्चिण्कृतोरिति युक्। एवं पायुः गुदं रक्षकश्च (बालमनो.), जायुः औषधम्-रोगान् जयति = अभिभवति। मिनोति = देहे ऊष्माणं प्रक्षिपति इति मायुः = पित्तम्। स्वदते = रोचत इति स्वादु फलम्। अयं विशेष्यनिघ्नः स्वादू रसः। एवं साधुः पुरुषः। साधु गृहम्। साध्नोतीत्यर्थः। अश्नुत इति आशु शीघ्रम्। अत्रार्थे क्लीबम्। शीघ्रत्वविशिष्टद्रव्यपरत्वे त्रिलिङ्गम्—

आशुर्व्रीहिः पाटलः स्यात्। बाहुलकादन्यत्रापि, रह त्यागे—राहुः। रहति = गृहीत्वा चन्द्रं त्यजति। वस निवासे। वासुः। वसत्यस्मिन् सर्वम्, सर्वत्रासौ वसतीति वा वासुः, स चासौ देवो वासुदेवः।

(ख) 'छन्दसीणः' (१।२)। 'इण् गतौ' इत्यस्मात् कर्तरि उण्। आयुः। एति गच्छतीति। अयं पुंल्लिङ्गः, उकारान्तश्च। 'वायुना जगदायुना' इति **बृ॰ शेखरे।**

(ग) 'दॄ-सनि-जनि-चरि-चटिभ्यो ञुण्' (१।३) 'दॄविदारणे, षणु दाने, जन जनने, चर गतौ, चट भेदने' एभ्यः ञुण्। कर्तरि अकर्तरि वा यथायोग्यं निर्णेयम्। तद्यथा—दीर्यते इति दारुः। सानुः प्रस्थः। जानु। अत्र ञकारणकाररूपानुबन्धद्वयसामर्थ्यान्न जनिवृद्ध्योश्चेति वृद्धिनिषेधः (बाल.), स्वरार्थं ञित्त्वमेवास्त्विति भावः (बृ॰शेखरे)। एवञ्चारु चाटु। मृगय्वादित्वात् कुप्रत्यये तु चटु इत्यपि (सि. कौमुदी)।

(घ) 'किञ्जरयोः श्रिणः' (१।४)—किं शृणातीति किंशारुः। सस्यशूकं बाणश्च (सि.कौ.)। 'किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि' (मेदिनी)। जरामेति जरायुः गर्भाशयः। गर्भाशयो जरायुः स्यात् (नामलिङ्गानुशासनम्)।

(ङ) 'त्रो रश्च लः' (१।५)—तॄ प्लवनतरणयोः। अस्य रेफस्य लकारो ञुण् च प्रत्ययः। तरन्त्यनेन वर्णा इति तालुः।

(च) 'कृके वचः कश्च' (१।६)—'कृक'शब्दोपपदकवच्धातोः ञुण्, चकारस्य च ककारः। कृकेन गलेन वक्तीति कृकवाकुः। 'कृकवायुर्मयूरे च सरटे चरणायुधे' इति विश्वः।

(छ) भृ-मृ-शी-तॄ-चरि-त्सरि-तनि-धनि-मि-मस्जिभ्य उः (१।७)। भृञ् भरणे, मृङ् प्राणत्यागे, शीङ् स्वप्ने, तॄ प्लवनतरणयोः, चर गतिभक्षणयोः, त्सर छद्मगतौ, तनु विस्तारे, धन धान्ये, डुमिञ् प्रक्षेपणे, टुमस्जो शुद्धौ, एभ्यो दशभ्य 'उ'प्रत्ययः। 'भृ' इति भ्वादिजुहोत्याद्योर्ग्रहणम्। भरति बिभर्ति वा भरुः स्वामी हरश्च। निमित्ताभावान्न वृद्धिः, अपि तु गुणः। 'मरुर्निर्जलदेशः। शमुरजगरः। तरुर्द्रुमः। चरन्ति = भक्षयन्ति देवा इममिति चरुः। त्सरुः = खड्गमुष्टिः। तनु स्वल्पम्। तन्यते कर्मपाशोऽनयेति तनुः शरीरञ्च। धनुः = शस्त्रविशेषः। अयमुकारान्तः पुल्लिङ्गः। सान्तस्तु अस्त्रीलिङ्गः(तत्त्व.)। मयुः = किन्नरः। मद्गुः पानीयकाकिका। न्यङ्क्वादित्वात्कुत्वम्। जश्त्वेन सस्य दः **(सि॰कौमुदी)।**

(ज) अणश्च (१।८)। अण् शब्दे, अस्मात् 'उः'। अणुः। चकारात् कटे वर्षावरणयोः, वट वेष्टने, आभ्यामपि उः प्रत्ययः (सि. कौमुदी)। कटुः। वटुः।

(झ) धान्ये नित् (१।९) 'अण् शब्दे' अस्माद् विहित 'उ'प्रत्ययः समुदायाद् धान्येऽर्थे गंस्यमाने नित्त्वं लभते। तत्फलम्—आद्युदात्तता। अणुः व्रीहिविशेषः। 'व्रीहयश्च मेऽणवश्च मे' **(यजुः)**। इत ऊर्ध्वं वक्ष्यमाणेषु सूत्रेषु 'नित्' इत्यनुवर्तते **(सि०कौमुदी)**।

(ञ) शॄ-स्वृ-स्निहि-त्रप्यसि-वसि-हनि-क्लिदि-बन्धि-मनिभ्यश्च (१।१०)। शॄ हिंसायाम्, स्वृ शब्दोपतापयोः, स्निह उपतापे, त्रपूष लज्जायाम्, असु क्षेपणे, वस निवासे, हन हिंसागत्योः, क्लिदू आर्द्रीभावे, बन्ध बन्धने, मन ज्ञाने, एभ्य 'उ'प्रत्ययः। शरुरायुधकोषयोः। स्वरुर्वज्रम्। स्नेहुर्व्याधिः। चन्द्र इत्यन्ये। त्रपु सीसम्। असवः प्राणाः। वसुः धनादौ। हनुर्मुखैकदेशः। क्लेदुश्चन्द्रः। बन्धुरात्मीयः। मनुर्मन्त्रः। चकाराद् विदि अवयवे इत्यस्मादपि। विन्दुः।

(ट) स्यन्देः सम्प्रसारणं धश्च (१।११)। 'स्यन्दू प्रस्रवणे' धातोः उः। यस्य सम्प्रसारणम्, दस्य धश्च। सिन्धुः।

(ठ) उन्देरिच्चादेः (१।१२)। उन्दी क्लेदने। उः। उनत्ति इन्दुः।

(ड) ईषेः किच्च (१।१३)। ईष गतिहिंसादानेषु। अस्माद् उः। तस्य कित्त्वम्। आदेरिकारादेशश्च। ईषते = हिनस्ति इषुः।

(ढ) स्कन्देः सलोपश्च (१।१४)। स्कन्दिर् गतिशोषणयोः। अस्माद् उः। सलोपश्च। कन्दुः भ्राष्ट्रपात्रम्।

(ण) सृजेरसुम् च (१।१५)। सृज विसर्गे। उः, तत्सन्नियोगेन असुम्, आदिसकारलोपश्च। सृ अस्ज् इत्यत्र ऋकारस्य यणि, सस्य श्चुत्वेन शः, जश्त्वेन जः, आदिसलोपः, उप्रत्यये रज्जुः।

(त) कृतेराद्यन्तविपर्ययः (१।१६)। कृती छेदने। अस्माद् उः। आद्यन्तविपर्ययश्च। तर्कुः = सूत्रवेष्टनम्। 'तकली'इति हिन्दी।

(थ) नावञ्चेः (१।१७)। 'अञ्चु गतौ', न्युपसृष्टादस्माद् उप्रत्ययः। न्यङ्क्वादित्वात्कुत्वम्। न्यङ्कुर्मृगभेदः।

(द) फलि-पाटि-नमि-मनि-जनां गुक्-पाटि-नाकि-ध-तश्च (१।१८)। फल निष्पत्तौ, पट गतौ (ण्यन्तः), णम प्रहत्वे शब्दे च, मन ज्ञाने, जनी

प्रादुर्भावे, एभ्य उः। फल्गुः, अत्र गुगादेशः। पाटयतीति पटुः। नम्यतेऽनेनेति नाकुर्वल्मीकम्। मन्यत इति मधु। जायत इति जतु।

(ध) बलेर्गुक् च (१।१९)। 'वल संवरणे' अस्माद् उः, सन्नियोगेन प्रकृतेः गुक् च। वल्गुः।

(न) शः कित्सन्वच्च (१।२०)। शो तनूकरणे, अस्माद् उः। तस्य कित्त्वं सन्वच्च। शिशुर्बालः।

(प) यो द्वे च (१।२१) या प्रापणे। अस्माद् उः। प्रकृतेर्द्वित्वम्, सन्वत्त्वे तु 'सन्यत' इतीत्त्वापत्तिः। ययुः अश्वमेधीयघोटकः।

(फ) कुर्भ्रश्च (१।२२)। भृञ् भरणे। अस्मात् कुः, प्रकृतेर्द्वित्वञ्च। बभ्रुः। चकारोऽन्यतोऽपि विधानार्थः, तेन चक्रुः कर्ता, जघ्नुर्हन्ता, पपुः पालकः। (बाल.)

(ब) पॄ-भिदि-व्यधि-गृधि-धृषिभ्यः (१।२३)। पॄ पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकाङ्क्षायाम्, ञिधृषा प्रागल्भ्ये। एभ्यः कुः। पुरुः। भिदुः वज्रम्। विरहिणं विध्यतीति वधुः। ग्रहिज्येति सम्प्रसारणम्। गृधुः कामः। धृषुः दक्षः।

(भ) कृग्रोरुच्च (१।२४)। डुकृञ् करणे, गॄ शब्दे, आभ्यां कुः, उकारोऽन्तादेशश्च। करोतीति कुरुः। गृणातीति गुरुः।

(म) अपदुःसुषु स्थः (१।२५)। अप-दुस्-सु एतदुपसृष्टस्थाधातोः कुः। आतो लोपः। अपष्ठु-दुष्ठु-सुष्ठु। अपष्ठु प्रतिकूलम्। अत्र सुषामादिषु चेति षत्वमिति न्यासाद्यनुरोधात्। वार्तिककृता तु स्थास्थिन्स्थूणामित्युपसङ्ख्यानमिति तत्त्व.। अपष्ठ्वादित्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न न्यासकारसम्मतमिति रक्षितः।

(य) रपेरिच्चोपधायाः (१।२६)। रप व्यक्तायां वाचि। अस्माद् कुः, उपधाया इकारादेशश्च। रपत्यनिष्टमिति रिपुः।

(र) अर्जि-दृशि-कम्यमि-पशि-बाधामृजि-पशि-तुग्धुग्दीर्घ-हकाराश्च (१।२७)। अर्ज अर्जने, दृशिर् प्रेक्षणे, कमु कान्तौ, अम गत्यादिषु, पशिः सौत्रो नाशे, बाधृ लोडने, एभ्यः कुः। प्रकृतीनाञ्च ऋज्-पशादेशौ, कमेस्तुगागमः, अमेर्धुगागमः। पशिः सौत्र इदित्, तत्त्वान्नुम्, बाधतेरन्त्यस्य हकारः। अर्जयति गुणान् ऋजुः। सर्वान् अविशेषेण पश्यतीति पशुः। कन्तुः कामः।

अन्धुः कूपः। पांशू रजः। अयं पुंसि क्लीबे दन्त्यमध्योऽपि। बाधत इति बाहुः।

(ल) प्रथि-म्रदि-भ्रस्जां सम्प्रसारणं सलोपश्च (१।२८)। प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके, एभ्यः कुः, सम्प्रसारणं, भ्रस्जेः सलोपश्च। प्रथते इति पृथुः। मृदुः कोमलः। भृज्जति तपसेति भृगुः, अत्र न्यङ्क्वादित्वात्कुत्वम्।

(व) लघिबंह्योर्नलोपश्च (१।२९)। लघि गतौ, बहि वृद्धौ, आभ्यां कुः, नलोपश्च। लघुः। 'बाल-मूल-लघ्वलमङ्गुलीनां वा लो रत्वमापद्यते' इति वार्तिकम्, तेन रघुर्नृपभेदः। बहुः।

(श) ऊर्णोतेर्नुलोपश्च (१।३०)। ऊर्णुञ् आच्छादने। अस्मात् कुः, नुलोपश्च। ऊरु सक्थि।

(ष) महति ह्रस्वश्च (१।३१)। उरु महदित्यर्थः।

(स) श्लिषेः कश्च (१।३२)। श्लिष आलिङ्गने। अस्मात् कुः, कश्चान्तादेशः। श्लिष्यतीति श्लिकुः भृत्यः।

(ह) आङ्परयोः खनि-शृभ्यां डिच्च (१।३३)। खनु अवदारणे, शृ हिंसायाम्, आङुपसृष्टाभ्यामाभ्यां कुः। आखनति भूमिमित्याखुः। परं शृणातीति परशुः। पृषोदरादित्वेन अकारलोपे पर्शुरपि।

(अ) हरिमितयोर्द्रुवः (१।३४)। हरिमितोपपदक-गत्यर्थक-द्रुधातोः कुः, स च डित्। हरिभिः = वानरैः द्रूयते हरिद्रुः वृक्षः। मितं द्रवति मितद्रुः समुद्रः।

(आ) शते च (१।३५)। 'शत'शब्दोपपदकादपि कुः। स च डित्। शतद्रुर्नदीभेदः। बाहुलकात्केवलाद् द्रुधातोरपि। द्रवति = ऊर्ध्वं गच्छतीति द्रुर्वृक्षः शाखा च।

(इ) खरु-शङ्कु-पीयु-नीलङ्गु-लिगु (१।३६)। 'खरु-शङ्कु-पीयु-नीलङ्गु-लिगु' एते 'उ'प्रत्ययान्ता निपात्यन्ते। पीयुः वायसः, कालः स्वर्णं च। नीलङ्गुः कृमिभेदः शृगालश्च। नीलाङ्गु इति पाठान्तरम्। तत्र धातोर्दीर्घोऽपि निपातनात्। लिगु चित्तम् (तत्त्व.)। लिगुर्मूर्खे पुमान् खरुः पतिम्बरा कन्या।

(ई) मृगय्वादयश्च (१।३७)। एते 'कु'प्रत्ययान्ता निपात्यन्ते। मृगयुः, देवयुः इत्यादयः। आकृतिगणोऽयम्।

५३. उवर्णान्तात् प्रातिपदिकाद् छापवादो यद् भवति प्राक्क्रीतीयेष्वर्थेषु। 'उगवादिभ्यो यत्' (५।१।२) शङ्कव्यं दारु। नात्र तपरः, न वा विधीयमानता, तेन दीर्घादपि।

५४. ह्रस्वोकारोपधाद् धातोः परो भावे आदिकर्मणि वर्तमाना सेड् निष्ठा वा किद्भवति—**'उदुपधाद् भावादिकर्मणोरन्यतरस्याम्'** (५.२.२१)। कित्फलं तत्पक्षे गुणाभावः। द्युत दीप्तौ। द्युतितम्, द्योतितम्।

५५. उकारान्ता विशेषनियमातिरिक्ताः शब्दाः पुंसि—'उकारान्तः' (लिङ्गा., पुंल्लि. ५१) प्रभुः, भानुः। विशेषनियमान्तःपातिनो यथा—करेणु-रज्जु-कुहु-सरयु-तनु-रेणु-प्रियङ्गुप्रभृतयः स्त्रीत्वे **(लिङ्गा. पुल्लि.-५२)**। समासे रज्जुः पुंसि च—कर्कटरज्वा **(लिङ्गा.-५३)** 'श्मश्रु-जानु-वसु-स्वाद्वश्रु-जतु-त्रपु-तालूनि नपुंसके' 'वसु चार्थवाचि' (अर्थवाचीति किम्? वसुर्मयूखाग्निधनाधिपेषु), 'मद्गु-मधु-सीधु-शीधु-सानु-कमण्डलूनि नपुंसके च', चात्पुंसि, अयमियं वा मद्गुः। 'रुत्वन्तः—मेरुः सेतुः। दारु-कशेरु-जतु-वस्तु-मस्तूनि नपुंसके-रुत्वन्त इति पुंस्त्वापवादः। इदं दारु। (लिङ्गा. **सि. कौमुदी**, ५४-५८)। अत्र सूत्रे मेरु-सेतु-शब्दानां निर्देशः 'रु-तुशब्देन विहितः, तथापि 'उ'कारान्तत्वेनात्रास्माभिः सङ्गृहीतः।

५६. उकारान्ताः स्त्रीलिंगशब्दाः—**'मृत्यु-शीधु-कर्कन्धु-किष्कु-कण्डु-रेणवः'** (४।३), इयमयं वा मृत्युः। उकारान्ताः त्रिलिङ्गशब्दाः—**गुणवचनमुकारान्तं नपुंसकं च** (४.५) पटुः—पटु—पट्वी। **(लिंगा., सि. कौमुदी)** तत्र शीधुः पूर्वत्र स्त्र्यधिकारे पुंनपुंसकप्रकरणेऽपि पठितोऽस्तीति, तस्यापि त्रिलिङ्गता।

५७. 'उ'कारवतः प्रातिपदिकाद् मयट्प्रत्ययो न भवति—**'नोत्वद्वर्ध्रबिल्वात्'** (४।३।१५१)। अत्र विकारेऽवयवे चार्थे द्व्यचश्छन्दसि (४।३।१५०) इति प्राप्तो मयट् निषिध्यते। **(सुबोधिनी, सि०कौमुदी, काशिका)**। मुञ्ज-मौञ्ज्यं शिक्याम्। 'तृणधान्यानां च द्व्यषाम् (२७) इति फिट्-सूत्रेण आद्युदात्तत्वाद् औत्सर्गिकोऽण्-(पदमञ्जरी)। अण्त्वाद् अयम् उकारो यत्र यत्र ऋ-ॠवर्णयोः ऌ-ॡ-वर्णयोर्वा स्थाने आदिश्यते, तत्र रपरः लपरश्च सन्नेव भवति। 'उरण् रँपरः' (१.१.५१)—कर्ता, हर्ता, द्वैमातुरः।

५८. अस्य उकारस्य वृद्धौ सत्यामान्तरतम्याद् द्विमात्र औकारो भवति। **'तद्धितेष्वचामादेः'** (७.२.११७)। वृद्धिरियं यथानियममुभयपदयोरपि भवति—**'अनुशतिकादीनाञ्च'** (७.३.२०)। तपराभावाद् दीर्घेऽप्ययं नियमः—उपगोरपत्यम् औपगवः। सर्वभूमेरीश्वरः सार्वभौमः।

५९. उकारः पूर्वपरस्थानिके लघूपधरूपे वा गुणे सर्वत्र द्विमात्र ओकार एव भवति। 'आद्गुणः' (६.१.८७)—गङ्गोदकम्। 'पुगन्तलघूपधस्य च' (७.३.८६)—चोरयति। 'सार्वधातुकार्धधातुकयोः' (७.३.८४)–भवति। तपरो न। गङ्गोर्मिः।

६०. सम्प्रसारणम्—'व'कारस्य सम्प्रसारणे एकमात्रिक 'उ'कारो भवति। सम्प्रसारणात् पर'व्'कारोत्तरवर्तिनोऽचः पूर्वरूपं भवति। 'इग्यणः सम्प्रसारणम्। न सम्प्रसारणे सम्प्रसारणम्'।

६१. 'उ'कारान्ताशम्भुभानुप्रभृतिशब्दानां पुंल्लिङ्गानां साधनप्रक्रिया 'हरि'-शब्दवत्।

६२. उकारादिः। धातव उकारादयो द्वाविंशतिः सन्ति—

| | |
|---|---|
| १. उक्ष (भ्वा. प. से.) | २. उख (भा. प. से.) |
| ३. उखि (भ्वा. प. से.) | ४. उङ् (भ्वा. आ. अ.) |
| ५. उच (दि. प. से.) | ६. उछि (तु. प. से.) |
| ७. उछि (भ्वा. प. से.) | ८. उछी (भा. प. से.) |
| ९. उछी (तु. प. से.) | १०. उज्झ (तु. प. से.) |
| ११. उठ (भ्वा. प. से.) | १२. उध्रस (क्र्या. प. से.) |
| १३. उध्रस (चु. उ. से.) | १४. उन्दी (रु. प. से.) |
| १५. उन्भ (तु. प. से.) | १६. उब्ज (तु. प. से.) |
| १७. उभ (तु. प. से.) | १८. उर्द (भ्वा. आ. से.) |
| १९. उर्वी (भ्वा. प. से.) | २०. उलडि (चु. उ. से.) |
| २१. उष (भ्वा. प. से.) | २२. उहिर् (भ्वा. प. से.) |

६३. 'उ'कारः (स्वरविचारः)




६४. धातुः उकारादिरुक्तः।

(क) उदितः

(ख) उकारान्तः

(ग) उदुपधः

(क) केचिद् उदितो धातवो यथा—

१. अचुँ, २. अञ्चुँ, ३. अञ्चुँ, ४. अञ्चुँ, ५. असुँ ६. ऋणुँ, ७. ऋधुँ, ८. ऋधुँ, ९. कमुँ, १०. कुजुँ, ११. क्रमुँ, १२. क्लमुँ, १३. क्षपुँ, १४. क्षिणुँ, १५. क्षीवुँ, १६. क्षुँ, १७. क्षेवुँ, १८. क्ष्णुँ, १९. खलुँ, २०. खुलुँ, २१. गुँ, २२. गृधुँ, २३. ग्रसुँ, २४. ग्लसुँ, २५. ग्लचुँ; २६. ग्लुञ्चुँ, २७. घृणुँ, २८. घृषुँ, २९. चमुँ, ३०. चमुँ, ३१. चभुँ, ३२. च्युँ, ३३. छमुँ, ३४. जमुँ, ३५. जसुँ, ३६. जसुँ, ३७. जसुँ, ३८. जिषुँ, ३९. णुँ, ४०. तनुँ, ४१. तनुँ, ४२. तञ्चुँ, ४३. तमुँ, ४४. तसुँ, ४५. त्वञ्चुँ, ४६. दन्भुँ, ४७. दभुँ, ४८. दसुँ, ४९. दिवुँ, ५०. दिवुँ, ५१. दिवुँ, ५२. ध्वन्सुँ, ५३. पृषुँ, ५४. प्लुषुँ, ५५. भृशुँ, ५६. भ्रन्शुँ, ५७. भ्रन्शुँ, ५८. भ्रन्शुँ, ५९. भ्रमुँ, ६०. भ्रमुँ, ६१. मनुँ, ६२. मिषुँ, ६३. मृषुँ, ६४. म्लचुँ, ६५. म्लुञ्चुँ, ६६. रमुँ, ६७. वनुँ, ६८. वञ्चुँ, ६९. वञ्चुँ, ७०. वसुँ, ७१. विषुँ, ७२. वृतुँ, ७३. वृतुँ, ७४. वृपुँ, ७५. वृधुँ, ७६. वृषुँ, ७७. शमुँ, ७८. शसुँ, ७९. शंसुँ, ८०. शासुँ, ८१. शृधुँ, ८२. शृधुँ, ८३. शृधुँ, ८४. श्रम्भुँ, ८५. श्रमुँ, ८६. श्रिषुँ, ८७. श्रुँ, ८८. षिधुँ, ८९. षिभुँ, ९०. षिवुँ, ९१. षृभुँ, ९२. ष्टुभुँ, ९३. ष्ठिवुँ, ९४. ष्ठिवुँ, ९५. ष्णुसुँ, ९६. संसुँ, ९७. स्रिवुँ, ९८. स्कन्भुँ, ९९. स्कुन्भुँ, १००. स्तन्भुँ, १०१. स्तुन्भुँ।

उकारान्ता (न तु उदितः) धातवो यथा (सप्तदश)—

१. कु, २. कुङ्, ३. कुङ्, ४. खुङ्, ५. गुङ्, ६. घुङ्, ७. णु, ८. दु, ९. दु, १०. द्रु, ११. श्रु, १२. षु, १३. षु, १४. ष्णु, १५. ष्टुञ्, १६. स्कुञ्, १७. ह्रुङ्।

अस्य 'उ'वर्णस्य अन्यस्य वर्णस्येव निर्देशे कारप्रत्ययो भवति—'रोगाख्यायां ण्वुल् बहुलम्', 'वर्णात्कारः'। अकारः, इकारः बाहुलकात्क्वचिन्न—अ इ उ ण्।

६५. उवर्णाल्ल इलस्य च। 'ल' इति लोपसञ्ज्ञा प्राचाम्। 'उ'वर्णात् परस्य इलच्-प्रत्ययस्य लः = लोपो भवति। इलच् इति 'घनिलचौ च' (५.३.७९) इति विहितः। अनुकम्पार्थे, सामदानादिरूपनीत्यर्थेऽनुरूपे गम्यमाने मनुष्यनाम्नः बह्वच्कात् इलचप्रत्ययो विधीयते। भानुः, भानुदत्तः, भानुलः। (अत्र आदेः परस्येति इलच आदिलोपः)।

६६. 'उ' उत्त्वम्—प्लुतभिन्नाद् ह्रस्वाकारात् परस्य रो: 'उ:' इत्यादेशो भवति, प्लुतभिन्ने ह्रस्वाकारे परे—'अतो रोप्लुतादप्लुते' (६.१.११३)। शिवोऽर्च्य:, उत्वे सति गुण:।

६७. प्लुतभिन्नादकारात्परस्य रो: 'उ:' इत्यादेशो हशि परेऽपि भवति। 'हशि च' (६.१.११४), शिवो वन्द्य:।

६८. उवर्णान्तस्य इवर्णान्तस्य चाभ्यासस्य असवर्णेऽचि परे उवङ् इयङ् च भवत:। 'अभ्यासस्यासवर्णे' (६.४.७८), उवोष। इयेष।

६९. 'उ'प्रत्ययान्तस्य कृञ्धातोरकारस्य ह्रस्व: 'उ'कारादेशो भवति, 'क्ङिति सार्वधातुके'—'अत उत्सार्वधातुके' (६।४।११०), विदाङ्कुरुतात्, विदाङ्कुरुताम्। उदिति तपरत्वसामर्थ्यान्न गुण: (सि. कौमुदी)। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टमिति बाल.।

७०. धिवि-कृविधात्वो: शब्विषये अकारान्तादेश: 'उ'प्रत्ययश्च भवति। 'धन्विकृण्व्योर च' (३।१।८०)। 'अतो लोप:' (६।४।४८)। तस्य स्थानिवत्त्वान्नोपधागुण:। 'उ'प्रत्ययस्य पित्सु गुण:। धिनोति धिनुत: धिन्वन्ति। (सि. कौमुदी)

७१. असंयोगपूर्वो य: प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा भवति मकारवकारयो: परयो:—'लोपश्चास्यान्यतरस्यां म्वो:' (६.४.१०७) धिन्व:। धिनुव:। धिन्म:। धिनुम:। मिपि तु परत्वाद्गुणो भवति—धिनोमि।

७२. असंयोगपूर्वो य: प्रत्ययोकारस्तदन्तादङ्गात्परस्य 'हि' इत्यस्य लुग्भवति—'उतश्च प्रत्ययादसंयोगपूर्वात्' (६.४.१०६) धिनु।

७३. 'उ'प्रत्ययान्तस्य कृदन्तस्य 'कृन्मेजन्त:' (१.१.३९) इति प्राप्ता अव्ययसञ्ज्ञा निषध्यते—कृन्मेजन्तश्चानिकारोकारप्रकृति: (भाष्ये)। चिकीर्षवे, चिचीर्षवे।

सङ्ख्या-सम्-भद्र-पूर्वकमातृशब्दस्य 'उत्' (उ) इत्यादेशो भवति। 'मातुरुत्सङ्ख्यासम्भद्रपूर्वाया:' (४।१।११५)। लोकप्रसिद्धसंख्या ग्राह्या। उभयगतिरिह भवति। आदेशार्थं वचनम्। प्रत्ययस्तूत्सर्गेण सिद्ध: (सि. कौमुदी)। स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष:, तेन धान्यमातुर्ग्रहणं न भवति (काशिका)। धान्यं यो मिमीते स धान्यमाता, याजकादित्वात्षष्ठीसमास:। धान्यमातरि यो मातृशब्दस्तस्य ग्रहणं न भवतीत्यर्थ:। तेन सम्मिमीते तस्यापत्यं साम्मात्र इत्युत्वं न भवति।

७४. दिवः पदस्य उकारादेशो भवति। 'दिव उत्' (६।१।१३१), **(काशिका)** द्युकामः। तपरकरणमूठो निवृत्त्यर्थम् **(काशिका)**। यद्यप्यनेन दीर्घो न प्राप्नोति, लक्षणान्तरेण तु प्राप्नोति। उत्त्वस्यावकाशो यत्रायजादिपरः—विमलद्यु। ऊठोऽवकाशः द्यूत्वा, द्यूतम्। यत्र तूभयोः प्रसङ्गस्तत्र परत्वादूठ् प्राप्नोति, तपरकरणादुत्वमेव भवति। **(पद.)**

अत्रत्येन 'उत्' इति तपरकरणेनैव 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषा ज्ञाप्यते (प्रदीप-परिभाषेन्दु.), अन्यथा भाव्यमानत्वेन सवर्णाग्रहणाद् दीर्घाप्राप्तौ तन्निवृत्त्यर्थं तपरकरणं व्यर्थमेव। स्वीकृतायां चास्यां परिभाषायाम्—'अदसोऽसेर्दादुदो मः' इति 'अमूभ्याम्' इत्यत्र दीर्घस्य दीर्घसिद्धिः। **(प्रदीपः)**। 'दिव उत्' (६।१।१३१) इति सूत्रे उकारोऽन्तोदात्तो निपात्यते। तेन 'द्युभिरक्तुभिः' इति पठ्यमानमन्तोदात्तत्वं सिद्धम्। न च निपातस्वरसामर्थ्यात् 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' (६।१।१०६) इति विभक्तिस्वराप्राप्तौ, 'दिवो झल्' (६।१।१८३) इति तन्निषेधः (उदात्तनिषेधः) व्यर्थ इति वाच्यम्, 'विमलद्यु' इत्यादौ प्रकृतिस्वरबाधेन 'दिव उत्' सूत्रस्थनिपातनस्वरस्य चारितार्थ्येन, विभक्तिस्वराबाधकत्वात्। (बृहच्छब्देन्दु., दिव उत्, लघुशब्देन्दौ बृहच्छब्देन्दौ च प्रत्ययस्वरे दिवोझल्सूत्रे)

७५. अङ्गावयवौष्ठ्यपूर्वस्य ऋदन्तस्याङ्गस्य 'उत्' (ह्रस्व उकारः) इत्यादेशो भवति—'उदोष्ठ्यपूर्वस्य' (७।१।१०८) पुपूर्षति। मुमूर्षति। दन्त्योष्ठ्यपूर्वोऽपि ओष्ठ्यपूर्वो भवतीत्यत्रापि भवति, वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम्। ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन 'ऋ गतौ' इत्यस्य सम्पूर्वस्य 'समीर्णम्' इति भवति (काशिका)। उपबृंहितश्चायमर्थः **(पद. न्यासे च)**। गुणवृद्धी परत्वादिमं बाधेते। **(सिद्धान्त-कौ.)** पिपर्ति।

७६. उकाराद् इकाराद् ह्रस्वाद् नदीसञ्ज्ञकात् परस्य ङेराम् भवति, 'इदुद्भ्याम्' (७।३।११७)। धेन्वाम्, कृत्याम्।

७७. ह्रस्वाद् उकाराद् इकाराच्च परस्य ङेरौत् इत्यादेशः—'औत्' (७।३।११८), यन्न नदीसञ्ज्ञं, नापि घिसञ्ज्ञमिकारान्तम्, तदिहोदाहरणम्—सख्यौ। पत्यौ। (काशिका)।

७८. 'प्रत्यभिवादेऽशूद्रे' (८।२।८३), 'दूराद्धूते च' (८।२।८४) 'हैहेप्रयोगे हैहयोः' (८।२।५८) 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' (८।२।८६)

इत्यादिशास्त्रैः यथानियमं यथास्थानं प्लुता विधीयन्ते, एषु यत्र एचः प्लुतः कर्तव्यो भवति, तत्र एचोऽवयवीभूतयोर्ह्रस्वोकारेकारयोः प्लुतो भवति—'प्लुतावैच ईदूतौ' (८।२।१०६)। उदाहरणं यथा—औ३पगवः।

७९. उक् (प्रत्याहारः) समस्तभेदसहितानाम् उ-ऋ-ऌवर्णानां प्रत्येकं बोधकः।

८०. 'श्र्युकः किति' (७।२।११)। श्रि इत्येतस्य, उगन्तानां च किति प्रत्यये परे इड् न भवति। युत्वा, युतः।

८१. इसुसुक्तान्तात् कः (७।३।५१)—नैषादकर्षुकः।

८२. 'उगितश्च' (४।१।६)। ङीप्—भवती, अतिभवती।

८३. 'उगितश्च' (६।३।४५)। उगितश्च परस्या नद्या घादिषु अन्यतस्यां ह्रस्वो भवति (काशिका)। श्रेयसितरा, श्रेयसीतरा।

८४. उगिद्वर्णग्रहणवर्जम्—'येन विधिस्तदन्तस्य' (१.१.७२) इत्यस्य प्रतिप्रसवः। समासविधौ प्रत्ययविधौ च यो येन विधिस्तदन्तस्येत्यस्य प्रतिषेध उक्तः, स उगिद्वर्णग्रहणे न प्रवर्तते। उदाहरणम्—भवती, अतिभवतीत्येव।

८५. 'उगिदचां सर्वनामस्थानेऽधातोः' (७.१.७०) उगितामङ्गानां धातुवर्जितानाम् अञ्चतेश्च सर्वनामस्थाने परतो नुमागमः। (काशिका)। भवान्। सर्वनामस्थान इति किम्? भवतः।

**उकञ् (प्रत्ययः)**—

१. 'लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शृभ्य उकञ्' (३।२।१५४)। अपलाषुकम् अशोभनमित्यर्थः **(पद०)**। प्रपातुका गर्भा भवति। उपपादुकं सत्त्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आधातुकं पाकलिकस्य मूत्रम्। पाकलो नाम गजानां व्याधि-विशेषः, स यस्यास्ति सःपाकलिकः। तस्य मूत्रं स्पृष्टं मा धुति वान्यान् गजान् हन्ति, एष तस्य स्वभावः **(पद०)**। कामुका एनं स्त्रियो भवन्ति। 'आगामुकं वाराणसीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः **(काशिका)**।

२. एतद्योगे षष्ठीनिषेधः—'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२।३।६९)। ल-उ-उक इति च्छेदः, 'उ उक' अनयोर्द्वयोर्गुणः। उदाहरणम्—आगामुकं वाराणसीं रक्ष आहुः।

३. 'कर्मण उकञ्' (५।१।१०३)—'तस्मै प्रभवति' इत्यर्थे। ठञोऽपवादः **(काशिका)**। कार्मुकं धनुः।

४. **'कृत्योकेष्णुच्चार्वादयश्च'** (६।२।१६०)—कृत्य-उक-इष्णुच्, एतदन्ताः, चार्वादयश्च नञ उत्तरेण अन्तोदात्ता भवन्ति। उक-अनागामुकम्।

**उक्तार्थः**—उक्तार्थानामप्रयोगः। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२.३.४६)। एकः, द्वौ, बहवः। इहोक्तार्थत्वाद् विभक्तेरप्राप्तौ वचनम् **(सि. कौमुदी)**।

**उक्थ**—उक्थादिः (गणः)। एतद्गणपठितशब्देभ्यः 'तदधीते तद्वेद' (४।२।५९) इत्यर्थे ठक्प्रत्ययो भवति। 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४।२।६०)। उक्थ-औक्थिकः (ठस्येकः)।

उक्थादिगणपठितशब्दाः—उक्थ-लोकायत-न्यास-न्याय-पुनरुक्त-निरुक्त-निमित्त-द्विपदा-ज्योतिष-अनुपद-अनुकल्प-यज्ञ-धर्म-चर्चा-क्रमेतर-श्लक्ष-श्लक्ष्ण-संहिता-पदक्रम-सङ्घट-सङ्घट्ट-वृत्ति-परिषद्-सङ्ग्रह-गण-गुण-आयुर्वेद-आयुर्देव। इत्यष्टाविंशति-शब्दाः सन्ति (द्र. गण०)। **उक्थपात्रम्-यज्ञपात्रविशेषः**। 'तुजादीनां दीर्घोऽभ्यासस्य' (६.१.७) सूत्रे भाष्यान्ते। उक्थम्—उक्थ्यम्। 'लोहितान्मणौ' (५.४.३०) स्वार्थे **भाष्ये**—अक्षरसमूहे छन्दस उपसंख्यानम्....उक्तं वा।

उक्षान्ताः। 'अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुह-र्क्साम-वाङ्मनसा-क्षिभ्रुवदार-गवोर्वष्ठीव-पदष्ठीव-नक्तन्दिव-रात्रिन्दिव-वाहर्दिवसरजसनिःश्रेयस-पुरुषायुषद्व्यायुष—त्र्यायुषर्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुनगोष्ठश्वाः' (५.४.७७) सूत्रे '...जातादय उक्षान्ताः समानाधिकरणाः'। जात उक्षा जातोक्षः। इति भाष्यम्। उगित्कार्यम्, उगित्प्रत्ययः उगिदन्नमुदिद्गदणम्। उगिल्लक्षण उगिन्निमित्तकार्यम्। नुम्-ङीप् ह्रस्वाः। **'उञ्छति'** (४।४।३२)। अर्थनिर्देशः। 'तत्' इति द्वितीयासमर्थात् 'उच्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययः (काशिका)। अत्र 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' (४।४।२८) सूत्रात् 'तत्' इत्यनुवर्तते। **उञ्छति = उद्धुनोति (न्यास.)**। भूम्यां निपतितस्य ब्रीह्यादेः कणश आदानमुञ्छः **(बाल.)**। भूमौ पतितस्य एकैकस्योपादानमुञ्छः **(तत्त्व., बृहच्छब्देन्दु.)**।

**उञ्छादिः** (गणः)। उञ्छादीनाञ्च (६।१।१६०)। उञ्छादीनामन्त उदात्तो भवति। अत्र गणे 'उञ्छ-म्लेच्छ-जञ्ज-जल्प-तल्प-जप-वध। युग कालविशेषे रथाद्युपकरणे च। गरो दूष्ये। अवन्तः वेद-वेग-वेष्टगन्धाः करणे। स्तुश्रुद्रुवश्छन्दसि। वर्तनि स्तोत्रे। श्वभ्रे दरः। साम्बतापौ भावगर्हायाम्। उत्तम-शश्वत्तमौ सर्वत्र। भक्ष-मन्थ-भोगमन्थाः देहाः। इमे षड्विंशतिश्शब्दाः, तत्र आद्यानां त्रयाणाम्—उछि उञ्छे। म्लेच्छ अव्यक्तायां वाचि। जज-जजि युद्धे। जप-जल्प व्यक्तायां वाचि। एते घञन्ताः, तत्र 'ञ्नित्यादिर्नित्यम्' (६।१।१९७) इति ञित्स्वरः प्राप्तः। जञ्जेः कुत्वाभावो निपातनात्। ततो द्वयोः 'व्यपजपोरनुपसर्गे' (३।३।६१)।

इत्यवन्तौ, धातुस्वरः प्राप्तः। 'व्यध' इत्यत्र 'वध' इति पाठान्तरम्। तथापि अवन्तत्वम्, धातुस्वरप्राप्तिश्च पूर्ववत्। युजेर्घञन्तस्य निपातनाद् गुणाभावः। विशिष्टविषये च निपातनम्। निर्दिष्टार्थभिन्ने 'योगः' एव। एवम्, दूष्यः = विषम्, इतरत्र आद्युदात्तः। वेदादयस्त्रयः, हलश्चेति घञि, करणेऽन्तोदात्तता। भाव आद्युदात्तः।

**'स्तुयुद्रुवश्छन्दसि'** इति तु उपसमस्तार्थम्। परिष्टुत्। संयुत्। परिद्रुत्। उपसमस्त = स्तोत्रे = 'साम'रूपेऽर्थे वर्तनिरन्तोदात्तोऽन्यत्र मध्योदात्तः। एवम्—श्वभ्रः = खातः, ततोऽन्यत्र दरोऽवन्तत्वेन आद्युदात्तः। एवमग्रेऽपि। (काशिका, न्यास, पद.)। उदाहरणानि—'वैश्वानरः कुशिकेभिर्युगे युगे'। अन्यत्र—योगे योगे तवस्तरम्। भक्षशब्दो घञन्तः। 'गावः सोमस्य प्रथमस्य भक्षः' 'उदुत्तमं वरुण'। शश्वत्तममीलते। (सि. कौमुदी) भक्ष अदने चुरादिः। 'अनित्यण्यन्ताश्चुरादयः' इति यदा णिज् नास्ति, तदा घञ्। ण्यन्तात्तु 'एरच्' इति सिद्धम्। एरजण्यन्तानामिति तु नास्तीत्याहुः (बाल.)। 'वध' इति पाठस्तु चिन्त्यः, उदात्तनिवृत्तिस्वरेणासिद्धेः (तत्त्व.)। उञ्छादिराकृतिगण इति बहवः **(बृहच्छब्देन्दु.)**।

**उणादिः**—उणादयो बहुलम् (३।३।१)। उणादयः प्रत्ययविशेषाः। एते वर्तमाने सञ्ज्ञायां च बहुलं स्युः। सूत्रेऽत्र 'वर्तमाने लट्', इत्यतः 'वर्तमाने' इति, 'पुवः सञ्ज्ञायाम्' इत्यतश्च सञ्ज्ञायामित्यनुवर्तते। बहुलग्रहणाद् अपठिताभ्योऽपि प्रकृतिभ्य उणादयो भवन्ति। यथा हृषेरुलच्, शकेरपि भवति—शङ्कुलेति। तथा तेषामुणादीनां प्रायेण समुच्चयनं कृतम्, न तु साकल्येनेति बहुलवचनादविहिता अपि भवन्ति **(प्रदीपः)**।

उणादिसूत्राणि शाकटायनाचार्यप्रणीतानीति वैयाकरणसमयः। अन्योऽयं शाकटायनो जैनशाकटायनात्। 'लङः शाकटायनस्यैव' (३।४।१११) इत्यत्र पाणिनिना स्मृताद्भिन्नोऽभिन्नो वेत्यत्र विदुषां विसंवादः।

पाणिनिना तु 'उणादयो बहुलम्' (३।३।१) इत्येकेन सूत्रेणैव बहुलग्रहणाद् उणादयः सङ्गृहीताः, अत एव 'पाणिनेस्त्वव्युत्पत्तिपक्ष एव' इति सिद्धान्तः। अत्र विधौ—

'सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥' (भाष्ये ३।३।१)

एष प्रकार आश्रयणीयः। अत एव 'शङ्ख' इत्यत्र ईनादेशो न। उणादिवृत्तिः पञ्चपादी दशपादी चेति द्विविधा, तत्र पञ्चपादी सिद्धान्तकौमुदीग्रन्थे सन्निविष्टा,

**भट्टोजिदीक्षित-श्रीज्ञानेन्द्रसरस्वती-श्रीनागेशभट्ट**प्रभृतिभिर्व्याख्याता च। सिद्धान्त-कौमुद्यां पञ्चपाद्यात्मिकायामुणादिसूत्रसंख्या अष्टाचत्वारिंशदधिकसप्तशतम्। प्रक्रियाकौमुद्यां तु दशपादी सन्निविष्टेति प्रसिद्धिः। **उत्**—एकमात्र उकारः। ह्रस्व उकारः। एतदुच्चारणस्थानाभ्यन्तरबाह्यप्रयत्नह्रस्वादिभेदा 'उ'शब्दे द्रष्टव्याः।

**उत्करादिः**—उत्करादिगणपठितशब्देभ्यः चातुरर्थिकेषु 'छ'प्रत्ययो भवति—'उत्करादिभ्यश्छः' (४।२।९०)। चातुरर्थिकाः ओरञ्-४.२.७१ इत्यत्र। उत्करशब्दो देशविशेषवाचीति बाल.। यथासम्भवमर्थसम्बन्ध इति **काशिका**। उत्करादिराकृतिगण इत्यन्य इति **बृहच्छेखरे**।

**उत्तमः**, उत्तमपुरुषः—'अस्मद्युत्तमः' (१।४।१०७) 'उत्तमपुरुष' इति प्राचीनाचार्यसञ्ज्ञा, पाणिनिना तु 'उत्तम' इत्येव स्वीकृतम्। तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमाने अप्रयुज्यमाने वा उत्तमः (उत्तमपुरुषः) स्यात्। एतदुत्तम-(पुरुष)विधायकं शास्त्रम्। उत्तम(पुरुष)सञ्ज्ञा तु 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' (१।४।१०१) इत्यनेन विधीयते, तत्र मिप्-वस्-मस्, अथ च इड्-वहि-महिङ्, एषामुत्तमसञ्ज्ञा। यत्र युष्मदस्मदी द्वे अप्येते उपपदे भवतस्तत्र यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते तदा लकारोऽपि भेदेनोत्पद्यते—त्वं चाहं च पचसि, पचामि चेति। सहविवक्षायां तु द्वयोरपि शक्त्योरेको लकार उत्पद्यते। तत्र युष्मदि मध्यमः अस्मद्युत्तमो विप्रतिषेधेन—'त्वं चाहं च पचावः, अहं च त्वं च वृत्रहन् संयुज्याव:' इति, यदापि—त्यदादीनां यत्परमित्यस्मदः शेषस्तदापि स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति—आवां पचावः **(काशिका)**।

अत्रायं विशेषः—समुदायात् परिहासे गम्यमाने, मन्योपपदकधातोर्मध्यम-पुरुषो भवति, मन्यतेस्तूत्तमपुरुष एव, एकवचनं च भवति। 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (१।४।१०६)। सर्वेषु कृतभोजेषु समागतं जामातारं प्रति श्यालकादेः परिहासवाक्यमिहोदाहरणम्। यथार्थवाक्यं तु प्रत्युदाहरणम्। तत्रोदाहरणं यथा—भो जामातः, एहिं, अहम् (जामाता) ओदनं भोक्ष्ये इति त्वं (जामाता) मन्यसे, परन्तु तन्न युक्तम्, कुतः? भुक्तः सोऽतिथिभिः। अत्र—'एहि मन्ये, ओदनं भोक्ष्यस इति भुक्तः सोऽतिथिभिरित्युदाहरणम्। एवं सर्वत्र वचनेषु। अत्र सूत्रे 'युष्मद्युपपदे' इत्यनुवर्तते, तेन युष्मच्छब्दं विहाय शब्दान्तरप्रयोगे नास्य प्राप्तिः। यथा, भो जामातः, एतु भवान्, मन्यते ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः, अत्र परिहासे गम्यमानेऽपि नैतत्सूत्रप्रवृत्तिः। किञ्च—युष्मच्छब्दे प्रयुक्तेऽपि यथार्थवाक्ये नास्य प्रवृत्तिः, 'एहि, मन्यसे ओदनं भोक्ष्ये इति भुक्तः, सोऽतिथिभिः'।

इदं पूर्वोक्तं च प्रत्युदाहरणे। श्यना निर्देशाद् 'मन ज्ञाने' इत्यस्य ग्रहणम्, न तु 'मनु अवबोधने' इत्यस्य, एहि मनुषे रथेन यास्यामीति एवं तस्य भवति **(पद. न्यास. बृहच्छब्देन्दु.)**

अयं पूर्वोत्तरसूत्रयोः 'युष्मद्युपपदे' (१।४।१०५), 'अस्मद्युत्तमः' (१।४।१०७) इत्यनयोः अपवादः। 'मन्योपपदे' इति बहुव्रीहिः। 'प्रकृतिभूते' इति शेषः। प्रकृतिभूतधातुश्च मन्यतिकर्तृकर्तृक एव, प्रत्यासत्तेः समानाधिकरणे इत्यनुवृत्तेश्च। मध्यमोत्तमयोर्व्यत्यासेन प्रयोगे प्राप्ते इदम्। उत्तमार्थस्यैकत्वविधानात्तदभिधायियुष्मच्छब्द एकवचनान्त एव। 'अस्मद्युत्तमः' इति सूत्रे युष्मत्पदरहितं पूर्वसूत्रमनुवर्तते। युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव। भवच्छब्देन युष्मदस्मदोः सहविवक्षायां पूर्वशेषे तु मध्यमोत्तमावेव। परशेषेण भवतः शेषेऽपि तावेवेति कश्चित्। अत्रोत्तमपुरुषे प्रत्यक्त्वं भासते, मध्यमे पराक्त्वमिति बोध्यम् **(बृहच्छब्देन्दु.)**। लोडुत्तमस्य आडागमः, स च पिद् भवति—'आडुत्तमस्य पिच्च' (३।४।९२)। अत्र 'स' इति तच्छब्देन यस्याडागमः, स परामृश्यत इत्याहुः **(तत्त्व.)**। पित्करणफलं तु स्तवानि स्तवाव इत्यादौ 'सार्वधातुकमपित्' इति ङित्त्वनिवृत्त्यर्थम्। **(बाल.)** यद्यपि मिप्स्थानिकस्य नेः पित्त्वात्तदागमस्यापि सिद्धं पित्त्वं तथापि वसमसोराडागमस्याङित्त्वार्थं पिदिति वचनम् **(बाल.)**।

वेदे लेटि 'उत्तम'पुरुषीयसकारस्य पाक्षिको लोपो भवति—**'स उत्तमस्य'** (३।४।९८)। करवावः, करवाव। करवामः, करवाम। 'उत्तम'ग्रहणात् पुरुषान्तरे न भवति **(काशिका)**। 'यदि तर्हि पुरुषान्तरे मा भूदित्येवमर्थमुत्तमग्रहणं क्रियते, न, वस्मस्ग्रहणमेव कर्तव्यम्। अत्राप्ययमर्थः—सकारग्रहणं कर्तव्यं न भवति, अलोऽन्त्यपरिभाषयैव सकारलोपो भवति। अशक्यं वस्मस्ग्रहणं कर्तुम्, तस्मिन् सति यदा व्यत्ययेन पुरुषान्तरस्य स्थाने तौ भवतस्तदापि लोपः स्यात्।

यदा चोत्तमपुरुषस्थाने थस् क्रियते तदा लोपो न स्यात्। उत्तमग्रहणे सत्येव दोषो न भवति, स्थानिवद्भावेन मध्यमोत्तमसञ्ज्ञयोर्भवन्त्योरेकसञ्ज्ञाधिकारादसति समावेशे उत्तमसञ्ज्ञया मध्यमसञ्ज्ञाया निवृत्तिः। सकारग्रहणञ्च यदि न क्रियते, तदोत्तमस्य व्यत्ययेन वचनान्तरेषु कृतेषु वर्णान्तरस्यापि लोपः स्यात्। (न्यास.) 'यदा च पुरुषान्तरस्य स्थाने वस्मसौ भवतः, एतयोश्च स्थाने सकारान्तं पुरुषान्तरम्, तदापि वाग्रहणानुवृत्त्यैव (वैतोऽन्यत्र, ३।४।९६ इत्यतः) लोपालोपौ यथादर्शनं (यथालक्ष्यमित्यर्थः) व्यवस्थितौ भविष्यतः **(पद. बृहच्छब्देन्दु०)**। यथाऽक्रियमाणेऽपि वाग्रहणं चानुवर्तते, उत्तरत्र नित्यग्रहणं स्यात् **(पद.)**।

उत्तमपुरुषस्य 'णल्' आदेशः पाक्षिको णिद् भवति—'णलुत्तमो वा' (७।१।९१)। णित्फलं तु पाक्षिकी वृद्धिः, पक्षे गुणः, अहं चकार, चकर वा। णित्कार्यं तत्र (उत्तमे) वा भवतीत्यर्थः **(काशिका)**। एतेन पक्षे णित्कार्यस्याभावाद्वा णिद्वद्भवतीत्युच्यते, न तु पक्षे णकारस्येत्सञ्ज्ञाप्रतिषेधादिति दर्शयति। एतच्च पूर्वत्र कार्यातिदेशाल्लभ्यते **(पद.)**। अनेन णित्कार्यस्य पक्षेऽभावाण्णिद्वा भवतीत्युच्यते, न तु णित्त्वस्यैव प्रतिषेध इति दर्शयति। णल उपदेशावस्थायां सिद्धं णित्त्वं वचनशतेनापि शक्यं प्रतिषेद्धुमिति भावः। चकार, चकरेति। यदा णित्वं तदाऽचो ञ्णितीति वृद्धिरपि। अन्यथा आर्धधातुकलक्षणो गुण एव। पपाच-पपचेति। यदा णित्त्वं तदा अत उपधाया इति वृद्धिः, अन्यदा तदभावः **(न्यासः)**। चुकुटाहम्। चुकोट वा (भाषा.)। अत्र पाक्षिको गुणः। अहं विविच, विव्याच वा।

**उत्सङ्गादिः (गणः)**

तृतीयान्तसमर्थाद् 'हरति' इत्यर्थे उत्सङ्गादिगणपठितेभ्यः शब्देभ्यः ठक्प्रत्ययो भवति। 'हरत्युत्सङ्गादिभ्यः' (४।४।१५)। सूत्रेऽत्र 'तेन दीव्यति खनति जयति जितम्' (४।४।२) सूत्रात् 'तेन' इत्यनुवर्तते। हरतिर्देशान्तरप्रापणे वर्तते **(काशिका)**। उत्सङ्गेन हरति औत्सङ्गिकः। हरति-नयति उपादत्ते वा इति (पद. तत्त्व. **बृहच्छब्देन्दु०)**। उत्सङ्ग, उडुप, उत्पूत, उत्पन्न, उत्पुट, पिटक, पिटाक सप्तशब्दाः उत्सङ्गादिगणे।

**उत्सादिः (गणः)**

उत्सादिगणपठितशब्देभ्यः अञ्प्रत्ययो भवति। 'उत्सादिभ्योऽञ्' (४।१।८६) 'तेन दीव्यति खनति जयति जितम्' (४।४।२) इत्यस्मात् पूर्वं यावत् पूर्वोक्तेष्वर्थेषु। अनेन अञ्प्रत्ययेन अणप्रत्ययः तदपवादाश्च बाध्यन्ते (काशिका)। अणोऽपवादा इञादयः **(पद. न्यास. बाल. तत्त्व. बृहच्छब्देन्दु०)**।

उत्सस्यापत्यादिः औत्सः। अणपवादोऽयम्। तदपवादे ञादीनाञ्च 'व्यादयोऽर्थविशेषणलक्षणाद्' इति पूर्वविप्रतिषेधेन बाधक इति बोध्यम्। अत्र सूत्रे कियन्तिचन वार्तिकान्यपि, तानि भाष्ये काशिकायां तत्त्वबोधिन्यां बृहच्छब्देन्दुशेखरे च विवृतानि। उद्—उपसर्गः। उपदेशे दान्तोऽयम्, केचित्तु तान्तं पठन्त्युपसर्गममुम्, तत्प्रामादिकमिति, 'उदः स्थास्तम्भोः', 'उदि कूले—' इत्यादिषु जश्त्वदर्शनात्, तान्तवे परत्वाभावेन दकारश्रवणायोगात्। अस्य निपातसञ्ज्ञा—'प्रादयः' (१.४.५८)। उपसर्गसञ्ज्ञा, 'उपसर्गाः क्रियायोगे' (१।४।५७) गतिसञ्ज्ञा 'गतिश्च' (१.४.६०)। चकारोऽत्र उभयसञ्ज्ञासमावेशाय, अन्यथा एकसञ्ज्ञाधिकारात्

(आकडारादेका सञ्ज्ञा १।४।१—२।२।३८) एकैव संज्ञा स्यात्। निपातत्वेन अव्ययम्, 'स्वरादिनिपातमव्ययम्' (१.१.३७)।

उपसर्गास्तत्तदर्थानां द्योतकाः, एषां कश्चन निश्चितोऽर्थो नास्ति। ये खलु द्योत्या अर्थास्तेषां सङ्ग्रहो यथा—प्रक्रियाकौमुद्यां विट्ठलाचार्यकृतप्रसादटीकायाम्—'उत् प्राबल्य-वियोगोर्ध्व-कर्म-लाभ-प्रकाशने'। आश्चर्यमोक्षणे भावे बलप्राधान्य-शक्तिषु। उद्बलः। उद्गच्छति। उत्तिष्ठति शयनात्। उत्पन्नम्। उच्चरति। उत्सुकः, उद्गतोऽश्वः। उत्पथः। उत्कः। उद्दिष्टः। उत्साहः।

भाष्ये तु—'प्रादय उपसर्गाः क्रियायोगे' इति पाठं मत्वा योगविभागः कृतः, तत्फलं निपातसञ्ज्ञासमावेशः। एकयोगे हि निपातसञ्ज्ञाया अभावः स्यात्। 'यस्मिन्नेव विशेषे गत्युपसर्गकर्मप्रवचनीयसञ्ज्ञास्तस्मिन्नेव विशेषे निपातसञ्ज्ञा स्यात्' इति स्थितम्। तत्र कैयटेन—यदा प्रागेव 'प्रादयः' इति योगो विभज्यते, तत् प्रयोजनकथनाय वार्तिकम्। यदा तु 'प्रादय उपसर्गाः क्रियायोगे' इत्येको योगः पठ्यते, तदा योगविभागः कर्तव्यत्वेन चोद्यते। अक्रियायोगे निपातसञ्ज्ञा न स्यात्, क्रियायोग एव तु गत्युपसर्गवत् स्याद् इत्युक्तम्, तत्र उद्द्योते—प्रागेवेति सूत्रकृता सूत्रप्रणयनकाल एवेत्यर्थः। एवं व्याख्याने भाष्य-कर्तव्य-पदस्वारस्यभङ्गः।

**उद्**—अनूर्ध्वकर्मणि वर्तमानाद् उत्पूर्वकात्तिष्ठतेरात्मनेपदं भवति—'उदोऽनूर्ध्वकर्मणि' (१।३।२४)। सूत्रेऽत्र कर्मशब्दः क्रियावाची **(काशिका)**। एवञ्च—'अनूर्ध्वकर्मविशिष्टात् क्रियावचनात्तिष्ठतेरात्मनेपदं भवति' **(काशिका)**। गेहे उत्तिष्ठते (का.)। मुक्तौ उत्तिष्ठते (सि. कौ.)। अनूर्ध्व इति किम्? पीठादुत्तिष्ठति **(सि. कौ.)**। अत्र वार्तिकम्—'उद ईहायाम्' इति। तत्र 'ईहा विशिष्टा चेष्टा कायपरिस्पन्दात्मिका गृह्यते' इति प्रदीपः। 'सर्वस्यापि धात्वर्थस्येहानुविद्धत्वाद्वि-शिष्योपादानं व्यर्थमत आह—ईहेति।' इत्युद्द्योतः। ईहायां किम्?—उत्तिष्ठति सेनेति **(भाष्ये)**। उत्पद्यते जायते सेनेत्यर्थ इति **प्रदीपः**।

'उपरि देशसंयोगाऽफलकेऽर्थे वर्तमानादुत्पूर्वात्तिष्ठतेः' इत्यर्थ इति बृहच्छब्देन्दुशेखरे। 'अनूर्ध्वे' इत्येव क्रियावाचकत्वे लब्धेऽपि 'कर्मपदं 'परिस्पन्दरूपधात्वर्थलाभार्थम्' इति मनोरमा। इति बृहच्छब्देन्दु.। 'कुटुम्ब उत्तिष्ठते' तदर्थं घटत इत्यर्थः। अत्र 'उद ईहायाम्' इत्युक्तत्वात् अनूर्ध्वकर्मण ईहया विशेषणाद् 'अस्माद् ग्रामाच्छ्रुतमुत्तिष्ठति' इत्यत्र ईहाभावात्तङ् न भवति। 'उत्पद्यत' इति ह्यत्रार्थः **(मा. धातु.)**। अकर्मकात् 'उद्' 'वि' एतदन्यतरपूर्वकात् तपतेरात्मनेपदम्—**'उद्विभ्यां तपः'** (१।३।२७)। दीप्यत इत्यर्थः। अकर्मकादित्येव।

उत्तपति सुवर्णं सुवर्णकारः। अत्र **वार्तिकम्**—'स्वाङ्गकर्मकाच्च'। उत्तपते पाणी। स्वमङ्गं स्वाङ्गं, न तु **पारिभाषिकम्**—

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम्।। इति।

तेनेह न भवति—देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति। स्वाङ्गं कर्म यस्य तस्मात्तपतेरात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्येयम्—पूर्वसूत्रात् (अकर्मकाच्च-१।३।२६) चकारोऽनुवर्तते, तस्यानुक्तसमुच्चयार्थकत्वात् स्वाङ्गकर्मकादपि भविष्यति (न्यासः)। यस्मिन् कर्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणम्? ततोऽप्राणिन्यपि कर्तरि यस्य यदङ्गं तत्कर्मकादपि प्रसङ्गः। पारिभाषिके त्वेष दोषो न भवति। प्राणिस्थत्वाद् अन्वर्थेऽपि न दोषः। तपेः प्राणिकर्तृकत्वात्। पारिभाषिकस्य त्वसम्बन्धिशब्दत्वात् कर्तुश्चेत्स्वमङ्गमित्येवं न प्रतीयेतेति भावः।

अत्र भाष्यम्—'अथोद्विभ्यामित्यत्र किं प्रत्युदाह्रियते? निष्टप्यते इति। किं पुनः कारणम्, आत्मनेपदमेवोदाह्रियते? न पुनः परस्मैपदं प्रत्युदाहार्यं स्यात्? तपिरयमकर्मकः। अकर्मकाश्चापि सोपसर्गाः सकर्मका भवन्ति। न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्ति। यदुच्यते—'न चान्तरेण कर्मकर्तारं सकर्मका अकर्मका भवन्तीति। अन्तरेणापि कर्मकर्तारं सकर्मका अकर्मका भवन्ति। तद्यथा—नदी वहतीत्यकर्मकः, भारं वहतीति कर्मकः। तस्मान्निष्टपतीत्युदाहार्यम्।

तत्र कैयटः—किमयं विधिः? अथ नियमः? इत्यभिप्रायेण प्रश्नः। उद्विभ्यां तप आत्मनेपदमेव, न यगादीति नियमोऽनेन क्रियत इत्याह—निष्टप्यत इति। विधिनियमसम्भवे विधिर्बलवान् इति मत्वाह—किं पुनरिति। अत्र किञ्चित्—तपेरकर्मकत्वाद् विध्यसम्भवः। भासते, दीप्यते इत्यर्थेऽकर्मकः। धातूनामनेकार्थत्वेन अन्तर्भावितण्यर्थत्वेन अकर्मकाः सोपसर्गाः सकर्मका भवन्ति। तापने तपिः सकर्मकः। पुनः प्रयोजकव्यापाराविवक्षाया कर्तुः कर्मवद्भावेन आत्मनेपदस्य सिद्धयत्वेन पुनर्विधानं नियमार्थमित्यन्यत्रात्मनेपदम्। विधिपक्षे अन्तरेणापि कर्मकर्तारं सकर्मका अकर्मका भवन्तीति ग्रन्थः। ततश्च ज्वलने तपिरकर्मकः, सन्तापनविलापनयोरकर्मकः **(प्रदीपे)**। उद्द्योते सर्वं विशदं स्पष्टीकृतम्।

**'उद्'** इत्युपसृष्टश्चरतिः सकर्मक आत्मनेपदं भवति—**'उदश्चरः सकर्मकात्'** (१।३।५३)। गेहमुच्चरते। उत्क्रम्य गच्छतीत्यर्थः। शेषात्कर्तरीत्यपवादः **(काशिका)**।

'उद्'-सम्-आङ् एतदन्यतमोपसृष्टः 'यम उपरमे' इति धातुः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। ग्रन्थविषयश्चेत् प्रयोगो न भवति। 'समुदाङ्भ्यो यमो ग्रन्थे' (१।३।७५)। भारमुद्यच्छते। 'उद्' इत्युपसृष्टाभ्यां 'रुजो भङ्गे', 'वह प्रापणे' इत्येताभ्यां कूले कर्मणि उपपदे 'खश्'प्रत्ययो भवति। 'उदि कूले रुजिवहोः' (३।२।३१)। कूलमुद्रुजतीति कूलमुद्रुजो रथः। 'ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्तत्वादुपपदत्वं स्यात्ततश्च रुजिवहिभ्यां सह यथासंख्यं स्यादिति चेत्? **अत्राहुस्तराम्**—

नाडीमुष्ट्योरितिवल्लाघवादुत्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोप-पदम्। एवञ्चोदीति 'पञ्चम्याः स्थाने सप्तमी, रुजिवहोरिति तु, पञ्चम्याः स्थाने षष्ठीति' (तत्त्व.)। शब्दान्तरेण चायमर्थ उक्तो न्यासे पदमञ्जर्यां च। उद् अव एतदन्यतरोपसृष्टाद् नयतेर्घञ्—उन्नायः। 'अवोदोर्नियः' (३।३।२६)। 'उन्नय' इत्यत्र तु कृत्यल्युटो बहुलमिति अच् (काशिका)। बाहुलकात् 'एरच्' इत्यर्थः।

**'उद्'** 'नि' एतदन्यतरोपसृष्टाद् गृ शब्दे इति धातोः गृ निगरणे इति च धातोः घञ्—उन्न्योर्ग्रः (३।३।२९) उद्गारः समुद्रस्य। निगारो देवदत्तस्य। उद्गारः=अतिप्रवृद्धः स्वरः। निगारो भक्षणम् (पद.)। 'ॠदोरप्' इति प्राप्तस्यायमपवादः **(न्यास. बाल.)**।

**'उद्'** इत्युपसृष्टाद् गृहेर्घम्—'उदि ग्रहः' (३।३।३५) उद्ग्राहः। 'ग्रह-वृ-दृनिश्चि-गमश्च' इति प्राप्तस्य अणोऽवादः (पद.न्यास.तत्त्व.बाल.बृहच्छब्देन्दु.)। 'उद्' इत्युपसृष्टेभ्यः श्रिञ् सेवायाम्, यु मिश्रणामिश्रणयोः, पूङ् पवने, पूञ् पवने, द्रु हिंसायाम्, द्रु गतौ एभ्यो धातुभ्यः घञ्—'उदि श्रयति-यौति-पू-द्रुवः' ३।३।४९। अजपोरपवादः। 'उद्' इत्युपसृष्टः 'अज गतिक्षेपणयोः' इति धातुः प्रेरणे वर्तते, तस्मात्, समुपसृष्टश्च समुदाये वर्तते; तस्माच्च पशुविषयकाद् अप्-प्रत्ययो भवति—'समुदोरजः पशुषु' (३।३।६९)। उदजः पशूनां प्रेरणम्। पशुषु किम्? उदाजः क्षत्रियाणाम्। अत्र 'अजेर्व्यघञपा' इति पर्युदासाद् वीभावो न। **(सि.कौ.)**।

**'उद्'** 'सम्' 'प्र'—एभ्यः 'कटच्' इति प्रत्ययो भवति—'सम्प्रोदश्च कटच्' (५।३।२९)। उत्कटः, सङ्कटः, प्रकटः। सूत्रस्थचकारेण 'वि' इत्युपसर्गादपि—विकटः। उपसर्गा एवमात्मका भवन्ति, यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते, तत्र क्रियाविशेषणमाहुः। यत्र न प्रयुज्यते तत्र ससाधनक्रियामिति। इह न कश्चित् क्रियावाची शब्दः प्रयुज्यते, तस्मात् ससाधनक्रियावाचिन उपसर्गात् प्रत्ययो भवति। स च भवन्, 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति 'वेः शालच्छङ्कटचौ'

(५।२।२८) सूत्रे न्यासः। इहापि सोऽर्थ आश्रयणीयः। **(भाष्ये, प्रदीपे, उद्द्योते)**।

**'उद् वि'** आभ्यां परस्य काकुदशब्दस्य लोपो भवति—'उद्विभ्यां काकुदस्य' (५।४।१४८)। लोपोऽयं बहुव्रीहावेव। उद्गतं काकुदमस्य उत्काकुत्। काकुदम् = तालु **(भाष्ये तुल्यास्यसूत्रे)**। षष्ठीनिर्दिष्टत्वेन अलोऽन्त्यस्येत्यन्तलोपः।

**'उद्'** इत्यस्मात्परस्य लुप्तनकारस्य अञ्चतेर्भसञ्ज्ञस्याकारस्य 'ईत्' इत्यादेशो भवति, शसादावचि। उदीचः, उदीचा—'उद ईत्'। (६।४।१३९)। 'अचः' (६।४।१३८) इति पूर्वसूत्रविहितभसञ्ज्ञकाकारलोपस्यापवादोऽयम् **(बृहच्छब्देन्दु.)**। वेदे उद्-प्र-सम्-उप एषां द्वित्वं भवति, द्वित्वेन चेत् पादपूर्तिर्भवति—'प्रसमुपोदः पादपूरणे' (८।१।६); 'किं नो दुदुहर्षसे दातवाउ'।

**'प्रसमुपोदः पादपूरणे'** (८।१।६) इत्यत्र समाहारद्वन्द्वः, 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति समासान्तष्टच् तु समासान्तविधेः अनित्यत्वान्न भवति **(पद, बृहच्छब्देन्दु, लघुशब्देन्दु, सुबोधिनी)**। अत्र 'उदित्यं जातवेदसम्' इति कैश्चिदुदाहृतम्, तदयुक्तम्, न ह्यत्र द्वितीय उच्छब्दः; किं तर्हि? उशब्दः (का.)।

सूत्रे 'पादपूरणे' इत्यत्र 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। पादपूरणस्य भावेनोत्पत्तिलक्षणेन द्विर्वचनस्य भावो लक्ष्यते। ननु च द्विर्वचनात् प्राक् पादपूरणमसदेव, तत् कुतस्तस्य भावो द्विर्वचनस्य लक्षणं स्यात्? न हि तत् सत्त्वम्? असारमेतत्। तदुत्पत्तिर्ह्यत्र भावः, सा चानिष्पन्नसत्ताकस्यैव भवति, न निष्पन्नसत्ताकस्य। न हि मृत्तिकावस्थायां सन्तो घटादय उत्पद्यन्ते। पादश्चेह विशेषानभिधानेऽपि सामर्थ्यादृच एव गृह्यते, न तु श्लोकस्य। लौकिको हि श्लोकः लोके चार्थपरत्वादनर्थकस्य प्रयोगो नोपपद्यते **(न्यास.)**। पादपूरणे किम्? 'प्र देवं देव्या धिया' छान्दसमेतत्। भाषायामनर्थकस्य प्रयोगाभावात्। **(बृहच्छब्देन्दु. काशिका)**।

**'उद्'** इत्यस्मात् परस्य 'स्था' इत्यस्य 'स्तम्भ' इत्यस्य च पूर्वसवर्णो भवति। उत्तम्भनम्, उत्थाता—'उदः स्थास्तम्भोः पूर्वस्य' (८।४।६१)। अत्र सूत्रे 'अनुस्वारस्य ययि परसवर्णः' (८।४।५८) इति सूत्रस्थात् परसवर्णपदात् समस्तादपि 'सवर्ण' इत्येकदेशः सम्बद्ध्यते। तावन्मात्रे स्वरितत्वप्रतिज्ञाबलात्। 'उत्थाता' इत्यत्र सकारस्य पूर्वसवर्णस्तकारः। अन्ये तु बाह्यप्रयत्नसाम्यात् थकारमिच्छन्ति। तत्र थकारद्वयस्य श्रवणम्। न च पूर्वस्य चर्त्वम्, तत्र कर्तव्येऽस्य पूर्वसवर्णस्यासिद्धत्वात् **(पद, सि.कौ.)**।

'आदेः परस्य' इति सकारस्य महाप्राणस्याघोषस्य तादृश एव पूर्वसवर्णस्थकारः, खरि चेति थकारस्य तकारः। अनचि चेति पूर्वतकारस्य द्विर्वचनम्, 'झरो झरि सवर्णे' इति पक्ष एकस्य लोपः **(न्यासः)**। सूत्रे स्तम्भेति सौत्रो धातुः 'जृस्तन्भुम्रुचुम्लुचुग्रुचुग्लुञ्चुश्विभ्यश्च' (३।१।५८) इत्यत्र सूत्रयित्रा उक्तः। सूत्रे पूर्वग्रहणं परसवर्णनिवृत्त्यर्थम् **(न्यास.)**।

स्थास्तम्भोरिति किम्? **उत्स्नाता (का.)**। 'उत्' पूर्वस्य स्कन्देश्छन्दस्युपसङ्ख्यानम्। **अग्ने दूरमुत्कन्दः (काशिका)**।

अत्र 'व्यत्ययो बहुलम्' इति व्यत्ययेनोदः परस्य स्कन्देश्छन्दसि विषये पूर्वसवर्णो भविष्यति (न्यास.)। 'रोगे चेति वक्तव्यम्'। **उत्कन्दको** नाम रोगः। कन्दतेर्वा धात्वन्तस्यैतद्रूपम्। इदमविशेषेण छन्दसि लोके च। पृषोदरादित्वात्सिद्धमिति न्यासः। रोगाख्यायां ण्वुल् बहुलमिति ण्वुल्।

सूत्रे **'उदः'** इति पञ्चमी, ततश्च पञ्चमीश्रुत्या तस्मादित्युत्तरस्येति परिभाषा उपतिष्ठति, तत आदेः परस्येत्यनेन स्थास्तम्भोरादेरित्यस्य लाभः।

बृहच्छब्देन्दुशेखरे तु—नन्वत्र सवर्णपदमधिकम्। न च 'पूर्वसवर्ण' इत्यतोऽनुवर्तते, तस्य 'पर'पदार्थेनैकार्थीभावाऽऽपन्नत्वेन अन्यायेनाऽन्वेतुमशक्यत्वात्। न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः, तोर्लीत्यत्र समुदायानुवृत्त्या तस्याश्चारितार्थ्यात्।

न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाऽध्याहारस्यौचित्यात्तल्लाभः, 'चुटू' इत्यादौ इत्पदादेरप्येवमेव सम्बन्धोपपत्तौ तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेरिति चेत्? न—पकारमात्रे स्वरितत्वप्रतिज्ञयैव तोर्लीत्यादौ अनुवृत्तिसिद्धौ, पुनः सकारांशे तत्प्रतिज्ञया तावतोऽप्यंशस्य पूर्वक्लृप्तार्थरहितस्यैव उत्तरत्रानुवृत्तिबोधनान्न दोषः। शब्दाधिकारपक्षे तस्य स्वरितत्त्वप्रतिज्ञानात्तत्सदृशशब्दोच्चारणेन अस्मदादीनां बोध इत्याहुः।

अत्राघोषस्येति—यत्तु 'अत्र श्वासविवारयोस्त्यागेन न्यूनतेति? तन्न, समनियतत्वेन अन्यतमाग्रहणेनापि बाधकाभावात्'। इति स्थितम्, अग्रे च तत्रैव—न चेदं सूत्रं व्यर्थम्, झलो झलीत्यनेन सस्य लोपे, उत्थानस्य सिद्धत्वाद् इति वाच्यम्? झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन ज्ञापनादिति स्पष्टं 'परेश्च घाङ्कयोः' इति सूत्रे **कैयटे**।

न च उदस्थादित्यत्र 'यदागमा....' इति न्यायेन अड्विशिष्टस्य स्थात्वात्पूर्वसवर्णापत्तिः, निर्दिश्यमानपरिभाषया वारणात्। 'आदेः परस्य' इत्यनेन निर्दिश्यमानाऽऽदेरेव स्थानिवत्त्वबोधनम्। स्पष्टं चेदं **पादः पदित्यत्र भाष्ये**।

ननु **'उत्पूर्वत्वे** स्कन्देश्छन्दस्युपसङ्ख्यानम्'—अघ्न्ये दूरमुत्कन्द। रोगे चेति वक्तव्यम्। **'उत्कन्दो रोग'** इति भाष्यं विरुध्येत? अग्रिम-वार्तिकस्यारम्भसामर्थ्येन लोकेऽपि प्रवृत्तेरिति चेत्? न, भाष्योदाहरणप्रामाण्येन 'न' इति योगविभागेन असिद्धत्वस्य तत्र बाधेनादोषात्। वक्ष्यमाणभाष्यकारीयन्यासरीत्या थस्यासिद्धत्वाभावेन **वृत्तिसम्मतपाठेऽपि** उक्तरीत्याऽऽदर आवश्यक इति सर्वत्र चर्त्वं भवत्येवेति वस्तुतत्त्वमिति स्थितम्।

अत्रैव **पुस्तकान्तरे 'वस्तुतत्त्वम्'** इत्यस्मात् परं तस्य चयो द्वितीयेति तु न, चर्त्वस्यासिद्धत्वात्। मूलं तु प्राचामनुरोधेनेति दिग् इत्यप्यस्ति।

**'उद्'** उत्तरे पदे परे, समुदायात् सञ्ज्ञायां च गम्यमानायाम् 'उदक'शब्दस्य **'उद'** इति अकारान्तादेशो भवति—'उदकस्योदः सञ्ज्ञायाम्' (६।३।५७)। अत्र वार्तिकम्—'सञ्ज्ञायामुत्तरपदस्य च', इहापि यथा स्यात्—**लोहितोदः, क्षीरोद** इति।

अत्र **प्रदीपः**—'उदकशब्दसमानार्थ **उदशब्दो** विद्यते, तथा च—अप्रसन्नः **प्रसन्नोदः** इत्यसञ्ज्ञायामपि **'उद'**शब्दः प्रयुज्यते। सञ्ज्ञायां तु—उदकशब्द-प्रयोगनिवृत्त्यर्थम् **उदादेशविधानमित्याहुः'** इति **(पदमञ्जरी-बृहच्छेखरयोरपि)** 'उदकशब्दस्य सञ्ज्ञायां विषये **'उद'** इत्ययमादेशो भवति, उत्तरपदे परतः' इति **काशिका**। उदमेघो नाम यस्य औदमेघिः पुत्रः। उदवाहो नाम यस्य औदवाहिः पुत्रः। सञ्ज्ञायां किम्? उदकगिरिः। 'सञ्ज्ञायामुत्तरपदस्य उदकशब्दस्य **उदादेशो** भवतीति वक्तव्यम्', 'लोहितोदः, नीलोदः' इति **काशिकायां** पृथग्भूतं व्याख्यानम्।

**'उदमेघ'** इति षष्ठीसमासः। सादृश्यात् पुरुषस्य सञ्ज्ञा। पितुरप्रसिद्धत्वात् पुत्रेण व्यपदेशः। उदकं वहतीति कर्मण्यण् इति पद.। **'उदमेघ'** इति, षष्ठीसमासः, उदकपूर्णो वा मेघः शाकपार्थिवादित्वान्मध्यमपदलोपी तत्पुरुष इति **न्यासः**। **काशिकोद्धृतं** 'वक्तव्यम्' इति पदं **न्यासे** 'वक्तव्य' इत्युपष्टभ्य 'व्याख्येय' इत्यर्थस्तस्य कृतः।

तत्रेदं व्याख्यानम्—'इहापि स एव चकारोऽनुवर्तते, अनुक्तसमुच्चयार्थः। न चान्यत्समुच्चेयमस्ति। **उदभावमेव** असौ उदकशब्दस्य सञ्ज्ञायां समुच्चिनोति। तत्र

कस्य समुच्चिनोति? यस्य न प्राप्नोति। कस्य न प्राप्नोति? उत्तरपदभूतस्य। तेन सञ्ज्ञायामुत्तरपदस्यपि उदकशब्दस्य **'उद'** इत्ययमादेशो भवति' इति।

अत्रेदं बोध्यम्—यदुक्तं **न्यासे**—'इहापि स एव चकारोऽनुवर्तते' इति। तत्रायमर्थः—**इहापि='उदकस्योदः सञ्ज्ञायाम्'** इति सूत्रेऽपि। स एव = 'हिमकाषिहतिषु च' (६।३।५४) इति सूत्रस्थ एव। चकारोऽनुवर्तत इति। अग्रे च—'सञ्ज्ञायामुत्तरपदस्यापि उदकशब्दस्य **उद'** इत्यादि लिखितम्, स एवार्थो **भाष्ये** 'इहापि यथा स्यात्, लोहितोदः' इत्यत्र ध्वनितम्। उदकशब्दसमानार्थक **उद**शब्दोऽप्यस्तीत्यत्र कोशो मृग्यः। (द्र.-शब्दकल्पद्रुमे शब्दरत्नावली)।

अत्र **कैयटः**—'एतदन्ये न मृष्यन्ति। एवमभ्युपगमे वक्ष्यमाणो विकल्पोऽनर्थकः स्यात्'। **पदमञ्जर्यामप्येतत्।** एतत् = **उदकसमानार्थम्** **'उद'**शब्दमङ्गीकृत्य सञ्ज्ञा**यामुदक**शब्दनिवृत्ति-प्रकारम्। वक्ष्यमाणः = एकहलादौ पूरयितव्येऽन्यतरस्याम् (६।३।५९)। बृहच्छेखरे तु नागेशभट्टैः **उदकशब्दपर्यायम् उदशब्दमूरीकृत्य,** 'अत एव प्रसन्नोदं सरः' इत्यसञ्ज्ञायामपि प्रयुज्यते। इदन्तु सञ्ज्ञायामुदकशब्दनिवृत्त्यर्थम्' इत्युक्त्वा 'एकहलादाविति तु प्रपञ्चार्थम्' इत्युक्तम्; परन्तु **लघुशब्देन्दुशेखरे**—'प्रसन्नोदमित्यसाध्वेव। **उदकपर्यायोदशब्दाङ्गीकारे** तु एकहलावित्यस्य वैयर्थ्यम्' इति स्थितम्। एतच्च **बृहच्छेखरग्रन्थटिप्पण्यां** स्पष्टम्।

पेषम्-वास-वाहन-धि-शब्देषु उत्तरपदभूतेषु परेषु **उदकशब्दस्य 'उद'** इत्यादेशो भवति—**'पेषं वासवाहनधिषु च'** (६।३।५८)। **उदपेषं** पिनष्टि। अत्र 'पेषम्' इति 'स्नेहने पिषः' इति करणे णमुल्। **उदकेन** पिनष्टि। कषादिषु यथाविध्यनुप्रयोगः। **उदकस्य वास उदवासः। उदवाहनः। उदकं** धीयते यत्र स **उदधिः।**

**'उदधिः'** इत्यत्र कर्मण्यधिकरणे चेति (३।३।९३) किप्रत्ययः, **उदधिर्घट** इति **सि.कौमुदी।** समुद्रे तु पूर्वेण (**उदकस्योदः सञ्ज्ञायाम्, ६।३।५७**) सिद्धम्। (**पदमञ्जर्यां न्यासे च**)। असंयुक्तहलादौ पूरयितव्यवाचके उत्तरपदे परे **उदकशब्दस्य 'उद'** इत्यादेशो भवति—'एकहलादौ पूरयितव्येऽन्यतरस्याम्' (६।३।६०)। पूरयितव्ये = भरणीये। अत्रैकशब्दोऽसहायवाचीति काशिका।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते।। (**अमरकोशः**)

एकः = असहायः, तुल्यजातीयेन अनन्तरहलादिना रहित इत्यर्थः। हल् आदिर्यस्य उत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ, पूरयितव्यवाचिनि

अन्यतरस्यामुदकशब्दस्य **'उद'आदेशः (काशिका)**। उदकुम्भः, उदककुम्भः। उदपालम्, उदकपालम्। एकहलादौ किम्? उदकस्थालम् (**का.**)। उदकस्थाली। (**सि.कौ.**)। पूरयितव्य इति किम्? **उदकपर्वतः**।

'एकहलादौ' इत्यत्र **भाष्यम्**—'एकहलादौ इति किमर्थम्? उदकस्थालम्। उच्यमानेऽप्येतस्मिन्नत्र प्राप्नोति। एतदप्येकहलादि। किं कारणम्? 'एकैकवर्ण-वर्तित्वाद् वाचः। उच्चरितप्रध्वंसित्वाच्च वर्णानाम्'। एकैकवर्णवर्तिनी वाक्, न द्वौ वर्णौ युगपदुच्चारयति। तद्यथा—गौरित्युक्ते यावद् गकारे वाक् प्रवर्तते, न तावदौकारे, न विसर्जनीये। यावदौकारे न तावद् गकारे न विसर्जनीये। यावद्विसर्जनीये न तावद् गकारे नापि औकारे। 'उच्चरितप्रध्वंसितत्वाच्च वर्णानाम्'। उच्चरितो वर्णः प्रध्वस्त इति।

अथापरः प्रयुज्यते न वर्णो वर्णान्तरस्य सहायः। एवं तर्हि एकहलादावित्युच्यते, सर्वश्चैवैकहलादिः। तत्र प्रकर्षगतिर्विज्ञायते साधीयो य एक-हलादिरिति। कश्च साधीय इति? यत्रैकं हलमुच्चार्याऽत्रोच्यते। अत्र **कैयटः**—यद्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थानशब्द एकहलादिर्न स्यात्। क्रमोच्चारिता अपि वर्णा यद्यवतिष्ठेरन् घटादिवत्तदा स्थानशब्दे युगपद् द्वयोरुपलम्भादादित्वं स्यात्। यतस्तु नोच्चारणे नाप्युपलब्धौ वर्णानां यौगपद्यन्तस्मादेकस्यैव हल आदित्वमिति नार्थ आदिग्रहणेन।

'हलादौ' इत्येव अजादिनिवृत्त्यर्थं वक्तव्यमिति भावः। **असहायवाची** एकशब्द आश्रीयते। समानजातीयश्च सहायत्वेन प्रसिद्धतर इति स एव निवर्त्यते, तत्र यद्यप्युच्चारण उपलब्धौ वा वर्णो वर्णस्य न सहायस्तथापि 'बुद्धौ कृत्वा सर्वाश्चेष्टा....' इत्यनेन यस्यानन्तरं द्वितीयो हल् नोच्चार्यते, **सोऽसहायो** हलादिरस्येत्याश्रीयते।

**अत्रोद्द्योते**—यद्यपि 'असिद्वितीयोऽनुससार पाण्डवम्' इत्यादौ विजातीयोऽपि (विजानीय इति मुद्रितः पाठः) सहायस्तथापि स न प्रसिद्धतर इत्यर्थः। समानजातीयत्वं चोपस्थितहल्त्वेन।' इत्युक्तम्। परन्त्वत्रैवाग्रे **नागेशेन**—'भाष्यस्वरसस्तु संख्यावाच्येकशब्दाश्रयणे एवेत्यन्ये' इत्युदलेखि इति बोध्यम्। नेदं मतं **बृहच्छेखरेऽस्ति**।

**हरदत्तेन** साध्विदं विवृतम्—तथा हि—'यद्ययमेकशब्दः सङ्ख्यावचनः स्यात्, तर्ह्येकेत्यनर्थकं स्यात्। न हि द्वौ च बहवो वा आदिभूताः क्वचित्

सम्भवन्ति, तस्मादसहायवचन एकशब्दः। नन्वेवमप्यस्य व्यावर्त्यं न सम्भवति। कथम्? एकैकवर्णवशवर्तित्वाद्वाचः, यदि ह्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्, तदा स्थालीशब्दोऽनेकहलादिः। यदि वा क्रमेणोच्चारिता अपि वर्णा अवतिष्ठेरन्, तदापि युगपद्वर्णयोरुपलम्भादादित्वं स्यात्; यतस्तु नोच्चारणे युगपदुपलब्धौ वा वर्णानां यौगपद्यम्, तस्मादेकस्यैवादित्वमिति न किञ्चिदेकग्रहणेन शक्यं व्यवच्छेत्तुम्? एवं तर्हि एकग्रहणसामर्थ्याद्विशिष्टसहायत्वमाश्रीयते। किं पुनस्तत्— आनन्तर्यम्। विशदीकृतश्चायमेवार्थो **न्यासेऽत्रैव**।

१. मन्थ, २. ओदन, ३. सक्तु, ४. बिन्दु, ५. वज्र, ६. भार, ७. हार, ८. वीवध, ९. गाह। एतेषु नवसूत्तरपदेषु परेषु **उदकशब्द उदभावं** वा लभते— **'मन्थौदन-सक्तु-बिन्दु-वज्र-भार-हार-वीवध-गाहेषु च' (६।३।६०)**।

**उदमन्थः, उदकमन्थः,** इत्यादयः। वीवधक्विवधशब्दौ उभयतो बद्धशिक्ये स्कन्दवाह्ये वर्तेते। **उदकः**—६।२।९६, ६।२।१८४, ६।३।५७-६०। **उदकदेशादि–'प्रायभवः' (४।३।३९) सूत्रे**। काशिकायामप्यत्रैव। भाष्ये 'प्रायभवः' इति प्रत्याख्यातम्, अनुसृतञ्चैतत् काशिका-तत्त्व.-बाल.बृहच्छे-खरादिभिः। **'उदकदेशादि'** इत्यपपाठः। **'उदग्देशादीनि'** इति नागेशशोधितः पाठः **(उद्द्योतेऽत्रैव)**।

**उदकीय—उदकशब्दस्य उदन्नादेशो** निपात्यते, पिपासारूपेऽर्थे— **'अशनायोदन्यधन्याया बुभुक्षापिपासागर्धेषु' (७।४।३४)**। उदकं पातुमिच्छतीति **उदन्यति**। अन्यत्र—**उदकीयति**।

इह यः सद्य एव भोक्तुमशनमिच्छति, यश्च पातुमुदकम्, यश्च धने सत्यपि पुंनर्धनम्, तत्रोदाहरणानि। यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्च स्नातुमुदकम्, यश्च दरिद्रः सन् धनमिच्छति, तत्र प्रत्युदाहरणानि। ननु **'उदन्या तु पिपासा तृट्'** इति **निघण्टौ** परस्परसामानाधिकरण्यं न स्यात्, **उदन्या**शब्दस्य **उदकेच्छा**वाचित्वादिति चेत्? अत्राहुः—अशनागतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षापिपासादिकमेवार्थः, तथा च नोक्तदोष इति **(तत्त्व.)**। अत्र **निघण्टौइति** शब्देन अमरकोशो ज्ञातव्यः **(उदन्या** तु पिपासातृट्-**अमर.** २।९।५५)।

**उदकमस्ज**—'मृजेर्वृद्धिः' (७।२।११४) सूत्रे धातुप्रत्यये कार्यं भवतीत्येषा परिभाषा कर्तव्या, 'कान्यस्याः परिभाषायाः प्रयोजनानि'? 'प्रयोजनं सृजि-दृशि-मस्जि-नशि-हन्ति-गिरत्यर्थम्' ......मस्जि-**उदकमग्भ्याम् उदकमग्भिः**।

**उदकसमीप**—'हलन्ताच्च' (१।२।१०) सूत्रे—अयमन्तशब्दोऽस्त्येवावयववाची। तद्यथा—वस्त्रान्तः, वसनान्त इति। वस्त्रावयवो वसनावयव इति गम्यते। अस्ति सामीप्ये वर्तते। तद्यथा—**'उदकान्तं गत'** इति। **उदकसमीपं** गत इति गम्यते।

**उदकस्थालम्**—'एकहलादौ पूरयितव्येऽन्यतरस्याम्' (६।३।५९) सूत्रे भाष्ये—'एकहलादाविति किमर्थम्? **उदकस्थानम्**'। अत्र **'उदकस्थालम्'** इति पाठान्तरम्।

**उदकार्थ**—'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (२।१।३५) सूत्रे भाष्ये—'एवं तर्हि 'उदकार्थो वीवध' स्थानिवद्भावादुदभावः प्राप्नोति। 'तस्मान्नैवं शक्यम्'।

**उदकासेचन**—'कारके' (१।४।२३) सूत्रे **भाष्ये—'अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः' इति वार्तिकम्।** अग्रे अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणादिक्रियाः कुर्वन्नेव देवदत्तः पचतीत्युच्यते।

**उदकोदञ्चनः**—**'उदङ्कोऽनुदके'** (३।३।१२३) इति सूत्रे **भाष्ये** किमर्थमिद-मुच्यते? न हलश्च (३।३।१३१) इत्येव सिद्धम्। **अनुदक** इति वक्ष्यामीति। इह मा भूत्। **उदकोदञ्चनः।**

**उदगयनस्थ**—'अल्पाच्-तरम्' (२।२।३४) **सूत्रे भाष्ये वार्तिकम्**—'ऋतु-नक्षत्राणामानुपूर्व्येण समानाक्षराणाम्' इति। तत्र **भाष्यम्**—'ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः। शिशिरवसन्ता**वुदगयनस्थौ'**। **उत्तरायणस्थौ** इति **कैयटः।**

**उदच्**—अयं शब्दः पाणिनीयव्याकरणे दिग्देशाचार्यान् आह। तत्र दिग्वचनो यथा—**'उदक्** च विपाशः' (४।२।७४)। आचार्यवचनो यथा—**'उदीचां** माङो व्यतीहारे' (३।४।१९)।

**उदजः**, **उदजनम्** 'अजेर्व्यघञपोः' (२।४।५६)। इत्यत्र 'अज गतिक्षेपणयोः' धातोः 'वी' आदेशो भवति, घञम् अयं च वर्जयित्वा। घञि अपि तु **उदाजः**, **उदजः** इत्येव। अत्रैव भाष्ये **'उदजनम्'** इत्यपि।

**उदयः**—उदयशब्दोऽयं 'पर'शब्दार्थमाचष्टे **(न्यास.)**। नोदात्तस्वरितोदय-मगार्ग्यकाश्यपगालवानाम् (८।४।६७) **सूत्रे** उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः। उदयशब्दः प्रत्येकमपि सम्बध्यते **(पद., न्यास.)**। उदयशब्दः परशब्देन

समानार्थः प्रातिशाख्येऽपि प्रसिद्धः (**बाल., पद.**)। अत एव दीक्षितः—उदात्तपरः स्वरितपरश्च अनुदात्तो न स्वरितः स्यात् (सि.कौ.)। गार्ग्यादिमते तु स्यादेव। उदयशब्दः परवाची शास्त्रान्ते (अष्टाध्यायान्ते) मङ्गलार्थं प्रयुक्तः (**तत्त्व.बाल.काशिका.पद.न्यास.बृहच्छब्देन्दु.**)। उदयशब्दस्य परवाचित्वं यथा प्रातिशाख्ये—'ऋकार उदये कण्ठ्यौ' ऋकारे उदये = पराभूते सति इत्यर्थः (**ऋक्प्राति.** २।११)।

**उदर**—(४।१।५५), (४।४।१०८), (५।२।६७) **उदाजः**—(पूर्वं व्याख्यातः)।

**उदात्तः**—उद् = उच्चैः, आदीयते = उच्चार्यते **इत्युदात्तः**, **उत्** + आ + दा + क्त (त), 'निष्ठा' (३।२।१०२) इति क्तः। 'अच उपसर्गात्तः' (७।४।४७) इति तः। एतत्सञ्ज्ञाविधायकं शास्त्रम्—'उच्चैरुदात्तः' (१।२।२९)। तदर्थश्च—ताल्वादिषु सभागेषु ऊर्ध्वभागाद् निष्पन्नोऽच् **'उदात्त'**सञ्ज्ञः स्यात्। **'उदात्तः'** इत्यादयश्च स्वरगुणा एव, न तु व्यञ्जनगुणाः, तथा च भाष्यम्— 'अथ प्रथमानिर्दिष्टमज्-ग्रहणम् (ऊकालोऽज्झ्रस्वदीर्घप्लुत इति सूत्रीयम्) अनुवर्तते उताहो न। किञ्चार्थोऽनुवृत्त्या? बाढमर्थो यद्येते व्यञ्जनस्यापि गुणा लक्ष्यन्ते। ननु च प्रत्यक्षमुपलभ्यन्ते। इषे त्वोर्जे त्वा। नैते व्यञ्जनस्य गुणाः, अच एते गुणास्तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते। तद्यथा—

द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते। बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते। कुतो नु खल्वेतदच एते गुणास्तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यत इति? न पुनर्व्यञ्जनस्यैते गुणाः स्युस्तत्सामीप्यात्त्वजपि तद्गुण उपलभ्यत इति? अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते, न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति। अन्वर्थं खल्वपि निर्वचनम्। स्वयं राजन्ते स्वराः, अन्वग्भवति व्यञ्जनमपीति।

अत्रेदं बोध्यम्—उच्चारणगतमुच्चैस्त्वं नीचैस्त्वं समाश्रित्य उदात्तादिविभागः कथं सङ्गच्छताम्? यावता उच्चारणगतमुच्चैस्त्वं नीचैस्त्वमव्यवस्थितमिति; अत्र **भाष्यकाराः**—इदमुच्चनीचमनवस्थितपदार्थकम्। तदेव हि कञ्चित् प्रत्युच्चैर्भवति, कञ्चित् प्रति नीचैः। एवं कञ्चित् कश्चिद् अधीयानमाह—किमुच्चै रोरूयसेऽथ नीचैर्वर्ततामिति। तमेवमधीयानमपर आह किमन्तर्दन्तकेनाधीष उच्चैर्वर्ततामिति। एवमुच्चनीचमनवस्थितपदार्थकं तस्यानवस्थानात् सञ्ज्ञाया अप्रसिद्धिः! **एवं तर्हि**

**लक्षणं करिष्यते**—'आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य। आयामः = गात्राणां निग्रहः। दारुण्यम् = स्वरस्य दारुणता रुक्षता। अणुता = खस्य = कण्ठस्य संवृतता। **उच्चैःकराणि शब्दस्य**।

**अथ नीचैःकराणि शब्दस्य**—अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य। अन्ववसर्गः = गात्राणां शिथिलता। मार्दवम् = स्वरस्य मृदुता स्निग्धता। उरुता खस्य = महत्ता कण्ठस्य। इति नीचैःकराणि शब्दस्य। एतदप्यनैकान्तिकम्। यदल्पप्राणस्य सर्वोच्चैः, तन्महाप्राणस्य सर्वनीचैः।

'सिद्धं तु समानप्रक्रमवचनात्'—सिद्धमेतत्। कथम्? समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः? उर, कण्ठः, शिर इति।

**उदात्तादयः** स्वराः प्रसिद्धाः, सूत्रेण तु तद्विशिष्टत्वमचो विधीयते—उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव, त इह तद्गुणेऽचि परिभाष्यन्ते (**काशिका.**)। परं **हरदत्तेन** तु इत्थमुक्तम्— **'केचिदाहुः—प्रदेशे** लोकप्रसिद्ध्या हलामचां च ग्रहणे प्राप्तेऽचामेव ग्रहणं नियम्यते' इति परिभाषेयम्। **'अन्ये तु**—धर्मिण्यप्रसिद्धत्वात् सञ्ज्ञात्वेन परिभाष्यन्ते' इति व्याचख्युः। उच्चैरित्यस्याधिकरणप्रधानत्वात् क्रियापेक्षत्वाच्च अधिकरणस्य उपलभ्यमानत्वम् (उच्चैरुपलभ्यमानत्वम्) इत्युक्तम् (**पद.**)।

अत्र भाष्योक्तमुच्चैस्त्वमित्थं प्रत्यपादि— 'उच्चैरिति च श्रुतिप्रकर्षो न गृह्यते, उच्चैर्भाषते, उच्चैः पठतीति, किं तर्हि? **स्थानकृतमुच्चत्वं** संज्ञिनो विशेषणम्। ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते, तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽच्, स उदात्तसञ्ज्ञः (**काशिका.**)।

अत्र **हरदत्तः**—'श्रुतिप्रकर्षो न गृह्यत इति। यदि गृह्येत, उपांशुप्रयोगे न स्यादित्यव्याप्तिः। श्रुतिप्रकर्षस्य चानवस्थितत्वाद्यदेव कञ्चित् प्रत्युच्चैस्तदेव कञ्चित् प्रति नीचैरिति सर्वमनुदात्तं स्यात्, सर्वञ्चानुदात्तमित्यतिव्याप्तिरव्यवस्था च स्यात्' (**पद.**)।

उच्चता नाम प्रमाणविशेष ऊर्ध्वतापर्यायः तदधिकरणभूतस्थानमुच्चैर्भवति। एवञ्च सर्वमुदात्तं न स्यात् (**न्यास.**)। तत्र ताल्वादिसम्बन्धो वर्णानामन्तरङ्ग इति स्थानसम्बन्धिन्युच्चता गृह्यते। तत्कृतमुच्चैस्त्वं सञ्ज्ञिनो विशेषणम्। सूत्रेऽत्र कौमुद्यां 'ताल्वादिषु' इत्युक्तिः प्राचामनुरोधेन, वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम् (**लघुशेखरे.**)।

इयं त्रिसूत्री स्पष्टार्था, लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात् (**ल.शे.**)। स्पष्टं चेदं **कैयटे**। शुक्लादितुल्याश्चोदात्तादयः। एतेन 'वर्णधर्मपरत्वेन प्रसिद्धानां तेषां धर्मिपरत्वमनया बोध्यते' इत्यपास्तम् (एतच्च **काशिकामतम्**) (**चिदस्थिमाला**)।

अयमुदात्तो वेद इव लोकेऽप्यासीत्, तथा च भगवान् अनुशशास—'लुङ्-लङ्-लृङ्क्ष्वडुदात्तः'। अत्र अट उदात्तत्वं वेदलोकसाधारणम्। एवमेव समानोदरे शयित ओ· चोदात्तः। 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यपि। अत्रेदमेव उदात्तग्रहणम् 'आगमा अनुदात्ता' इत्यत्र लिङ्गमिति भाष्यम्।

**उदात्तभेदाः**—(क) आद्युदात्तः, (ख) मध्योदात्तः, (ग) अन्तोदात्तः।

अत्र विशेषः—(क) 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८)। यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते, तमेकमचं वर्जयित्वा, शेषं तत्पदमनुदात्ताच्कं स्यात्। गोपायतं नः। अत्र 'धातोः' इति सूत्रेण यकारोत्तरस्याकारस्योदात्तत्वम्। ततश्चानेन शिष्टमनुदात्तम्। तदनन्तरम्—'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति परिभाषया 'गोपायतं नः' इत्यत्र 'धातोः' इति सूत्रेण विहितस्य यकाराकारोदात्तस्य, अथ च 'प्रत्यया आद्युदात्ताः' इति सूत्रेण विहितस्य आद्युदात्तस्य 'आय'प्रत्ययस्य च न शेषः।

**(ख) 'अनुदात्तस्य च यत्रोदात्तलोपः' (६।१।१६१)**। यस्मिन्ननुदात्ते परे उदात्तो लुप्यते, तस्योदात्तो भवति। देवीं वाचम्। अत्र ङीबुदात्तः।

**(ग) 'चौ' (६।१।२२२)**। लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तो भवति। कृदुत्तरपदप्रकृतिस्वरेण उदात्तस्य अञ्चत्यकारस्य 'अचः' इति लोपे सति, 'अनुदात्तस्य च' इति सूत्रेणोदात्तः प्राप्तस्तस्यायमपवादः (**सुबोधिनी**)। उदाहरणं यथा—'देवद्रीचीं नयत देवयन्तः' इति। 'देव अच्' इति स्थिते 'विष्वदेवयोरञ्चतावप्रत्यये' इति देवशब्दस्याद्रि आदेशः, उगितश्चेति ङीप्, 'अचः' इत्यञ्चतेरकारलोपः। 'चौ' इति दीर्घे द्रीतीकार उदात्तः। अयं नियमस्तद्धिते न प्रवर्तते, तथा च वार्तिकम्—'अतद्धित इति वाच्यम्'। दाधीचः, माधूचः, प्रत्ययस्वर एवात्र (**सि.कौ.**)।

**(घ) 'आमन्त्रितस्य च' (६।१।१९८)**। आमन्त्रितस्य आदिरुदात्तो भवति। अग्नि-इन्द्र-वरुण-मित्र-देवाः। एष आद्युदात्त **आष्टमिकेन आमन्त्रितस्य** च (८।१।१९) इत्येव अपोद्यते।

**(ङ) 'सुबामन्त्रिते पराङ्गवत् स्वरे' (२।१।२)।** सुबन्तमामन्त्रिते परे, परस्याङ्गवत् स्वरे कर्तव्ये। **द्रवत्पाणी शुभस्पती।**

अत्र शुभ इति शुभेः क्विबन्तात्षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकम् (आमन्त्रितस्य च-६।१।१९८) आमन्त्रिताद्युदात्तत्वम्। न चाष्टमिको निघातः (आमन्त्रितस्य च-८।१।१९) शङ्क्यः? पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात्।

**अङ्गवत् = एकदेशवदित्यर्थः।** तद्ग्रहणेन इत्यर्थः। अत्र सूत्रे 'पर'ग्रहणं स्पष्टार्थम्। 'अङ्ग'ग्रहणमुभयोराद्युदात्तत्वाभावाय (**शेखरे**)।

अत्र **वार्तिकम्**—'अव्ययप्रतिषेधश्च'। अव्ययानां प्रतिषेधो वक्तव्यः। उच्चैरधीयानः। नीचैरधीयानः इत्युदाहरणे। उच्चैः-नीचैः-शब्दौ स्वरादिषु अन्तोदात्तौ पठितौ (**लघुशे. पद. न्यास. कैयट.**)। एवञ्चानेनैव स्वरेण अनयोरवस्थितिराभ्यां परस्याष्टमिकनिघातश्चेति भावः। फिट्स्वरेण प्रत्ययस्वरेण वान्तोदात्तत्वसिद्धेः स्वरादिषु अन्तोदात्तपाठः किमर्थः? इति चिन्त्यम्।

**'अनव्ययीभावस्य' इति वार्तिकान्तरम्।** अनेन अव्ययप्रतिषेधश्चेति निषिध्यते। प्रतिषेधप्रतिषेधाद्विधिर्भवति (**कैयटः**)। एतच्च—'लुङ्मुखस्वरोपचाराः प्रयोजनम्' इत्येतदनपेक्ष्योक्तं **भाष्यकारेण**, अन्यथा कार्यान्तरेऽव्ययत्वाभावादवक्तव्यमेतत् स्यात् (**कैय.**)। प्रतिषेधप्रतिषेधोदाहरणम्—उपाग्न्यधीयानः।

(च) 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८।२।४)। उदात्तस्थाने स्वरितस्थाने च योऽण्, ततः परस्य अनुदात्तस्य स्वरितो भवति। यथा—अभ्यभि हि। अत्र 'अभिशब्दे उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तनिषेधात्, 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तः। तस्य नित्यवीप्सयोरिति द्वित्वम्, 'तस्य परमाम्रेडितम्' इति 'अनुदात्तं च' इति परस्यानुदात्तत्वम्, तस्मिन्नेव परे इकारस्य उदात्तस्य यणि कृते उदात्तयणः परत्वाद् यकारात् स्वरितः (**सुबोधिनी, शेखरः**)। 'कुमार्यौ कुमार्यः। उदात्तनिवृत्तस्वरेणायमीकार उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण् ........ (**का.**)। स्वरितयणः—'खलप्वाशा', खलपू कृत्स्वरेण अन्तोदात्तौ, तयोः 'रोः सुपि' इति यणादेशः, स उदात्तयण्....... (**का.**)। अत्र **न्यासः**—'लूपूभ्यां धातुस्वरेण अन्तोदात्ताभ्यां क्विप्, 'उपपदमतिङ्' इति समासः। 'गतिकारकोपपदात् कृत्' इति कृदन्तस्योत्तरपदस्य प्रकृतिभावविधानाद् एतौ कृत्स्वरेण अन्तोदात्तौ भवतः।

खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः। ततः सप्तम्येकवचनस्य 'उदात्तयणो हल्पूर्वात्' इति प्राप्तोदात्तस्य **'नोङ्धात्वोः'** इति निषेधेन स्वरितः।

.......। आशाशब्दः 'आशाया आदिगाख्या चेत्' इति फिट्सूत्रेणान्तोदात्तः। **(बृह.लघु.शे., पद. न्यास.)**

(च) एकादेश उदात्तेनोदात्तः (८।२।५)। उदात्तेन सहैकादेश **उदात्तः** स्यात्। उदाहरणं यथा—'क्व वोऽश्वाः। क्वावरं मरुतः। उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम्। अन्यतरस्य अनुदात्तत्वे स्वरितत्वे वा (पूर्वस्य परस्य वा स्थानिन इत्यर्थः) आन्तरतम्यात् स्वरिते प्राप्ते विधिरयम् **(सुबोधिनी)**। 'सिद्धन्तूभयान्तर्यात्' इति न्यायेन आन्तरतम्यादेव स्वरिते प्राप्ते विधिरयम् **(ल.बृ.शेख.)**।

'क्व वोऽश्वाः' इत्यत्र 'बहुवचनस्य वस्नसौ' इत्यत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकाराद् 'वस्' अनुदात्तः। 'अशेः क्वन्' इति व्युत्पादनात् (ञ्नित्यादिर्नित्यम्, ६।१।१९७ इति सूत्रेण) अश्वशब्द आद्युदात्तः।...। क्वेति...तित्स्वरितम्। अवरशब्दः स्वाङ्गशिष्टामदन्तानामित्याद्युदात्तः। तयोर्दीर्घः (एकादेशः) उदात्तः **(सुबोधिनी)**।

अश्वशब्दः क्वन्नन्तत्वादाद्युदात्तः। वसः सस्य रुः, तस्य उः, सोऽस्वरकः, स्रंसनधर्महल्स्थानिकत्वात्। अनुदात्तो वा, उभयथापि तदेकादेशोऽनुदात्तः प्राप्तः। क्वेति स्वरितम्। अवरशब्दः स्वाङ्गशिष्टामित्याद्युदात्तः, एवञ्च—यद्वृत्तौ पूर्वसूत्रादनुदात्तस्येत्यत्रानुवर्त्य उदात्तानुदात्तयोरेकादेश इति व्याख्यातम्, तच्चिन्त्यम्, क्वावरमित्यसिद्ध्यापत्तेः। तत्र हि **बहवृचानामुदात्तपाठो** निर्विवाद इत्याहुः।

वस्तुतस्तु—'तस्यादित' इति सूत्रस्थभाष्यादितोऽप्यनुवृत्तिरेव लभ्यत इति सैव युक्ता। तत्र हि—सुब्रह्मण्याशब्दादेव स्वरितान्तेन ओमित्युदात्तस्यैकादेशः स्वरितः, तस्य न सुब्रह्मण्यायामित्यनेनोदात्त इत्युक्तम्। क्वावरमिति तु छान्दसं बोध्यम्। तथा च **बहवृचप्रातिशाख्यम्**—

**'उदात्तवत्येकीभावे उदात्तं सन्ध्यक्षरम्।**

**अनुदात्तोदये पुनः स्वरितं स्वरितोपधे।।** इति।

यस्मिन्नेकीभावे (एकादेशे इत्यर्थः) पूर्वमुत्तरं वोदात्तं भवति, इतरस्तु उदात्तानुदात्तस्वरितप्रचितानामन्यतमः, तस्मिन्नेकीभावे (एकादेशे) सन्ध्यक्षरमुदात्तं ज्ञातव्यम्। स्वरितोपधेऽनुदात्तोदये सन्ध्यमक्षरं स्वरितत्त्वमापद्यते—'क्षीरं सर्पिर्मधूदकम्' इत्युदाहरणम्। **शौनकीयप्रातिशाख्येऽपि** स्वराष्टकमुपक्रम्य—

'एकादिष्टमुदात्तेन तं तमेव नयेत्स्वरम्'। इति।

'उदात्तेनैकादिष्टं तं स्वरं तमेव = उदात्तमेव, नयेत् = उदात्तत्वमेव प्रापयेद् इति तदर्थः' इति **तद्भाष्ययोः**। लोके तु—'क्वावरम्' इत्यादौ न भवत्येवोदात्त इति युक्तमाभाति। अयमेकादेशस्वरोऽन्तरङ्गस्त्रैपादिकोऽपि सिद्धो वाच्य इति 'स्वरितो वा' इति सूत्रे भाष्ये स्पष्टम्। सिद्धत्वफलन्तु 'वृक्षयिदम्', 'वृक्षावत्र' इत्यत्र अयावावुदात्तौ भवतः। (**लघुशेखरे, बृहच्छेखरे सङ्क्षेपः**)।

**'अत्रेदं बोध्यम्, एतत्सूत्रव्याख्यान्ते—'फलान्तराण्यपि भाष्ये उक्तानीति शेखरयोरुक्तम्, परं नैतत्सूत्रं भाष्येऽस्ति, अन्यत्र क्वोक्तमिति विद्वांसो निभालयन्तु'**।

**काशिकायान्तु**—'नमुने' (८।२।३) इति सूत्रे उक्तम्—'एकादेश-स्वरोऽन्तरङ्गः सिद्धो वाच्यः किं प्रयोजनम्? अयायावेकादेशशतृस्वरै-काननुदात्तसर्वानुदात्तार्थम्', वृक्ष इदम्, प्लक्ष इदम्, अत्र प्रातिपदिकान्त-सप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः, स 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः, तस्य सिद्धत्वं वक्तव्यम्, आन्तर्यतः अयादेश उदात्तो यथा स्यात्। ..........। इत्याद्युक्तम्। एतच्च भाष्ये 'स्वरितो वानुदात्ते पदादौ' (८।२।६) इति सूत्रेऽस्तीति।

(छ) 'स्वरितो वानुदात्ते पदादौ' (८।२।६)। अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा भवति। पक्षे 'एकादेश उदात्तेनोदात्तः' (६।२।५) इत्यनेनोदात्तः। उदाहरणं, यथा—'वी३दं ज्योतिर्हृदये'। अत्र निपातत्वादाद्युदात्तः (निपाता—आद्युदात्ताः)। इदंशब्दः फिट्स्वरेणान्तोदात्तः, (फिषोऽन्त **उदात्तः**), ततश्च वि-इदंशब्दयोरेकादेशो दीर्घः, स स्वरितः।

उदाहरणान्तरं यथा—'अस्य श्लोको दिवीयते'। अत्र 'दिवि' पदे 'उडिदं पदात्' इति विभक्तिरुदात्ता। 'दिवि ईयते' अत्र दीर्घे सति एकादेश **उदात्तः**।

(ज) उदात्तादनुदात्तस्य स्वरितः (८।४।६६)। उदात्तात्परस्य अनुदात्तस्य स्वरितो भवति। 'अग्निमीले'। अत्र 'तिङ्ङतिङः' इत्यनेन अतिङन्ताद् अग्निपदात्परस्य 'ईले' इति तिङन्तस्य निघातः, तस्यानेन स्वरितत्वम्। सूत्रेऽत्र तयोर्य्वावचीत्यतः संहितायामित्यनुवर्तते, तेन पदकाले (स्वरितो) न (**शेखरे**)।

(झ) 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' (८।४।६८)। उदयशब्दः परवाची। उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न भवति। **गार्ग्य-काश्यप-गालवाचार्यमते** तु भवत्येव। यथा—प्र य आ रुः। वोश्वाः क्वोभीशवः। यद्यप्यत्र सूत्रे नञ्द्वयं त्यक्त्वा 'गार्ग्यादीनामेव' इति नियमो व्याख्यातुं शक्यते, तथापि गार्ग्यादीनामुदात्तपरमेवेति विपरीतनियमशङ्कां वारयितुं नञ्द्वयोपादानम् (**शेखरयोः**)।

(ञ) 'न सुब्रह्मण्यायां स्वरितस्य तूदात्तः' (१।२।३७)। **सुब्रह्मण्याख्ये निगदे**, 'यज्ञकर्मण्यपजन्यूङ्खसामसु' (१।२।३४) इति, 'विभाषा छन्दसि' (१।२।३६) इति च प्राप्ता एकश्रुतिर्न भवति, स्वरितस्य उदात्तो भवति। यथा— **सुब्रह्मण्यो३म्**। तत्र साधुरिति यत्। तित्स्वरितमिति स्वरितः। ततो निपातत्वादाद्युदात्तत्वेन 'ओम्'शब्देन ओमाङोश्चेति उदात्तस्वरितयोरेकादेश एवेति (**सुबोधिनी**)। अत्र **वार्तिकम्**—

१. **असावित्यन्तः**। तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः। गार्ग्यो यजते—ञित्वात् (ञ्नित्यादिर्नित्यम्) प्राप्त आद्युदात्तोऽनेन बाध्यते। अत्र 'असौ' इति प्रथमान्तस्योपलक्षणम्। एवमग्रे अमुष्येति षष्ठ्यन्तोपलक्षणम् (**शेखरः**)।

२. **अमुष्येत्यन्तः**। षष्ठ्यन्तस्यान्त उदात्तो भवति। दाक्षेः पिता यजते।

३. **स्यान्तस्योपोत्तमं च**—स्यशब्दान्तस्य उपोत्तममन्त्यश्चोभयमुदात्तं भवति। यथा— 'गार्ग्यस्य पिता यजतेः।

४. **वा नामधेयस्य**—स्यान्तस्य नामधेयस्य उपोत्तमं वोदात्तं भवति। यथा—'देवदत्तस्य पिता यजते'। इमे वार्तिके सि.कौमुद्यां दृश्येते। भाष्ये तु इतोऽपराण्यपि वार्तिकानि सन्ति। यथा—

५. **सुब्रह्मण्यायामोकार उदात्तः**। सुब्रह्मण्यायामोकार उदात्तो भवति— सुब्रह्मण्योम्।

६. **आकार आख्याते परादिश्च**। आकार आख्याते परादिश्चोदात्तो भवति—'इन्द्र आगच्छ हरिव आगच्छ'।

७. **वाक्यादौ च द्वे द्वे**। वाक्यादौ च द्वे द्वे उदात्तौ भवतः। इन्द्र आगच्छ हरिव आगच्छ। अत्र किञ्चित्—पूर्वत्र 'सुब्रह्मण्योम्' इत्यत्र विषये प्रदीप उक्तम्— 'नेदमपूर्वविधानम्, सूत्रव्यापार एव तु प्रदर्श्यते। यथा चोदात्त ओकारस्तथा' तस्यादित इत्यत्रोक्तम्। 'ओमभ्यादाने' इति तु प्लुतोदात्तत्वं न भवति, तस्याऽयज्ञकर्मविषयत्वादित्याहुः।

**तस्यादित उदात्तमर्धह्रस्वम् (१।२।३२)** सूत्रीयं 'सुब्रह्मण्योम्' इत्येतच्छब्दीयविवरणं यथा—'स्वरितोदात्तार्थं च'। स्वरितोदात्तार्थं च तत्रैव कर्तव्यम्। न सुब्रह्मण्यायां स्वरितस्य तूदात्तः। इन्द्र आगच्छ! क्व तर्हि स्यात्? यः सिद्धः स्वरितः। **सुब्रह्मण्योमिन्द्रागच्छ**।

एतद्विवरणं पूर्वत्रोक्तम्। 'इन्द्र आगच्छतीन्द्रशब्द आमन्त्रितत्वादाद्युदात्तः, तस्य द्वितीयो वर्णो वर्ज्यमानस्वरेणानुदात्तः। स उदात्तादनुदात्तस्य स्वरित इति

स्वरितः, तस्यानेन उदात्तत्वम्। 'परत्र 'आकार आख्याते परादिश्च' इत्यत्र 'इन्द्र आगच्छ' इत्यत्र तिङन्ते गच्छशब्दे परत आकार उपसर्गत्वादुदात्तः (**प्रदीपः**)। 'परादिश्चे'त्युक्त्या (आगच्छ इत्यत्र) आकारात् परस्य गच्छेत्यस्यादिरुदात्तः। 'तिङ्ङतिङः' इति निघाते पूर्ववत्स्वरिते च कृतेऽनेनोदात्तत्वविधानात्। अत्र पुनः **वार्तिकानि**—

८. **मघवन्वर्जम्**। आगच्छ मघवन्।

९. **'सुत्यापराणामन्तः'**। सुत्यापराणामन्त उदात्तो भवति। सुत्याशब्दः परो येभ्यस्तेषामित्यर्थः (**प्रदीपः**)। सर्वनामकार्याभावाद् बहुव्रीहित्वनिश्चयः (**उद्द्योतः**)। 'द्व्यहे सुत्याम्', त्र्यहे सुत्याम्'। द्व्यजन्तत्वाद् अन्तोदात्तत्वम् (**कैयटः**)।

**काशिकायान्तु–'सुब्रह्मण्यो३मिन्द्रागच्छ**, हरिव आगच्छमेधातिथेर्मेष, वृषणश्वस्य. मेने, गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाणः श्वः सुत्यामागच्छ मघवन्' इत्युदाहरणस्वरूपम्।

**अथ धातुविषय उदात्तविमर्शः**

१. धातोः (६।१।१६२)। धातोरन्त उदात्तो भवति। गोपायतं नः। असि सत्यः। गोपायतमिति। गुपेः अन्तोदात्ताद् आयः। तदन्तमपि अन्तोदात्तम्। एकाक्षु अपि व्यपदेशिवद्भावाद् अस्य प्रवृत्तेः। येऽपि उपदेशेऽनुदात्ताः पचादयस्तेष्वपि अयं विधिः, अनुदात्तोपदेशस्य इड्निषेधविधौ चारितार्थ्यात्। **पिबाद्यादेशाना-माद्युदात्तत्वनिपातनसामर्थ्यात् तेषु नायं विधिः' (शेखरौ)**।

२. स्वपादिहिंसामच्यनिटि (६।१।१८८)। स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा भवति।

अदादिषु आगणान्तात् स्वपादयः (**शेखरौ**), ततश्चेमे स्वपादयः—ञिष्वप् शये। श्वस प्राणने। अन च। जक्ष भक्षहसनयोः। जागृ निद्राक्षये। दरिद्रा दुर्गतौ। चकासृ दीप्तौ। शासु अनुशिष्टौ। दीधीङ् दीप्तिदेवनयोः। वेवीङ् वेतिना तुल्ये। षस षस्ति स्वप्ने। वश कान्तौ। चर्करीतं च। ह्नुङ् अपनयने। स्वपन्ति। श्वसन्ति। पक्षे प्रत्ययस्वरेण मध्योदात्तता। 'ञिष्वप् शये, श्वस प्राणने, अन च' इत्येतेभ्यः परे जक्षित्यादयोऽभ्यस्तसञ्ज्ञकाः, तेषु परत्वाद् अभ्यस्तानामादिरिति स्वरो भवति। ये तु ततः परे षस् स्वप्ने, वश कान्तौ, ह्नुङ् अपनयने, चर्करीतमिति, तत्र चर्करीतमभ्यस्तम्। **अन्ये** तु षसिवशी छान्दसौ, छन्दसि च दृष्टानुविधानम्। ह्नुङोऽप्ययं स्वरो न भवति, 'अह्नुन्विङोः' इत्यनुवृत्तेः। पारिशेष्यादादितस्त्रिष्वेवायं स्वरः (**पद.**)। सङ्गृहीतश्चायमर्थो **न्यासेऽपि**। क्ङित्येवेष्यते (**कौमुदी**)। नेह—स्वपानि, ह्रिसानि। नैतद्भाष्ये दृष्टमिति **शेखरयोः**।

**भाष्ये तु**—स्वपादीनां वावचनादभ्यस्तस्वरो भवति, विप्रतिषेधेन। स्वपादीनां वावचनस्यावकाशः—स्वपन्ति, श्वसन्ति। अभ्यस्तस्वरस्यावकाशः—ददति, दधति। इहोभयं प्राप्नोति—जाग्रति। अभ्यस्तस्वरो भवति, विप्रतिषेधेन। अत्र **कैयटः**—स्वपन्तीति। पक्षे आद्युदात्तत्वं पदम्, **पक्षे प्रत्ययस्वरेण मध्योदात्तम्। नागेशस्तु**— इदं विकल्पेन धातोराद्युदात्तत्वविधायकम्। 'अभ्यस्तानामादिः' इति तु पुनरादिग्रहणान्नित्याद्युदात्तविधायकमजादावनिटि लसार्वधातुके परे।

**सुबोधिनीकृतस्तु**—'क्ङित्येवेष्यत इति'—वृत्त्यनुरोधादेतदुक्तम्। **भाष्ये** तु प्रायेणेदं न दृश्यते। एवञ्च—'हिनसानि इत्यत्र आद्युदात्तत्वमपि पक्षे भवति। यदि तु आद्युदात्तत्वं पक्षे नेष्यते, तर्हि व्यवस्थितविभाषाश्रयणान्न। केचित्तु— 'स्वपानि' इत्यत्र एतदभावे धातुस्वरेण आद्युदात्तत्वमेवेति विशेषाभावादयं विधिर्न प्रवर्तते, तत्साहचर्याद् 'हिनसानि' इत्यत्राप्ययं न प्रवर्तत इति वृत्तिकाराशयं कल्पयन्ति। हिनसानीति। अत्र श्नमः 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायाद् धातुग्रहणे नकाराकार उदात्तः।

**३. अभ्यस्तानामादिः (६।१।१८९)**। अनिट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिः उदात्तो भवति। ये ददति प्रिया वसु। परत्वाद् चित्स्वरमयं बाधते। दधाना इन्द्रे। 'आदिः सिचोऽन्यतरस्याम्' इत्यत आदिरिति वर्तमाने पुनरादिग्रहणं नियमार्थम्। **(सुबोधिनी-लघुशेखर-बृहच्छेखर-काशिका-पदमञ्जरी-न्यासोद्द्योतेषु)** अन्यथा अन्यतरस्याग्रहणमनुवर्तेत। प्रत्ययस्वरेण प्राप्ते तदपवादोऽभ्यस्तानां धातूनामादेर्विधीयते **(न्यासः)**।

४. अनुदात्ते च (६।१।१९०)। अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तो भवति। दधासि रत्नं द्रविणं च दाशुषे।

**५. भी-ह्री-भृ-हु-मद-जन-धन-दरिद्रा-जागरां प्रत्ययात्पूर्वं पिति (६।१।१९२)**। एषां धातूनामभ्यस्तानां प्रत्ययात्पूर्वमुदात्तं भवति, पिति लसार्वधातुके परे। आद्युदात्तापवादोऽयम्। अनुदात्ते चेति आद्युदात्ते प्राप्ते वचनम् **(कैयटः, सुबो. पद. न्यासे च)**।

अनुदात्ते चेत्यनेन आद्युदात्तत्वं विधीयते, अनेन च प्रत्ययात् पूर्वस्योदात्तत्वमिति विरोधाल्लक्ष्यदर्शनवशाद् भ्यादीनामेव प्रत्ययात् पूर्वस्योदात्तत्वं भविष्यतीति **(कैयटः)**। भ्यादिग्रहणं किमर्थम्? इह मा भूत्—ददाति, दधाति। .......अन्तत उभयं स्यात्। अनवकाशाः खल्वपि विधयो बाधका भवन्ति, सावकाशश्चाभ्यस्तस्वरः **(भाष्ये)**। विरोधात् समावेशाभावे पर्यायेणोभयं स्यादित्यर्थः। अथवा सर्वेषामभ्यस्तानां पितो लसार्वधातुकात् पूर्वस्य उदात्तत्वं स्यात् **(कैयटः)**।

भ्वादिसम्बन्धिपिति परतस्ततः पितः पूर्वमुदात्तमिति भ्वादिभ्यः परः प्रत्यय एव पित् सम्भवतीति (**उद्द्योतः**) (**कैयटः**)। प्रत्ययग्रहणं किमर्थम्? प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्, आटः पूर्वस्य मा भूत्-विभयानि। न चैवास्ति विशेषः—प्रत्ययाद्वा पूर्वस्य उदात्तत्त्वे सति आटो वा।

अपि च पिद्भक्तः पिद्ग्रहणेन ग्रहीष्यते। इदं तर्हि प्रयोजनम्—प्रत्ययात् पूर्वस्योदात्तत्वम् यथा स्यादाट एव मा भूत्, इति। एतदपि नास्ति प्रयोजनम्। पिद्भक्तः पिद्ग्रहणेनैव ग्रहिष्यते। एवं तर्हि सिद्धे सति यत् प्रत्ययग्रहणं करोति, तज्ज्ञापयत्याचार्यः, स्वरविधौ सङ्घातः कार्यो भवति। किमेतस्य ज्ञापने प्रयोजनम्?

**'चित्स्वरात् तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन'** इत्युक्तं तदुपपन्नं भवति।

पूर्वग्रहणं च—**'स्वरविधौ सप्तभ्यस्तदन्तसप्तम्यो भवन्तीति ज्ञापनार्थम्।** तेन उपोत्तमं रिति—रिदन्तस्येत्यर्थः। चङ्यन्यतरस्यामिति चङन्तस्येत्यर्थः। **चतुरः शसीत्यत्र तु शस्ग्रहणान्न दोषः।** पिद्ग्रहणं तु 'दरिद्रति' इति व्यावर्तनाय। **अन्येऽपि उदात्तप्रदेशाः—**

**१. तस्यादित उदात्तमर्धह्रस्वम्। (१.२.३२)**
**२. वृषाकप्यग्निकुसितकुसीदानामुदात्तः। (४।१।३७)**
**३. बहुव्रीहेश्चान्तोदात्तात्। (४।१।५२)**
**४. समानादरे शयित ओ चोदात्तः। (४।४।१०८)**
**५. उभादुदात्तो नित्यम्। (५।२।४४)**
**६. कषीत्वतो घञोऽन्त उदात्तः। (६।१।१५९)**
**७. उञ्छादीनाञ्च। (६।१।१६०)**

इत्येवमादीनि बोध्यानि। इतोऽन्यान्यपि सूत्राणि, तत्रत्यवार्तिकान्यपि उदात्तविषयकाणि अवगन्तव्यानीति दिक्।

**उदित्**—'कु-चु-टु-तु-पु' एषां सञ्ज्ञा। उत् इत् यस्य, सोऽप्युदित्।

**उद्गमन**—'आङ उद्गमने' (१।३।४०)। आङ्पूर्वकात् क्रमतेरुद्गमने वर्तमानाद् आत्मनेपदं भवति। यथा—आक्रमत आदित्यः। **उद्गमन** इति किम्? आक्रामति माणवकः कुतुपं कुतपं वा (**का.**)। आक्रामति माणवकः = अवष्टभ्नातीत्यर्थः (**पद.**)।

**'ज्योतिरुपद्गमन** इति वक्तव्यमिति वार्तिकम्', तत्रेदं व्याख्यानम्—'अनुपसर्गाद् वा' इत्यतो वाग्रहणमनुवर्तते सिंहावलोकितन्यायेन सा च

व्यवस्थितविभाषा, तेन ज्योतिरुदमन एव भविष्यति, नान्यत्रेति। 'मण्डूकप्लुति'-न्यायेन चोत्तरत्र नानुवर्तिष्यत इत्यदोषः (**न्यास.**)।

ननु ज्योतिषामुद्गमन इत्यस्य ज्योतिस्सम्बन्ध्युद्गमन इत्यर्थः, एवञ्च पक्षी सूर्यमाक्रामतीत्यत्रापि प्रसङ्गः। यद्वा, कर्मणि कर्तरि वा षष्ठीत्यत्र विनिगमनाविरहात्तत्रापि प्रवृत्तिः? न चोभयप्राप्ताविति कर्मण्येवैषा षष्ठी, तथा सति 'ज्योतिरुद्गमन' इति भाष्यकृत्कृतसमस्तप्रयोगानुपपत्तिरित्युभयोपादान एव तत्प्रवृत्तिरत आह उद्गमन इति (**उद्द्योतः**)।

**उद्गात्रादि**—'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' (५।१।१२९)।

**उद्गात्रादिः–उद्गातृ-उन्नेतृ-प्रतिहर्तृ-रथगणक-पक्षिगणक-(पलिगणक)-सुष्ठु-दुष्ठु-अध्वर्यु-वधू-सुभगमन्त्र-प्रशास्तृ-होतृ-पोतृ-कर्तृ** (इत्युद्गात्रादिः)। उद्गातुर्भावः कर्म वा औद्गात्रम्। एवमौन्नेत्रम्।

**उद्धृत**—अमत्रम् = भाजनं पात्रमुच्यते (**का.**)। तत्रोद्धृतममत्रेभ्यः (४।२।१४)। कुण्डी अमत्रं (पात्रं) चेत्, कुण्डान्या (४।१।४२)।

**उद्वमन**—वाष्पोष्मभ्यामुद्वमने (३।१।१६)। वाष्पशब्दाद् ऊष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् भवति। यथा—वाष्पमुद्वमति वाष्पायते, ऊष्मायते। फेनाच्चेति वक्तव्यम्—फेनमुद्वमति फेनायते।

**उन्नतः—दन्त उन्नत उरच्** (५।२।१०६)। उन्नता दन्ता अस्येति दन्तुरः।

**उन्मनस्**—अत्रार्थे 'उत्क' इति निपात्यते—उत्क उन्मनाः (५।२।८०)। उत्कः = उत्सुकः। उप—प्रादिषु पठितः। अस्य निपातसञ्ज्ञा—प्रादयः (१।४।५८)। अस्य उपसर्गसञ्ज्ञा—उपसर्गाः क्रियायोगे (१।४।५९)। अस्य गतिसञ्ज्ञा। गतिश्च (१।४।६०)।

**उपान्मन्त्रकरणे** (१।३।२५)। उपाद्देवपूजा-सङ्गतिकरण-मित्रकरण-पथिष्विति वाच्यमित्युपोपसृष्टस्य तिष्ठतेरात्मनेपदत्वम्, एष्वर्थेषु—आदित्यमुपतिष्ठत—इत्यादि। अन्यत्र—गेहमुपतिष्ठति।

**अकर्मकाच्च** (१।३।२६)। उपोपसृष्टात् तिष्ठतेरेव। यावद्भुक्तमुप-तिष्ठते (**का.**)। निसमुपविभ्यो ह्वः (१।३।३०)। 'नि-सम्-उप-वि' एतदुपसृष्टेभ्यः 'ह्वेञ् स्पर्धायां शब्दे च' अस्माद् धातोः आत्मनेपदं भवति—उपह्वयते।

**उपपराभ्याम्** (१।३।३९) 'उप-परा' उपसृष्टात् 'क्रमु पादविक्षेपे' धातोः आत्मनेपदं भवति। वृत्तिसर्गतायनेषु उपक्रमते। वृत्तिः = अप्रतिबन्धः। सर्गः = उत्साहः। तायनम् = स्फीतता।

प्रोपाभ्यां समर्थाभ्याम् (१।३।४२)। 'उप प्र' उपसृष्टात् क्रमतेरात्मनेपदम्, समुदायात् समर्थार्थो गम्यते चेत्—**उपक्रमते भोक्तुम्।**

**उपाद्यमः स्वकरणे** (१।३।५६)। उपपूर्वकाद् यम्धातोः विवाहेऽर्थे आत्मनेपदम्। भार्यामुपयच्छते।

उपोपसृष्टात् युजिर् योगे (स्वरितेत्) इति धातोः अकर्त्रभिप्राये आत्मनेपदं भवति, यज्ञपात्रप्रयोगविषयादन्यत्र—**'प्रोपाभ्यां युजेरयज्ञपात्रेषु'** (१।३।६४) यथा—**उपयुङ्क्ते।**

इतोऽन्यत्रापि 'उप'योगे पदव्यवस्था, यथा—

**उपाच्च** (१।३।८४) उपरमति। अन्तर्भावितण्यर्थोऽत्र रमिः (**का.**)।

**विभाषा अकर्मकात्** (१।३।८५)। यावद् भुक्तमुपरमति।

**उपशब्दयोगे कारकव्यवस्था**

१. उपान्वध्याङ्वसः (१।४।४८)। ग्राममुपवसति सेना। वसेरश्यर्थस्य प्रतिषेधः—ग्रामे उपवसति (**भाष्य.**)। अथवा शीङोऽर्थश्श्यर्थः, न श्यर्थोऽश्यर्थः, तस्य = अस्थानार्थस्येत्यर्थः। स्थाने हि शीङ् वर्तते। यथा—जलाशय इति। तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति प्रयोगः। अस्थानार्थत्वे तु—ग्राम उपवसतीति (कैयटः)। अनयोराद्यव्याख्यैव युक्ता, भाष्यस्वारस्यात् (**उद्द्योतः**)।

२. हीने अधिके च द्योत्ये **'उप'शब्दः** कर्मप्रवचनीयसञ्ज्ञाभाक्—**'उपोऽधिके** च' (१।४।८७)। **उपखार्यां द्रोणः**—इत्यधिकस्य। उपशकटायनं वैयाकरणः—इति हीनस्य।

**प्रत्ययव्यवस्थाविषये**—विजुपे छन्दसि (३।२।७३)।

१. उपोपसृष्टस्य यजतेश्छन्दसि विच्प्रत्ययः, यथा—उपयड्भीरूर्ध्वं वहन्ति।

२. उपोपसृष्टेभ्यः पीड-रुध-कर्षधातुभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् भवति—**सप्तम्यां चोपपीडरुधकर्षः** (३।८।४९)। पार्श्वोपपीडं शेते। वज्रोपरोधं गाः स्थापयति। पाण्युपकर्षं धानाः सङ्गृह्णाति।

३. 'उप' इत्यस्माद् आसन्नेऽर्थे स्वार्थे 'त्यकन्'प्रत्ययो भवति—**'उपाधिभ्यां** त्यकन्नासनारूढयोः' (५।२।३४)। पर्वतस्यासन्ना उपत्यका।

**आगमः**

उपोपसृष्टात् करोतेः सुड् भवति गुणाधान-विकृत-वाक्याध्याहार-रूपेष्वर्थेषु—**'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च'** (६।१।१३९)। अत्र सूत्रे

चकारात् ६।१।१३७-१३८ सूत्रयोरुक्तयोर्भूषणसमवायार्थयोरपि सङ्ग्रहः। उदाहरणानि यथा—

**उपस्कृता कन्या – भूषितेत्यर्थः।**

**उपस्कृता ब्राह्मणाः – समवेता इत्यर्थः।**

**एधोदकस्योपस्कुरुते – गुणाधानं करोतीत्यर्थः।**

**उपस्कृतं भुङ्क्ते – विकृतं भुङ्क्ते इत्यर्थः।**

**उपस्कृतं ब्रूते – वाक्याध्याहारेण ब्रूते इत्यर्थः।**

४. पूर्वपदप्रकृतिस्वरः—**'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु'** (६।२।३३)। यथा—उपपूर्वाह्णम्, उपापराह्णम्, इत्यादि। निपाता आद्युदात्ताः, उपसर्गाश्चाभिवर्जमित्याद्युदात्तानि पूर्वपदानि (**का.**)। अत्र 'उपवनम्'शब्दे भाष्योक्तविचारः सावसरो न वा?

**५. उपाद् द्व्यजजिनमगौरादयः (६।२।१९४)**। उपात् परं द्व्यच्कम् अजिनं चान्तोदात्तं भवति तत्पुरुषे गौरादीन् विहाय। उपगतो देवमुपदेवः। अत्र निरादयः क्रान्ताद्यन्ते द्वितीययेति समासः। तत्पुरुषादन्यत्र नायं स्वरः।

**६. उपात् प्रशंसायाम् (७।१।६६)**। उपात् उत्तरस्य लभ्धातोः प्रशंसार्थे नुम्भवति, यकारादौ प्रत्यये चिकीर्षिते। उपलम्भ्या विद्या भवता। प्रशंसनादन्यत्र—उपलम्भमस्माद् वृषलात् किञ्चित्। वेदे 'उप' इत्यस्य पादपूरणार्थत्वम्—प्रसमुपोदः पादपूरणे (८।१।६)। यथा—'उपोप मे परामृश'।

**उपकादिः (गणः)**। उपकादिगणवाचिशब्देभ्यः गोत्रप्रत्ययस्य वा लुग् भवति, द्वन्द्वेऽद्वन्द्वे च। **उपकादिभ्योऽन्यतरस्यामद्वन्द्वे (२।४।६९)**।

**उपज्ञातम् (अर्थनिर्देशः)**। तृतीयान्तसमर्थाद् उपज्ञातेऽर्थे यथायथं प्रत्यया भवन्ति। उपज्ञातम् = उपदेशेन विना ज्ञातम्, स्वयमभिसम्बद्धमित्यर्थः (**का.**)। उपज्ञातं प्रथमज्ञातम् (**बाल.**)। विनोपदेशेन ज्ञातमुपज्ञातम् (**तत्त्व.**)। उपदेशं विना ज्ञातमित्यर्थः (**बृहच्छे.**)।

**उपदा**। उत्कोच इत्यर्थः (**का.**)। **उपहार** इत्यन्ये (**बृहच्छे.**)। तदस्मिन् वृद्ध्याय-लाभ-शुल्कोपदा दीयते (५।१।४७)। पञ्च उपदा दीयते इति पञ्चकः। 'उपदा' इति टाबन्तः (**बृहच्छे.**)।

**उपदेशः**। आद्योच्चारणम्। आद्यं च तदुच्चारणमिति विग्रहः। उपदेशेऽजनुनासिक इत् (१।३।२) (**प्रौढ.**)। करणघञन्तोऽयं शब्द इति **नागेशः**

उपदिश्यतेऽनेनेत्युपदेशः **(लघुशब्दरत्न-शेखरयोः, उद्द्योते.)** उपदेशप्रदेशाः। आदेच उपदेशेऽशिति (६।१।४५)। उपदेशे = **आद्युच्चारणे गणपाठे** इत्यर्थः **(न्यास.)**। **अनिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनार्थमाद्यमुच्चारणम् = उपदेशः (पद.)**। केचित्तु—उपदेशशब्दः सम्प्रदानव्युत्पत्त्या प्रयोजनपरः **(बृहच्छे.)**। स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झन-गम-दृशां वा चिण्वदिट् च (६।४।६२)। अत्र उपदेशेऽजन्तानामित्यन्वयः। अभावि, अन्वभावि।

**एकाच उपदेशेऽशिति (७।२।१०)**। औपदेशिकामेकाचामनेन इड् न भवति। कृ—कर्ता। हृ—हर्ता। नी—नेता। चि—चेता।

**उपदेशेऽत्वतः (७।२।६२)**। उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविव थलीडागमो न भवति। पच्—पक्ता—पपक्थ। यज्—यष्टा—इयष्ठ। शक्—शक्ता—शशक्थ।

**उपसर्गादसमासेऽपि णोपदेशस्य (८।४।१४)**। णोपदेशस्य धातोर्यो नकारः, तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति, असमासे समासेऽपि। णम्—प्रहत्वे, प्रणमति।

**शेषे विभाषाऽकखादावषान्त उपदेशे (८।४।१८)**। उपदेशे कादि-खादि-षान्तवर्जे गद-नदादेरन्यस्मिन् धातौ पर उपसर्गस्थान्निमित्तात्परस्य नेः नस्य णत्वं वा स्यात्। प्रणिभवति—प्रनिभवति।

**उपदेशः = परार्थः प्रयोगः (का.)**। **वाक्यप्रयोग इत्यर्थाद् गम्यते (पद.)**। तच्च परस्य प्रत्ययनार्थं भवतीत्यर्थाद् गम्यते **(न्यास.)**। उपदेशे भिन्नेऽर्थे। अदस्शब्दस्य गतित्वम्—अदोऽनुपदेशे (१।४।७०)। अदः शब्दस्त्यदादिषु पठ्यते **(का.)**। अदःकृत्य। उपदेशे तु—अदः कृत्वा काण्डं गतः।

**उपधा**—(सञ्ज्ञा) अलोऽन्त्यात्पूर्वं उपधा (१।१।६५)। अन्त्यादलः पूर्वो वर्ण उपधासञ्ज्ञस्स्यात्। धात्वादौ वर्णसमुदाये **(का.)**। उपधाप्रदेशाः।

**नोपधायाः**—६।४।७, अग्रे ६।४।८-१५। अन्यच्च—६।४।२०। ६।४।२४-२७। ६।४।४७। ६।४।८९-१००। ६।४।१४९-१५१। ७।१।१०१, ७।२।११६, ७।४।१-८। ८।२।७६-७८।

**उपपदम्** (सञ्ज्ञा)। विधिसूत्रेषु 'कर्मण्यण्' इत्यादिषु, सप्तम्यन्तं यत् पदं 'कर्मणि' इत्यादि, तत्र वाच्यत्वेन स्थितम्, कुम्भादि, तद्वाचकं यत् पदम् 'कुम्भ' इति, तद् 'उपपद'-सञ्ज्ञं भवति।

**उपपदप्रदेशाः**—उपपदमतिङ् (२।२।१९)। उपपदम् = समीपे श्रूयमाणं पदम्, यथा—विभाषोपपदेन प्रतीयमाने (१।३।७७)। उपपदमिति महतीयं सञ्ज्ञा

क्रियते। सञ्ज्ञा च नाम यतो न लघीयः। ........अन्वर्थसञ्ज्ञा विज्ञायेत। उपोच्चारितं पदमुपपदम् (**भाष्यम्**)।

**उपमान**—उपमीयतेऽनेनेति—उपमानानि सामान्यवचनैः (२।१।५५)। उपपूर्वान् माङः करणे ल्युटि।

भाष्ये तु मानस्य समीपमुपमानमित्यर्थकथनमात्रम्, अव्ययीभावे उपमानानीति रूपासिद्धिप्रसङ्गात्। उपपूर्वकश्च माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानम् (**पद.**)। प्रादिसमासः (**तत्त्व.**)। **पदमञ्जरीग्रन्थो भाष्ये नोपलभ्यते।**

अयमधिकारः। **कर्मण्यण् इत्यादौ कर्मणीत्यादिः सौत्रत्वात् प्रथमार्थे सप्तमी।** एवञ्च—धातोरण् प्रत्ययो भवति, कर्म चोपपदसञ्ज्ञमिति तदर्थः। ....प्रथमाऽर्थे **सप्तम्युच्चारणसामर्थ्यात् सप्तम्यन्तपदवाच्यत्वमेव तत्त्वमित्यदोषः।** उपसमीपोच्चारितं पदम् = उपपदम्। सामीप्यञ्च—सप्तम्यन्तपदघटितसूत्रविधेय-प्रत्यय-प्रकृत्यन्वयित्वमात्रेण, न त्वानुपूर्व्यव्यवधानम्। 'उपपदमतिङ्' इत्यनेन कृदन्तस्योपपदेन नित्यैकार्थीभावबोधनात्, तत्सामर्थ्येन चोपपदेनैकार्थीभाव एव प्रत्ययोत्पत्तेः। अत एव उपपदनिमित्तककृद्विधौ समर्थपरिभाषोपस्थितिरत्रैव सूत्रे **भाष्ये** उक्ता। विशिष्टस्य तु नोपपदसञ्ज्ञा, अपदत्वात्।

**'उपमानादाचारे' (३।४।१७)**। 'उपमान'वाचकाच्छब्दाद् आचारेऽर्थे क्यच् भवति। प्रावारमिवाचरति प्रावारीयति कम्बलम्। 'अधिकरणाच्च' (**वा.**)। प्रासादीयति कुट्याम्।

**'कर्तुः क्यङ् सलोपश्च'। (३।१।११)**। 'उपमान'वाचकाच्छब्दात् कर्तुः सुबन्तादाचारे क्यङ्प्रत्ययो भवति विभाषया। सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात्, 'क्यङ् वा' इत्युक्तेः। पक्षे वाक्यम्। सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः, स च व्यवस्थितः—**'ओजसोऽप्सरसो नित्यमितरेषां विभाषया'**। कृष्ण इत्याचरति कृष्णायते। ओजश्शब्दो वृत्तिविषये तद्वति वर्तते। ओजायते। अपि काकः श्येनायते।

**'कर्तर्युपमाने' (३।२।७९)**। कर्तृवाचिनि उपमान उपपदे धातोर्णिनिप्रत्ययो भवति। उपपदकर्ता, प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशति।

**'उपमाने कर्मणि च' (३।४।४५)**। उपमाने कर्मण्युपपदे चकारात् कर्तरि धातोर्णमुल्प्रत्ययो भवति। घृते निधायं निहितः घृतमिव निहितः। एतत्कर्मणि, कर्तरि तु—अजकनाशं नष्टः, अजक इव नष्टः।

**'उपमानादप्राणिषु'** (५।४।९७)। 'श्वन्'शब्दो यदा अप्राणिविषयकोपमानवाची, तदा तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति। आकर्षः श्वा इव, आकर्षश्वः।

**'उत्तरमृगपूर्वाच्च सक्थ्नः'** (५।४।९८)। अत्र चकारात् 'उपमान'शब्दादपि सक्थिनशब्दस्य समासान्तष्टच् भवति। फलकमिव सक्थि—फलकसक्थम्।

**'उपमानाच्च'** (५।४।२३६)। उपमानात् परस्य गन्धशब्दस्य इकारादेशो भवति बहुव्रीहिसमासे। समासान्तोऽयमादेशः। पद्मस्येव गन्धोऽस्य पद्मगन्धि।

**'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः** (६।२।२)। तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाच्यव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति। यथा—शस्त्रीश्यामा। शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः।

**गोविडालसिंहसैन्धवेषूपमाने** (६।२।४२)। गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। धान्यगवः। गोविडाल इत्यादि। धान्यं गौरिवेति विग्रहः। व्याघ्रादिः। गवाकृत्या सन्निवेशितं धान्यं धान्यगवशब्देनोच्यते (**सि.कौ.**)। उपमानशब्दोऽयं गवादिभिः प्रत्येकमभिसम्बध्यते अन्यथैकवचनान्तस्य बहुवचनान्तैः समानाधिकरणेन विशेष्यविशेषणभावो न स्यात्। अथवा—सुप्प्रत्यये बहुवचनस्यैव स्थाने इदमेकवचनं द्रष्टव्यम्। उपमानार्थोऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः (**का.**)। योऽयमत्रोदाहरणे उपमानार्थः सम्भवति, स तत्र योजयितव्यः। यस्योपमानार्थस्य च लोके प्रसिद्धिः, स तथा योजयितव्यः।

**'उपमानं शब्दार्थप्रकृतावेव'** (६।२।८०)। उपमानवाचिपूर्वपदं शब्दार्थप्रकृतावेव णिनन्तोत्तरपदमाद्युदात्तं भवति। उपमानं नियम्यते (**का.**)। 'उष्ट्रक्रोशी'। अत्र 'कर्तर्युपमाने' इति णिनिः। योगविभागकरणसामर्थ्याच्छिष्टप्रयोगाच्चोपमानमेव नियम्यते (**कैयटः**) इति। उपमानमिति किमर्थम्? शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणाऽतिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत। तत्र को दोषः? इह न स्यात्—पुष्पहारी। फलहारी। उपमानग्रहणे पुनः क्रियमाणे न दोषो भवति (**भाष्य.**)। यद्युपमानग्रहणं न क्रियेत, तदा पूर्वस्य योगस्यास्य च विषयविभागो न ज्ञायेत। उपमानग्रहणे तु सति—पूर्वस्य सामान्यं विषयः, अस्य तु विशेष उपमानमिति विषयविभागो निश्चीयते। तेन विषयविभागार्थमुपमानम्।

**'चीरमुपमानम्'** (६।२।१२७)। चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति—वस्त्रं चीरमिव वस्त्रचीरम्।

**'निष्ठोपमानादन्यतरस्याम्' (६।२।१५९)।** निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति। उपमानात्— सिंहमुखः, व्याघ्रमुखः। सिंहमुखे पक्षे प्रकृतिस्वरः (**तत्त्व., बृहच्छे., बाल.**)

**भासनोपसम्भाषाज्ञानयत्नविमुत्युपमन्त्रणेषु वदः। (१।३।४७)।** एष्वर्थेषु वदेरात्मनेपदम्। उपमन्त्रणम् (उप + मत्रि + ण्वुल्)। उपमन्त्रणम् = एकान्ते प्रार्थना। तत्र उपमन्त्रणम् = रहस्युपच्छन्दम् (**का., सायणश्च**)। कुलभार्यामुपवदते। परदारानुपवदते। उपच्छन्दयतीत्यर्थः। 'भद्रे भनस्व माम्, इदं ते दास्यामि' इति स्वाभिलषिते ददातीत्यर्थः (**पद. न्यास.**)। अत्र उपसम्भाषोपमन्त्रणे धातोर्वाच्ये, इतरे प्रयोगोपाधयः (**सि.कौ.**)। उपवदते = प्रार्थयत इत्यर्थः (**सि.कौ.**)।

**उपमार्थः।** उपमातेर्भावेऽङ्, उपमा। **उपमा = सादृश्यम्। 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' (२।३।७२)।** तुल्यार्थकशब्दयोगे वा तृतीया, पक्षे षष्ठी। तुलाशब्दम्, उपमाशब्दं च वर्जयित्वा। उपमा कृष्णस्य न विद्यते। अत्र न तृतीया, केवलं षष्ठ्येव।

**'चिदिति चोपमार्थे प्रयुज्यमाने' (८।२।१०१)।** 'उपमार्थे प्रयुक्तः 'चित्' इति निपातश्चेत्, तस्य वाक्यस्य टेरनुदात्तः प्लुतो भवति। अग्निचिद्भाया३त्। अग्निरिव भायाद् इत्यर्थः। उपमार्थे किम्? कथञ्चिदाहुः।

**उपमितम् (उप + मि + क्त) उपमेयम् इत्यर्थः।** 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२।१।५६)। उपमेयवाचि यत् सुबन्तं, तद् व्याघ्रादिभिरूपमानवचनैः सह समस्यते, स च तत्पुरुषः, सामान्यवाची शब्दश्चेन्न प्रयुज्यते। पुरुषव्याघ्रः।

**उपसमाधानम् (उप + सम् + आ + धा + ल्युट्)** राशीकरणम्। उपसमाधानरूपेऽर्थे 'चिञ् चये' इति धातोर्घञ्प्रत्ययो भवति, धातोराद्यचकारस्य च ककारो भवति।

**'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' (३।३।४१)।** महागोमयनिकायः (प्रकीर्णानां गोमयानामेव)। अत्रोपसमाधानं धात्वर्थः, अत्र राशीकरणम् (**पद.**)। अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः (**सि.कौ. पद.**)। गोमयानामेकत्र राशीकरणं गोमयनिकायः (**माधव.**)।

**उपतापः** (उप + तप् + णिच् + अच्)। रोगः। 'द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः' (५।२।१२८)। प्राणिस्थरोगवाचिभ्य इनिर्भवति। कुष्ठी किलासी।

**'भुजन्युब्जौ पाण्युपतापयोः' (७।३।६१)**। अत्रापि 'रोग' एवार्थः। अत्रार्थे 'न्युब्ज' इति निपातः। न्युब्जिताः शेरतेऽस्मिन्निति **(का.)**। न्युब्जिताः = अधोमुखाः, निश्चेष्टाः, वस्तुकथनं चैतत्। विग्रहस्तु न्युब्जन्त्यस्मिन्निति दर्शयितव्यः। न्युब्जोपतापग्रहणं शक्यमकर्तुम्। कथम्? यस्मिन् व्याधौ न्युब्जिताः शेरते, स तान् न्युब्जयति, तत्र ण्यन्तात् पचाद्यचि न्युब्ज इति सिद्धम्। न चात्र घञचोः स्वरे विशेषः थाथादिसूत्रेण घञ्यपि अन्तोदात्तत्वविधानात् **(प्रदीप., पद.)**। 'उद्ज' आर्जवे इत्यस्य दस्य बः, अथवा **'असिद्धे भ उद्जेः'** इत्यनयेष्ट्या दकारस्य मकारे कृते, जश्त्वेन बकारो भवति। यदा तु बकारोपधः 'उब्ज आर्जवे' इति, तदा 'समुद्र' इत्यत्र बकारस्य दकारो वक्तव्यः **(न्यास.)**।

**उपयमनम्** (उप + यम + ल्युट्)। विवाहः। 'विभाषोपयमने' (१।२।१६)। उपयमने = विवाहेऽर्थे यमधातोः सिच् पाक्षिकः किद् भवति। रामः सीतामुपायस्त—उपायत वा। उद्वोढेत्यर्थः। सिचः कित्त्वपक्षे 'अनुदात्तोपदेश......' इति मकारलोपे 'ह्रस्वादङ्गात्' इति सिचो लोपः। उदाहरणे—'उपाद् यमः स्वकरणे' (१।३।५६)। इत्यात्मनेपदम्।

**नित्यं हस्ते पाणावुपयमने। (१।४।७७)**। 'हस्ते' 'पाणौ' इत्येतौ शब्दौ कृञि नित्यं गतिसञ्ज्ञौ भवतः, उपयमने = विवाहेऽर्थे **(का.)**। हस्तेकृत्य, पाणौकृत्य। गतिसञ्ज्ञाफलं 'कुगतिप्रादयः' इति समासः, ततो ल्यप्। स्वीकारमात्रमुपयमनशब्दार्थोऽत्र इत्यन्ये **(सि.कौ.)**। एदन्तत्वमौदन्तत्वमनयोश्च निपात्यते **(बाल, तत्त्व.)**। उदाहरणे—तत्पुरुषे कृतीत्यलुक् **(बृहच्छब्देन्दु, न्यासः)**। उपयोगः (उप + युज् + घञ्) लघूपधगुणः, 'चजोः कुः घिण्यतोः' धर्मादिप्रयोजनो विनियोगः।

अर्थान्तराण्यपि सन्ति, यथा—आचरणम्, भोजनम् **(वाच.)**। तत्र **उपयोगे = धर्मादिप्रयोजने विनियोगे कृञ्धातुरात्मनेपदं भवति**। शतं प्रकुरुते, सहस्रं प्रकुरुते। धर्मार्थं शतं विनियुङ्क्ते इत्यर्थः **(का.)**। धर्मादीत्यादिः कामादिपरिग्रहाय **(न्यासः)**। उपयोगः = नियमपूर्वकं विद्याग्रहणम्। आख्यातोपयोगे। (१।४।५९)। उपयोगे = नियमपूर्वकविद्याग्रहणपूर्णेऽर्थे साध्ये य आख्याता = उपदेष्टा स कारकसञ्ज्ञोऽपादानसञ्ज्ञश्च भवति। उपाध्यायादधीते। उपयोगे किम्? नटस्य गाथां शृणोति। तेषां मन्त्राणामुपयोगे (नियमपूर्वकग्रहणे) द्वादशाहमधःशय्येति नियमो भिक्षाचरणादिः **(पद.)**।

**उपसर्गः** (सञ्ज्ञाविशेषः) (उप + सृज् + घञ्) गुणः, चजोः कुः घिण्यतोरिति कुत्वम्। तद्विधायकं शास्त्रम्—'उपसर्गाः क्रियायोगे' (१।४।५९)।

प्रादयः क्रियायोगे 'उपसर्ग' इति सञ्ज्ञां लभन्ते। प्रादयश्च—प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप इमे द्वाविंशतिः। एतेषां क्रियायोगे गतिसञ्ज्ञाऽपि भवति। एतदतिरिक्तानामपि केषाञ्चनोपसर्गत्वम्, यथा—

(क) 'मरुच्छब्दस्योपसङ्ख्यानम्'। मरुद्दत्तो मरुत्तः। 'अच उपसर्गात्तः' इति तत्त्वम्।

(ख) श्रच्छब्दस्योपसङ्ख्यानम्। श्रद्धा।

(ग) अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसङ्ख्यानम्। 'उपसर्गे धोः किः' इति किः। अन्तर्धिः अन्तर्धा, अन्तर्भवाणि इति सिद्धिः। 'समास' इति गत्यर्थम्। **उपसर्गप्रदेशा यथा—**

**१. विभाषोपसर्गे (२।३।५९)**। देवनार्थस्य उपसृष्टस्य दिव्धातोः कर्मणि कारके पाक्षिकी षष्ठी भवति—शतस्य शतं वा प्रतिदीव्यति। सहस्रस्य सहस्रं वा प्रतिदीव्यति। निरुपसृष्टस्य तु दिवस्तदर्थस्य इति कर्मणि नित्यैव षष्ठी, तत्र सूत्रम्—'दिवस्तदर्थस्य' (२।३।५८) इति। देवनार्थभिन्ने विजिगीषाद्यर्थे तु उपसृष्टस्यापि दीव्यतेर्योगे द्वितीयैव—शलाकां प्रतिदीव्यति।

**२. 'यसोऽनुपसर्गात्' (३।१।७१)**। 'यसु प्रयत्ने' दैवादिकोऽयं धातुः, तस्माद् दिवादिभ्यः श्यन्निति दिवादिसामान्यसूत्रेण नित्ये श्यनि प्राप्तेऽनेन अनुपसर्गात् पाक्षिकः श्यन् विधीयते। पक्षे कर्तरि शप्। यस्यति, यसति। सोपसर्गात्तु—आयस्यति, प्रयस्यति। 'यसोरनुपसर्गात्' इति श्यनो विकल्पनात् तदभावे शपि। उपसृष्टात्तु प्रयस्यति इति श्यनेव (**माधवः**)।

अत्र **भाष्यम्**—'अनुपसर्गादिति शक्यमकर्तुम्'। कथमायस्यति, प्रयस्यतीति? 'संयसश्च' (३।१।७२) इति नियमार्थं भविष्यति—'सम्पूर्वादेव यसो नान्यपूर्वादिति। अत्र वदन्ति—'यस इत्येवास्तु। ततः समः नियमार्थमिदम्। सोपसर्गाद् यसश्चेत् सम्पूर्वकादेवेति। एवञ्च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणम्, उत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यम्' (**तत्त्व.**)।

३. 'आतश्चोपसर्गे' (३।१।१३६)। उपसृष्टाद् आदन्ताद् धातोः 'क'-प्रत्ययो भवति। **'श्याद्-व्यधास्रुसंस्रवतीण-वसावहृ-लिह-श्लिष-श्वसश्च'** (३।१।१४१) इति णस्यापवादः। सुग्लः प्रज्ञः।

**४. 'आतश्चोपसर्गे' (३।३।१०६)**। उपसृष्टादादन्ताद् धातोरङ् भवति भावे, अकर्तरि कारके च। प्रदा उपदा।

अत्र कश्चिद् विशेषः—१. षत्वे णत्वे च चिकीर्षिते 'दुर्' इत्यस्य 'उपसर्ग'सञ्ज्ञा निषिध्यते—'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वाच्यः'। तेन दुर्भवानि, दुःस्थितिरित्यादिसिद्धिः।

**उपसर्गः**—लोके क्रियाऽव्यवहितपूर्वप्रयोगभाजः प्रादयः उदन्ता द्वाविंशतिरुपसर्गाः, ते प्राग्धातोः। **उपसर्गप्रदेशा अन्येऽपि यथा**—

३।२।६१, ३।२।९९, ३।२।१४७, ३।३।२२, ३।३।५९, ३।३।९२, ५।१।११८, ५।८।८५, ५।८।११९, ६।१।९१, ६।२।१७७, ६।३।९७, ६।३।१२२, ७।१।६७, ७।४।२३, ७।४।४७, ८।१।५३, ८।२।१९, ८।३।६५, ८।३।८७, ८।४।१४, ८।४।२८।

उपसर्गव्यावृत्त्यै सूत्रेषु 'अनुपसर्ग' इति पदमुपादीयते। उपसर्गाणां कश्चनापि निश्चितोऽर्थो नास्ति, इमे खलु धातुसंयोगेन प्रतीयमानानां तत्तदर्थानां द्योतका एव, न तु वाचकाः। यथा—भवति, प्रभवति। अत्र प्रभवनार्थोऽपि भवतेरेव, 'प्र'शब्दस्तद्द्योतक एव, अत एव केवलस्य 'प्र' इत्यस्य अर्थाभिधायिता नास्ति। एषां निश्चितार्थाभावेऽपि प्रायः प्रसिद्ध एवार्थः। ते च, **प्रक्रियाकौमुद्याः सञ्ज्ञाप्रकरणे** 'उपसर्गाः क्रियायोगे' इति सूत्रे **प्रसादटीकायां** स्पष्टाः (**प्र.कौ.**)।

**उपसर्जन**—(उप + सृज + ल्युट्) अप्रधानम्। पाणिनीयव्याकरणे सञ्ज्ञाविशेषः। तद्विधायकं तत्तच्छास्त्रम्—

**१. 'प्रथमानिर्दिष्टं समास उपसर्जनम्' (१।२।४३)**। समासविधायकशास्त्रेषु यत् प्रथमान्तेन निर्दिष्टम्, तद्बोध्यं समासविग्रहवाक्यघटकं पदम् 'उपसर्जन' इति सञ्ज्ञां लभते। यथा—कृष्णं श्रितः कृष्णश्रितः। अत्र समासविधायकं शास्त्रम्—'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति, तत्र प्रथमान्तनिर्दिष्टं द्वितीया इति, समासविग्रहवाक्यघटकं द्वितीयान्तं पदम् 'कृष्णम्' इति, तदुपसर्जनसञ्ज्ञम्। उपसर्जनसञ्ज्ञाफलं तु 'उपसर्जनं पूर्वम्' इति तस्य परिनिष्ठितवाक्ये पूर्वप्रयोगः। अन्यच्च—

**२. 'एकविभक्ति चापूर्वनिपाते' (१।२।४४)**। विग्रहवाक्ये यन्नियतविभक्तिमत् पदं भवति, तदप्युपसर्जनसञ्ज्ञाभाग् भवति, परं तस्य पूर्वप्रयोगो न भवति। यथा—निष्क्रान्तो वाराणस्या निर्वाराणसिः। अत्र 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः, तत्र 'वाराणस्या' इति पदं नियतविभक्तिमत् पञ्चम्यन्तमेव, तस्योपसर्जनत्वम्, तत्फलञ्च— 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः, ततो निर्वाराणसिरिति सिद्धम्। उपसर्जनसञ्ज्ञकस्य क्वचित् परप्रयोगोऽपि। यथा—'राजदन्तादिषु परम्' (२।२।३१)। दान्तानां राजानो राजदन्ताः, अत्र षष्ठीति समासे, तस्य प्रथमान्तत्वेन, तद्बोध्यस्य 'दन्तानाम्' इति पदस्य पूर्वेण पूर्वप्रयोगे प्राप्ते, अनेन परप्रयोगः।

**'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (४।१।५४)** स्वाङ्गवाचि यदुपसर्जनम्, असंयोगोपधं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् भवति।

अतिक्रान्ता केशान् अतिकेशी अतिकेशा माला।

**'वोपसर्जनस्य' (६।३।८२)**। पाक्षिकः सादेशः—सहपुत्रः। सपुत्रः। इत्यलं पल्लवितेन।

**वीणापाणिरसौ** सतीमणिरलं माता यदीया मता
वेदव्यासकृपात आविरकरोच्छ्रीकूटपद्यान्यहो।
भूयोऽपाठयदात्मजान् सुरगिरं न्यक्कृत्य रिक्थस्पृहां
तातो मे सुकृतीश्वरः **पशुपति**स्ताभ्यां नमस्कुर्महे॥१॥

श्रीमत्कालजयाढ्यचारुसरणीगोपाङ्गनाऽऽलिङ्गितो
यश्च श्रीशतभेदिसाधनधनप्रोद्वृत्तकर्मात्मधीः।
वेदाधिष्ठितसर्ववीथिपटलाऽतिक्रान्तसङ्क्रान्तभा
**गोपीनाथ**महद्गुरुर्विजयते कालत्रयाराधितः॥२॥

अशकलसकलश्रीसाधनाध्यानधन्यो
जयति जगति गोपीनाथ एष प्रकामम्।
सपदि स मनुदेवस्तत्कृपाबिन्दुराजी-
मुकुलमुकुलमाश्रित्यालिलेखात्र मङ्क्षु॥३॥

लेखोऽयन्तु **विशुद्धवैभवमहाकाव्यानुजः** सुन्दरः
पातिव्रत्यजयानुजोऽपि भगिनी**सारस्वती**सोदरः।
भूयश्चापि **कबीरवैभव**महाकाव्याग्रजोऽभूत्पुनः
श्रीमद्वैष्णववैभवाऽभिधमहाकाव्याग्रजन्माऽस्त्यहो॥४॥

**श्रीमच्छाङ्करवैभवा**ग्रजमणि**र्विद्वद्विनोदा**नुजो
भूयो **मञ्जुलमालवीय**जनिभूचम्पूसहोदर्यभाः।
**विद्वद्वैभव**सोदरोऽप्यथ सुहृ**द्वैमानिकस्या**दृतो
लेखोऽयं लघुकाय एव विदुषां मोदाय दायस्सदा॥५॥



# प्रतिषेधपर्यालोचनम्

**डॉ. कमलाकान्तत्रिपाठी**
अध्यक्षः
मीमांसाविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



चेतनानां प्रवृत्तिः क्वचित् स्वेच्छया भवति क्वचिच्चान्यप्रर्वतनाजनितेच्छया भवति। शब्दश्रवणान्तरं प्रवृत्तौ जायमानायां परस्यैव प्रवर्तकत्वं भवति। प्रवर्तना च पुरुषप्रवृत्तिहेतुः प्रवर्तकधर्मः। स एव लिङाद्यर्थः। शब्दश्रवणोत्तरं जायमानत्वाद् घटादिवद् वृद्धव्यवहारादेव लिङादीनां प्रैषादिरूपप्रवर्तनायां शक्तिरस्तीति निश्चीयते। लोके पुरुषाशयविशेषः प्रैषापरपर्यायः प्रवर्तनोच्यते। वेदे तदसम्भवात् प्रवर्तनाविशेषरूपो विधिप्रेरणानियोगशब्दव्यवहार्यो लिङादिनिष्ठः स्थायी धर्म एव कल्प्यते। तस्य धर्मस्य प्रवृत्तिहेतुत्वात् प्रवर्तनालक्षणसमन्वयोऽपि भवति। विधिश्च स्वप्रवर्तकत्वसिद्धये स्वविषययागादिनिष्ठेष्टसाधनत्वमाक्षिपति। एवमेव यागादौ पुरुषं प्रवर्तयति। इत्थं न्यायसुधाकृन्मतेन विध्यर्थो निरूपितो भवति।

पार्थसारथिमिश्रास्तु लिङादिनिष्ठातिरिक्तधर्मान्तरमकल्पयित्वा प्रवर्तनात्वेन क्लृप्तस्येष्टसाधनत्वस्यैव विध्यर्थत्वमाहुः। अतिरिक्तधर्मान्तरकल्पने तस्य धर्मस्य सद्भावः प्रवृत्तिं प्रति हेतुत्वं लिङादिनिष्ठत्वं तल्लक्ष्यत्वमिति चतुष्टयकल्पनागौरवमायाति। अतो लाघवाद् धात्वर्थगतस्य समीहितसाधनत्वस्यैव प्रवृत्तिहेतुत्वात् प्रवर्तनात्वेन तदेव विध्यर्थ इति कल्प्यते। असौ विध्यर्थ एव शाब्दीभावनेति व्यवह्रियते मीमांसकैः।

एवमेव 'न कलञ्जं भक्षयेत्', 'ब्राह्मणो न सुरां पिबेत्' इत्येवमादौ निवर्तनैव लिङाद्यर्थः प्रवर्तनावत्। सा च निवर्तना पुरुषनिष्ठनिवृत्तिहेतुर्निवर्तयितु-धर्म एव शाब्दीभावनापदेनैव व्यपदिश्यते। शुद्धो लिङादिः प्रवर्तनां प्रतिपादयति नञ्समभिव्याहृतस्तु निवर्तनामित्येव विशेषः। एवं नञो द्योतकत्वमात्रं निवर्तनायां लिङादेरेव शक्तिरिति निपातोपसर्गाणां द्योतकत्वसिद्धत्वान्निश्चीयते।

निषेधाश्च निवर्तनाभिधानद्वारा स्वनिवर्तकत्वसिद्धये निषेध्यस्यानिष्टसाधनतामाक्षिपन्तः पुरुषं निवर्तयन्ति।

एवं स्थिते प्रस्तुतेऽस्मिन् निबन्धे निषेधविषयमवलम्ब्य विचार्यते—

किं तावत् प्रतिषेधवाक्यनिचये स्वर्गः फलं कल्प्यते,
आहो किं प्रतिषिद्धकर्मजफलानर्थः परं वार्यते।
अस्मिन्नेव नञो विधेर्भवति वा सङ्गोऽथवा नो पुनः
क्रत्वर्थस्य विलक्षणत्वमपि यद्यस्तीह तच्चिन्त्यते ॥१॥
कुत्राऽऽस्ते पुरुषार्थता कुत इति क्रत्वर्थता वा पुनः
कल्प्यः कुत्र निषेध एव कथमित्यस्वीकृतिः कुत्रचित्।
तस्यैवाष्टविकल्पदोषभयतस्त्यागस्तथाऽङ्गीकृति-
र्दोषाभाववशाच्च शास्त्ररचनाकारस्य वा का स्थितिः ॥२॥

अत्र 'न कलञ्जं भक्षयेत्' इत्येवमादिवाक्येषु द्विधा पूर्वपक्षः सम्भवति। एकः पर्युदासपक्षं स्वीकृत्य प्रतिषेधपक्षं स्वीकृत्यापरः। तत्र नञ्विध्योः समन्वयः प्रतिषेधः पर्युदासोऽपरः। पर्युदासपक्षीयः पूर्वपक्षः।

भक्षयेदिति विधिस्तावद् भक्षणस्य कर्तव्यतां विधत्ते। लिङो भक्षयतेरुपश्लिष्टत्वेन पदश्रुतेर्बलीयस्त्वात्। नञः कलञ्जभक्षयतिव्यवधानान्न प्रत्ययेनाभिसम्बन्धः। अतो भक्षणावरुद्धाद् विधेः प्रच्युतो नञ् पदान्तरेण सम्बद्धः पर्युदासं गमयति। सुबन्तयोः शब्दयोः समास एव पर्युदासस्य स्वीक्रियमाणत्वादसति समासे नाव्यवहितेनापि कलञ्जेन नञः सम्बन्धः। अतः समासत्वाभावात् कलञ्जेनासम्बध्यमानो नञ् भक्षयतिना सम्बध्यते। तथा च कलञ्जादिविशिष्टभक्षणाभाव एव विधिना विधीयते। भक्षणप्रागभावरूपस्य कलञ्जाभक्षणस्यानुष्ठानासम्भवाद् विधिसम्बन्धार्हं भक्षणव्यतिरिक्तं सर्वासु क्रियास्वनुरूपं सङ्कल्पादिरूपं क्रियान्तरं नञ्धातुभ्यां लक्षणया प्रतिपाद्यत इति फलजिज्ञासायां वाक्यशेषाभावाद् रात्रिसत्रन्यायेनार्थवादिकफलस्यालब्धत्वात् 'स स्वर्गः स्यात् सर्वान् प्रत्यवशिष्टत्वात्'[1] इति विश्वजिन्न्यायेनाश्रुतोऽपि स्वर्गः फलं कल्प्यते। उक्तमेतत् पार्थसारथिमिश्रैरपि—

'तस्मान्नञ्भक्षयतिभ्यां मिथः सम्बद्धाभ्यां लक्षितोऽभक्षणं नाम मानसो व्यापारः सङ्कल्पाख्यः फलार्थिनाऽनुष्ठेय इति'[2]।

---

१. मीमांसादर्शने-अ.४, पा.३, सू.१५। २. तन्त्ररत्ने-अ.६, पा.१, सू.१९।

कथं सङ्कल्पस्यैव लक्षणा न स्पर्शादिक्रियाणामिति? सङ्कल्पस्यैव सर्वासु क्रियास्वनुस्यूतत्वादिति दत्तमुत्तरम्। यथाहुर्वार्तिककारमिश्राः[1]—क्रियां कुर्वन् प्रथमं तावत् सङ्कल्पं करोति, तदुत्तरकालं तस्यां प्रवर्तते, इति।

एवं सति स्वर्गकामनाभावाद् न वर्जनीयं कलञ्जभक्षणमिति न नित्यत्वं सम्भवति।

**प्रतिषेधपक्षीयः पूर्वपक्षः**

यदि नञ्विध्योरन्योन्यं सम्बन्धमङ्गीकृत्य प्रतिषेध एवैवञ्जातीयकेष्वाग्रहस्तथापि तत्र सङ्कल्पानन्तरमेव निवृत्तेर्जायमानत्वात् क्रियावदेव तद्वर्जनस्यापि भवत्येव मूलभूतः सङ्कल्पः क्रियातद्वर्जनचोदनयोस्तस्य नान्तरीयकत्वात्। अस्मिन् पक्षे नञ्भक्षयतिप्रतिपादितो भक्षणाभावो विधिसम्बन्धानर्हः सन् स्वमूलभूतं सङ्कल्पमेव लक्षणया प्रतिपादयति।

पूर्वस्मिन् पक्षे तु धातुनैव भक्षणं सङ्कल्पश्च सामान्येन प्रतिपाद्यते। ततो नञा श्रुत्या प्रतिपादितं भक्षणं त्यक्त्वा 'न भक्षये' इति सङ्कल्प एवार्थाद् विधिविशेषणरूपतया प्रतिपाद्यते। एवं 'नोद्यन्तमादित्यमीक्षेत' इत्यादौ प्रजापतिव्रते आदित्यानीक्षणसङ्कल्पविधिर्यथा स्वीकृतश्चतुर्थे[2], तथैवात्रापि सङ्कल्पविधिरेव न्याय्यः। अतः स्वर्गकामाधिकारत्वात् काम्यत्वमेव।

विषम उपन्यासः। प्रजापतिव्रतानां नित्यत्वमिव नित्यत्वमेव कथं, न? सत्यम्। प्रजापतिव्रतेषु 'एतावता हैनसा वियुक्तो भवती'ति वाक्यशेषबलादेनोनिबर्हणं रात्रिसत्रन्यायेन[3] फलं स्वीक्रियते। तस्य सर्वैरपि सदाऽपेक्षितत्वाद् नित्यमनुष्ठानं सिध्यति। अपि चादित्योदयस्य शतृप्रत्ययेन निमित्तत्वप्रतीतेर्निमित्ते सति नैमित्तिकस्य सदानुष्ठानस्यैव न्याय्यत्वम्। अत्र तु द्वयोरप्यविद्यमानत्वाद् विश्वजिन्न्यायेन स्वर्ग एव फलमिति स्वर्गकामाधिकारत्वेनैवञ्जातीयकानां न नित्यत्वप्रसक्तिः।

**सिद्धान्तपक्षः**

न कलञ्जभक्षणादिवाक्येषु प्रजापतिव्रतन्यायावतारः सम्भवति। प्रजापतिव्रतेषु उपक्रमे कर्मवाचिव्रतशब्दश्रवणवशात् कर्मसामान्यस्य विशेषं विना

---

१. तन्त्ररत्ने टुप्टीकायाम्; २. मी.द. ४।१।३।

३. जै.सू. ४।३।१८।

पर्यवसानाभावात् तदपेक्षायां कर्मविशेषपरत्वनिश्चयादभावस्य च प्रतिषेधपक्षे कर्मसामान्यवाचिव्रतशब्देनान्वयस्यानुपपन्नत्वाद् नञीक्षतिभ्यां लक्षणयाऽनीक्षण-सङ्कल्परूपः पर्युदासः स्वीक्रियते। ततः प्रकरणाद्यभावेन यागोपस्थितेरभावादेव क्रत्वर्थत्वं परित्यज्य भावनया कर्त्राक्षेपपुरःसरपुरुषार्थत्वमेवाङ्गीकृतम्। स्पष्टमुक्त-मेतत् सर्व पार्थसारथिमिश्रैः[१] —

उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः।
तदन्वयबलात् कर्मविशेषोऽतोऽत्र चोद्यते॥
तेन लक्षणयाऽप्यत्र पर्युदासः स च क्रतोः।
बहिः श्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति॥
श्रुत्यादिक्रतुसम्बन्धे प्रमाणं नात्र विद्यते।
पुरुषापेक्षितार्थत्वं विधिना चावबोधितम्॥
साक्षादपेक्षितं तस्य फलमेव न तु क्रतुः।
अतः फलार्थता तच्च वाक्यशेषादघक्षयः॥इति।

अत्र तु व्रतस्थानीयस्य कर्मसामान्यवाचिनः पूर्ववाक्यस्याभावान्न नञ्धात्वोः परस्परसम्बन्धः। श्रुत्यर्थविधानाय कर्तव्यतावाचिनैव नञः सम्बन्धः क्रियते। अन्यथा सङ्कल्परूपार्थप्रतिपादनाद् नञ् भक्षयतिश्चेत्युभयमपि लाक्षणिकं स्यात्। यदप्युक्तं व्यवहितत्वान्न प्रत्ययेन सम्बन्धो नञः, अपि तु धातुनैवेति तदपि श्रुत्यर्थविधानानुग्रहाय व्यवहितसम्बन्धस्यैव न्याय्यत्वादुपेक्ष्यते। तथा च सूत्रम्[२] —

'शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते, तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः'। इति।

सूत्रार्थस्तावत् प्रजापतिव्रतेषु 'तस्य व्रतमिति, नेक्षेतोद्यन्तमादित्यमिति, एतावता हैनसाऽयुक्तो भवति' इति त्रयाणां शास्त्राणां प्रयोजनवत्त्वेनैकार्थ्यसिद्धये फलार्थसङ्कल्पविधेरौचित्यं भवत्येव, 'न कलञ्जं भक्षयेत्' इत्यादिषु तु फलार्थ-सङ्कल्पविध्यर्थत्वे प्रमाणभूतयोर्व्रतोपक्रमफलश्रवणयोः समवायाभावाद विध्यतिक्रम एव वाक्यार्थ इति।

एवं कर्तव्यतात्मकरागादिप्राप्तविध्यर्थस्य निवारणमेव नञा प्रतिपाद्यते, स एव निषेधेषु वाक्यार्थ इति विधेरतिक्रमो निवारणमिति सूत्रकारमतेन निश्चीयते।

---

१. शास्त्रदीपिकायां, पृ. ३५१; २. जै.सू. ६.२.२०।

निषेधाधिकारेषु सर्वत्रैव निवारणापरनामधेयनिवर्तनावाक्यार्थसिद्धौ नैकविधा वचनव्यक्तय: प्रदर्श्यन्ते आचार्यै:। तथा हि—

अभावप्रतिपादकत्वेन क्लृप्तस्य केवलस्य नञस्तथा प्रवर्तनाप्रतिपादकत्वे क्लृप्तस्य केवलस्य लिङादेर्विधेर्नास्ति निवर्तनाबोधजनकत्वे सामर्थ्यम्। अत एव नैकस्य निवर्तनावाचकत्वम्; अपि तु विनिगमनाविरहात् पङ्कजपदे यथा पङ्कजनिधात्वोरुभयोरपि शक्त्यन्तरं कल्पयित्वा पद्मत्वप्रकारकपद्मविशेष्यकबोध: स्वीक्रियते, तथैवात्रापि नञ्लिङोरुभयोरपि निवर्तनाबोधजनकत्वं, यत् कलञ्जभक्षणं तन्न कुर्यादिति वचनव्यक्ति: समाश्रीयते। अथवा उपसर्गवद् निपातानां द्योतकत्वमङ्गीकृत्य तस्य च तात्पर्यग्राहकत्वे केवलस्य लिङ एव निवर्तनावाचकत्वम्। अत्रापि पूर्ववदेव वचनव्यक्ति:।

प्रवर्तनायामेव लिङ: शक्ति:, निवर्तनायान्तु तस्य शक्तिस्वीकारे गौरवापत्ते-स्तस्यां लक्षणैवेति पक्षस्तूभयत्रैव प्रचुरप्रयोगादेव निराकृतो भवति। अथवा विरोधप्रतीतिजनकत्वेन क्लृप्तस्य केवलस्य नञ एव विरोधिविशेषरूपायां निवर्तनायां शक्तिकल्पनाया औचित्याद् निवर्तनावाचित्वम्। तथा च यत् कलञ्जं भक्षयेत् तन्नेति वचनव्यक्तिर्भवति। अयमेव पक्ष: पार्थसारथिमिश्रैरपि स्वीक्रियते। यथोक्तं तत्रैव[1]—

'क: पुन: नञर्थ:? निवारणमिति ब्रूम:। तथा हि येनासौ व्याहृतस्तस्यैव प्रतिपक्षमभिधत्ते। ततश्च यथैव 'नास्ति' इत्यत्रास्तिशब्दयुक्त: सत्त्वप्रतिपक्षमसत्त्वं प्रतिपादयति, तथैव प्रेरणात्मकविधिसमभिव्याहृतस्तत्प्रत्यनीकं निवारणं प्रतिपादयति'। इति। अनेनैव न्यायेन समीहितसाधनतैव विधिरिति पक्षेऽनिष्टसाधनत्वं नञर्थ:। इममेव पक्षं न्यायप्रकाशार्थसङ्ग्रहकारादयो नवीना एव स्वीकुर्वते[2]। विध्यर्थमुख्य-विशेष्यकशाब्दबोधाङ्गीकर्तॄणामेवंप्रकारकं मतमुपक्षिप्य खण्डदेवशम्भुभट्टप्रभृतयो नव्या भावनामुख्यविशेष्यकशाब्दबोधं स्वीकुर्वाणा: प्रकारान्तरमाहु:। ते हि नञ्विध्योरुभयोर्लिङ एव वा निवर्तनायां शक्त्यन्तरकल्पने गौरवप्रसक्तेर्न पक्षद्वयमाद्यं स्वीकुर्वन्ति। नञो निवारणावाचकत्वमप्ययुक्तमिति कथयन्ति। तथा हि—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्था: षट् प्रकीर्तिता:॥

इति वृद्धवचनेन विरोधार्थप्रतीतावपि नञो विरोध्यन्तरवाचकत्वे शक्ति-कल्पनायां नास्ति प्रमाणान्तरम्। 'नास्ती'त्यादावपि नञो न सत्त्वप्रतिपक्षभावान्तर-

१. तन्त्ररत्ने; २. प्रतिषेधानां प्रयोजनवत्त्वप्रतिपादनप्रसङ्गे।

प्रतिपादकत्वम्; अपि तु सत्त्वाभावमात्रं प्रतिपादयति तत्। यत्र तु अभावस्य प्रत्यक्षबाधो यथा ब्राह्मणविरोधिनि ब्राह्मण एव अब्राह्मण इति प्रयोगे तत्रैव स्वसमभिव्याहृतार्थविरोध्यर्थप्रतीतिः। यत्र तु नास्ति प्रत्यक्षबाधो यथा शूद्रादावब्राह्मण इति प्रयोगे, तत्र तदभाववत्त्वेनैव नञर्थप्रतीतिः। अत एव नञोऽभावे शक्तिस्तदन्येष्वर्थेषु लक्षणेत्यभियुक्तोक्तिः सङ्गच्छते। एवमन्यत्रापि विधिसमभिव्याहृतस्य नञः प्रवर्तनाभावमात्रवाचकत्वमङ्गीकार्यं न निवर्तनावाचकत्वम्।

एतेन[1] श्रीमदनन्तदेवेन केवललिङो निवर्तनाप्रतीत्यभावात् लिङ्तात्पर्यग्राहकसत्त्व एव निवर्तनावाचकत्वम्। नञस्तात्पर्यग्राहकत्वमङ्गीकृत्य लिङ एव निवर्तनावाचकत्वं न सम्भवति। यतो हि तथा सति नञोऽर्थाभावेन प्रातिपदिकसंज्ञाभावात् पदत्वस्य सुबन्तप्रयुक्तस्याभावात् पदत्वव्यवहारो न स्यात्। लिङस्तात्पर्यग्राहकत्वे तस्य चार्थभावनारूपस्यार्थान्तरस्य सत्त्वाद् भवत्येव पदत्वव्यवहार इति यदुक्तं तत्तु क्लृप्तशक्तिकत्वाल्लिङ एव निवर्तनावाचकत्वे सति नञस्तात्पर्यग्राहकत्वकल्पने लाघवात् लिङ्निष्ठस्य किञ्चिदलौकिकधर्मविशेषस्य प्रवर्तनात्वेन क्लृप्तस्य निवर्तनात्वकल्पनापेक्षया गौरवादेवापास्तम्। नञः पृथक्पदत्वव्यवहारस्तु तस्य प्रवृत्त्यभाववाचकस्य तात्पर्यग्राहकत्वस्वीकारे लिङ एव निवर्तनावाचकत्वकल्पनायामप्युपपद्यते।

'अमानोनाः प्रतिषेधे' इत्यभियुक्तवचनमपि द्योतकत्वपक्षेऽपि भवत्युपपन्नम्। अत एव निवर्तनावाक्यार्थत्वपक्षे लिङ एव निवर्तनावाचकत्वमाश्रयणीयम्। एतेन रागादिनार्थतः प्राप्तभक्षणादिप्रवर्तनोद्देशेन नञा निवर्तना विधीयत इति पक्षोऽपि निराकृतो भवति। लिङो रागादिनिष्ठस्य प्रवर्तनावाचकत्वस्य लोकवेदयोरुभयोरप्यक्लृप्तत्वादननुवादकत्वात्।

अत एव श्रीखण्डदेवाचार्याः 'न लिङोऽपि निवर्तनायां शक्तिः, अपि तु अनुकूलव्यापारत्वे अखण्डोपाधौ वे'त्याहुः। एवं तस्यैकैव शक्तिः कल्पनीया भवेत्। अन्यथा केवलस्य तस्य प्रवर्तनायां नञः सत्त्वे निवर्तनायामित्याहत्य शक्तिद्वयकल्पनाप्रसक्तिः स्यात्। नञोऽभावे यथा प्रवृत्तिनिरूपितत्वं संसर्गस्तथैव नञः सत्त्वे प्रवृत्त्यभावनिरूपितत्वमिति न किञ्चित् कल्पनीयम्। भावनैव मुख्यविशेष्या। विधेश्च स्वप्रयोज्यत्वसम्बन्धेन यत्नरूपायां भावनायामेवान्वयः। सर्वमेतदुक्तं मीमांसाकौस्तुभे[2] —

---

१. भाट्टालङ्काराभिधायां न्यायप्रकाशटीकायाम्; २. मीमांसाकौस्तुभे-१।२।७।

'अतश्चात्रापि प्रवृत्तेस्तदभावस्यानुकूलत्वस्य चान्यत एव भानाल्लिङो नातिरिक्ता निषेधस्थले शक्तिः; किन्तु विधिसाधारण्येनाखण्डोपाधावेवेति सिद्धम्'। इति।

एतदेव प्रतिपादयन्ति श्रीशम्भुभट्टा अपि। तथा ह्युक्तं तैरेव[1]—

'न लिङः प्रवर्तनायां निवर्तनायां वा पृथक् शक्तिकल्पनम्, गौरवात्; अपि तु प्रवृत्त्यनुकूलव्यापारात्मिकायां प्रवर्तनायां प्रवृत्तेराख्यातलभ्यत्वात्, अनुकूलत्वस्यापि सम्बन्धभावेनान्यलभ्यत्वात् केवलं व्यापारमात्र एव लाघवात्। तस्य च व्यापारस्य यथैव नञोऽसत्त्वे प्रवृत्तिप्रयोजकत्वात् प्रवर्तनात्वेन व्यवहारः, तथैव नञःसत्त्वे प्रवृत्त्यभावजनकत्वाद् निवर्तनात्वेन व्यवहारः। एवञ्च विधिनिषेधयोरुभयोरपि लिङा व्यापारत्वेन रूपेण व्यापाराभिधानेऽपि तस्य यथाक्रमं स्वप्रयोज्यत्वसंसर्गेण स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेण भावनाऽन्वयात् व्यापारस्य प्रवर्तनात्वं निवर्तनात्वञ्च सिध्यति' इति।

**अत्रैवाचार्यसामरस्योद्भावनम्**

प्रवर्तनां रागादिप्राप्तामनूद्य नञा निषिध्यत इति पक्षस्यापाततः प्रतीतावपि नाचार्याणां तत्र सम्मतिरिति ग्रन्थपर्य्यालोचनया प्रतीयते।[2] तन्त्ररत्नग्रन्थेऽपि— 'यद्भक्षयितव्यमिति रागादिप्राप्तक्रियाकर्तव्यतानुवादेन नेति निषिध्यते भक्षणस्य कर्तव्यता या भवताऽवगता सा नास्ति, सन्निहितसुखलवदर्शनात्तु मोहात् साऽवगतेति। अस्मिँश्च पक्षे न विधिनिषेधयोर्विषयभेदः; किन्त्वेक एव भावनात्मा विषयः। तत्रैव प्रेरणं विध्यर्थः, निवारणं निषेधार्थ इति स्वरूपमेवानयोर्भिन्नं न विषयः' इति वाक्यैः कृतिविषयतारूपकर्तव्यताया एव विधिनिषेधौ स्त इति न प्रवर्तनानुवादकत्वं पार्थसारथिमिश्रसम्मतम्।

सूत्रकारो भाष्यकारश्चैतदेवाभिप्रैति। सूत्रकारः स्पष्टं ब्रूते—'विध्यतिक्रमो निषेधस्थले वाक्यार्थ' इति। तेन च यत् कुर्याद् रागादिप्राप्तक्रियाकर्तव्यतानुवादेन तन्नेति नञा निषिध्यत इत्येव सिद्ध्यति। एवमेव भाष्यकारोऽपि भक्षयितव्यमिति भक्षणं कर्तव्यमिति शब्देनोच्यते नेति तत्प्रतिषिध्यते श्रुत्यैवेति कर्तव्यताया एव पूर्वोक्ताया निवारणं वाक्यार्थमिति दर्शयति। अतः प्रवृत्त्यनुवादेनैव तदभाव-फलकनिवर्तनाया एव वाक्यार्थत्वमिति पार्थसारथिमिश्रस्य सूत्रकारस्य भाष्य-

---

१. प्रभावल्याम्-६।३।५।

२. तन्त्ररत्ने-६।२।५।२०।

कारस्य चाभिमतः पक्ष एव श्रीखण्डदेवेन प्रतिपाद्यते, न किञ्चिदन्यदिति निश्चीयते।

**प्रतिषेधे फलकल्पना**

एवं निषेधस्थले फलं किमिति विचारप्रस्तावे भाष्यकारा एवमाहुः—अस्ति निषिद्धानुष्ठाने दोष इति, तत्परिहार एव फलत्वेन कल्पनीयो भवति। ननु कलञ्जादिभक्षणं यद्यपि प्रतिषिद्धमस्ति, तथापि तत्र दोषस्य श्रवणाभावाद् नास्ति तत्कल्पनाप्रसङ्गः। कथमिति चेत्? प्रमाणाभावात् तत्कल्पनायाम्। अतः कलञ्जभक्षणवर्जनं न कर्तव्यम्। सत्यम्। कलञ्जभक्षणं न वर्जनीयं भवेत्, यदि दोषः कल्प्यः स्यात्। दोषस्य क्लृप्तत्वादेव वर्जनीयं तत्। कथम्? शिष्ट-विगर्हणात्। कलञ्जभक्षणब्राह्मणहननाद्यनन्तरं हि शिष्टा विगर्हयन्ति निषिद्ध-कर्मानुष्ठातारं पतितोऽयं कर्मफलेभ्य इति। शिष्टवर्जनमात्रेणैव दोषस्य परिणाहता गम्यते। यदि दोषाधिक्यं न स्यात्, तर्हि कथं शिष्टा वर्जयेयुरिति। अतः शिष्टविगर्हणादेव प्रत्यवायपरिहारो वर्जनफलमिति निश्चीयते। वार्तिककारास्तु पक्षान्तरं प्रतिपादयन्ति। तथा हि—

न तावत् शिष्टविगर्हणमात्रेण परमाभिलषणीयतया सुखसाधनरूपस्य कलञ्जभक्षण-सुरापान-परस्त्रीगमनादेर्विवर्जनीयता सम्भवति। सर्वमेतद् रहस्य-मनुष्ठीयेत चेत् शिष्टविगर्हणाभावाद् निरर्गलानुष्ठानप्रसक्तिः स्यात्। अतः शिष्टविगर्हणं दोषज्ञानोपायत्वेनैव वर्णनीयं न दोषत्वेन। 'महाँश्चैष दोषो यच्छिष्टा वर्जयन्ति' इत्यत्र यदित्यस्य पञ्चम्यन्ताव्ययत्वं स्वीकृत्य यस्मात् शिष्टा वर्जयन्ति तस्मान्महान् दोष इत्यर्थकरणे दोषवत्त्वेनैव वर्जनं कलञ्जभक्षणादेः सिद्ध्यति। स्मृत्याचारयोरपि धर्माधर्मयोः प्रामाण्यस्य स्वीकारात्, तत्र च निषिद्धाचाराणां दोषवत्त्वेनैव प्रत्यभिज्ञानात् तेषां नरकपातफलत्वमेव। अस्मिन् विषये निषेध एवानर्थफलजनकत्वे प्रमाणं भवति। लोके तावत् सर्पाङ्गुलिदानादि यद् यद् वर्जनीयत्वेनावगतं तत्तद् दोषवदस्ति यथा, तथैव वेदेऽपि निषेधेन वर्जनीयताबुद्धे-र्जायमानत्वात् तस्याश्च दोषकल्पनामन्तरेणानुपपत्तेः श्रुत्यर्थापत्त्या दोषवत्त्वं कल्प्यते, विश्वजिदादिषु विधेः प्रवर्तकत्वानुपपत्त्या स्वर्गफलकल्पनमिव। उक्तमेवैतत् पार्थसारथिमिश्रैः—'निषेधस्यापि निवारकता नासति दोषफलत्वे निर्वहतीति तद्बलेनाश्रुतोऽपि दोषः कल्प्यते' इति। अमुमेव सिद्धान्तमुररीकृत्य प्रतिषेधा अपि स्वनिवर्तकत्वसिद्धये निषेध्यस्यानिष्टसाधनतामाक्षिपन्तः पुरुषं ततो निवर्तयन्तीति

श्रीखण्डदेवशम्भुभट्टापदेवलौगाक्षिभास्करप्रभृतीनां ग्रन्थः प्रावर्तत। तथा हि श्रीखण्डदेवेनोक्तम्[१]—

'चेतनप्रवृत्तिनिवृत्त्योश्चेष्टानिष्टसाधनताज्ञानं विनाऽसम्भवाद् विधि-निषेधाभ्यानिष्टानिष्टसाधनत्वं प्रवृत्तिनिवृत्तिविषयस्याक्षिप्यते' इति।

**अत्र प्राभाकरमतम्**

गुरुस्तावत् प्रमाणान्तरागोचरस्य लिङादिमात्रशब्दाभिधेयस्य कार्यत्वेन स्वीकृतस्य स्वर्गकामनियोज्यान्वयानुगुण्येनापूर्वस्य स्वविषये यागादौ नियुञ्जानस्य नियोगापरपर्यायस्यैव विध्यर्थत्वं प्रतिपादयति। निषेधस्थले नित्यस्थले च विधिसिद्ध्यर्थमेवाऽनुष्ठानं भवति, न फलकल्पनमित्यपि प्रतिपादयति। यथोक्तं तन्मतानुवादे पार्थसारथिमिश्रैः[२]—

'नैमित्तिकनिषेधाधिकारयोर्विध्यनुष्ठानमात्रपरिनिष्ठितत्वात्' इति।

**तन्मतखण्डनम्**

अवश्यमेव कल्पनीयं फलम्। यतो हि यथा तैरश्रुतफलकेषु विश्वजिदादिषु सापेक्षितत्वात् स्वर्गकामो नियोज्यः कल्प्यते, तथैव निषिध्यमानक्रियाकर्तृरूपो निषेधाधिकारेष्वपि कल्प्यते। नियोज्यस्य कल्पनां विना विध्यर्थस्यापूर्वरूपस्य कार्यतानुपपत्तेः। सुखप्राप्तिदुःखपरिहारातिरिक्तस्य वस्तुनः कार्यत्वं तदुपायं विना न सम्भवतीति फलकल्पनमवश्यंभावि। कृतिसाध्यत्वे सति प्रधानत्वमेव कार्यत्वं भवति। तदेव च कृतिसाध्यं भवति यस्मिन् कृते समीहितावाप्तिरकृते च प्रत्यवायः। अत एव यदि भक्षणं प्रत्यवायजनकं भवति, तदैव तद्वर्जनकार्यताऽपि प्रत्यवाय-परिहारोपायत्वेन घटेत नान्यथा। एवं निषिद्धानां कलञ्जभक्षणादीनां प्रत्यवायजनकत्वे सिद्धे तत्परिहाराय तद्वर्जनमपि यावज्जीवं कार्यमिति जीवदधिकारा एव नित्यवत् 'न कलञ्जं भक्षयेत्' इत्येवञ्जातीयका न स्वर्गाधिकारा इति सिद्धम्।

एते सर्वेऽपि पुरुषार्था एव प्रतिषेधाः प्राप्तिमपेक्षमाणा रागतो यत्र प्राप्तिस्तत्रैव प्रवर्तन्ते। यत्र निषिध्यमानस्य रागतः प्राप्तिर्नास्ति; अपि तु शास्त्रत एव तत्र नाङ्गीक्रियते प्रतिषेधः; अपि तु पर्युदास एव स्वीक्रियते। तदस्वीकारे तु विकल्पप्रसक्तिः स्यात्। तथा हि 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति

---

१. मीमांसाकौस्तुभे-१.२.७ विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति सूत्रे।

२. न्यायरत्नमालायाम्, पृ. ९।

चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इति यागमात्रोद्देशेन अनारभ्याधीतस्य विहितस्य ये यजामहस्य 'नानुयाजेषु ये यजामहं करोति' इति श्रुतस्य प्रतिषेधत्वमुत पर्युदासत्वं भवतीति विचारणायां विकल्पप्रसक्तेः पर्युदासत्वमाश्रितम्। अत्र प्रतिषेधवादिनः पक्षे अनारभ्यवादेन प्राप्तो ये यजामहोऽनुयाजे श्रुत्यैवाऽनूद्यते प्रतिषिध्यते च। पर्युदासपक्षे च नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तयागा लक्षणया प्रतिपाद्यन्ते। अत एव लक्षणाप्रसङ्गात् प्रतिषेध एव श्रुत्यर्थलाभाय स्वीकरणीयः। यदि नञोऽनुयाजशब्दसम्बन्धः स्यात्, तर्हि नञ्समासप्रसङ्गः स्यात्। वार्तिककारः कात्यायनः 'वावचनानर्थक्यं स्वभावसिद्धत्वादि'ति ब्रुवन् सुबन्तसम्बन्धे नित्यसमासं व्यवस्थापयति। एवं हि ज्ञायतेऽसौ वाक्यसमासयोर्भिन्नार्थत्वमेव मनुते। यदि ह्येकार्थत्वं स्यात्, तर्हि समासनियमाद् वाक्यस्य निवृत्तिः स्यात्, ततश्च वाक्यस्य निवृत्तिर्मा भूदिति वावचनस्यावश्यकर्तव्यता स्यात्। एवं सति वार्तिककारो 'वावचनानर्थक्य'मिति न ब्रूयात्। एवं हि ऐकार्थ्याभावे तत्तदर्थप्रतिपादनाय वाक्यस्य समासस्य चोभयोरपि स्वभावसिद्धत्वात्तद्वचनं न कर्तव्यमिति वार्तिकस्योपपत्तिर्भविष्यति। समासस्य नित्यत्व एव समासगम्यः पर्युदासः प्राप्येत। समासाभावे तु नञाख्यातेन सम्बद्ध्यमानः प्रतिषेधायैव। प्राचां मते विध्यर्थस्य नञर्थेनान्वयो नव्यमते तु आख्यातार्थस्येति पूर्वमेव विवेचितम्। अतः प्रतिषेधः प्राप्तिमपेक्षमाणो रागतो ये यजामहस्य प्रसक्त्यभावाद् यजतिषु ये यजामहं करोतीति शास्त्रादेव प्राप्तिमनुरुध्योभयोर्विधिनिषेधयोः शास्त्रत्वाविशेषात् तुल्यबलत्वेन विकल्प एवाङ्गीकरणीयः।

यद्युच्येत सामान्यविषयतावच्छिन्नस्य विधिविषयस्य ये यजामहस्य प्रतिषेधत्वेऽतुल्यबलत्वेनैव बाध एव किन्न स्यात्, न विकल्पः, पदहोमेनाहवनीयहोमस्येव। 'यदाहवनीये जुहोति' इति सामान्यविषयतावच्छिन्नस्य विधिविषयस्याहवनीयस्य 'पदे जुहोति' इति विशेषविहितेन पदेन बाधो भवतीति[१] 'अविशेषेण यच्छास्त्रमन्यायत्वाद् विकल्पस्य तत्सन्दिग्धमाराद् विशेषशिष्टं स्यादित्यत्र सिद्धम्।

अत्रोच्यते—बाध्यबाधकभावस्य परस्परनिरपेक्षशास्त्रस्थल एव विद्यमानत्वात् पदाधिकरणकहोमे आहवनीयाधिकरणकहोमस्यापेक्षाभावादेव पदहोमेनाहवनीय-होमस्य बाधो युक्त एव। अत्र तु प्रतिषेधो यद्यपि विशेषशास्त्रमेव, तथापि स

---

१. जैमिनीयसूत्रम्, १०।८।१६;

स्वनिवर्तकत्वसिद्धये प्राप्तिमपेक्ष्यैव प्रवर्तते, अन्यथाऽसौ न प्रवर्तेत। यथोक्तं शास्त्रदीपिकायाम्[1] —

'तन्नाम प्रत्यक्षविशेषशास्त्रं सामान्यस्यानुमानिकस्य च बाधने क्षमं यन्निरपेक्षमात्मानं लभते यथा शरपदशास्त्रे कुशाहवनीययोः। ....... तेन प्रागेव कुशाहवनीयप्राप्तेः प्रत्यक्षेण विशेषशास्त्रेण च शीघ्रं विहिते शरपदे पश्चात् सामान्यद्वारा लक्षणया प्राप्यमाणयोः प्राप्तिं निवारयत इति युक्तो बाधः। अत्र तु प्रतिषेधस्य प्राप्त्यपेक्षत्वादवश्यं प्रतिषेधता शास्त्रेणैव प्राप्तिः प्रतीक्षितव्या। प्राप्तिश्च निर्दोषशास्त्रकारित्वादशक्या मिथ्या कर्तुं तस्माद् विकल्प' इति।

अत्र संस्थिते प्रतिषेधे एवमुच्यते—यस्माद् विकल्पस्तस्मादेव न प्रतिषेधः, अष्टदोषदुष्टत्वात् प्रतिषेधस्य। पक्षे शास्त्रस्याप्रामाण्यापातात् ततो पर्युदासत्वं स्वीकृत्यानुयाजव्यतिरिक्तत्वलक्षणाश्रयणमेव वरम्। विकल्पापेक्षया तस्य लघीयस्त्वात्। अपि च विधौ क्रियायां विधेयस्योपकारकल्पनावत् प्रतिषेधेऽपि क्रियायां निषेध्यस्य कश्चनोपकारः कल्पनीयः स्यात्। एवञ्च प्रतिषेध आश्रीयमाणे द्विरदृष्टकल्पनाऽपि प्रसज्येत। अत एवादृष्टकल्पनाप्रसक्तेर्विकल्पाच्च शास्त्रस्यापि भ्रान्तित्वापाताल्लक्षणैव श्रेयसीति पर्युदास एव ये यजामहविधेर्वाक्यशेषोऽयमिति निश्चीयते। तथा सति पूर्वोत्तरवाक्ययोरेकवाक्यतामङ्गीकृत्य पूर्ववाक्यप्राप्तं ये यजामहकरणमुत्तरवाक्येऽनूद्यानुयाजव्यतिरिक्तविषयता विधीयते, यजंतिषु यद् ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्विति पार्थसारथिमिश्रास्तथा तदनुयायिनो न्यायप्रकाशार्थसङ्ग्रहकारा नव्या अपि। भाट्टदीपिकाकारः श्रीखण्डदेवस्तथा तदन्तेवासी श्रीशम्भुभट्टो नञनुयाजपदाभ्यामनुयाजव्यतिरिक्तं लक्षयित्वा सप्तम्याश्चोद्देश्यत्वमङ्गीकृत्यानुयाजव्यतिरिक्तोद्देशेनाव्यवहितत्वात् तद्विशेष्यस्य यागान्तरस्य सामान्यविधिनोपस्थितत्वाद् ये यजामह एव विधीयत इति प्रतिपादयतः। ये यजामहस्य प्राप्तस्यापि अनुयाजव्यावृत्तिफलकत्वेन पुनर्विधाने बाधकाभावात्। अत एव 'आग्नेयं चतुर्धा करोति' इत्यत्राग्नेयपदस्य विशेष्यसमर्पकत्वेनोद्देश्यपरत्वं स्वीकृतं तृतीये[2]। अत्रापि सामान्यवाक्यीयसामान्यपरयागपदेन विशेषलक्षणामङ्गीकृत्य यावद् यागविशेषा उद्देश्यत्वेन स्वीक्रियन्ते, तावदेव पर्युदासवाक्येऽनुयाजव्यतिरिक्तत्वेन तेषु विशेषेषु समर्पितेषु तद्गतस्यैव पूर्वप्रतीतस्योद्देश्यत्वस्वीकार एवोचिततरः। नन्वेवं सति नञ्येयजामहपदाभ्यां ये यजामहव्यतिरिक्ताङ्गसमूहस्य लक्षणयाऽङ्गीकृतस्यानुयाजोद्देशेन ये यजामहव्यति-

१. शा.दी., १०।८।१। २. मीमांसादर्शने-३।१।१५।

रिक्ताङ्गसमूहविधिरूपः पर्युदास एवाङ्गीक्रियतामिति चेत्, न, उभयथा पर्युदासस्य सम्भवेऽपि ये यजामहव्यतिरिक्ताङ्गजातस्य विशेष्यापेक्षायां विशेष्यभूतानामङ्गानामुपस्थानाभावान्नासौ स्वीक्रियते। यत्र विशेष्यस्योपस्थितिः पूर्वं भवति, तत्रैव पर्युदासाङ्गीकारे सति वाक्यार्थस्य सम्पद्यमानत्वात् क्लिष्टकल्पनयाऽन्यथास्वीकारस्यान्याय्यत्वात्।

यत्तूक्तं पर्युदासस्वीकारे सुबन्तसम्बन्धाद् नित्यसमासापत्तिस्तथा सति 'वावचनानर्थक्यं स्वभावसिद्धत्वादि'ति वार्तिकविरोध इति। तदपि न। सुबन्तसम्बन्धे वाक्यस्याप्युपपद्यमानत्वात्, नित्यसमासे प्रमाणाभावाच्च। समासवाक्ययोरुभयोरपि विशिष्टार्थप्रतिपादकत्वस्य समानत्वात् समासविधिना वाक्यस्यासाधुत्वे सम्प्रसक्ते भगवतः पाणिनेर्विकल्पापादकं विभाषासूत्रमेव सार्थकम्। एवं सति न्यायविरोधात् कात्यायनीयवचनस्यैवाप्रामाण्यादनादरणीयता। अत एव विभाषाधिकारात् पूर्वविहितेऽव्ययीभावसमासे 'उपकुम्भमि'त्यादौ नित्यत्वान्न विकल्पस्तथा 'उपपदमतिङ्' इति सूत्रविहितस्य 'कुम्भकार' इत्यादिकस्योपपदसमासस्यापि। तत्रापि 'नित्यं क्रीडाजीविकयो'रिति सूत्राद् नित्यपदानुवर्तनात् नित्यसमासस्य वाक्यनिवृत्तेश्च स्वीक्रियमाणत्वात्। यदि कात्यायनमतमेव साधु स्यात्, तर्हि वृत्तिवाक्ययोर्भिन्नार्थत्वेन उपपदाव्ययीभावसमासेऽपि पाक्षिकवाक्यप्रयोगः प्रसज्येत। अतो वृत्तिवाक्ययोरैकार्थ्याद् नानुयाजेष्विति वाक्यस्यापि साधुत्वात् तत्र पर्युदासाश्रयणे न किञ्चिद् बाधकम्। यथोक्तं पार्थसारथिमिश्रैः[1]—'कात्यायनीयं तु वचनानर्थक्यं न्यायविरोधादनादर्तव्यम्। अस्ति हि वृत्तिवाक्ययोरैकार्थ्यं य एव 'राजपुरुष' इति वृत्तेरर्थो राजविशिष्टः पुरुषः, स एव राज्ञः पुरुष इति वाक्यस्यापि' इति।

एवं यथा विकल्पपरिजिहीर्षया पर्युदासः क्वचित् स्वीक्रियते, तथैव क्वचित् प्रसक्त्यभावादेव प्रतिषेधं पर्युदासं वा परित्यज्यार्थवादत्वं स्वीक्रियते। तथा हि—

'न पृथिव्यामग्निश्चेतव्यः, नान्तरिक्षे न दिवीत्यत्र अन्तरिक्षे दिवि च चयनाप्राप्तेर्न प्रतिषेधस्तथैव पर्युदासोऽपि न सम्भवति। नापि चयनप्रतिषेधार्थमेव तद्वाक्यमस्तीति मन्तव्यम्। चयनविधिमबाधित्वा पृथिवीचयनप्रतिषेधपर्युदासासम्भवात्। बाधे स्वीक्रियमाणे चयनविधेरानर्थक्यं स्यात्। विकल्पेऽपि पाक्षिकबाधप्रसक्तिः। न च पाक्षिकत्वायैव तयोरन्यतरत् स्वीकारो भवत्विति वाच्यम्, 'पशुकामश्चिन्वीत, प्रजाकामश्चिन्वीत' इत्यादिवाक्यैरेव

१. शास्त्रदीपिकायाम्-१०।८।१।

पाक्षिकत्वस्य सुस्थितत्वात्। पृथिवीपरत्वे प्रतिषेधस्य चयने कल्प्यत्वेन दुर्बलत्वात् स्वयमाकुलत्वम्। 'हिरण्यं निधाय चेतव्यमिष्टकाभिरग्निं चिनुते' इति विरोधाकुलीभावकारित्वञ्च तस्य। अत एवार्थवादत्वमङ्गीक्रियते। यथाऽन्तरिक्षे दिवि च चयनं न प्रसिद्धम्, तथैव हिरण्यरहितायां भूमावपीति 'हिरण्यं निधाय चेतव्यमि'ति विधेः स्तावकत्वेन तस्य स्वीक्रियमाणत्वात्।

एवमेव 'तौ न पशौ करोति, न सोमे' इत्यत्र पशौ नाज्यभागपर्युदासः स्वीक्रियते। स चाज्यभागसम्बन्धद्वारा पशावाज्यभागव्यतिरिक्तमङ्गजातं कुर्यात्। यदि वा पशुसम्बन्धद्वारा 'यद्दर्शपौर्णमासयोराज्यभागौ कुर्यात् तत् पशुवर्जितयो'-रिति रूपेण स्वीक्रियते। पशौ च विधानादेव पर्युदासे विकल्पपरिहाराभावात्, तथा दर्शपूर्णमासयोः पशुरूपत्वाभावाद् नासौ। अत एवाज्यभागयोः पशावतिदेशेन प्राप्तयोः प्रतिषेध एव स्वीक्रियते। एवं सति पशावाज्यभागयोर्विकल्पः सिद्धो भवति। एवमत्र भाष्यकारमतेन पर्युदासो वार्तिककारमतेन च प्रतिषेध इति सिद्ध्यति। प्रतिषेध एव ज्यायान्। विकल्पभीत्या पर्युदासस्याङ्गीकारः। स च तत्रापि दुष्परिहर एवेति व्यर्थं तदाश्रयणम्। यथोक्तं श्रीखण्डदेवेन—

[1]'पशुप्रकरणे' अग्नय आज्यस्यावदीयमानस्यानुब्रूहि, सोमायाज्यस्यावदीयमानस्यानुब्रूहि, अग्नय आज्यं प्रस्थितं प्रेष्य, सोमायाज्यं प्रस्थितं प्रेष्य, होता यक्षदग्निराज्यस्य जुषतां हविर्होतर्यजे'त्यादिप्रैषाणामाम्नानात्, तेषाञ्च लिङ्गादाज्यभागमात्राङ्गत्वादाज्यभागयोरपि करणप्रतीतेर्विहितप्रतिषिद्धत्वाद् विकल्प इति'।

एतस्यैवार्थवादः 'न सोम' इति। यतो हि सोमयागो न दर्शपौर्णमासयोर्विकृतिः। यदि स दर्शपूर्णमासविकारः स्यात्, तर्हि तत एवातिदेशेनोपकारपृष्ठभावेनान्यैरङ्गैः सहाज्यभागयोरपि प्राप्तिः स्यात्, ततश्च सोमे आज्यभागप्रतिषेध उपपद्येत। न चैवमिति यथा सोमे आज्यभागौ न प्रसिद्धौ तथा पशाविति पूर्वस्यायमर्थवाद एव।

यद्युच्येत 'आनर्थक्यात्तदङ्गेष्विति न्यायेन 'सप्तदशारत्निर्वाजपेयस्य यूप' इति वाजपेयस्य सप्तदशारत्निता व्यर्थीभूय तदङ्गे यूपेऽवतरति यद्वत्, तद्वदेव सोम आज्यभागयोः प्रसक्त्यभावे सोमाङ्गभूतेषु दीक्षणीयादिषु चोदकेन प्रसक्तौ प्रतिषेध उपपद्येतेति तदपि न सम्भवतीति ब्रूमः। एवं सति सोमस्याङ्गभूतेषु पशुषु तत एव प्रतिषेधस्य सिद्धत्वात् 'न तौ पशौ करोति' इति प्रतिषेधो व्यर्थः स्यात्।

---

१. भाट्टदीपिकायाम्-१०।८।२।

वस्तुतस्तु आनर्थक्यतदङ्गन्याय एवात्र न प्रसज्यते। वाजपेयस्येति षष्ठ्या सामान्येन सम्बन्धिन उपात्तत्वात् सप्तदशारत्निता विहिता, तस्य च सम्बन्धमात्रस्य परम्परयाऽपि सत्त्वाद् यूपे निवेशः सम्भवति। अत्र तु 'न सोम' इति सोमस्याधारत्वेन श्रूयमाणत्वात् परम्परासम्बन्धे आधारासम्भवात् साक्षादेव सोमसम्बन्धस्य प्रतीयमानत्वात् तस्य चाप्राप्तत्वान्न प्रतिषेधसम्भवः।

## क्वचिद् निषेधकल्पनम्

निषेधः कल्प्यस्तत्र भवति यत्रान्यतः प्रसक्तिः। तथा हि—

'दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुख उपविश्य स्वाध्यायीमधीयते'त्याचमनविधिर्यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते, तथापि वेदोच्चारणेन सह सम्बन्धात् तस्याङ्गत्वेनापि निश्चीयते। एवं सति मन्त्रवत् सर्वेषां यागानां प्रयोगविषयत्वेन तदङ्गत्वे निश्चिते 'न सोमेनोच्छिष्टा भवन्ति' इति सोमयागीयोच्छिष्टाभावप्रतिपादकवचनेन सोमयागे पीते सोमे आचमनं न कुर्यादिति निषेधः कल्प्यते। तेन च प्राप्तस्य नैमित्तिकस्याचमनस्याकरणेऽपि न क्रतुवैगुण्यसिद्धिः। क्रत्वर्थनिषेधेन निषेध्यस्य क्रतुवैगुण्यसम्पादकत्वस्यैव बोधनात्। अत्र तु सर्वयागाङ्गत्वेनावधारित-स्याचमनस्यैव क्रतुसाद्गुण्यसम्पादकत्वस्येष्टत्वात्तदकरणे वैगुण्यापातात् सोमे न तदित्येव कल्प्यते। एवमेव यत्र क्वचित् प्रतिषेधवचनाभावे केवलनिन्दार्थवादो भवति, तत्र प्रतिषेधं विना निन्दाया अनुपपत्तेः प्रतिषेधः कल्पनीयो भवति। क्वचिच्च शिष्टविगर्हणादपि स इति प्रागवोचाम। यदि प्रतिषेधकल्पने विधिव्याकोपस्तदा तस्य विध्यन्तरशेषत्वेन 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुमि'ति न्यायेनार्थवादत्वमात्रम्। यथा 'स्तेनं मनः, अनृतवादिनी वाक्' इत्येवमादौ। यथाहुर्भाष्यकाराः[१]—

'विपरिणामादिभिः कल्प्यमाने स्तेयं मृषोद्यञ्च कर्तव्यमित्यापतति। तच्चाशक्यं स्तेयामृतवादप्रतिषेधमबाधमानेनानुष्ठातुम्। न च विकल्पः, वैषम्यात्। एकः कल्प्यो विधिः, एकः प्रत्यक्षः' इति।

## प्रतिषेधस्य क्रत्वर्थपुरुषार्थत्वोपपादनम्

एतावता प्रतिपादनेन रागतः प्राप्तस्य कलञ्जभक्षणादेः प्रतिषेधस्य पुरुषार्थत्वं तथा शास्त्रतः प्राप्तस्य पशावाज्यभागद्वयस्य प्रतिषेधस्य क्रत्वर्थत्व-

---

१. शाबरभाष्यम्-१।२।२।

मित्यपि प्रतिपादितं भवति। नात्र विशेषविचारावतारः। तत्तत्प्रकरणे विद्यमानानां प्रतिषेधानां क्रत्वर्थपुरुषार्थत्वविवेकस्तु न ततो कर्तुं शक्यते। अतः पृथग्रीत्या भवत्येव विचारावसरः। तथा हि—दर्शपूर्णमासयोः 'नानृतं वदेदि'त्याम्नातम्। अत्र प्रतिषेधस्य पुरुषार्थत्वं क्रत्वर्थत्वं वेति विचारः प्रसज्यते। पुरुषार्थत्वेऽपि शुद्धपुरुषधर्मत्वमुत क्रतुयुक्तपुरुषधर्मत्वमिति। प्रतिषेधस्य पुरुषार्थत्वञ्च पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वम्। क्रतुसम्बन्धिपुरुषगतायोग्यतासम्पादक-क्रियाविषयत्वं क्रतुयुक्तपुरुषधर्मत्वम्। क्रतुगतवैगुण्यापादकक्रियाविषयत्वं शुद्धक्रतुधर्मत्वम्। अत्राख्यातस्य कर्तृवाचकत्वमङ्गीकृत्य पुरुषप्रत्यवायस्यैव वदनक्रियाफलत्वं समानाभिधानश्रुतेर्विधिश्रुतेश्चाङ्गीकर्तव्यम्। प्रकरणात् क्रतूपकार-फलकत्वं न सम्भवति। प्रकरणात् श्रुतेर्बलीयस्त्वात्। यदि भावनैवाख्यातार्थ इत्याग्रहस्तदापि भावनाक्षिप्तस्य कर्तुरुपस्थितिसम्भवात् 'वदेदिति' पुरुषप्रयत्न-श्रवणात् 'यदर्था क्रिया तदर्थः प्रतिषेधः' इति न्यायात् पुरुषधर्मत्वमेव युक्तम्। अस्य चोपनयनात् प्रभृत्येव प्रवर्तमानत्वात् स्मार्तस्याप्यनृतवदनप्रतिषेधस्येयमेव श्रुतिर्मूलमिति प्रथमः पक्षः।

पुरुषस्य प्राधान्यावगतावपि प्रत्यवायकल्पनापेक्षया क्रतुनिष्ठफलाधाना-योग्यत्वस्यैव प्रकरणेन निश्चयात् क्रतुनिष्ठपुरुषधर्मत्वमेव युक्तम्। तथा सति 'प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः' इति स्मृतेः सनातनग्रहणसूचित-सार्वकालिकत्वेन मूलान्तरस्वीकारोऽवश्यंभावी। अतः सततानृतवर्जनसमुपेतस्य पुरुषस्य क्रतावनृतवदनाप्रसक्तेरनुवादत्वमेव। अस्मिँश्च पक्षे प्रकरणादुत्कर्षाभावात् श्रुतिप्रकरणयोरुभयोरप्यनुग्रहः। प्रयोजनन्तु प्रथमपक्षे स्मार्तप्रायश्चित्तम्। 'गायत्री तु शुना दंष्टे चापले चानृतेऽपि चे'त्यादिस्मृतिविहितम्। द्वितीये पक्षे याजमानत्वम्। प्रायश्चित्तं तु याजुर्वेदिकयज्ञशेषनिमित्तं सिद्धान्तवदेव।

उभयविधे पूर्वपक्षे प्राप्ते सिद्धान्तः। कर्तुराख्यातवाच्यत्वेऽपि भावनाया एव मुख्यविशेष्यत्वात्तस्योपसर्जनत्वेन स्वीकारान्न प्राधान्यम्। कर्तुः प्रयोजनवत्तासिद्धये प्रकरणाम्नानबलेन तस्यैवालोचने क्रतोरेव झटित्युपस्थितत्वात्तद्वैगुण्य-परिहारकल्पनाया एवौचित्यम्। वस्तुतस्तु भावनाया एवाख्यातवाच्यत्वात् कर्तुश्च लक्षणयापि प्रतीतेर्जायमानत्वाद् वाच्यत्वाभावात् 'नानृतं वदेदि'ति प्रतिषेधस्य शुद्धक्रतुधर्मत्वमेव।

यद्युच्येत अनृतवदनप्रतिषेधस्य क्रत्वर्थत्वेऽपि नाविदितवेदनात्मकविधित्वं सम्भवति; अपि तु नित्यानुवादितैवेति। पुरुषं परित्यज्यानृतवदनस्य क्रतौ

प्राप्त्यभावात् पुरुषे प्रसक्तौ च प्रतिषेधस्य क्रतावपि सम्भवात्। यो हि पुरुषः स्वार्थमनृतं वर्जयति क्रत्वर्थमपि वर्जयत्येव। अत एव पुरुषार्थप्रतिषेधस्यान्तराले विद्यमानत्वात् क्रतुप्रतिषेधस्य नित्यानुवादितैवेति। तदपि न। स्मार्तप्रतिषेधात् क्रत्वर्थप्रतिषेधस्य फलभेदादेव भिन्नविषयकत्वेनानुवादासम्भवात्। स्मार्तप्रतिषेधे हि स्वकीयदोषपरिहारः फलम्। तथा सति यागानुष्ठानकालेऽपि तदतिक्रमे प्रत्यवाय एव भवेत्, न यागवैगुण्यम्। उक्तमेव वार्तिककारपादैः[१]—

यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।
न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः॥ इति।

अयं भावः—नानृतं वदेदिति स्मृतेरयमेवार्थो यद् दर्शपूर्णमासानुष्ठान-कालेऽनृतवदनेन नरकः प्राप्यते, यागफलमविकलमपि तथैव प्राप्यत इति। श्रौतप्रतिषेधस्य दर्शपूर्णमासप्रकरणस्थत्वात्तदतिक्रमे वैगुण्याद् दर्शपूर्णमासापूर्वमेव न स्यात्, न तु पुरुषस्य प्रत्यवायः कश्चित् स्यात्। एवं संयोगान्तरस्य सत्त्वाद् विधित्वमेव नानुवादता। तथा च सूत्रकार आह—'विधिर्वा संयोगान्तरात्' इति[२]।

एवं हि फलवत्सन्निधावफलं तदङ्गमिति न्यायेन साध्याकाङ्क्षायां दर्शपूर्णमासोपकारस्यैव सम्बन्धेनाङ्गत्वं यथा प्रयाजादीनां तथैवानृतवर्जनस्यापि। 'नानृतं वदेत्' इत्यस्याङ्गस्य नञोऽभावेऽनृतवदनेन दर्शपूर्णमासोपकारं भावयेदिति वचनव्यक्तिर्यथैव सम्पाद्यते, तथैव नञः सत्त्वे यत् कुर्यात् तन्नेति वचनव्यक्तिलाभाद् दर्शपूर्णमासोपकाराय वदतः पुरुषस्य यदनृतं प्रसज्यते, तत्प्रतिषेधो विधीयत इत्यवगम्यते। तेन च सर्वत्र क्रतौ संवादेऽनृतवर्जनीयता सिद्ध्यति। अतो दर्शपूर्णमासयोर्व्रीहियवयोर्विकल्पाद् व्रीहिमयं पुरोडाशं सङ्कल्प्य न यवमयः कर्तव्य इति सिद्धं भवति। यथा हि वार्तिककारा आहुः[३]—

'शुद्धक्रतुधर्मप्रतिषेधे तु यावत् क्रतौ किञ्चिद् वदनं यजमानस्यर्त्विजां वाऽनृतं प्रसज्यते तत्सर्वं न कर्तव्यं क्रतुसम्बन्धित्वाविशेषात्'। इति।

क्वचित्तु प्रकरणगतस्यापि तत उत्कृष्यमाणस्य पुरुषार्थत्वमेव स्वीक्रियते। नरकपरिहारार्थत्वेन तस्य स्वीक्रियमाणत्वात्। प्रत्यवायसम्बन्धिन एव तस्य तथात्वेन क्रतुगतत्वाभावाच्च। वाक्येन पुरुषार्थत्वात् प्रकरणात्तस्य बलीयस्त्वात्। यथा 'न ब्राह्मणायाऽवगुरेत्, न हन्यात्, न लोहितं कुर्यादि'त्यत्र

---

१. तन्त्रवार्तिके-३।४।४। २. जैमिनिसूत्रम्-३।४।१३;

३. तन्त्रवार्तिके तृतीयचतुर्थाधिकरणसिद्धान्तसूत्रे।

वाक्येनावगुरमाणस्य हननं लोहितञ्च कुर्वाणस्य धर्मः सिद्ध्यति। प्रकरणगतत्वे फलकल्पना, पुरुषार्थत्वे तु तस्य क्लृप्तत्वम्। तथा च भवति वाक्यशेषः[१]—'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्, यो निहनत् तं सहस्रेण यातयात्, यो लोहितं करवद् यावतः प्रस्कन्द्य पांसून् सङ्गृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयादि'ति।

क्वचिच्च प्रकरणगतत्वेऽपि क्रतौ प्रसक्त्यभावात् पुरुषार्थत्वमङ्गीकृतम्। तथा हि—दर्शपूर्णमासयोः प्रकरणे श्रुतस्य 'न मलवद्वाससा संवदेत' इति रजस्वलासंवादप्रतिषेधस्य पुरुषार्थत्वम्। ननु रजस्वलया सह संवादस्य रागतः प्रसक्तावपि यजमानपत्न्या सहापि तस्य दर्शपूर्णमासयोरध्वर्योः 'पत्नि पत्न्येष ते लोकः' इत्यनेन प्रसज्यमानत्वात् प्रतिषेधस्य क्रत्वर्थत्वमेवास्त्विवति चेत्, न, क्रत्वर्थत्वेन प्राप्तस्य संवादस्य प्रतिषेधे, स्यात्तस्य क्रत्वर्थता, तेन च विकल्पप्रसक्तिरपि। न चास्ति तया सह संवादस्य क्रत्वर्थत्वेन प्राप्तिः। सर्वस्मादपि क्रत्वनुष्ठानान्निवर्तितायास्तस्याः संवादे प्रसक्त्यभावात्। अस्ति च निवर्तकवचनम्[२]—'यस्य व्रत्येऽहनि पत्न्यनालम्भुका स्यात् तामपरुध्य यजेत' इति। पुरुषस्य स्वकार्ये स्वातन्त्र्यात् स्वाभाविकप्रियानुरागवशात् सार्वकालिकसंवादस्य प्राप्तिः सम्भवत्येव। ततश्च रागतः प्रसज्यमानस्य रजस्वलया सह संवादस्य प्रतिषेधत्वे तस्य प्रयोजनवत्ता सिद्धा भवति। एवम्भूतानां क्वचिद् विद्यमानानां स्मृतीनां मूलमियं श्रुतिरित्यपि सिद्ध्यति।

इत्थमुपक्रमादिशास्त्रबलेन विकल्पप्रसक्त्या च प्रतिषेधमनादृत्य पर्युदासः स्वीकृतस्तथा पर्युदासेऽपि विकल्पावश्यम्भावात् प्रतिषेध एव 'न तौ पशौ करोती'त्येवमादौ। रागतः प्राप्तस्य प्रतिषेधे प्रकरणाभावादेव पुरुषार्थता, तस्य शास्त्रतः प्राप्तस्य च क्रत्वर्थता। रागतः प्राप्तस्यापि प्रकरणे यदि प्रतिषेधस्तदा क्वचित् क्रत्वर्थता, क्वचिच्च पुरुषार्थता प्रतिपादिता। पुरुषार्थप्रतिषेधस्य प्रत्यवायः क्रत्वर्थस्य च क्रतुवैगुण्यं फलं यदि रागतः प्राप्तं प्रतिषिद्ध्यते। शास्त्रतः प्राप्तस्य च क्रत्वर्थत्वेन प्रतिषेधे प्रतिषिध्यमानस्यानुष्ठानाभावेऽपि क्रतूपकारसिद्धिः फलत्वेन कल्प्यते, अनुष्ठाने तु फलाधिक्यमात्रम्। ननु शास्त्रतः प्राप्तस्य प्रतिषेधे विकल्पप्रसक्त्या पर्युदासः स्वीकृत इति कथमुच्यते निषिध्यमानस्यानुष्ठानाभावेऽपि क्रतूपकारसिद्धिः फलमिति चेत्? सत्यम्; विकल्पप्रसक्त्या पर्युदास एव स्वीक्रियते, तथापि यत्र विकल्पप्रसक्तावपि पर्युदासो न सम्भवति, तत्र प्रतिषेध एव स्वीक्रियते,

---

१. तैत्तिरीयसंहिता-२।६।१०। २. तैत्तिरीयब्राह्मणे-३।७।१;

यथा 'अतिरात्रे षोडशिनं गृह्णाति' इति शास्त्रेण प्राप्तस्यातिरात्राधिकरणकषोडशिग्रहस्य 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन प्रतिषेधः। तथा चोक्तम्—'शिष्ट्वा तु प्रतिषेधः स्यादि'ति[१]। अत्र न पर्युदासो लक्षणायां प्रमाणाभावात्, प्राप्त्यभावाच्च नार्थवादः स्वीक्रियते। पर्युदासस्यासम्भवस्तु षोडशिपदार्थस्य नञर्थेन सम्बन्धे षोडशिग्रहविधेर्वैयर्थ्यापत्तेः, अतिरात्रपदार्थस्य च तेन सम्बन्धे तथैव तथात्वापत्तेश्च।

ननु प्रयाजाद्यङ्गविधिभिः क्रतुसाद्गुण्यजनकत्वाक्षेपवत् 'नानृतं वदेत्' इतिवत् क्रतुवैगुण्यजनकताक्षेपात् षोडशिग्रहणस्यैकस्यैव क्रतुसाद्गुण्यवैगुण्यजनकत्वं विरुद्धमिति चेत्, न, एतादृक्स्थले षोडशिग्रहणाभावेऽपि क्रतुसाद्गुण्योत्पत्तिरितराङ्गैरेवेत्येतावन्मात्रस्य कल्पनीयत्वाद् निषेधेन, विधिना च तस्य क्रतुसाद्गुण्ये सहकारित्वस्यैवाक्षेपात्। अत एव ग्रहणे प्रवृत्तिसिद्धये फलाधिक्यमपि कल्प्यते। यथोक्तं श्रीखण्डदेवेन[२]—

'अत एव प्रथमतो विधिप्रवृत्त्या प्रतियोगिप्रसिद्धौ जातायां निषेधेन निषेधे कृते पश्चाद् विधेयस्य फलभूमकल्पनमिति विशेषः' इति।

अयं भावः—अभावज्ञाने प्रतियोगिनः प्रसिद्धिरावश्यकी। अतो निषेधेन प्रवृत्त्यभावरूपनिवृत्तिबोधनाय षोडशिग्रहणप्रवृत्तिरूपस्य प्रतियोगिनः प्राप्तिः पूर्वमेव 'अतिरात्रे षोडशिनं गृह्णाती'ति विधिप्रवृत्तिमुपजनय्य विधीयते। ततश्च निषेधेन निषेधे कृते पश्चादेव विधेयस्य षोडशिग्रहणस्य फलाधिक्यं कल्प्यते।

सिद्धं तावत् विकल्पसिद्ध्यर्थमेव प्रतिषेधो यत्र प्राप्तिरपि शास्त्रतः। स च क्रत्वर्थः पर्युदासस्य चासम्भविताऽथवा तत्रापि विकल्पः।

यत्र पुनः कर्तुः प्राप्त्यभावादेव न प्रतिषेधो नापि पर्युदासः सम्भवति प्रतिषेधवाक्यं तु भवति, तत्र कर्तारमुद्दिश्य क्रियाया एव प्रतिषेधः स्वीक्रियते विकल्पसिद्ध्यर्थमेव। तथा हि—आधानप्रकरणे 'वारवन्तीयं गायति, वामदेव्यं गायति, यज्ञायज्ञीयं गायति' इति सामानि विधाय 'न ब्रह्मा सामानि गायति' इति प्रतिषेधः श्रूयते। अत्र ब्रह्मणो विध्यभावादेव ब्रह्मकर्तृकः प्रतिषेधः पर्युदासो वाऽसम्भवी। गाने वाचनिकस्योद्गातुरेव कर्तृत्वात्। उभयोरभावादर्थवादत्वमङ्गीकर्तव्यं तर्हि चेत्? न, विध्यन्तरस्य शेषत्वाभावात्। विधिशेषो ह्यर्थवादः। अपि चास्यैव प्रतिषेधस्य शेषभूतो दृश्यतेऽयमपरोऽर्थवादः—'उपवीता वा

---

१. जैमिनीयसूत्रम्-१०।८।६। २. भाट्टदीपिकायाम्-१०।८।३।

एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति। भवतु वाऽनन्तरोक्तार्थवादमात्रम्। ततः परं निन्दोन्नीतनिषेधवाक्यकल्पनम्। एवमप्युक्तयुक्तेरेव नार्थवादत्वम्। अतो ब्रह्मपदस्य ब्राह्मणपरत्वमङ्गीकृत्य तस्य चोद्गातर्यपि सत्त्वात्तदुद्देशेन गानस्यैव निषेधो भवत्यतो गानस्यैव विकल्पः।

अपि च कल्पसूत्रावलोकनेन यदा ब्रह्मोद्गात्रोर्वैकल्पिको विधिर्निश्चीयेत, तदापि तेनैव विकल्पस्य सिद्धत्वाद् वैयर्थ्यान्न ब्रह्मणो निषेधः, अपि तु गानस्यैव विकल्पसिद्धये।

**विकल्पाप्रसक्तौ पर्युदासः प्रतिषेधो वेति विचारः**

यत्र प्रतिषेधे सत्यपि विकल्पो न प्रसज्यते, तत्र पर्युदासो भवति प्रतिषेधो वेति भवत्येव विचारावसरः। तथा हि—आहिताग्निर्यजमानः सोमयागं चिकीर्षुः 'अग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणः' इति वाक्यविहितां दीक्षणीयेष्टिमनुष्ठाय दीक्षितो भवति। तमधिकृत्येदं वचनं श्रूयते—'दीक्षितो न ददाति न जुहोति न पचति' इति। अत्र प्रतिषेधः पर्युदासो वेति विचार्यते।

यदि दीक्षितपदार्थस्य नञर्थेन सहान्वयस्तदा दीक्षितभिन्नो दानपाकहोमान् कुर्यादिति, यदि वा धात्वर्थस्य तदा दीक्षितो दानपाकहोमभिन्नं कुर्यादिति पर्युदासः स्यात्। तयोरन्यतरत् पक्षमाश्रित्य पर्युदास एव स्वीकर्तव्यः। प्रतिषेधस्वीकारे शास्त्रेणैव प्राप्तस्यात्यन्तबाधायोगाद् विकल्पप्रसक्तेः। ननु पर्युदासेऽपि व्यतिरिक्तलक्षणापत्तेः प्रकरणत्यागप्रसङ्गाच्च षोडशिग्रहणवत् प्रतिषेध एव ज्यायान्, तस्य च प्रसक्तिपूर्वकत्वात् 'यावज्जीवमग्निहोत्रं जुहोती'ति दीक्षितादीक्षितसाधारण्येन विहितस्याग्निहोत्रहोमादेरेवेति चेत्? न, षोडशिग्रहणादौ पर्युदासासम्भवादेव प्रतिषेधोऽङ्गीकृतः। अत्र च सम्भवति पर्युदासे अलं प्रतिषेधसमाश्रयणेन, विकल्पप्रसक्तेः। तथा हि—विशेषाभावाद् 'ग्रहैर्जुहोती'ति ज्योतिष्टोमे प्रत्यक्षविहितानां ग्रहहोमानां तथा 'प्रकृतिवद् विकृतिः कर्तव्या' इत्यतिदेशेन प्राप्तानां 'चतुरवत्तं जुहोती'ति विहितानां चतुरवत्तहोमादीनां यावज्जीविकतया च पुरुषार्थत्वेन प्राप्तानामग्निहोत्रहोमानां प्रतिषेधे स्वीक्रियमाणेऽपि प्रत्यक्षविहितानां ग्रहहोमानां न बाधः। तेषामौपदेशिकत्वेन बलवत्त्वात्। अतश्चतुरवत्ताग्निहोत्रहोमानामेव बाधोऽङ्गीकार्यः। तथा सति ग्रहहोमानां प्रतिषेधे स्यादेव विकल्पप्रसक्तिः।

अत एव न क्रत्वर्थानां होमानां प्रतिषेध इति ब्रूमः। उक्तप्रकारेण विकल्पप्रसक्तेः। पुरुषार्थानामेव यावज्जीविकतया विहितानां प्रतिषेधान्न विकल्पप्रसक्तिरिति चेत्? मैवं वोचः, पुरुषार्थत्वेन नित्यतया शास्त्र-प्राप्तानामप्यत्यन्तबाधायोगाद् विकल्पस्य दुरुद्धरत्वात्। अतः पर्युदास एव। स च दूरस्थेनापि अग्निहोत्रादिविधिनैकवाक्यतामङ्गीकृत्य तद्विधिशेषत्वेन स्वीक्रियते 'अदीक्षितोऽग्निहोत्रादि कुर्यादि'ति।

नैतद् युज्यते, अग्निहोत्रादिविधेः सन्निहितत्वाभावात्। अतः क्रत्वर्थानामेव होमादीनां पर्युदासः स्वीकरणीयतामापद्यते। नासावाहत्य विहितानामुक्तन्यायात् सम्भवति। पारिशेष्यादातिदेशिकानां चतुरवत्तहोमादीनामेव वक्तव्यः। स च न सम्भवति। यतो हि ते दीक्षितस्यैव विहिताः सन्ति। तस्मात् प्रतिषेध एव।

यद्येवं तर्हि न दीक्षितशब्देन नञः पर्युदासत्वम्; अपि तु दानादिभिरेव 'दीक्षितो दानादिभिन्नानि प्राकृतान्यङ्गानि कुर्यादि'त्येवंरूपम्। तथा च न कोऽपि दोषः।

सत्यम्। एवमप्ययं पर्युदासः सन्निधानाभावाद् नाग्निहोत्रादिविधेः शेषो भवितुमर्हति। अपि च प्राकरणिकानामेव दीक्षोत्तरकाले जातानां भविष्यति। तथा सति पुरुषार्थहोमादिपर्युदासत्वसिद्धान्त एव भग्नः स्यात्। यद्युच्येत विकल्पप्रसक्त्या प्रतिषेधमनाश्रित्य कथञ्चिदेकवाक्यतां स्वीकृत्याग्निहोत्रादिविधिशेषरूपः पर्युदास एवेति। तदपि न, विकल्पप्रसक्तेरभावात्। यदि न विकल्पप्रसक्तिस्तदा प्रधानसम्बन्धलाभात् लक्षणास्वीकारप्रकरणत्यागादिदोषाभावाच्च प्रतिषेध एव ज्यायान्। विकल्पपरिहारप्रकारस्त्वेवम्—

'एकार्थास्तु विकल्प्येरन्' इति न्यायेनैकप्रयोजनकानामेव तुल्यबलत्वेन विकल्पो भवति, यथा 'अग्निहोत्रं जुहोति' इति प्राप्तहोमानुवादेन 'दध्ना जुहोति', 'पयसा जुहोती'त्यादिविहितानां विकल्पः, यथा च दर्शपूर्णमासप्रकृतिद्रव्यत्वेन 'व्रीहिभिर्यजेत, यवैर्यजेत' इति विहितयोर्व्रीहियवयोर्विकल्पः।

अत्र तु ऐकार्थ्याभावान्न विकल्पः। यदि विधिप्रतिषेधावुभावपि पुरुषार्थौ क्रत्वर्थौ वा स्यातां ततो विकल्पः। यथा 'न तौ पशौ करोती'त्यादौ पशौ विकल्प आज्यभागयोः। पुरुषार्थतया विहितानामग्निहोत्रादीनां नित्यत्वेन क्रतुमध्येऽपि प्राप्तानां प्रतिषेधः क्रत्वर्थतया यदि क्रियते ततो न विकल्पः। यथोक्तं पार्थसारथि-मिश्रैः—'अग्निहोत्रादीनामयं प्रतिषेधः क्रत्वर्थतया विधीयते'[1] इति। श्रीखण्डदेवे-

१. तन्त्ररत्ने-१०।८।७।

नापि—'यत्र तु पुरुषार्थो विधिः क्रत्वर्थो निषेधः, यथा स्त्रीगमनमांसभक्षणादेः पुरुषार्थः स्मार्तो विधिः क्रत्वर्थश्च श्रौतः प्रतिषेधः, न च तत्र विकल्पः' इति।[1]

अयं भावः—'ऋतौ भार्यामुपेयात्, देवान् पितृन् समभ्यर्च्य मांसमश्नन्नदोषभागि'ति पुरुषार्थर्तुगमनमांसभक्षणस्मार्तविधेः 'न स्त्रियमुपगच्छेत्, न मांसं भक्षयेदि'ति क्रत्वर्थश्रौतप्रतिषेधे भिन्नविषयकत्वेन न विकल्पः प्रसज्यते यथा, तथैवात्रापि क्रतुमनुतिष्ठन्नवश्यमेवाग्निहोत्रादीनि वर्जयेदिति विकल्पाभावात् प्रतिषेधस्यैव ज्यायस्त्वम्। पुरुषार्थस्य कर्मणः प्रतिषेधस्य क्रत्वर्थमुक्तं वार्तिककारैरपि[2] —

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ इति।

अयं प्रतिषेधपक्षो वार्तिककारसमर्थितः श्रीपार्थसारथिमिश्रापदेवप्रभृतिभिरङ्गीकृतश्च[3]। वार्तिककारा हि 'अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरिमितः प्रतिप्रसव' इति प्रतिपादयन्तः प्रतिषिद्धानामिति पदेन प्रतिषेधत्वमेवाभिप्रयन्ति।

ननु सूत्रकारेण[4]—'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति सूत्रेण प्रतिषेधे विकल्पप्रसक्त्यभिधानपुरःसरोऽग्निहोत्रादिवाक्यशेषरूपः पर्युदास एव सिद्धान्ते स्थापितः, भाष्यकारैश्च स एवानुमोदित इति प्रतिषेधे स्वीक्रियमाणे विरोध इति चेत्, न, विकल्पाभावात् फलतः पर्युदासस्य लाभात् सूत्रभाष्यकारोक्तेः समाधीयमानत्वात्। अतस्तयोरपि मते न पर्युदासस्य पारमार्थिकत्वम्। पर्युदास उक्तदोषापातात् प्रतिषेधे दोषाभावात् स एव ज्यायान्।

नव्याः श्रीखण्डदेवप्रभृतयस्तु सूत्र एव समाहितमतयः प्रतिषेधे विकल्पप्रसक्तिमुद्भाव्य पर्युदासपक्षमेवोररीकुर्वन्ति। तथा हि—

प्रतिषेधे यादृग्रूपता तादृग्रूपेणैव पुरुषार्थत्वेन प्रसक्तिर्भवति चेत्, तदैव प्रतिषेधो न्याय्यः, नान्यथा। प्रकृते तु होमस्यासाधारण्येन दीक्षितत्वमात्रेण न प्रसक्तिः; अपि तु यावज्जीविकतया नित्याग्निहोत्रस्य दीक्षितादीक्षितसाधारण्येन प्रसक्तिरस्ति। प्रतिषेधश्च दीक्षितपुरस्कारेणैव क्रत्वर्थतया। अतस्तादृग्रूपेण

---

१. तत्रैव, भाट्टदीपिकायाम्।

२. तन्त्रवार्तिके, व्याकरणाधिकरणे-१।३।२९।

३. तन्त्रवार्तिके-२।३।११ प्रकरणान्तराधिकरणे;

४. जैमिनीयसूत्रम्-१०।८।१५।

प्रसक्त्यभावेन प्रतियोगिनः प्रसिद्ध्यभावान्न प्रतिषेधः सम्भवति। यदि प्रतिषेधार्थं प्राप्तिरुद्भाव्येत तदा तस्याः प्राप्तेः शास्त्रीयत्वेन विकल्पो दुरुद्धर एव।

नात्र दृष्टान्ततुल्यताऽपि। इडाभक्षणादिमांसभक्षणविधौ निषेधस्य नैव प्रवृत्तिः सम्भवति। निषेधस्य रागतः प्राप्तमांसभक्षणविषयत्वेनाप्युपपद्यमानत्वात्। 'देवान् पितॄन् समभ्यर्च्य खादन् मासं न दोषभागि'त्यादौ श्राद्धेऽपि विवाहानृतवदनवदभ्यनुज्ञाविधिमात्रस्वीकारेण न मांसभक्षणस्य वैधत्वम्। तत्र दातुरभ्युदयमात्रस्य तथा भोक्तू रागतः प्रवृत्तेरेव स्वीक्रियमाणत्वात्। अतस्तत्र न विकल्पप्रसक्तिर्विहितप्रतिषेधाभावादेव। स्त्रीगमनेऽप्येवम्।

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः ॥

इति स्मृत्या गमनाभावे निन्दाया बोधनात् 'ऋतौ भार्यामुपेयात्' इत्यत्र यद्यपि कालविशिष्टस्य भार्यागमनस्यैव विधिस्तथापि ऋतुकालमध्ये कस्मिँश्चिद्दिवसे गमने विधीयमानेऽपि क्रतुकाले ऐच्छिकत्वेन क्रत्वर्थत्वेन प्रतिषेधेऽपि न विकल्पप्रसक्तिः। एवं शास्त्रतः प्राप्तस्य निषेधे विकल्पस्य प्रसज्यमानत्वान्न सत्यां गतौ तदाश्रयणं युक्तम्। एवम्[1] —

'अतः कथमपि प्रतिषेधे विकल्पस्य परिहर्तुमशक्यत्वात् सूत्रभाष्यन्यायसुधाकाराद्यभिप्रेतः पर्युदास एवाय'मिति वचनेनात्र पर्युदासतैव निश्चीयते। पर्युदासश्चायं दूरस्थेनाप्यग्निहोत्रादिविधिनैकवाक्यतामाश्रित्योपपादनीयः। स च पुरुषार्थाग्निहोत्राद्यनुवादेन दीक्षितभिन्नकर्त्रधिकारिकत्वविधानरूपः। दीक्षितभिन्नस्यैवाग्निहोत्रनित्यदानादिष्वधिकारो न दीक्षितस्येति तस्यैवाग्निहोत्रहोमस्यावभृथानन्तरं कर्तव्यत्वेन प्रसक्तौ अवध्यन्तरमात्रं विधीयते। अतश्च दीक्षादशायां नित्यत्वेन प्रसक्ताग्निहोत्रहोमस्याकरणे सति तदपगमे न प्रायश्चित्तत्वेन प्रतिहोम इति प्रयोजनं सिद्ध्यति। सिद्धं तावत् शास्त्रतः प्रसक्तौ प्रतिषेधे विकल्प एव; अतः पर्युदासस्य स्वीकारः। तस्य चासम्भवात् प्रतिषेधो विकल्पसिद्ध्यर्थ एव। रागतः प्रसक्तौ तु रागप्राप्तस्य बाधो यथा ब्राह्मणहननकलञ्जभक्षणादेः। उभयासम्भवेऽर्थवादता यथा 'न सोमे' इत्यत्र। पर्युदासेऽपि यदा न विकल्पान्मुक्तिस्तदापि प्रतिषेधो यथा 'न तौ पशौ करोती'त्यत्र।

---

१. भाट्टदीपिकायाम्-१०।८।७।

यत्र तु सामान्यविषयक: पुरुषार्थो निषेधो विशेषविधि: क्रत्वर्थस्तत्र निषेधस्य विहितातिरिक्ते सावकाशत्वान्न विहिते प्रवृत्ति:; अपि तु विशेषविधिनाऽसौ बाध्यत एव। यथा 'न हिंस्यात् सर्वा भूतानि' इति निषेधे 'अग्नीषोमीयं पशुमालभेत' इति विहिताग्नीषोमीयपशुव्यतिरिक्तविषयतैव।

प्रतिषेधे 'न ब्राह्मणं हन्यात्, ब्राह्मणो न सुरां पिबेदि'त्येवमादौ यो ब्राह्मणस्तस्याहननं कुर्यादिति प्रतिषेधस्य वर्जनस्य नञ्वाच्यस्य विधिरिति पक्षे यद्ब्राह्मणहननं कुर्यात् तन्नेति विधे: प्रतिषेध इति, पक्षे च ब्राह्मणस्योद्देश्यत्वात् सुरापानप्रतिषेधेऽपि तस्यानुवाद्यत्वात् 'ग्रहं सम्मार्ष्टि' इतिवद् विशेषणीभूतस्य लिङ्गस्याविवक्षा भवति, तेन ब्राह्मणीहनने ब्राह्मणीकर्तृकसुरापानेऽपि प्रत्यवाय-प्रसक्तिर्भवत्येव। उक्तमेतत् सर्वं वार्तिककारमिश्रै:[१] —

सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम्।
न चोद्दिष्टस्य शक्येते लिङ्गसंख्ये विवक्षितुम्।। इति।

तद्व्याख्यायां न्यायसुधायां सोमेश्वरसूरिणाऽपि—सुरापाने ब्राह्मण-स्यानुद्देश्यत्वेऽपि अनुवाद्यत्वाद् विशेषणाविवक्षेति' इति तदेव प्रतिपादितम्।

एतावता प्रतिषेधविषयकविचारेणायं निर्गलितोऽर्थ आयाति—सर्वस्यापि वेदस्याध्ययनविधिनाऽध्ययनस्य प्रयोजनवदर्थज्ञानपर्यवसायित्वादर्थज्ञानार्थतायां नियमस्य च स्वीक्रियमाणत्वात् प्रतिषेधशास्त्राध्ययनेऽपि नियमादृष्टं कल्प्यत एव। क्रत्वर्थे च प्रतिषेधेऽध्ययननियमस्यार्थवत्त्वे न किञ्चिद् बाधकम्। अध्ययनापादितैरेव क्रत्वर्थप्रतिषेधैर्निषिध्यमानकर्मण: क्रतुवैगुण्यजनकत्वं ज्ञात्वैव तद्वर्जनेन क्रत्वनुष्ठानफलसिद्धिरिति नियमस्य सम्भवात्।

पुरुषार्थे च प्रतिषेधे निषिध्यमानप्रत्यवायसाधनभक्षणस्य रागत एवाव-गतत्वात्तस्यानुष्ठाने सति प्रत्यवायोत्पत्तिसिद्धेर्न तदंशे तन्निषेधांशे चाध्ययन-विधिसिद्धस्य ज्ञानस्यापेक्षाऽस्ति। अध्ययनविधिसिद्धज्ञानसचिवेनैव कृतं कलञ्जभक्षणं प्रत्यवायजनकम्, तेनैव च कृतं तद्वर्जनं प्रत्यवायजनकमिति नियमस्यासम्भवात्। तथाविधस्य नियमस्य स्वीकारेऽनिष्टफलकत्वमध्ययनस्यापतेत्; अननुष्ठाननियमेऽपि शूद्रादीनामनुष्ठानाभावेऽपि परिहार: प्रत्यवायस्य न कर्तुं शक्येत। तथा सति अनुष्ठाने निष्कम्पप्रवृत्तिस्तेषां स्यात्, अननुष्ठाने प्रत्यवायस्यावश्यम्भवित्वात्। अहिंसादीनां सार्ववर्णिकत्वादनिष्टमेतत्।

---

१. तन्त्रवार्तिके-१।३।७।

एवं सति पुरुषार्थनिषेधवाक्यानामनध्ययनमिति न भ्रमितव्यम्, अध्ययनविधिसिद्धनिषेध्यनिष्ठानिष्टसाधनताज्ञानवत एव प्रायश्चित्तानुष्ठानात् फलसिद्धिरिति नियमस्य परिहर्तुमशक्यत्वात्। न चैवमध्ययनविधुराणां शूद्रादीनां प्रायश्चित्तानधिकारप्रसक्तिः, प्रायश्चित्तविधिषु निषेध्यानुष्ठातृणां तेषामनुतापमात्रस्यैवाधिकारबोधनात्। अध्ययनवतां तु त्रैवर्णिकानां फलपर्यन्तं व्यापारस्य कल्पनात्। एवं न काप्यनुपपत्तिरिति सर्वं समञ्जसमिति।



# पाणिनि-पतञ्जलि-भर्तृहरीणामात्मदर्शनविमर्शः

**डॉ. तेजःपालशर्मा**
आचार्यः, व्याकरणविभागस्य
श्रीजगन्नाथ-संस्कृत-विश्वविद्यालये
श्रीविहारः, पुरी



यद्यपि धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपमुद्दिश्य 'अर्थवत्॰'-सूत्रद्वारा प्रातिपदिकसंज्ञा विधीयते; किन्तु अर्थवदिति सूत्रद्वारा शब्दतत्त्वमपि प्रतिपादितं भवति। कथमिति चेत्, उच्यते—पदं पदमिति प्रति-पदम्—प्रतिस्थानमित्यर्थः। प्रतिपदमर्हतीति प्रातिपदिकम्, अर्थाद् देशकृतवस्तुकृतपरिच्छेदशून्यमित्यर्थः। अधातुः—'सर्वं नाम धातुजमाह' इति सिद्धान्ताद् धातुशब्दस्य प्रकृतिरर्थः, तथा च अधातुरप्रत्यय इति पदयोः प्रकृतिप्रत्ययविभागशून्योऽर्थः। प्रकृतिप्रत्ययविभागशून्यत्वेन च शब्दस्य अपरिच्छिन्नत्वमपि सिध्यति। इदञ्च शब्दब्रह्मणः स्वरूपलक्षणमुक्तं भवति। अधातु-रप्रत्यय इति पर्युदासेनैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणमुत्तरार्थमिति सिद्धान्तः। घटपटादिरूपोऽर्थोऽस्यास्तीत्यर्थवान्, एतेन 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रति अभिसंविशन्ति' इति श्रुतिप्रतिपादितस्य तटस्थलक्षणलक्षितस्य शब्दब्रह्मणः स्वरूपं निगदितं भवति। कुत इति चेत्—कृत्तद्धितसमासाश्च करोतीति कृत्—जगतः सृष्टिमत्त्वम्, तस्मै—उत्पन्नाय जगते पालनादिना, हितं तद्धितम् एतेन पालकत्वम्, अन्ते समसनमिति समासः—सङ्क्षिप्तीकरणं तेन संहारशक्तिमत्त्वमपि शब्दब्रह्मण उपदर्शितम्। आभ्यां सूत्राभ्यां शब्दस्वरूपमुक्त्वा प्राप्त्युपायं प्रकटयति—'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा' (पा.सू.५.२.९३) इति सूत्रेण। पाणिनिना इन्द्रलिङ्गम्-इन्द्रदृष्टम्-इन्द्रसृष्टम्-इन्द्रजुष्टम्-इन्द्रदत्तम् इत्येतेषु अर्थेषु इन्द्रियमिति पदस्य सिद्ध्यर्थमिन्द्रशब्दाद् घच्प्रत्ययस्य निपातनं स्वीक्रियते। इदि ऐश्वर्ये इत्यस्माद् धातोः औणादिके रन्प्रत्यये इन्द्रशब्दो व्युत्पाद्यते। इन्द्र आत्मा, तथा च श्रुतिः—'इन्द्रो मायाभिः पुरुरूप ईयते'। स च चक्षुरादिलिङ्गेनानुमीयते। इन्द्रलिङ्गमिन्द्रियम्—इन्द्रस्य लिङ्गमित्यर्थे षष्ठ्यन्ताद् इन्द्र ङस् इति समर्थसुबन्ताद् घच्प्रत्ययो

निपात्यते। रूढिरेषा चक्षुरादीनाम्। कार्यकरणसङ्घातं प्रति ईश्वरत्वात् इन्द्र आत्मा। कथं पुनरात्मा चक्षुरादिकरणेन शक्योऽनुमातुम्? यस्मात् करणादीनां प्रवृत्तिर्निवृत्तिर्वा कर्त्रधीना, तस्माद् यत्र करणानि तत्र कर्त्रा अवश्यमेव भवितव्यम्, तथा च चक्षुरादिकरणेनाविनाभावेन लिङ्गेन आत्माऽनुमीयते। इन्द्रदृष्टम्—इन्द्रियम्। इन्द्रेण दृष्टमित्यर्थे तृतीयान्ताद् इन्द्र टा इति समर्थसुबन्ताद् घच्प्रत्ययो निपात्यते। इदं दर्शनाद् इति औपमन्यवः। शरीरे समुपागते सत्येव इन्द्रेण इन्द्रियाणि दृष्टानि, इन्द्रियाणां सत्ता अनुभूता, अत एव आत्मानमिन्द्र इत्याचक्षते। इदन्द्रं सन्तं तमिन्द्र इति व्याहरति लोकः। इन्द्रियाणि इन्द्रेण सृष्टानि। तथा च इन्द्रेण सृष्टमित्यर्थे तृतीयान्ताद् इन्द्र टा इति समर्थसुबन्ताद् घच्प्रत्ययो निपात्यते। इदं करणादिति आग्रायणः (निरुक्तम्-१०/३), ता एता देवताः सृष्टाः (ऐतरेय. २/१)। आत्मना तत्कृतेन शुभाशुभेन कर्मणा उत्पादितानि इन्द्रियाणि। शुभं विहितं कर्म, अशुभं प्रतिषिद्धं कर्म, तदुभयं मिलितं करणानामुत्पादकम्। इष्टानिष्टादीनां चक्षुरादिभिः समुपलम्भात्। इन्द्रेण आत्मना जुष्टम्—सेवितम्, तद्द्वारेण विज्ञानोत्पादनात्। द्वारेण हि विषयेषु आत्मनो ज्ञानमुत्पद्यते, विषयान् ज्ञातुमात्मा चक्षुरादीन्द्रियं सेवते। जुषी प्रीतिसेवनयोः, प्रियभावेन युक्तत्वात् चक्षुरादिकरणानामियं संज्ञा। इन्द्रो यदा इन्द्रियैः सह वर्त्तते तदाऽयं बहिर्मुखो जायते, प्रसन्नतां च एति, यतो हि बहिर्मुखावस्थायामिन्द्रियपात्रेषु अस्य प्रियं प्रपाणकं सोम सन्निहितं भवति, तथा चेन्द्रियजुष्टमित्यनेन इन्द्रियैः सह इन्द्रस्य सुखदः सम्बन्धः प्रतिपादितो भवति। इन्द्रेण आत्मनैव इन्द्रियेभ्यो यथायथं विषया अपि प्रदत्ताः। यो हि यस्य विषयः, तद्यथा—चक्षुषो रूपम्, घ्राणस्य गन्धः सोऽपि तेनैव प्रदत्तः, अत इन्द्रियदत्तमित्यर्थेऽपि इन्द्रियं भवति।

अत्र इन्द्रेण सह जुष्टस्य बीजात्मकस्य फलात्मकस्य वा आनन्दस्य इन्द्रजुष्टमित्यनेनं वर्णनाद् आनन्दमयकोषस्य, सदसद्विवेकशालिन्या बुद्ध्या तत्तत्कोशैः सह तादात्म्यापत्तेर्वारणपूर्वकं लीनार्थस्य गमकत्वेन इन्द्रलिङ्गमित्यनेन विज्ञानमयकोषस्य, दृशिर् ज्ञानसामान्ये वर्त्तते, ज्ञानेन्द्रियाणां मनसश्च परिगणनाद् इन्द्रदृष्टमित्यनेन मनोमयकोषस्य, कर्मेन्द्रियैः कर्माणि सृज्यन्ते, इन्द्रियाणि च इन्द्रेणेति, तथा च प्राणैः सह इन्द्रियाणां यो हि प्राणमयकोशः, तस्य इन्द्रसृष्टपदेन बोधो भवति। विषया भूतरूपा भूतसृष्टा वा, भूतानां भौतिकानां चान्नमयकोशे परिगणनात्, इन्द्रेण यथायथं विषयप्रदानाच्च इन्द्रदत्तमित्यनेन अन्नमयकोशो लक्ष्यते। तत्तत्कोशैस्तु तादात्म्यात् पुरुषस्तत्तन्मयो भवति। इमे कोशाः सर्पकञ्चुकवदनित्याः, सर्पो यथा कञ्चुकं परित्यजति, यूकोलिप्टास्-वृक्षो यथा त्वचं त्यजति, तथैवेमे कोशा हेयाः परित्याज्याः सन्ति। दाण्डिनायनहास्तिनायनवद्

'इन्द्रियम्' इत्युपदेशेनापि निपातनमवगन्तुं शक्यते। इन्द्रलिङ्गमिन्द्रदृष्टमिन्द्र-सृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति पञ्चपदोच्चारणपूर्वकम् 'इन्द्रियम्' इति निपातनेन ज्ञायते यत्—पाणिनिकाल आत्मयुगमासीत्, यत्र सर्वमात्मना कृतं सर्वमात्मना ततमिति दृढीयान् विश्वास आसीत्।

महाभाष्ये प्रत्यक्षानुमानान्वयव्यतिरेकप्रमाणानांमाप्तप्रमाणस्येति चतुर्णां वर्णनमुपलभ्यते। इष्टाऽनिष्टरूपादीनां चक्षुरादिभिरुपलम्भात् करणानामिन्द्रियमिति रूढिरिति वचनेन प्रसिध्यति यदिन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति स्वीकरोति पतञ्जलिः। प्रथमतो व्याप्तिज्ञानं ततो हेतुदर्शनम्, ततो व्याप्तिस्मरणम्, ततश्च व्याप्तिंविशिष्टपक्षधर्मताज्ञाने जाते अनुमितिर्भवति। तथा च धूमं दृष्ट्वा अग्निरत्रेति गम्यते, तथैव त्रिविष्टब्धकं दृष्ट्वा परिव्राजक इति। प्रत्यक्षस्तेनाग्निधूमयोरभि-सम्बन्धः कृतो भवति, त्रिविष्टब्धकपरिव्राजकयोश्च। स तद्विदेशस्थमपि दृष्ट्वा जानात्यग्निरत्रेति परिव्राजकोऽत्रेति 'लटः शतृ.' इति (पा.सू.३.२.१२४) सूत्रस्थेन वाक्येन निश्चीयते यद् अनुमानप्रमाणमपि स्वीकरोत्याचार्यः। एवमेव पृषोदरादीनि यथोपदिष्टम् (पा.सू.६.३.१०९) इति सूत्रेण शिष्टैर्यथोच्चारितानि यानि तानि तथैव साधूनि विधीयन्ते। तद्यथा—पृषच्च तद् उदरमिति पृषोदरम्। शिष्टैरिमानि समुपदिष्टानि। के पुनः शिष्टाः? वैयाकरणाः। शास्त्रपूर्विका हि शिष्टिर्भवति, शिष्टिपूर्वकं च शास्त्रम्, अतोऽन्योन्याश्रयमाशङ्क्य शिष्टस्य लक्षणान्तरं कल्पितम्। निवासत आचारतश्च शिष्टत्वमवगन्तव्यम्—आर्यावर्त्तनिवासिनो ये कुम्भीपाका अलोलुपा अपगृह्यमाणकारणा दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिनः, कस्याश्चिद् विद्यायाः पारङ्गताः ब्राह्मणा शिष्टाः सन्ति।

आसमुद्राच्च पूर्वस्माद् आसमुद्राच्च पश्चिमात्।
तयोरेवान्तरा गिर्योरार्यावर्त्तः प्रचक्षते।। (मनु.)

आप्तप्रमाणं पतञ्जलिः स्वीकरोति, अत एव आप्तोपदिष्टत्वेन भ्राजश्लोकस्यापि प्रामाण्यमुररीकरोति। एवमेव तत्सत्त्वे तत्सत्त्वमन्वयः, तदभावे तदभावो व्यतिरेकः। तथा च यस्य शब्दस्य सत्त्वे योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थः। वृक्ष इत्युक्ते एकत्वं प्रतीयते, वृक्षौ इत्यत्र सकारो हीयते औकार उपजायते। अर्थोऽपि कश्चिद् हीयते, कश्चिदुपजायते—एकत्वं हीयते, द्वित्वमुपजायते, एतेन अन्वयव्यतिरेकाभ्यां सुप्रत्ययस्य एकत्वम्, औप्रत्ययस्य च द्वित्वमर्थोऽध्यवसीयत इति 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (१.२.४५) सूत्रोपदिष्टेन वचनेन निश्चीयते यत्—पतञ्जलिराप्तप्रमाणमुररीकरोति। आप्त-प्रत्यक्षानुमानान्वयव्यतिरेकेषु प्रत्यक्षस्य अनुमानप्रमाणेन बाधमपि स्वीकरोति। यतो

ह्यसदपि वस्तु प्रत्यक्षं भवति, तद्यथा मृगोऽतितृष्णया तप्तबालुकायामपि जलं पश्यति। सदपि वस्तु न दृश्यते, तद्यथा—सूर्यगतिः सती अस्ति, किन्तु न दृश्यते। अलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्चं गम्यते नैतदस्ति तस्मात् प्रत्यक्षाद् अनुमानस्य बलीयस्त्वं स्वीक्रियते।

'कर्मवत्कर्मणा तुल्यक्रियः' (पा.सू.३.१.८७) इति सूत्रे पतञ्जलिः—हन्ति आत्मानमात्मा। आत्मना हन्यते आत्मा। द्वावात्मानौ—अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति। शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति। एतेन आत्मविषयकं पतञ्जलेर्दर्शनमतिस्थूलमिति पतञ्जलिकालीनभारतवर्षेति नामके ग्रन्थे श्रीप्रभुलाल-अग्निहोत्री, किन्तु कर्मवद्भावस्य फलं निगदता भाष्यकारेण भिद्यते काष्ठं स्वयमेव, क्रियते कटः स्वयमेव, अभेदि पुस्तकं स्वयमेव। तथा च 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा.सू.३.१.७) इति सूत्रे कथं नदीकूलं पिपतिषति? कथं वा लोष्टाः शीर्यन्ते? इति प्रश्नस्य समाधानं कुर्वता पतञ्जलिना—'सर्वस्य वा चेतनावत्त्वात्' इत्यगादि। एतेन 'श्रुणोत ग्रावाणः' इत्यपि सङ्गच्छते। तथा च सर्वत्र चितिमेव पश्यति पतञ्जलिः।

अतः परमस्मिन् प्रबन्धे भर्तृहरेः स्थानं कल्पितम्। भर्तृहरिकृतं 'वाक्यपदीयम्' पदवाक्यप्रतिपादने विनियुज्यते। पदं वाक्यञ्च शब्दस्वरूपम्, अतो ग्रन्थारम्भे शब्दसामान्यविवेचनं प्रस्तौति ग्रन्थकारः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः।। इति।

शब्दतत्त्वमनादिनिधनं ब्रह्मास्ति, तदेव वर्ण-पद-वाक्यानामर्थतत्त्वस्य च मूलमस्ति। व्याकरणस्य शब्दसाधुत्वविज्ञानं साक्षात् प्रयोजनं मोक्षश्च परम्परया। शब्दसाधुत्वविज्ञानद्वारकमोक्षेण सह ग्रन्थस्य हेतुहेतुमद्भावसम्बन्धश्चास्ति। शब्दसाधुत्वविज्ञानद्वारकमोक्षेच्छुरधिकारी। ब्रह्मसाक्षात्कारश्च शब्दैकगम्यः। महाभाष्यकारकालपर्यन्तं न्याय-मीमांसाज्यौतिषादिविषयाणां प्रयोजनं क्रमशः पदार्थचिन्तनवाक्यार्थबोध-ग्रहचलनकलनमात्रमासीत्। सर्वेषामेव क्षेत्रं पृथक् पृथगासीत्। यद्यपि अदृष्टप्रयोजनं सर्वैरेव स्वीक्रियते, अत एव गृहीतदर्भपाणिराचार्यपाणिनिः प्राङ्मुख उपविश्य सूत्राणि चकार। तत्र वर्णेनाप्यनर्थकेन न भवितव्यम्, किमुत सूत्रेण। किञ्चिद् दृष्टप्रयोजनम्, किञ्चिददृष्टप्रयोजनम्, किञ्चिद् दृष्टाऽदृष्टप्रयोजनं सर्वथानर्थकं किञ्चिन्नास्तीत्यर्थः। महाभाष्यकारपर्यन्तं कर्मकाण्डस्य प्राचुर्यमासीत्, यथा स्वर्गकामो यजेत इति श्रुत्या

यागफलं स्वर्गप्राप्तिरुक्तम्, तथैव—'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति स्वीकृतम्। व्याकरणस्य शब्दानुशासनं मुख्यं प्रयोजनम्, रक्षोहागमलघ्वसन्देहाः गौणप्रयोजनम्, अथ चतुर्दशसंख्याकानि प्रयोजनप्रयोजनानि समुपदिष्टानि महाभाष्यकारेण। तेषु वेदरक्षा-वैदिकयागविषयो बाहुल्येन दृश्यते, व्यवहारविषयकप्रयोजनानि द्वित्राणि सन्ति। महता देवेन नः साम्यं स्यात्, इत्युक्त्या च 'महान् देवः शब्दः स मरणधर्म्यान् मनुष्यान् आविवेशे'ति द्वैतं प्रति सङ्केतयति। तदपि गौणप्रयोजनेषूक्तम्। वाक्यपदीये तु शब्दब्रह्मणः स्वरूपनिरूपणं प्राथम्येन विधाय व्याकरणं मोक्षस्य ऋजुमार्ग इत्युदघोषयत्। भर्तृहरेः पूर्वं शङ्कराचार्यप्रतिष्ठितमद्वैतं प्रति स्वाभाविकमाकर्षणमासीत्, बौद्धैर्यागं प्रति लोकानां हृदयेषु वैराग्यमुत्पादितम्। अद्वैतं प्रति जातिप्रतिबन्धः शिथिलतामगात्। यज्ञं व्ययसाध्यमासीत्। यागे अधिकार्यनधिकारिव्यवस्था सुदृढतां भजते स्म। कलियुगस्य प्रवेशोऽजायत। कलौ च वेदान्तिनः सर्वे। अद्वैतभावस्य जगति प्रसृतत्वाच्छब्दब्रह्मणः अनादिनिधनेति कारिकया स्वरूपमुपवर्णयन् मङ्गलमाचरितं भर्तृहरिणा। शब्दतत्त्वमादिनिधनशून्यम्, अत एव देशकालवस्तुपरिच्छेदरहितम्। देशकालवस्तुविरहितत्वाच्च विभु नित्यमद्वितीयञ्च। तदेव जगदधिष्ठानम्, तत्रैव जगत उत्पत्तिः स्थितिर्लयश्च आरोप्यते। विवर्तते अर्थभावेन प्रक्रिया जगतो यतः। विवर्त्तते अर्थाद् असतो वस्तुनः कालशक्त्या अध्यारोपो विधीयते। सकलप्रपञ्चस्य शब्दब्रह्मणो विवर्त्तत्वात् शब्दतत्त्वं प्रपञ्चधर्मशून्यम्, तत्सदृशस्य अभावाच्च सजातीयभेदशून्यम्, निरवयवत्वाच्च स्वगतभेदशून्यम्, विजातीयप्रपञ्चस्य अध्यारोपितत्वाच्च विजातीयभेदरहितं शुद्धं बुद्धं विभु नित्यञ्च शब्दतत्त्वं ब्रह्म।

अनादिनिधनेति कारिकया ब्रह्मणः सगुणसाकारस्य निर्गुणनिराकारस्य च प्रतिपादनं कृतं ग्रन्थकारेण। विवर्त्ततेऽर्थभावेन इत्युक्त्या प्रपञ्चोपाधिकस्य कारणब्रह्मणः, अथ च अनादिनिधनमित्युक्त्या च निर्गुणनिराकारस्य ब्रह्मणो लक्षणं लक्षितम्। 'विवर्त्ततेऽर्थभावेन' इत्युक्त्या 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रति अभिसंविशन्ति च' इति तटस्थलक्षणलक्षितस्य शब्दब्रह्मणः स्वरूपमुक्तं भवति। अनादिनिधनेत्युक्त्या अक्षरमित्युक्त्या च शब्दब्रह्मणः स्वरूपलक्षणं प्रतिपादितं भवति। ब्रह्मेति पदोपदेशेनाप्येतदुभयं प्रतिपादितमेव यतो हि 'बृहि-वर्धने' इत्यस्माद् धातोर्वर्धते आकाशादिप्रपञ्चरूपेणेत्युक्तं भवति, अथ च बृंह-बृंहणे इत्यस्माच्च बृंहते इति ब्रह्म। बृंहणं व्यापकमधिष्ठानतत्त्वमित्यर्थः।

कालशक्तिरस्य विविधैव श्रूयते—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः।।
एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्त्तते।।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।।

सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम् (छा. ६।२।१)।

एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः।।

अयमेव शब्दाद्वैतवादो वैयाकरणानां निकाये प्रसिद्धः। शब्दादेव सर्वं जातम्, अत एव सर्वा शब्दमयी सृष्टिः, शब्द एव हिं केवलम्, शब्दादेव च कैवल्यम्।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। एतादृशः कश्चन प्रत्ययो नास्ति यस्य शब्दमन्तरेण प्रतीतिः स्यात्। ज्ञाता-ज्ञान-ज्ञेयाख्यत्रिपुट्या अधिष्ठानं शब्दतत्त्वमेव, अत एवोक्तम्—अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।

ज्ञाता-ज्ञान-ज्ञेयरूपः प्रत्यवमर्शोऽस्ति यस्याः सा प्रत्यवमर्शिनी। नन्वत्र—

'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।

इत्युक्त्या शब्दब्रह्मणोऽनुत्पत्तिमत्त्वं निर्गुणनिराकारवत्त्वं चानुपपन्नमिति वाच्यम्? 'निनदीभ्यां स्नातेः कौशले' इति सूत्रेण कौशले गम्यमाने निनदीभ्यां परस्य स्नातेः सकारस्य मूर्धन्यादेशो भवति (पा.सू. ८।३।८९)। तथा च शब्दविषयक-संविज्ञानसम्पन्न एव, परं ब्रह्मणा = अनादिनिधनपदप्रतिपाद्येन ब्रह्मणा सहैक्यं भजते। अत्र तादार्थ्यात् ताच्छब्द्यमिति सिद्धान्तानुसारेण अनादिनिधनस्य शब्दब्रह्मप्राप्त्युपायस्य शब्दसाधुत्वसंविज्ञानस्यापि ब्रह्मशब्देन परिगणनाद् द्वे ब्रह्मणीति कथनमपि सङ्गच्छते।

अत एव वागेव विश्वं भुवनानि जज्ञे, ते मृत्युमतिवर्तन्ते ये वै वाचमुपासते इत्यादीनि सङ्गच्छन्ते।



## शिष्यप्रशिष्यैः सह श्रीशास्त्रिपादाः



प्रथमपंक्तौ तिष्ठन्तः (वामतः) : पं.रामचन्द्रशास्त्रिहोसमने, पं.गणपतिशास्त्रि-ऐतालः, श्रीकृष्णशास्त्रिजोशी, श्रीचन्द्रशेखरशुक्लः, श्रीबलिरामशुक्लः। द्वितीयपंक्तौ : पं.विश्वनाथशास्त्रिदातारः, पं.गणपतिशास्त्रिहेब्बारः, श्रीरामचन्द्रशास्त्रिखनङ्गः, पण्डितराजाः, पं.हरिरामशास्त्रिशुक्लः, पं.जयरामशास्त्रिशुक्लः, पं. मुकुन्दशास्त्रिपायगुण्डे। तृतीयपंक्तौ : श्रीशङ्करकाशीनाथदामले, श्रीकाशीनाथशास्त्रिजोशी,श्रीरामचन्द्रशास्त्रिमण्डलीकरः, श्रीजनार्दनशास्त्रिखुण्टे, श्रीगोविन्दजोशी (उत्सङ्गे)

# भामहस्य शब्दशास्त्रवैदुष्यम्

**डॉ. जा. रामकृष्णः**
व्याकरणविभागः
राष्ट्रिय-संस्कृत-विद्यापीठम्
तिरुपतिः



विदन्त्यनया इति विद्या। 'विद् ज्ञाने' इत्यस्माद् धातोः 'संज्ञायां समज-निषद-निपत-मन-विद-षुञ्-शीङ्-भृञिणः' (३।३।९९) इति पाणिनिसूत्रेण क्यप्प्रत्यये शब्दोऽयं निष्पद्यते। इमाश्च विद्याः—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।।

इत्युक्तदिशा चतुर्दशसंख्याकाः। अत्र शङ्का—लोके विख्याति साहित्यविद्या, किन्तूक्तासु चतुर्दशसु कुतो नेयं परिगण्यते? इति। अत्रोत्तरम्—

साहित्यविद्या वेदाङ्गेष्वन्तर्भवति। न च शिक्षाव्याकरणादिषु षडङ्गेषु नेयं पठितेति वाच्यम्। अङ्ग्यते = उपक्रियतेऽथवोपपाद्यत वेदार्थ एभिरित्यङ्गानि। वेदार्थोपकारकाणीत्यर्थः। इदं च वेदार्थोपकारकत्वलक्षणं साहित्येऽपि साक्षात्क्रियत एव। साहित्यविद्याया अलङ्कारशास्त्रमिति चाख्यान्तरम्। स्पष्टीकृतमिदं विश्वनाथेन।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति'।।

इत्यादिमन्त्राणामर्थावगतयेऽलङ्कारशास्त्राध्ययनस्यावश्यकता वरीवर्ति।

न्याय-व्याकरणादिशास्त्रेष्वधीतिनः केचन बुध्यन्ते यथा स्वान्येव शास्त्राणि महत्त्वपूर्णानि, साहित्यं तु न तादृशमिति; किन्तु नायमाशयो युज्यतेतमाम्। साहित्यशास्त्रे वैदुष्ये सत्येव लोके विख्यान्ति तत्तच्छास्त्रज्ञाः। न त्वन्यथा। तदुक्तम्—

पद-वाक्य-प्रमाणेषु तदेतत्प्रतिबिम्बितम्।
यो योजयति साहित्ये तस्य वाणी प्रसीदति।।इति।

किञ्च—

कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।
आह्लादामृतवत्काव्यमविवेकगदापहम्।।

इति प्रसिद्धमभियुक्तोक्तमपि विद्याया अस्या वैशिष्ट्यं बोबुधीति। एतादृशमहिमान्विते॰लङ्कारशास्त्रे आद्य आलङ्कारिको महानुभावो भामहः। अस्य कालः प्रायः षष्ठशताब्द इत्यनुमीयते।

आलङ्कारिक इत्याख्या भामहाद् भामविन्दत।
तस्या द्विवचनं जातं जाते दण्डिनि पण्डिते।।

भामहस्य प्राथमिकमालङ्कारिकत्वं द्रढयत्ययं श्लोकः। किञ्च श्रीमान् विद्यानाथः स्वीये प्रतापरुद्रीय आदौ भगवतीं सरस्वतीं नत्वा ततः सप्रश्रयमाह—

पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः।
वक्ष्ये सम्यगलङ्कारशास्त्रसर्वस्वसङ्ग्रहम्।।इति।

श्रीमतो 'भामहस्य काव्यालङ्कारा'भिधानको लक्षणग्रन्थः साहित्यशास्त्रे विशिष्टं स्थानमेति। इममेकमेव ग्रन्थं स प्रणिनायेति आलङ्कारिका आशेरते। भवतु नाम। ग्रन्थस्वरूपम्—

'भामहकाव्यालङ्कारः' षट्परिच्छेदात्मकः—१. आद्ये काव्य-साधन-तल्लक्षण-तद्भेदान् व्यमृशत्। २. द्वितीये ३. तृतीये च काव्यशोभाहेतून् अलङ्कारान् व्यवृणोत्। ४. चतुर्थे काव्यदोषान् प्रत्यपीपदत्। ५. पञ्चमे न्यायशास्त्रविरोधिनो दोषान् परामृक्षत्। ६. षष्ठे परिच्छेदे विवादास्पदशब्दशुद्धिं स्पष्टमकार्षीत्।

तत्र चरमे परिच्छेदे महात्मा भामहः स्वीयं वैयाकरणविश्वरूपं यत्प्रदर्शयत्तदत्र किञ्चिदिवावलोक्यते। अष्टाध्यायीपाठक्रममाश्रित्य तत्तत्सूत्रस्थान् कांश्चन विशेषानित्थमभिदधौ सः। तद्यथा—

१. अष्टाध्याय्यामाद्यं सूत्रं 'वृद्धिरादैच्' (१।१।१) इति। आकारैकारौकाराणां वृद्धिसंज्ञां विदधातीदं सूत्रम्। संज्ञायाः कार्यार्थत्वेन (विध्युपकारकत्वेन) 'वृद्धिरेचि'-'मृजेर्वृद्धिः' (७।२।११४) इत्यादावस्या उपयोगः।

तत्र 'मृजेर्वृद्धिः' (मृजेरिको वृद्धिः स्याद् धातुप्रत्यये परे इत्यर्थः।) उदा-मार्ष्टि। मृजूशुद्धौ इति आदादिकाद् धातोर्लटि प्रथमपुरुषैकवचनम्। अस्मिन् सूत्रे 'इको गुणवृद्धी' (१।१।३) इति परिभाषोपतिष्ठते। तत्सूत्रभाष्ये भगवान् पतञ्जलिरुवाच—'इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्ते परिमृजन्ति, परिमार्जन्ति' इति। तत्र वैयाकरणनागेशो व्याचख्यौ— 'सङ्क्रम इति गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा' इति। एवं चाजादौ किति ङिति च प्रत्यये परे मृजन्ति, मार्जन्तीति रूपद्वयम्। इत्थमत्र वैयाकरणसिद्धान्तः। अत्र भामहः—

वृद्धिपक्षं प्रयुञ्जीत सङ्क्रमेऽपि मृजेर्यथा।
मार्जन्त्यधररागं ते पतन्तो बाष्पबिन्दवः॥

अयमाशयः—यद्यपि मृज्धातोरजादौ क्ङिति प्रत्यये परे मृजन्ति, मार्जन्तीति रूपद्वयं लभ्यते; परन्तु कविभिर्वृद्धिपक्ष एव समाश्रयणीयो मार्जन्तीति। अत्र उत्तरार्धं प्रकृतसिद्धान्तस्य उदाहरणतां बोधयति। रुदन्तीं नायिकां प्रति नायकस्येयमुक्तिः। हे सुन्दरि! तव मुखान्निस्सरन्तो बाष्पबिन्दवस्तवाधरोष्ठरागं मार्जन्तीत्यर्थः।

२. अष्टाध्याय्यां प्रथमाध्याये द्वितीयपादे 'सरूपाणामेकशेष एकविभक्तौ' (१।२।६४) इति सूत्रं दृश्यते। तत्र किञ्चिद् विव्रियते। 'प्रत्यर्थं शब्दनिवेशः' इत्यस्ति कश्चिन्नियमः। यावन्तोऽर्था विवक्षितास्तावन्तः शब्दाः प्रयोज्या इति तदर्थः। तथा च यत्र द्वयो रामयोर्बहूनां रामाणां वा विवक्षाऽस्ति, तत्र द्वौ, बहवश्च रामशब्दाः प्रयोजनीयाः। ततः प्रकृतसूत्रेण सरूपाणां मध्ये केवलमेकस्य शेषः। 'शिष्यमाणः शब्दो लुप्यमानार्थाभिधायी' इति न्यायेन शिष्ट एक एव शब्दो लुप्यमानशब्दार्थानपि बोधयतीति प्रकृतसूत्रस्योपयोगः। उदा.— रामौ, रामाः। एवं स्थिते यत्र कश्चित् शब्दः पुंसि वर्ततेऽपरस्तु स्त्रियां, तत्र 'पुमान् स्त्रिया' (१।२।६७) इति सूत्रेण पुंवाचकस्यैव शेषः। स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेदिति सूत्रार्थः। यथा—हंसी च हंसश्च = हंसौ। अत्र भामहः—

सरूपशेषं तु पुमान् स्त्रिया यत्र च शिष्यते।
यथाऽऽह वरुणाविन्द्रौ भवौ शर्वौ मृडाविति॥

इन्द्रस्य स्त्री, वरुणस्य स्त्री, भवस्य स्त्री इत्याद्यर्थेषु पुंवाचकात् प्रातिपदिकात् 'पुंयोगादाख्यायाम्' (४।१।४८) इति ङीष्प्रत्ययः। (या पुमाख्या

पुंयोगात् स्त्रियां वर्तते ततो ङीषिति तदर्थः।) 'इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमा-रण्य-यव-यवन-मातुलाचार्याणामानुक्' (४।१।४९) इत्यानुगागमे इन्द्राणी, भवानी, वरुणानी इत्येवं रूपाणि। तत इन्द्रश्च इन्द्राणी च, भवश्च भवानी चेत्यादौ 'पुमान् स्त्रिया' (१।२।६७) इति पुंवाचकस्यैकशेषे इन्द्रौ, वरुणौ, भवौ, शर्वौ इत्यादीनि रूपाणि सिद्ध्यन्ति।

३. तृतीयाध्याये प्रथमपादे 'हेतुमति च' (३।१।२६) इति सूत्रं पठितम्। प्रयोजनव्यापारे प्रेषणादौ वाच्ये धातोः णिच् स्यादित्यर्थः। भवन्तं प्रेरयति = भावयति। अत्र सूत्रे वार्तिकमिदं 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्टवच्च' इति। प्रातिपदिकाद् धात्वर्थे णिच् स्यात्, इष्टे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्रस्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युरिति तदर्थः। अत्र किञ्चिन्निवेद्यते। 'अतिशायने तमबिष्ठनौ' (५।३।५५) इति सूत्रेणातिशयविशिष्टार्थवृत्तेः प्रातिपदिकात् तमबिष्ठनौ विहितौ। लघुतमः, लघिष्ठः। तत्र इष्ठन्प्रत्यये परे कानिचन कार्याणि विहितानि। यथा—१. पुंवद्भावः—अतिशयेन पट्वी इत्यर्थे पट्वीशब्दाद् इष्ठन्प्रत्यये 'भस्याढे तद्धिते' इति पुंवद्भावः। २. अतिशयेन दृढ इत्यर्थे 'र ऋतो हलादेर्लघोः' (६।१।१६१) इति ऋकारस्थाने रादेशः। ३. अतिशयेन साधुरित्यर्थे साधु + इष्ठ इति दशायां 'टेः' (६।१।११५) (टेः लोपः स्यादिष्ठेमेयत्सु) इति टिलोपः। ४. अतिशयेन स्रग्वीत्यर्थे स्रग्विन्निति प्रातिपदिकाद् इष्ठन्प्रत्यये 'विन्मतोर्लुक्' (५।३।६५) इति विनो लुक्। स्रजिष्ठ इति रूपम्। एवमतिशयेन गोमानित्यर्थे मतुपो लुकि गविष्ठ इति रूपम्। ५. अतिशयेन स्थूल इत्यर्थे स्थूलशब्दात् इष्ठनि 'स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः' (६।४।१५६) इति यणादिलोपे गुणे च स्थविष्ठ इति रूपम्। ६. अत्यन्तं प्रियः, अत्यन्तं स्थिर इत्याद्यर्थेषु इष्ठनि परे प्रिय-स्थिर-स्फिरो-रु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रप्-द्राघिवृन्दाः' (६।४।१५७) इति सूत्रेण प्रियादीनां शब्दानां स्थाने प्रादय आदेशाः। यथा—प्रेष्ठः, स्थेष्ठः, वरिष्ठ इत्यादीन्युदाहरणानि। अनया विधया इष्ठन्प्रत्यये परे षड्भिः सूत्रैर्विशिष्टानीमानि कार्याणि विहितानि। सर्वाणीमानि णिच्प्रत्ययेऽपि प्रवर्तन्त इति प्रकृतवार्तिकार्थः। उदा.—पटुमाचष्ट इत्यर्थे णिचि टिलोपे (उकारलोपे) पटि इति जाते ततो लटि, तिपि, गुणे अयादेशे च पटयतीति रूपम्। इत्थं तद्वार्तिकस्वरूपम्। अत्र भामहः—

यथा पटयतीत्यदि णिच् प्रातिपदिकात् ततः।
णाविष्ठवदितीष्ट्या च तथा क्रशयतीत्यपि।।

पटयतीत्यादौ पूर्वोक्तेन वार्तिकेन यथा णिच्प्रत्ययः, तस्मिन् परे टिलोपादिकार्यं समपद्यत, एवं कृशमाचष्ट इत्यर्थे कृशशब्दाण्णिचि 'र ऋतो हलादेर्लघोः' इति ऋकारस्थाने रेफादेशे तिङन्तप्रक्रियायां क्रशयतीत्येवं प्रयोज्यमिति भामहाशयः।

४. समासप्रकरणे 'षष्ठी' (२।२।८) इति सूत्रेण षष्ठीतत्पुरुषोऽभिहितः। यथा—राज्ञः पुरुषः, राजपुरुषः। एवम् अपां स्रष्टा, वज्रस्य भर्तेत्यादावपि स समासः प्राप्तः; परन्तु 'तृजकाभ्यां कर्तरि' (२।२।१५) इति स निषिद्धः। एवञ्च तत्र व्यस्तः प्रयोग एव, न समस्तः। एवं स्थिते 'जनिकर्तुः प्रकृतिः' (१।४।३०) इति पाणिनिसूत्रे जनेः कर्ता जनिकर्ता, तस्य जनिकर्तुरिति वक्तव्यं भवति; परन्तु पूर्वोक्तरीत्या कर्तृशब्दस्य तृजन्तत्वेन 'तृजकाभ्यां कर्तरि' (२।२।१५) इति निषेधो जागर्ति किल, कथं वाऽत्र षष्ठीतत्पुरुषः? इति संशयो जायते। तत्रैवं समाधिरुक्तः—'कर्तृकर्मणोः कृति' (२।३।६५) इति सूत्रेण विहितेन षष्ठ्यन्तेनैव समासनिषेधः। जनेः कर्तेत्यत्र तु 'षष्ठी शेषे' (२।३।५०) इति षष्ठी। अतो नात्र तन्निषेधः। एवञ्च प्रवर्तत एव समास इति सिद्धान्तः। 'जनिकर्तुः' इति निर्देशं प्रमाणत्वेन स्वीकृत्य वृत्रस्य हन्तेत्यर्थे वृत्रहन्तेति रूपं ज्ञापकेन साधितं कैश्चित्। तत्तु न युज्यते। पूर्वोक्तयुक्तेः। अत्र भामहः—

शिष्टप्रयोगमात्रेण न्यासकारमतेन वा।
तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरेत्।।
सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः।
अकेन च न कुर्वीत वृत्तिं तद्गमको यथा।।

ज्ञापकतां, शिष्टप्रयोगं, न्यासकारमतं वाश्रित्य वृत्रहन्तेत्यादिरूपं न समर्थनीयम्। एवं 'तत्प्रयोजको हेतुश्च' (१।४।५४) इति ज्ञापकमाश्रित्य तस्य गमकः = तद्गमक इत्यपि न समर्थनीयमिति भामहसिद्धान्तः सर्वथा शाब्दिकानामनुकूलः।

५. लोके बभूव, जगामेत्यादौ 'परोक्षे लिट्' (३।२।११५) इति सूत्रेण लिट्लकारो विहितः। वेदे तु 'छन्दसि लिट्' (३।२।१०५) इति सूत्रेण स विधीयते। ततः 'लिटः कानज्वा' (३।२।१०६) 'क्वसुश्च' (३।२।१०७) इति सूत्रद्वयेन लिटः स्थाने कानच्, क्वसु इति द्वावादेशौ प्रवर्तेते। उदा.—सोमं सुषवाणः, पपिवान्। इमौ द्वौ प्रत्ययौ छन्दस्येव प्रवर्तेते, न तु लोक इति

त्रिमुनिमतम्। कवयस्तु बहुलं प्रयुञ्जते। यथा—'तं तस्थिवासं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादौ—इति भट्टोजिदीक्षितो न्यगादीत्। अत्र भामहः—

पुंसि स्त्रियां च क्वस्वन्तमिच्छन्त्यच्छान्दसं किल।
उपेयुषामपि दिवं यथा न व्येति चारुता।।

'क्वसुश्च' (३।२।१०७) इति सूत्रेण च्छन्दसि लिटः स्थाने क्वसु-आदेशो विधीयते। अथाप्यस्य पुंसि, स्त्रीलिङ्गे चाच्छान्दसत्वमिच्छन्ति। तत्र पुंसि यथा दिवमुपेयुषामपि चारुता = शोभनकाव्यनिर्माणादिजनिता कीर्तिर्नापैति। एवं स्त्रीलिङ्गे उदाजहार सः—

इभकुम्भनिभे बाला दधुषी कञ्चुकं स्तने।
रतिखेदपरिश्रान्ता जहार हृदयं नृणाम्।।

नवसङ्गमानन्तरं शय्यागृहान्निर्गतां प्रति सखीप्रभृतीनां जातां प्रीतिं श्रुत्वा प्रतिपादयतो वचनमिदम्। इभुकुम्भनिभे स्तने कञ्चुकं धारितवती। अत्र श्लोके दधुषीत्युदाहरणे धा-धातोः लिटि क्वसु-आदेशे स्त्रियां ङीप्।

एवञ्च—छन्दसि विहितः क्वसु-आदेशो लोकेऽपि दृश्यत इति सिद्ध्यति। अत्र किञ्चिद् वक्तव्यम्—छन्दसि क्वसु-आदेशस्य विधानानन्तरं 'भाषायां सदवसश्रुवः' (३।२।१०८) इति सूत्रेण लोके सद्, वस्, श्रु इति त्रिभ्यो धातुभ्यः क्वसुं विधाय, तदनन्तरं लोकविषयमेव 'उपेयिवाननाश्वाननूचानश्च' (३।२।१०९) इति सूत्रेण उपपूर्वाद् इण्-गताविति धातोरपि क्वसुप्रत्ययस्य विधानं कृतं दृश्यते। अतोऽत्र भामहश्लोके 'उपेयुषा'मिति पदस्य स्थाने 'आतस्थुषाम्' इति पठित्वोदाहर्तव्यमिति व्याख्यातारः श्रीमन्तो डि.टि. ताताचार्या आशेरते।

६. तृतीयाध्याये—'स्त्रियां क्तिन्' (३।३।९४) इति सूत्रेण स्त्रीलिङ्गे भावे क्तिन्प्रत्ययो विहितः। यथा—कृतिः, स्तुतिः। तत्र प्रकरणेऽन्यतमं सूत्रमिदम्—'इच्छा' (३।३।१०१) इति। इष्-धातोर्भावार्थे शप्रत्ययः, यक्प्रत्ययाभावश्च निपात्यते। तेन 'इच्छा' इति रूपं सिद्धम्। अत्र सूत्रे वार्तिकमेकं पठ्यते, यथा—'जागर्तेरकारो वा' इति जागृ-निद्राक्षय इति धातोर्भावार्थे विकल्पेन 'अ'प्रत्यये 'जागरा' इति रूपम्। पक्षे 'श'प्रत्यये 'कृञः श च' (३।३।१००) शकारस्यानुबन्धलोपे जागृ + अ इति दशायां 'सार्वधातुके यक्' (३।१।६७) धातोर्यक्प्रत्ययः स्याद् भावकर्मवाचिनि सार्वधातुके परे इति यक्प्रत्ययः। कित्वाद्

गुणनिषेधे प्राप्ते 'जाग्रोऽविचिण्णल्ङित्सु' (७।३।८५) (जागर्तेर्गुणः स्याद् विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च) इति ऋकारस्य गुणे रपरत्वे च जागर्या इति च रूपम्। एवञ्च जागृधातोर्भावार्थे प्राप्तं क्तिन्प्रत्ययं बाधित्वा अप्रत्यये, शप्रत्यये च जागरा जागर्येति च रूपद्वयं सिद्ध्यतीति वैयाकरणसिद्धान्तः। अत्र भामहः—

क्तिन्नन्तं च प्रयुञ्जीत सङ्गतिस्संहतिर्यथा।
शाकारौ जागुरिष्टौ च जागर्या जागरा यथा॥

अत्र श्लोके 'जागुः' इति पञ्चम्येकवचनान्तं धातुरितिवत्।

७. कृदन्तप्रकरणे भावार्थे 'गुरोश्च हलः' (३।३।१०३) इति सूत्रेण हलन्ताद् गुरुमतो धातोः अप्रत्ययो विहितः। यथा—ईहा, ऊहेति; परन्तु ण्यन्तधातो;, आस्धातोः, श्रन्थधातोश्च इमं प्रत्ययं बाधित्वा 'ण्यासश्रन्थो युच्' (३।३।१०७) इति सूत्रेण युच्प्रत्यये 'युवोरनाकौ' (७।१।१) इति अनादेशे च कारणा, आसना, श्रन्थनेति रूपाणि (श्रन्थ-विमोचनप्रतिहर्षयोः)। अत्र भामहः—

उपासनेति च युचं नित्यमासेः प्रयोजयेत्।

अत्र नित्यमिति कथनेन 'वाऽसरूपोऽस्त्रियाम्' (३।१।९४) इति सूत्रबाधनेन युच्प्रत्ययोऽयं नित्यं प्रवर्तत इति लभ्यते।

८. तृतीयाध्याये 'नपुंसके भावे क्तः' (३।३।११४) इति सूत्रं दृश्यते। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तप्रत्ययः स्यादिति तदर्थः। उदा.—जल्पितम्, हसितम्, शयितमित्यादि। एतत्सूत्रानन्तरं 'ल्युट् च' (३।३।११५) इति भावार्थे ल्युट्प्रत्ययोऽपि विहितः। अनादेशे हसनमिति रूपम्। ल्युट्प्रत्ययो यथा भावे विहितस्तथा करणार्थेऽधिकरणार्थे च विधीयते। यथा—करणे, इध्मप्रव्रश्चनः कुठारः। इध्मानि प्रवृश्च्यन्ते येनेत्यर्थः। अधिकरणे—गोदोहनी स्थाली। गौः दुह्यते यस्यां स्थाल्यामित्यर्थः। एवञ्च ल्युट्प्रत्ययोऽयं भावे, करणेऽधिकरणे चेत्यर्थत्रये विहितः। एवं स्थिते 'कृत्यल्युटो बहुलम्' (३।३।११३) इति सूत्रेण कृत्यप्रत्ययानां ल्युट्प्रत्ययस्य च विधानं बलमिति प्रोक्तम्। अर्थाद्यस्मिन्नर्थे ते प्रत्ययाः प्रोक्तास्ततोऽन्यत्रापि प्रवर्तन्त इति तदर्थः। यथा—हसतीति हसन इति शाब्दिकनिर्णयः। अत्र कर्तरि ल्युट्। अत्र भामहः—

ल्युटं च कर्तृविषयं देवनो रमणो यथा।

दीव्यतीति देवनः, रमत इति रमणः। एवञ्च शाब्दिकनिर्णयं समर्थयत्यत्र भामहः।

९. पञ्चमाध्याये (तद्धितप्रकरणे) 'तस्मै हितम्' (५।१।५) इति सूत्रम्। चतुर्थीविभक्त्यन्ताद् हितमित्यर्थे छप्रत्ययो भवतीत्यर्थः। उदा.—वत्सेभ्यो हितो वत्सीयो गोधुक्। अत्र छस्य स्थाने 'आयनेयी' (७।१।२) इत्यादिना ईयादेशः। अस्मिन् प्रकरणे 'सर्वपुरुषाभ्यां णढञौ' (५।१।१०) इति सूत्रं पठितम्। सर्व-पुरुष इत्याभ्यां द्वाभ्यां शब्दाभ्यां यथासंख्यं ण-ढञौ भवत इति तदर्थः। अत्र सूत्रे वार्तिकमित्थं दृश्यते—'सर्वाण्णो वेति वाच्यम्' इति। सर्वशब्दाद् हितार्थे विकल्पेन णप्रत्ययो भवतीति तदर्थः। णप्रत्यये कृते आदिवृद्धौ सार्वम्; णप्रत्ययाभावे 'प्राक् क्रीताच्छः' (५।१।१) इति छप्रत्यये ईयादेशे च सर्वीयमिति च रूपम्। सर्वेभ्यो हितमित्यर्थः। अत्र भामहः—

हितप्रकरणे णं च सर्वशब्दात्प्रयुञ्जते।
ततश्छमिष्ट्या च यथा सार्वः सर्वीय इत्यपि।।

१०. पञ्चमाध्याये (तद्धितप्रकरणे) 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५।२।३७) इति पाणिनिसूत्रम्। प्रथमाविभक्त्यन्ताद् अस्य प्रमाणमित्यर्थे द्वयसच्, दघ्नच्, मात्रच् इति प्रत्ययत्रयं प्रवर्तत इति तदर्थः। उदा.—ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम्। ऊरुप्रमाणम्। अत्र भामहः—

द्वयसज्दघ्नचाविष्टौ प्रमाणविषयौ यथा।
जानुदघ्नी सरिन्नारीनितम्बद्वयसं सरः।।

अत्र सरिद् जानुदघ्नीति स्थले दघ्नच्प्रत्ययानन्तरं 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः' (४।१।१५) इति सूत्रेण स्त्रियां ङीप्-प्रत्ययः। क्लीबे नारीनितम्बद्वयसम् इत्युदाहरणम्।

११. पञ्चामाध्याये (तद्धितप्रकरणे) 'तदस्यास्त्यस्मिन्निति मतुप्' (५।२।९४) इति मतुप्प्रत्यय उक्तः। यथा—गावः अस्य सन्तीति गोमान्। तत्प्रकरणे 'अत इनिठनौ' (५।२।११५) इति सूत्रं पठ्यते। अदन्ताद् इनि, ठन् तद्धितौ प्रत्ययौ प्रवर्तेते इति तदर्थः। उदा.—दण्डोऽस्यास्तीति दण्डी। एवं दण्डिकः। अत्र 'ठस्येकः' (७।३।५०) इति इकादेशः। अत्र सूत्रे अदन्तादेव शब्दादिनि-ठनौ प्रोक्तौ। अदन्तभिन्नादपि अनयोः प्रवृत्त्यर्थं 'व्रीह्यादिभ्यश्च' (५।२।११६) इति सूत्रं प्रणिनाय भगवान् पाणिनिः। यथा—व्रीहयोऽस्मिन् सन्तीति

व्रीही, व्रीहिकः। तत्र सूत्रे वार्तिकद्वयम्—'शिखामालासंज्ञादिभ्य इनिः' 'यवखदादिभ्य इकः' इति। अत्र भामहः—

इनिः प्रयुक्तः प्रायेण तथा ठंश्च मनीषिभिः।
तत्रापि मेखलमायामालानां सुतरां मतौ।।इति।

एवं रीत्या शिखी, माली, संज्ञीशब्दानां साधुत्वमभिहितम्।

१२. सप्तमेऽध्याये (तिङन्तप्रकरणे) किञ्चिद् विचार्यते। 'डुधाञ्-धारणपोषणयोः' इति धातोर्लटि प्रथमपुरुषबहुवचने झिप्रत्यये 'अदभ्यस्तात्' (७।१।४) इति सूत्रेण झस्य स्थाने अदादेशे 'श्नाभ्यस्तयोरातः' (६।४।११२) इत्याकारलोपे दधतीति रूपम्। एवञ्च दधतीति प्रथमपुरुषबहुवचनान्तरूपम्। अत्र भामहः—

अभ्यास्ताज्झेरदादेशे दधतीत्यादयोऽपि च।

पूर्वोक्त एवार्थः। एवं प्रथमपुरुषबहुवचने ददति जुह्वति जक्षतीत्यादीनि रूपाणि सिद्ध्यन्ति।

१३. एवं सप्तमाध्याये द्वितीयपादे सूत्रमिदं दृश्यते— 'आर्धधातुकस्येड्-वलादेः' (७।२।३५) इति। वलादेरार्धधातुकस्य इडागमः स्यादिति तदर्थः। तत्र आर्धधातुकं नाम 'आर्धधातुकं शेषः' (३।४।११४) इति सूत्रप्रोक्तः संज्ञाविशेषः। इडागमस्योदाहरणं यथा—भविता, भविष्यतीत्यादि। एवं स्थितेऽयमस्ति विशेषः—क्वचित्सार्वधातुकस्यापीडागम इति। यथा—'रुदादिभ्यः सार्वधातुके' (७।२।७६) इति सूत्रेण स विधीयते। रुद्-स्वप्-श्वस्-अन्-जक्ष इति पञ्चभ्यो धातुभ्यः परस्य वलादेः सार्वधातुकस्येडुक्तः। रूपाणि यथा—रोदिति, स्वपिति श्वसिति, प्राणिति, जक्षितीति। अत्र भामहः—

'रोदिति स्वपितीत्यादि सहेटा सार्वधातुकम्' इति। पूर्वोक्त एवार्थः।

अनया रीत्या व्याकरणशास्त्रे भामहस्य वैदुष्यं किञ्चिदिव चर्चितम्। एतावता ग्रन्थेन शब्दशुद्धिविषये कविभिर्जागरूकतया भाव्यमिति सन्दिदेश श्रीमान् भामहः। तदुक्तं चतुर्थे परिच्छेदे—

सूत्रकृत्पदकारेष्टप्रयोगाद्योऽन्यथा भवेत्।
तमाप्तश्रावकासिद्धेः शब्दहीनं विदुर्यथा।। इति।

सूत्रकृद् भगवान् पाणिनिः। पदकारः कात्यायनः। भाष्यकारः

पतञ्जलिश्चोपलक्ष्यते। तेषामिष्टो यः तस्मादन्यथाभूतो यः प्रयोगस्तं शब्दहीनं मन्यन्ते। कुतः? आप्तश्रावकासिद्धेः। आप्ता नाम प्रामाणिकवृद्धाः। तादृशाः श्रावकाः श्रावयितारः = अनुशासितारः। तेषामसिद्धेः = अभावात्। पाणिनि-कात्यायन-पतञ्जलय एव शब्दविषये प्रमाणभूता इत्यूचुः उद्यानवृत्तौ श्रीमन्तो डि.टि.ताताचार्याः। अत एवाह भामहः—

नाप्रयुक्तं प्रयुञ्जीत चेतस्सम्मोहकारिणम्।
तुल्यार्थत्वेऽपि न ब्रूयात् को हन्ति गतिवाचिनम्।।इति।

गम्लृधातोर्गत्यर्थकत्वं हिंसार्थकत्वं चोक्तम्; परन्तु गृहं गच्छतीत्यर्थे गृहं हन्तीति न कोऽपि प्रयुङ्क्ते। अत्र प्रसङ्गात् कश्चिन्मुख्योंऽशः प्रस्तूयते—

शब्दप्रयोक्तॄणां केषाञ्चिदयं स्वभावो भवति अपशब्दप्रयोगः। यदि कश्चित् प्रामाणिको वैयाकरणस्तादृशं प्रयोक्तारं वदेत्— 'नायं साधुशब्दः' इति झटिति स वक्ति—भवतां पाणिनीयमतानुसारेण तस्य साधुत्वं न स्यान्नाम व्याकरणान्तररीत्या तस्य साधुत्वं कल्पयितुं शक्यत इति। तादृशानुपदिशतीत्थं भामहः—

'न शिष्टैरुक्तमित्येव न तन्त्रान्तरसाधितम्'।।इति।

शिष्टैरुक्तमित्येतावता असाधुशब्दः साधुत्वेन न प्रयोक्तव्यः। किञ्च व्याकरणान्तरेण साधितमपि पदं न प्रयोक्तव्यम्। यथा—'फलेग्रहिरात्मंभरिश्च' (३।२।२६) इति सूत्रानुसारमात्मम्भरिः इति शब्दः साधुः। सूत्रे 'च'शब्दग्रहणेन कुक्षिम्भरिः इत्यस्यापि साधुत्वं निष्पद्यते; परन्तु मुरारेः प्रयोग इत्थं दृश्यते—'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति। अत्र मुरारिः 'उदरम्भरिः' इति शब्दं प्रायुङ्क्त। तस्य साधुत्वप्रदर्शनाय 'आत्मादेरकुक्षिषु' इति चान्द्रव्याकरणसूत्रं समाश्रीयते कैश्चित्; परन्त्विदं न युज्यतेतमामिति भामहाशयः। अत्र काचिच्छङ्का—

भामहेन भवता पाणिनीयमतीव स्तूयते। शास्त्रान्तरेऽपि वैशिष्ट्यमस्त्येवेति। अत्र समाधानं भामहो जगाद—

विद्यानां सततमपाश्रयोऽपरासां
तासूक्तान्न च विरुणद्धि कांश्चिदर्थान्।
श्रद्धेयं जगति मतं हि पाणिनीयं
माध्यस्थ्याद् भवति न कस्यचित्प्रमाणम्।।इति।

पाणिनीयं मतं = व्याकरणम्, अपरासां विद्यानामाश्रयः। शब्द-सन्दर्भमयत्वात् सर्वासां विद्यानाम्। शब्दविवेकस्य चैतदधीनत्वात्। अयमपरो विशेषो व्याकरणस्य, यदिदं विद्यान्तरोक्तं यं कमप्यर्थं न प्रतिषेधति। आभ्यां द्वाभ्यां विशेषाभ्यां व्याकरणं लोके सर्वेषामादरणीयम्। व्याकरणं श्रद्धेयम्। कस्मात्? यस्मान्न कस्यचिदेकस्यैव पुरुषस्य दार्शनिकस्य वा प्रमाणम्, किन्तु सर्वस्यापि। कुतः? माध्यस्थ्यात्। तत्तदभिमतार्थप्रतिषेधप्रसङ्गमन्तरा ताटस्थ्यावलम्बनादिति तदर्थः। शब्दशास्त्रमहिमा—

नापारयित्वा दुर्गाधममुं व्याकरणार्णवम्।
शब्दरत्नं स्वयं गम्यमलङ्कर्तुमयं जनः॥

तस्य चाधिगमे यत्नः कार्यः काव्यं विधित्सता।
परप्रत्ययतो यत्तु क्रियते तेन का रतिः॥

नान्यप्रत्ययशब्दां वागाविभाति मुदे सताम्।
परेण धृतमुक्तेव सरसाकुसुमावली॥

चतुष्टयी शब्दानां प्रवृत्तिः (भाष्यम्)।

द्रव्य-क्रिया-जाति-गुणभेदात् ते च चतुर्विधाः।
यदृच्छाशब्दमप्यन्ये डित्थादिं प्रतिजानते॥

सर्वथा पदमप्येकं न निगद्यमवद्यवत्।
विलक्ष्मणा हि काव्येन दुस्सुतेनेव निन्द्यते॥

नाकवित्वमधर्माय व्याधये दण्डनाय वा।
कुकवित्वं पुनः साक्षान्मतिमाहुर्मनीषिणः॥

प्रसङ्गेऽस्मिन् कुकवेर्लक्षणमित्थं प्रदर्शितं व्याख्याने—

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न वाऽर्थस्य।
रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च॥

अत्र शङ्का—सहृदयचेतस्समाराधनाय काव्यस्य प्रवृत्तिः। तत्र व्याकरणाध्ययनस्य का आवश्यकता? इति। अत्र भामहः प्रतिवक्ति—

स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते।
प्रथमालीढमधवः पिबन्ति कटु भेषजम्॥इति।

कवय: स्वकृतिषु शास्त्रार्थानपि प्रतिपादयन्ति। कटुत्वाद् बिभ्यतोऽपि लोके प्रथमं मधुरमास्वाद्य भेषजमुपयुञ्जते। अत: काव्येषु व्याकरणशास्त्रस्यावश्यकताऽस्त्येव।

एवमष्टत्रिंशत्संख्याकै: श्लोकै: पाणिनीयमतानुसारं शब्दानां साध्वसाधुते विचार्यान्ते स्वविनयगुणं भामह इत्थं प्रददर्श—

सालातुरीयमतमेतदनुक्रमेण
को वक्ष्यतीति विरतोऽहमतो विचारात्।
शब्दार्णवस्य यदि कश्चिदुपैति पारं
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ।।इति।

इत्थं षष्ठे परिच्छेदे शब्दशुद्धिनिबन्धनां प्रयोगपद्धतिं भामह: सम्यक् पर्यशोधयत्। अत्रत्यं विषयं सूक्ष्मेक्षिकया समीक्षमाणा वयं स्फुटमिदं जानीमो यत् शास्त्रान्तर इव शब्दशास्त्रेऽपि भामहस्य विजृम्भते पाण्डितीपटिमेति।

●

# अपभ्रंशवृत्तिविषये शास्त्रकृतां वैमत्यम्

**डॉ. का.इ.मधुसूदनः**
प्रवक्ता, न्यायविभागस्य
श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे, पुरी

***

**उपोद्घातः**

बोधकशब्दास्तावद् द्विविधाः—संस्कृताः, असंस्कृताश्चेति। संस्कृता गौः, घट इत्यादयः शब्दाः। असंस्कृतास्तु गावी, गोणी इत्यादयः शब्दाः। त एव अपभ्रंशा इति व्यवह्रियन्ते। तेषां वाचकत्वविषये विवदन्ते दार्शनिकाः। तेषु नैयायिका गौरित्यादिसंस्कृतशब्दानामेव गवादिषु शक्तिः, न तु गाव्याद्यपभ्रंशानामपि इत्यातिष्ठन्ते। अन्यथा तेषां वाचकत्वे साधुत्वापत्त्या 'न म्लेच्छितवै, नापभाषितवै' इत्यादिशास्त्रविरोधप्रसङ्गादिति। मीमांसका अपि नैयायिकवदेव अभिप्रयन्ति। वैयाकरणाः पुनः अपभ्रंशानामपि वाचकत्वं स्वीकृत्य साधुत्वाभावाद् यज्ञादिषु तदप्रयोगं समर्थयन्त इति स्थितिः। तदत्र विस्तरेण प्रतिपाद्यतेऽस्मिन् निबन्धे।

**प्राचीनवैयाकरणमतम्**

अत्र बोधकत्वस्य शक्तित्ववादिनः प्राचीनाः शाब्दिका अपभ्रंशानामवाचकत्वे ततो बोधानुपपत्तिः। न च तत्र शक्तिभ्रमात् तदुपपत्तिरिति वाच्यम्, मानाभावात्। शक्तिग्राहकप्रमाणमूर्धन्यस्य व्यवहारस्यापभ्रंशेषु तुल्यत्वात्। न च साधुशब्दस्मरणाद् बोध इति वाच्यम्। तच्छून्यानामपि ततो बोधोदयात्। उक्तञ्च वाक्यपदीये[1]—

पारम्पर्यादपभ्रंशाः विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येन तेषां साधुरवाचकः॥
दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः॥ इति।

---

१. ब्रह्मकाण्डे।

नैयायिकैः शक्तिभ्रमात् तत्र बोधोपपादनं क्रियते, तन्न साधु। बाधनिश्चयविरहेण भ्रमत्वकल्पनायोगात्। किञ्च ईश्वरेच्छाया; शक्तित्ववादिमते 'गगरीशब्दाद् घटो बोद्धव्यः' इतीच्छायाः क्लृप्ताया अपि न सम्बन्धत्वं कल्प्यत इति तदंशे शक्तिज्ञानं भ्रम इति वचनमपि न सम्यक्। तादृशेच्छायाः सत्त्वे तेन सम्बन्धेन सम्बन्धित्वाद् अपरोपस्थितौ तस्याः सम्बन्धत्वस्य दुर्वारत्वात्।

किञ्च विनिगमनाविरहात् संस्कृतेष्विवापभ्रंशेष्वपि शक्तिः सिद्ध्यति। तद्ग्राहकस्य व्यवहारस्याविशेषात्[1]। किञ्च न संस्कृतत्वं, न वा भाषात्वं शक्ततावच्छेदकम्, किन्तु आनुपूर्वी। सा च विभिन्नैवेति घटकलशादिपर्यायेषु यथा एकेनापरस्य शक्तत्वं न वार्यते, तथैव संस्कृतशब्दैरपि अपभ्रंशेषु शक्तिर्न वार्यते।

## अपभ्रंशानां साधुत्वाभावप्रतिपादनम्

ननु भाषाशब्दानामर्थवत्त्वस्योक्तरीत्या सिद्धौ प्रातिपदिकसंज्ञापत्तिः। यदि च तत्र तत्संज्ञा इष्यते, तर्हि तेभ्योऽपि सुबुत्पत्तौ व्याकरणव्युत्पाद्यत्वात् साधुत्वप्रसङ्ग इति चेत्, न, 'सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः, यथा लौकिकवैदिकेषु'[2] इति तस्य निरस्तत्वात्। लोकतोऽर्थबोधार्थं प्रयुक्ते शब्द इति व्याख्यानात्। यः शब्दो यस्मिन्नर्थे व्याकरणे व्युत्पन्नः, स तत्र साधुः। अपभ्रंशानां तु तत्तदर्थेषु व्याकरणव्युत्पाद्यत्वाभावान्न साधुत्वम्। देवदत्तादिनाम्नामपि 'उणादयो बहुलम्'[3] इत्यनेन, 'द्व्यक्षरं चतुरक्षरं स्पर्शमध्यमम्'[4] इति भाष्येण च साधुत्वमवसीयते।

न चैवं लाक्षणिकपदानां तीराद्यर्थेषु व्याकरणाव्युत्पन्नत्वाद् असाधुतापत्तिरिति वाच्यम्। गुणवाचकानां गुणे व्युत्पादनाद् गौणस्थले तत्पुरस्कारेण प्रवृत्तौ अनुपपत्तिविरहात्। 'सिंहो माणवकः' इत्यादौ हि सिंहादिगतशौर्यादिधर्मारोपेण माणवके प्रवृत्तानां सिंहादिशब्दानां साधुत्वम्। आधुनिकलाक्षणिकानां तु असाधुत्वमिष्टमेव।

पुण्यजनकत्वबोधनाय साधूनां 'साधुभिर्भाषितव्यम्' इति विधिः। पापजननबोधनाय 'नासाधुभिः' इति निषेधः। तथा च पुण्यजननयोग्यत्वं साधुत्वम्। पापजननयोग्यत्वमसाधुत्वम्। पुण्यजनकतावच्छेदकतया सिद्धायाः साधुत्वजातेः कोशव्याकरणादिकं ज्ञापकम्।

---

१. वैयाकरणभूषणम्, पृ.सं. २५०।
२. महाभाष्यम्, पस्पशाह्निकम्, वार्तिकम्-१।
३. पाणिनिसूत्रम्-३।३।१।
४. महाभाष्यम्।

न च पुण्यजनकतावच्छेदकजातिविशेषस्य साधुतारूपत्वस्वीकारे गोशब्दस्य अश्वेऽपि साधुत्वं स्यादिति वाच्यम्, राजसूयादेर्ब्राह्मफलाजनकत्ववद् एतस्य अर्थविशेषे प्रयुक्तस्यैव पुण्यजनकत्वात्। तत्र निर्णायकं तु कोशव्याकरणादिकमिति।

इत्थं च सर्वेषां शब्दानां स्वबोध्यतत्तदर्थेषु शक्तिरेव। अपभ्रंशानां वाचकत्वेऽपि शिष्टैर्धर्मबुद्ध्या अप्रयोगाद् व्याकरणनिष्पाद्यत्वाभावाच्च असाधुत्वेन न तेभ्यः सुबुत्पत्तिप्रयोजकप्रातिपदिकसंज्ञा। न वा तेषां यज्ञादिमध्ये प्रयोग इति, न किञ्चिदनुपपन्नमिति प्राञ्चो वैयाकरणा आशेरते[१]।

**अपभ्रंशविषये मञ्जूषाकृदाशयः**

वैयाकरणशिरोमणयो नागेशभट्टाः प्राचीनैर्निरूपितामपभ्रंशशक्तिं महता आडम्बरेण बहुयुक्तिपुरस्सरं व्यवस्थापयन्ति लघुमञ्जूषायाम्। तदत्र मिताक्षरैः वर्ण्यते—

साधुशब्देषु इवापभ्रंशेष्वपि शक्तिरस्त्येव। व्यवहारस्य शक्तिग्राहकस्य सत्त्वात्। अपभ्रंशानां सकलदेशशिष्टपरिग्रहविरहान्न शक्तिरिति तु न युज्यते। 'शवतिर्गतिकर्मा कम्बोजेषु, विकारे एवैनमार्या भाषन्ते' इत्यादिभाष्यरीत्या तत्तद्देशनियतेषु संस्कृतेषु शक्तिसिद्ध्यनापत्तेः। तेषां सकलदेशशिष्टापरिगृहीतत्वात्। न च तत्तद्देशनियतसंस्कृतानां वाचकत्वं मा भूदिति वाच्यम्।

माए घरोब अरणं अज्जहु णत्थिति साहिअं तुमए।
ता भण किं करणिज्जं एवं जेब ण वासरो थाई[२]।।

मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तत्कथय किं करणीयमेवमेव न वासरः स्थायी।।

इति वाचकस्य व्यञ्जकत्वे आलङ्कारिकैः प्रदर्शितस्योदाहरणस्यासङ्गत्यापत्तेः।

**असाधुतासमर्थनम्**

वाचकत्वेऽप्यपभ्रंशानां न साधुत्वम्। शिष्टैर्धर्मबुद्ध्या गगर्यादि-शब्दानामप्रयोगात्। साधुत्वं च पुण्यजनकतावच्छेदकजातिविशेषः। तद्व्यञ्जकं च व्याकरणशास्त्रम्। साधुशब्दानां पुण्यजनकत्वे 'एकः शब्दः सम्यग् ज्ञातः

---

१. वैयाकरणभूषणादौ।

२. काव्यप्रकाशः, पृ.सं. २०।

शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'[1] इति भाष्ये प्रदर्शितायाः श्रुतेरेव प्रमाणत्वात्। सम्यग् ज्ञातः सम्यक्त्वेन साधुत्वेन ज्ञातः, शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेण अनुसंहितः, सुप्रयुक्तः शिक्षोक्तरीत्या प्रयुक्तः। साधुत्वस्य च शिष्टप्रयोगकोशव्याकरणादिकमनुमापकम्। उक्तं च हरिणापि—

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः[2]।।इति।

**प्रातिपदिकसंज्ञाया वारणप्रकारः**

'साध्वनुशासनेऽत्र शास्त्रे'[3] इत्युक्तत्वात् साधूनामेव संज्ञाविध्युच्छेद्यत्वप्रतीत्या असाधुषु प्रातिपदिकसंज्ञापत्तिर्नावकाशं लभते। यर्वाणः, तर्वाण इत्यादौ सुप् असाधुरेव, शास्त्रविहितत्वाभावात्। खण्डसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणम्, अर्थवत्त्वबोधनवत्। एवञ्च भाषानुसारेण नामोत्तरं क्रियमाणा विभक्तिरपि न साधुत्वं भजते।

देशभाषानुसारेण यानि पदानि कृतानि 'कुञ्ची', 'मञ्ची', 'अप्पी', 'कोण्डा' इत्यादीनि, तेषामसाधुत्वमेव। टिघुभादीनां तु संज्ञानां शिष्टप्रयुक्तत्वात् साधुत्वं स्वीक्रियते। शास्त्रान्वितानां 'वचन्ति' इत्यादीनां शिष्टैरप्रयोगाद् असाधुत्वमेव अङ्गीकार्यम्।

इत्थञ्चापभ्रंशानां वाचकत्वेऽपि साधुत्वानङ्गीकारात् 'साधुभिर्भाषितव्यम्, नासाधुभि'रिति निषेधविषयत्वाद् अपभ्रंशानां याज्ञे कर्मणि शिष्टाप्रयोग उपपद्यत इति।

**अपभ्रंशविषये मीमांसकाभिप्रायवर्णनम्**

मीमांसकास्तावद् गाव्याद्यपभ्रंशेषु शक्तिं निराकुर्वन्ति। तेषां वाचकत्वे प्रमाणाभावात्। वाचकतास्वीकारे साधुत्वापत्त्या 'न म्लेच्छितवै नापभ्रंशितवै', 'साधूनेव प्रयुञ्जीत' इत्यादिशास्त्रविरोधप्रसङ्गाच्च। साधुत्वं च अनादिवृत्ति-प्रमाप्रयोज्यार्थप्रतिपादकत्वम्। गवादिसंस्कृतशब्दानां यद् गवादिरूपार्थप्रतिपादकत्वं, तद् वृत्तिप्रमाप्रयुक्तमिति तेषां साधुत्वमुपपद्यते। अपभ्रंशानां तु शक्त्यभावात् शक्यार्थाप्रसिद्ध्या लक्षणाया अप्यसम्भवान्न साधुत्वम्। आधुनिक-सङ्केतितडित्थादिपदेषु पाणिनिसङ्केतितवृद्धिटिघुभादिपदेषु च 'पिता नाम कुर्यात्'

१. महाभाष्यम्-६।१।८४;  २. वाक्यपदीयम्।
३. महाभाष्यम्।

इति विधिना पुत्रत्वनामत्वोपाधिना[१], 'व्याकृता वागुद्यते' इति विधिना व्याकरणोपाधिना चानादिवृत्तिप्रमासम्भवात् तेषां निरुक्तं साधुत्वं निराबाधम्।

असाधुत्वं च वृत्तिभ्रमेणार्थप्रत्यायकत्वम्। भाषाशब्दानां प्रयोगस्य करणापाटवेन ज्ञानस्य शक्तिभ्रमेण चोपपत्तेः, शक्त्यङ्गीकारोऽनावश्यकः। शक्त्यभावे वृत्त्यन्तरमपि न सम्भवतीति तत्र न वृत्तिप्रमेति तेषामसाधुत्वम्।

**पार्थसारथिमिश्राणां साधुत्वनिरुक्तिः**

पार्थसारथिमिश्रा अनादित्वे सति वाचकत्वमेव साधुत्वमाचक्षते[२]। यद्यपि वाचकत्वस्य टिघुभादिषु अभावादेव साधुत्वं वारयितुं शक्यते। तासां संज्ञानां हस्तचेष्टावत् सङ्केतितत्वेन तद्वत् प्रत्यायकत्वमात्रसद्भावेऽपि वाचकत्वे प्रमाणाभावात्। उक्तं च तासां साध्वसाधुबहिर्भूतत्वं हरिणा—

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः।
अनपभ्रंशरूपत्वात् नास्त्यासामपशब्दता।।
हस्तचेष्टा यथा लोके तथा सङ्केतिता मताः।
नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत्।।इति।

तथा च अनादित्वविशेषणं किमर्थमिति शङ्का उदेति, तथापि वाचकत्वस्यात्र अर्थप्रत्यायकत्वरूपस्य विवक्षितत्वात् तस्य च गाव्यादिशब्दसाधारण्याद् अपभ्रंशानामपि साधुतापत्तिः, अतस्तद्वारणस्यानादित्वविशेषण इति न दोषः। प्रतिपादितं चेदं सोमनाथीयव्याख्यायाम्[३]।

**खण्डदेवाचार्याणां पक्षोपपादनम्**

'साधूनेव प्रयुञ्जीत नासाधून्' इति प्रयोगनियमबलेन गाव्यादिशब्दानामसाधुत्वं सिद्ध्यति। व्याकरणशास्त्रकृतस्य तादृशनियमस्य श्रुतिमूलकत्वेन प्रामाण्यात् साधुत्वं च प्रमितवृत्त्या अर्थप्रत्यायकत्वरूपम्। टिघुभादिसंज्ञानामपि साधुत्वं सुसम्पादम्।

---

१. तैत्तिरीयसंहिता-६।४।७।

२. शास्त्रदीपिका-१।३।९, पृ.सं. ४७।

३. मयूखमालिका, पृ.सं. ४७।

तथा हि शाब्दबोधे वृत्तिग्रहाधीनपदार्थोपस्थितिर्हेतुरिति सर्वसम्मतम्। यदा च टिघुभादिशब्देषु न वृत्तिग्रहः, तदा न तेषामर्थबोधकत्वम्। यथा गाव्यादिशब्दानां स्वसदृशगवादिशब्दोपस्थापनेन शक्तिभ्रमेण वा बोधकत्वमुपपद्यते, तथा टिघुभादीनामर्थबोधकत्वं त्वनुपपन्नम्, स्वयं सम्पादितसङ्केतशालित्वात्। मुख्यार्थान्तरप्रयायकत्वाभावे लक्षणागौण्यौ अपि न सम्भवतः। तथा च तेषा-मर्थबोधकत्वान्यथानुपपत्त्या साम्प्रतिकशक्तिरूपवृत्तिस्वीकार आवश्यकः। अतः प्रमितवृत्त्या अर्थबोधकत्वरूपसाधुत्वं निर्वहति। तासां संज्ञानां साधुत्वादेव च 'पाणिन्यादेष्टेः'[1], इत्यादौ षष्ठ्यन्तप्रयोगोऽप्युपपद्यत इति खण्डदेवाचार्या ब्रुवन्ति।

**वैयाकरणाक्षेपसमाधानम्**

यत्तु गवादिशब्दानामिव गाव्यादिशब्दानामपि गवाद्यर्थबोधनेच्छया प्रयोगात् तेभ्यो गवाद्यर्थबोधोत्पादाच्च प्रयोगप्रत्ययान्यथानुपपत्त्या उभयत्र शक्तिकल्पनमिति वैयाकरणैरुक्तम्, तत्र, एकत्रैव गवादिशब्दे शक्तिकल्पनात्। अपभ्रंशाद् बोधस्तु इत्थम्—अपशब्दप्रयोगो हि आद्यप्रयोक्तुर्वाचकशब्दप्रयोगाशक्तिजन्यत्वेनापि उपपद्यते। तथा प्रयुक्तश्चापशब्दः स्वप्रकृतिभूतशब्दोपस्थापनेनार्थं बोधयति। बाधकाभावात्। तस्य च अशक्तिजत्वापरिज्ञानेन तत्र शक्तिं गृह्णन्तोऽपरे शक्तिभ्रमेणैव तच्छब्दं प्रयुञ्जते तस्मिन् अर्थे। एवं कथनेनैवोपपत्तावनेकत्र शक्तिकल्पना, नियामकाभावेन व्यवहारानुपपत्तिः, अष्टदोषदुष्टविकल्पापत्तिः, शब्देनार्थमभिधत्ते इत्थमभिधानक्रियायां सम्बद्धयोः करणकर्मरूपयोः शब्दार्थयोः पार्ष्ठिकान्वयावगतपरस्परनियमस्य भङ्गापत्तिरिति [2]यववराहाधिकरणोक्तरीत्या दोषचतुष्टयाङ्गीकरणमन्याय्यमित्युभयत्र शक्तिकल्पनमयुक्तम्। तदुक्तम्—अन्यायश्चानेकशब्दत्वमिति[3]।

यद्यप्यत्रैकस्मिन् शब्दे नानेकशक्तिकल्पना, तथापि शक्त्यन्तरकल्पना तावद् गत्यन्तरसत्त्वेऽन्याय्यैव।

अत एव यत्र करपाण्यादिशब्देषु विनिगमनाविरहः, गोशब्द-गावीशब्दवन्न परस्परसादृश्यम्, तत्र गत्यन्तरविरहाद् दोषचतुष्टयमप्यङ्गीक्रियत एव। न च प्रकृतेऽपि विनिगमनाविरहः शङ्कनीयः, अभियोगस्यैव विनिगमकत्वात्। अभियोगश्च

१. पाणिनिसूत्रम्-६।४।१४३। २. पूर्वमीमांसा-१।३।४।

३. जैमिनिसूत्रम्-१।३।२६;

व्याकरणोक्तलक्षणश्रवणाभ्यासरूपः। तथा च व्याकरणानुगतत्वमेव शक्तिनिर्णयद्वारा साधुत्वाभिव्यञ्जकं भवति। न च तर्हि व्याकरणानुगतस्य 'वचन्ति' इति प्रयोगस्य साधुतापत्तिरिति शङ्क्यम्। 'न हि वचिरन्तिपरः प्रयुज्यते'[१] इति कात्यायनवचनेनैव तस्य व्याकरणाननुगतत्वात्। 'कृष्णशं वासः' इत्यादौ 'बहुलं छन्दसि'[२] इत्यादिनैव कृष्णशादिशब्दानां व्याकरणानुगम उपपादनीयः। यद्यपि 'गङ्गायां घोषः' इत्यादौ सर्वत्र लक्षणादिरूपवृत्तिनिर्णयो व्याकरणेन न भवति, तथापि प्रयोगानुसारेण सम्पादनीयः स इति नानुपपत्तिः। तथा च यत्र व्याकरणानुगतस्य शब्दस्य वृत्तिप्रमापूर्वकप्रयोगः, तत्र साधुत्वस्याभिव्यक्तिरिति।

**व्याकरणस्य शक्तिनिर्णायकत्वोपपादनम्**

अत्रैवं मीमांसका अभिप्रयन्ति—साधुत्वाश्रयीभूताः शब्दास्तावत् प्रत्यक्षसिद्धाः। तेषां वृत्तिग्रहाधीनार्थप्रतिपादकत्वं फलोन्नेयम्। वृत्तिज्ञानं विना पदानामर्थाबोधकत्वात्। तत्र वृत्तिज्ञाने प्रमात्वनिश्चय एव केवलं व्याकरणाधीन इति, तत्रापि व्याकरणान्तरमूलकत्वान्न दोषः। व्याकरणस्य चतुर्दशविद्यास्थानान्तर्गतत्वेन परिगृहीतस्य प्रवाहनित्यत्वकल्पनावश्यम्भावात्। अतः 'गवादय एव साधवः, न गाव्यादयः' इति साधुस्वरूपनियमस्य स्मृत्यन्तरमूलकत्वादेव न निर्मूलत्वमिति तन्नियमबलाद् गाव्याद्यपशब्देष्वसाधुत्वं सिद्ध्यति। 'साधूनेव प्रयुञ्जीत, नासाधून्' इति प्रयोगनियमस्य अदृष्टार्थविषयकत्वाद् वेदमूलकतया प्रामाण्यं सम्भवत्येव।

प्रयोगनियममूलं नानुमेयम्, अपि तु प्रत्यक्षमेव। यतो वाजसनेयिशाखायां 'तेऽसुराः हेलयः हेलय इति वदन्तः पराबभूवुः। तस्मान्न म्लेच्छितवै (नापभाषितवै) म्लेच्छो ह वा एष अपशब्दः'[३] इति कृत्यार्थे विहितेन तव्यप्रत्ययेन न म्लेच्छितव्यमित्यर्थो बुध्यते। तस्मादपशब्दभाषणं प्रत्यक्षश्रुत्यैव निषिध्यते। तस्माद् गवादिपदेष्वेव शक्तिः। गाव्यादिपदेषु शक्तिविरहेऽपि शक्तिभ्रमाधीनार्थ-प्रत्यायकत्वमुपपद्यते। तथा च पारमार्षं सूत्रम्—'शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्' इति। तस्मान्नापभ्रंशेषु शक्तिरिति मीमांसका मन्वते।

**नैयायिकमतेन अपभ्रंशे शक्तिविचारः**

नैयायिका मीमांसकमतमनुसरन्ति अपभ्रंशविषये। तेऽपि हि अपशब्देषु शक्तिं नैवाङ्गीकुर्वन्ति। तेषां शक्तिमत्त्वस्वीकारे 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[४]

---

१. पाणिनिसूत्रवृत्तिः।
२. पाणिनिसूत्रम्।
३. शतपथब्राह्मणम्-३।२।१।२४;
४. पाणिनिसूत्रम्-२।१।४५।

इत्यनुशासनेन प्रातिपदिकसंज्ञायां तदुत्तरं 'ङ्याप्प्रातिपदिकात्'[1] इति सूत्रेण सुबुत्पादप्रसङ्गात्। अपशब्दे शक्तिविरहेऽपि व्युत्पन्नानां गावीशब्देन तत्प्रकृतिकगोशब्दस्मरणसम्भवात् तत एव गवादिशाब्दबोधः। अव्युत्पन्नानां त्वपभ्रंशानामर्थविशेषेषु शक्तिभ्रमाद् बोध इति न किञ्चिदनुपपन्नम्। उक्तं हि हरिणाऽपि—

> अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते।
> अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः[2] ॥ इति।

ननु गोपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छाया एव गोपदशक्तित्वात् कथं गावीशब्दे तद्भ्रमः सम्भवतीति चेत्, केनचिद् गोशब्दे प्रयोक्तव्ये अनवधानाद् अशक्त्या वा गावीशब्दे प्रयुक्ते व्युत्पन्नः, तेन शब्देन गोशब्दमनुमाय गावीशब्दोन्नीततच्छब्देन गां बुद्ध्वा गवानयनादिकं कृतवान्। पार्श्वस्थो व्युत्पित्सुर्गावीशब्देनायं गां प्रतीतवानिति निश्चित्य गावीशब्दमेव गोशब्दत्वेन प्रतीत्य व्युत्पादयतीति कौस्तुभकृतः।

**अपभ्रंशानां साधुतापत्तिनिरासः**

ननु नैयायिकमते तत्पदजन्यबोधविषयत्वप्रकारकेश्वरेच्छायाः शक्तित्वस्वीकारात् तदर्थविषयकबोधजनकत्वप्रकारकेश्वरेच्छाविशेष्यत्वमेव तद्वाचकत्वमित्यङ्गीक्रियते।

तथा च अपभ्रंशानामपि वाचकतापत्तिः। ते हि वस्तुतः शक्तिशून्या व्यवहाराधीनगृहीतशक्तिका इति तन्मतम्। तेभ्योऽपि शक्तिभ्रमेण गवादिविषयकशाब्दबोधोऽनुभवसिद्ध इति गाव्यादिशब्दानामपि बोधकत्वमक्षतम्। अतः सन्मात्रविषयके भगवत्सङ्केते अपभ्रंशा अपि बोधकत्वेन विषया इति नैयायिकैः स्वीकार्यम्। तथा च गोविषयकबोधजनकत्वप्रकारकेश्वरेच्छाविशेष्यताया गाव्याद्यपभ्रंशेषु सत्त्वात् तेषां वाचकत्वं प्रसज्येत।

न चापभ्रंशानां वाचकत्वाङ्गीकारे वा क्षतिरिति वाच्यम्। तथा सति साधुत्वप्रसङ्गेन शास्त्रविरोधात् साधुत्वं हि शक्तिभ्रमानधीनशाब्दबोधजनकत्वम्। एवं चापभ्रंशानां साधुत्वोपगमे तेषामपि 'साधुभिर्भाषितव्यम्' इति विधिविषयत्वापत्त्या यज्ञादौ तत्प्रयोगे प्रत्यवायस्यैवाप्रसक्त्या प्रायश्चित्तविधिवैयर्थ्यं स्यात्। तथा चापभ्रंशानां साधुतावारणाय शक्तिरन्यादृशी वाच्या इति चेत्, सत्यम्, शक्तेरुक्तरूपत्वे स्यादेवेयमापत्तिः; परन्तु शक्तिर्न तादृशी सिद्धान्तसिद्धा। तथा सति

---

१. पाणिनिसूत्रम्-४।१।१; २. वाक्यपदीयम्, ब्रह्मकाण्डम्-१५१।

गङ्गादिपदस्य तीरादिवाचकतापत्त्या लक्षणोच्छेदप्रसङ्गात्; परन्तु तत्पदजन्य-बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वं, तादृशप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता वा तत्पदशक्तिः। तस्याश्च संस्कृतनिरूपिताया एव स्वीकाराद् अपभ्रंशस्य न शक्तत्वम्, न वा साधुत्वम्।

न च विनिगमनाविरहेण शक्तत्वमपभ्रंशे लाक्षणिके च स्वीक्रियतामिति वाच्यम्। शक्तिभ्रमादिना, लक्षणया चोपपत्तौ निरुक्तशक्तत्वस्य साधुसंस्कृत एव स्वीकारात्। फलबलेन तथा कल्पनात्। अन्यथा तेषां साधुतापत्त्या यज्ञे प्रयोगप्रसङ्गात्।

## अपभ्रंशानां वाचकत्वे गौरवम्

एकैकस्य संस्कृतस्यानेकेऽपभ्रंशा दृश्यन्ते। अनेकेषु गावी, गोणी, गाच इत्यादिषु गवादिवाचकत्वकल्पने गौरवात् संस्कृतशब्द एव शक्तिः, न त्वपभ्रंशेषु। तथा च पारमार्षं सूत्रम्—अन्यायश्चानेकशब्दत्वमिति[१]।

न चैवं सति घटपदस्यैव घटवाचकत्वम्, न कुम्भादिपदानाम्, तुल्ययुक्तेरिति पर्यायोच्छेदप्रसङ्ग इति वाच्यम्। विनिगमनाविरहेण तत्र कुम्भादिपदानामपि शक्तिसिद्धेः। प्रकृते तु संस्कृतशब्दस्य सर्वदेशेष्वेकत्वम्, अपभ्रंशानां तु देशभेदेन विभिन्नत्वमिति विनिगमकं विद्यते।

किञ्च 'नापभ्रंशितवै' इति श्रुतिर्व्याकरणं चापि विनिगमकम्। अत एव कोशेषु पर्यायपाठे अपभ्रंशा न परिगण्यन्ते। तस्माद् अपभ्रंशानां वाचकत्वे साधुतापत्तिः, शक्तिमत्त्वस्यैव साधुत्वपदार्थत्वादिति सिद्धम्।

## नव्यनैयायिकानां साधुत्वनिर्वचनम्

नव्या एवमाशेरते—शक्तिमत्त्वरूपं यदि साधुत्वम्, तदा लाक्षणिक-गङ्गादिपदानां साधुत्वं न स्यात्। यद्यपि तेषां प्रवाहादिरूपेऽर्थे शक्तत्वमस्त्येव, तथापि घटादिपदस्य पटाद्यर्थे साधुतापत्तिवारणाय यः यस्मिन् अर्थे शक्तः, स तत्र साधुरिति नियमस्य वाच्यत्वाद् गङ्गादिपदस्य तीरेऽशक्तत्वात् तत्र असाधुतापत्तिरिति।

किञ्च केवलप्रकृतिप्रत्यययोः साधुतापत्तिः, तयोः प्रत्येकं शक्तिमत्त्वात्। एवं प्रकृतिप्रत्ययसमुदाये समासादौ च शक्त्यनङ्गीकारेणासाधुतापत्तिरपि, तस्माद् व्याकरणशिक्षितत्वमेव साधुत्वम्। यस्मिन्नर्थे यः शब्दो व्याकरणव्युत्पादितः स

१. जैमिनिसूत्रम्-१।२।२६।

तस्मिन्नर्थे साधुरिति नियमस्वीकारान्न घटादिशब्दानां पटाद्यर्थे साधुताप्रसङ्गः। एवं गावीशब्दो गोरूपार्थ एवासाधुः। गं गणपतिमवितुं शीलमस्येत्यर्थे तस्य साधुत्वं त्विष्टमेव।

न चाधुनिकसङ्केतितडित्थादिपदानां व्याकरणशिक्षितत्वाभावाद् असाधुतापत्तिरिति वाच्यम्। तेषां विशिष्याव्युत्पादनेऽपि 'उणादयो बहुलम्'[1] इत्यादिना व्युत्पादनान्न दोषः।

साधुत्वज्ञानाभावेऽपि असाधुत्वनिश्चये असति शब्दबोधस्यानुभविकत्वात् साधुत्वज्ञानं न शाब्दबोधे हेतुः; अपि तु व्याकरणाव्युत्पाद्यत्वरूपासाधुत्वनिश्चयस्य प्रतिबन्धकत्वात् तदभाव एवेति। निरूपितं चेदं न्यायकौस्तुभे।

**समीक्षणम्**

अपशब्दानां साधुत्वनिराकरणे बद्धश्रद्धाः शास्त्रकारास्तेषां वाचकत्वे, साधुत्वस्वरूपे, तस्य शाब्दबोधोपयोगित्वे च विवदन्ते। तत्र मीमांसका वृत्तिप्रमाधीनार्थप्रत्यायकत्वं साधुत्वं मन्वाना गाव्यादिशब्दानां शक्तिमत्त्वे साधुत्वापत्तिभिया वाचकत्वं निराकुर्वन्ति। नैयायिका व्याकरणव्युत्पाद्यत्वमेव साधुत्वमिति, तदभावनिश्चयः शाब्दबोधे प्रतिबन्धक इति चाभ्युपयन्ति। वैयाकरणास्तु वाचकत्वं स्वीकुर्वन्तः साधुत्वं पुण्यजनकतावच्छेदकजातिविशेषरूपं व्याकरणव्यङ्ग्यं प्रतिक्षिपन्ति। तच्च साधुत्वनिर्वचनं न साधु। साधुत्वं हि न जातिः, कत्वादिना साङ्कर्यस्य बाधकस्य सत्त्वात्। साधुगकारे असाधुककारे परस्परविरहिणोः कत्वसाधुत्वयोः साधुककारे समावेशात्।

किञ्च अनेकापभ्रंशेषु वाचकत्वकल्पने गौरवं तन्मते पूर्वोक्तं जागरूकम्। तस्माच्छक्तिभ्रमेणाव्युत्पन्नानां व्युत्पन्नानां च प्रमादेनोच्चरितापभ्रंश-ज्ञानाधीनसाधुशब्दस्मरणेन गाव्यादिपदोच्चारणस्थले शाब्दबोधनिर्वाहे अपभ्रंशानां शक्तिमत्त्वकल्पनं न युक्तम्।

इत्थं चापशब्दानां न वाचकत्वम्, न वा व्याकरणनिष्पाद्यत्वरूपं साधुत्वम्। तत्स्वीकारे 'नापभ्रंशितवै' इति प्रत्यक्षंश्रुतिविषयत्वानुपपत्त्या यज्ञादिकर्मणि तत्प्रयोगप्रसङ्गादित्येव समीचीनमिति प्रतीमः।

●

---

१. पाणिनिसूत्रम्-३।३।१।

# वैशेषिकमतेन समवायनिरूपणम्

**श्री के.इ.धरणीधरन्**
काशीहिन्दूविश्वविद्यालयः
वाराणसी



अशेषजनोज्जिजीवयिषया आसृष्टेराहितप्रचाराणामाम्नायानामभिरक्षणदीक्षितैरध्यक्षितपरावरैः परमर्षिभिरनुगृहीतेषु शास्त्रेषु दर्शनेष्वन्यतमं तावत् कणादोपज्ञं वैशेषिकदर्शनं नाम। दर्शनमिदं द्रव्यगुणकर्मसामान्यविशेषसमवायाभावादीनां सप्तानामेव पदार्थानां निरूपणेन पदार्थतत्त्वविवेकशास्त्रमित्यपि प्रसिद्धिं भजत इति दर्शनविदः।

दर्शनेषूपलभ्यमानेषु प्रप्रथमं समवायाख्यं पदार्थं दर्शनमिदमेव सूत्रारूढं निरूपयतीत्यत्र नास्ति काचन संशीतिः। अतः समवायपदार्थं कथमिदं दर्शनं निरूपयतीत्यत्र लेखनीं किञ्चिद् व्यापारयामि।

अत्र कणव्रतः—प्रप्रथममयमेव महर्षिः समवायं प्रदर्श्य तद्विषयकं सूत्रं च प्रणिनाय[१]—'इहेदमिति यतः कार्यकारणयोः स समवायः' इति। कार्यकारणयोर्यतः सम्बन्धाद् इह इदमिति प्रत्ययो भवति स समवाय इति सूत्रार्थः। तन्तुषु पटः, कपालेषु घटः, वीरणेषु कट इत्यादिप्रत्ययो हि पटादौ तन्त्वादिवृत्तित्वं विषयीकरोति। तच्च वृत्तित्वं सम्बन्धविशेषनियन्त्रितमिति स सम्बन्धः समवाय इति कल्प्यते। न च तत्र संयोगकल्पनं युक्तम्, अन्यतरकर्मादीनां तदुत्पादकानां तत्र विरहात्, विभागपर्यवसानाभावाच्च सम्बन्धिनां युतसिद्धत्वविरहाच्च न संयोगस्सम्भावनीयः। अत एव 'युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते'[२] इति कार्यकारणयोरवयवावयविनोरयुतसिद्धयोः संयोगविभागौ न स्त इति सूत्रकृता कण्ठरवेणोक्तम्। किञ्च, संयोग आधाराधेयभावं विना स्वतन्त्रतया अवस्थितयोरपि भवति। तन्तुपटादीनां सम्बन्धस्तु आधाराधेयभावेनावस्थितयोरेव दृश्यते। अत एव इहेदमित्यनेन सप्तम्या आधाराधेयभावमात्रं प्रत्याय्यत इति।

१. वैशेषिकदर्शनम्-७.२.२६; २. तत्रैव-७.२.१३।

इहैवेदमित्यवधारणविवक्षापि कार्या। तथा च नियताधाराधेयविषयकविशिष्टप्रत्ययो यत इति वाक्यार्थः सिद्ध्यति। अत एव संयोगमत्र निराचिकीर्षुः प्रशस्तपादः प्रावोचैवम्[१]—'न चासौ संयोगः, सम्बन्धिनामयुतसिद्धत्वात्, अन्यतरकर्मादिनिमित्तासम्भवात्, विभागान्तत्वादर्शनात्, अधिकरणाधिकर्तव्ययोरेव भावादिति' इति।

अत्र युतसिद्ध्यभावादिति पूर्वसूत्रं प्रत्यभिज्ञापयितुं कार्यकारणयोरिति सूत्रे प्रोक्तम्। तथा च कार्यकारणयोरयुतसिद्धत्वात् समवाय इति सिद्धावयुतसिद्धानां सर्वेषां समवाय इति लभ्यते। अत एव प्रशस्तपादभाष्यकारेण '[२]अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः' इति प्रत्यपादि।

**अयुतसिद्धत्वपरिष्कारः**

किं नाम अयुतसिद्धत्वम्? इति चेदत्र ब्रूमः—यु-मिश्रणामिश्रणयोरिति युतममिश्रितम्, युतयोरमिश्रितयोरसम्बद्धयोः सत्ता युतसिद्धिः। सम्बन्धिनोस्सत्ताकाले मिथः कदाचिदसम्बद्धत्वमिति यावत्। यथा दण्डीत्यत्र दण्डः प्रथमत एवासम्बद्धं सद् अनन्तरं कदाचित् पुरुषाश्रितमवतिष्ठत इति तदर्थः। एतादृशयुतसिद्धेरभावोऽयुतसिद्धिरिति फलति। अर्थात् पृथगवस्थानं सम्बन्धिनोरुभयोरपि परस्परपरिहारेण ययोर्नास्ति, तावयुतसिद्धौ। तयोस्सम्बन्धः समवायः, यथा तन्तुपटयोः। एतदेव मनसि निधाय तर्कसङ्ग्रहकारेण[३] 'ययोर्द्वयोः मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ' इति प्रोक्तम्। अस्यायं भावः—ययोस्तन्तुपटयोर्मध्ये एकं पटोऽविनश्यदवस्थं विनश्यदवस्थामनापन्नं सद् अपराश्रितमेव तन्त्वाश्रितमेवावतिष्ठते, तौ तन्तुपटौ अयुतसिद्धौ। विनश्यदवस्थं नाम अव्यवहितोत्तरक्षणवृत्तिनाशप्रतियोगिस्वरूपकमिति। विनश्यन्ती अवस्था यस्य तद् विनश्यदवस्थम्। अवस्था नाम स्वरूपम्। विनश्यच्छब्दस्य अव्यवहितोत्तरक्षणवृत्तिनाशप्रतियोगीत्यर्थः। तथा च स्वाव्यवहितोत्तरक्षणवृत्तिनाशप्रतियोगिस्वरूपवद्भिन्नम् अविनश्यदवस्थमिति फलितम्। नाशाव्यवहितपूर्वक्षणात् पूर्वक्षणेषु विद्यमानमिति यावत्। एतत्पदानिवेशे अयुतसिद्धलक्षणस्य तन्तुपटयोरव्याप्तिः प्रसज्यते, तथा हि—तन्तुपटयोर्मध्ये एकस्य पटस्य तन्त्वाश्रितत्वेनैवावस्थानमिति नियमविरहात्, यदा तन्तुनाशात् पटनाशस्तदा तन्तुनाशक्षणे पटस्य तन्त्वनाश्रितस्यैवावस्थानात्। यतस्तन्तुनाशपटनाशयोर्भिन्नकालीनत्वात्। अतोऽविनश्यदवस्थेति लक्षणे विशेषणं दीयते। विनाशसामग्र्या असन्निहितत्वं ह्यविनश्यदवस्थत्वम्। तन्तुनाशक्षणे पटनाशं प्रति तन्तुनाशस्य चरमकारणत्वाद् विनाशसामग्र्यास्समवधानाद् विनश्यदवस्थ एव

१. प्रशस्तपादभाष्यम्, पृ. ७७५।
२. तत्रैव, पृ. ७७३;
३. तर्कसङ्ग्रहः।

स पटः (तन्तुनाशक्षणस्थः), उत्तरक्षणे पटस्य नाशात्। अतोऽविनश्यदवस्थः पटस्तन्तुनाशपूर्वक्षणावच्छिन्नपटः, तस्य तु तन्त्वाश्रितत्वेनैवावस्थानाद् नाव्याप्तिरिति ध्येयम्।

एवमुक्तलक्षणे एकशब्दानिवेशे अयुतसिद्धयोः पदार्थयोः परस्पराश्रितत्व-मायाति तथा सति तन्तुपटयोरयुतसिद्धत्वं न सम्भवति, यतस्तन्तुष्वेव पटस्याश्रयणात्, न तु पटेषु तन्तूनामाश्रयणम्। अत एव तन्तुषु पट इत्येव व्यवहारः, न तु पटेषु तन्तव इति। अत एकपदनिवेशः कार्यः। तथा सति उभयाश्रितत्वस्यानवेक्षणाद् एकस्य अपराश्रितत्वस्यैव विवक्षणान्न दोषः।

एवं कपालघटध्वंसयोरयुतसिद्धत्ववारणाय लक्षणे अपराश्रितमिति पदं निवेशनीयम्। तथा हि—पूर्वोक्ताविनश्यदवस्थत्वलक्षणाक्रान्तत्वेन घटध्वंसस्तु अविनश्यदवस्थ एव। तथापि कपालनाशानन्तरं घटध्वंसस्तु अपराश्रितं कपालाश्रितं नावतिष्ठत इति न दोष इत्यलमक्षरक्षरणेन।

किञ्च इहेदमिति सूत्रोक्तपदस्वारस्यादिदमवगम्यते यत्—इहेदमिति सप्तम्या आधाराधेयभावमात्रं प्रत्याय्यते। अवधारणं तत्र विवक्षणीयम्, इहैव इदमिति। तथा च नियताधाराधेयविषयकविशिष्टप्रत्ययो यत इति वाक्यार्थस्सम्पद्यते। अत एव तन्तुषु पट इत्येव प्रतीतिर्जायते, न तु पटे तन्तव इति। अतोऽयुतसिद्धयो-राधाराधेयभूतयोर्यः सम्बन्धः स समवाय इति सिद्ध्यति। तेन धर्मस्य सुखस्य च परस्परं कार्यकारणभावरूपत्वेऽपि आधाराधेयभावविरहात् तत्र न समवायलक्षण-सम्भवः।

एवञ्च सति इदमित्थमित्यनुक्त्वा इहेदमिति कथनम्—अवयवापेक्षया अवयविनोऽतिशयितकार्यकरत्वेन प्राधान्येन इह तन्तुषु पट इत्येवं प्रयोगभूमानमनुसृत्येति ब्रूमः। अत एव इह रसः, इह गन्धः, इह शब्द इति गुणमात्रग्राहीन्द्रियजन्यप्रत्यक्षसङ्ग्रहोऽपि सुलभो भवति। तत्र द्रव्यमुख्यविशेष्यक-प्रत्यक्षायोगाद् द्रव्यस्य तदिन्द्रियाग्राह्यत्वात्। तथा च उक्तव्यवहारे इदमिति अवयवि, गुणः, कर्म च गृह्यते, न तु सामान्यं विशेषो वा, तयोः प्रकारतयैव भानात्। नापि परमाणुरूपादि, इदमिति प्रत्यक्षायोगादिति सूचयितुमेव प्राह सूत्रकारः कार्यकारणयोरिति। अतः सूत्रेऽस्मिन् कार्यकारणयोरिति कथनेन अवयवावयविनोः कार्यगुणादिकारणद्रव्ययोश्च विशिष्टबुद्धिनियामकः समवाय इत्येतावन्मात्रं लभ्यते। 'यतः सः' इति पदद्वयस्वारस्यात् समवायसिद्धिं विशिष्टबुद्धिहेतुत्वेन प्रादीदृशत् सूत्रकार इति प्रतीमः।

यद्यपि जातिव्यक्त्योर्नित्यगुणनित्यक्रियाभ्यां द्रव्यस्य च समवायस्सम्बन्ध इत्ययं विषयः पूर्वोक्तसूत्रान्न प्रतीयते, तथापि सूत्रान्तरपर्यालोचनया एतत्प्रसाधयामः। तथा हि—'एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्'[1] इति सूत्रितं चतुर्थप्रथमे। तस्यायं भावं—एतेन रूपरसगन्धस्पर्शेषु महद्गतेषु तत्तदिन्द्रिय-जन्यज्ञानव्युत्पादनेन, गुणान्तरेषु कर्मणि च चाक्षुषे उक्तरूपकारणवर्णनेन च गुण-गतयोर्गुणत्वस्य भावाख्यायास्सत्तायाश्च सर्वेन्द्रियं ज्ञानमपि अनेकद्रव्यसमवेत-समवायादिति सिद्धमित्यर्थः। व्यक्तिग्रहणयोग्यतैव जातिग्रहणयोग्यता। अत एव यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिरपि तदिन्द्रियग्राह्येति नियमोऽपि प्रवर्तते। तथा च सत्तागुणत्वयोर्ग्रहणं व्यक्तिग्रहणमिव यथायथं सर्वेन्द्रियैर्भवतीति सिद्ध्यति। तथा च जातिव्यक्त्योरपि समवायस्सूत्रसम्मत इति फलितम्।

एवं नवमप्रथमगतेन 'आत्मसमवायादात्मगुणेषु'[2] इति सूत्रेण सूत्रकारो गुणगुणिनोस्समवायं समापीपदत्। इदं च प्रकरणं योगिप्रत्यक्षनिर्वाहार्थं प्रवृत्तम्। तत्र योगिनां लौकिकमपि प्रत्यक्षं सम्भवतीति प्रदर्शनार्थमिदं सूत्रं प्रोक्तम्। अस्यायं भावः—आत्मगुणेष्वतीन्द्रियेषु धर्माधर्मादिषु आत्मसमवाय एव प्रत्यक्षसन्निकर्षः। आत्मप्रत्यक्षे यः सन्निकर्षः कारणम्, तादृशसन्निकर्षविशिष्टात्मसमवाय एवेति तदर्थः।

एवं क्रियाक्रियावतोश्च समवायमेतत्पूर्वसूत्रे प्रादीदृशत् सूत्रकारः 'तत्समवायात्कर्मगुणेषु'[3] इति।

अस्यायमर्थः—योगजधर्मसहकृतमनस्संयोगस्य, समवायाद् युक्तयुञ्जानयोः कर्मसु गुणेषु च प्रत्यक्षमुत्पद्यते। कर्मगुणेति कथनेन सामान्यादिकमपि ग्राह्यम्। एवं 'कारणे समवायात् कर्माणि'[4], 'तथा रूपे कारणैकार्थसमवायाच्च'[5] इति सूत्रेऽप्यत्रानुसन्धानमर्हतः। एतत्सर्वमभिप्रेत्यैव प्रशस्तपादेन 'इह तन्तुषु पटः, इह द्रव्ये गुणकर्मणी, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणे गुणत्वम्, इह कर्मणि कर्मत्वम्, इह नित्यद्रव्ये अन्त्या विशेषा इति प्रत्ययदर्शनात्'[6] इत्यभाषि। एतेभ्य उदाहरणेभ्यः स्पष्टं प्रतीयते यद् अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषतद्वतोश्च समवायस्सम्बन्धो भाष्यकृदभिप्रेत इति। एवं तात्पर्यटीकाकारेणाप्यभ्यधायि 'अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिजातिमन्तौ च मिथः सम्बद्धावनुभूयेते'[7] इति।

---

१. वैशेषिकदर्शनम्, ४-१-१३; २. तत्रैव, ९।१।१५।
३. तत्रैव, ९-१-१४; ४. वैशेषिकदर्शनम्, १०-२-३।
५. तत्रैव, १०-२-४; ६. प्र.भा., पृ. ७७५, ७. ता.टी., पृ. २१०।

**समवायस्यातिरिक्तपदार्थत्वम्**

किञ्च समवायोऽयं क्लृप्तेषु षट्सु पदार्थेषु नान्तर्भवतीति सूत्रकारः 'द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः'[१] इति स्पष्टमभ्यधात्। अस्यायं भावः— विलक्षणबुद्धिविषयत्वाद् यथा सत्ता द्रव्यत्वगुणत्वशून्या, तथा समवायोऽपि विलक्षणबुद्धिविषयत्वान्न द्रव्यत्वादिमान् इति। तदुक्तं भाष्ये—'स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात्। यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मानुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्च अर्थान्तरभावः, तथा समवायस्यापि पञ्चसु पदार्थेषु इहेति प्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति'[२]। इति। न चैवं सति संयोगस्थलेऽपि इहेति प्रतीतिरेकरूपैव दृश्यते, न हि तावता संयोगस्यैकत्वं स्वीक्रियत इति वाच्यम्, संयोगनानात्वे कारणनानात्वं प्रयोजकम्। न तथा प्रामाणिकं कारणं समवायस्योपलभ्यत इति समवायोऽकारणकः। अत एवोक्तं भाष्ये—'विशेषलिङ्गाभावाच्च'[३] इति। यतः समवायोऽकारणकः, अत एव तस्य नित्यत्वमपि सिद्धम्।

अतस्सिद्धं समवायकल्पनं प्रति समवायिनोर्भेदो न प्रयोजकः; अपि तु जातिव्यक्त्यादीनामपृथगवस्थितानां विशिष्टबुद्धिनिर्वाहकत्वमेव प्रयोजकमिति। एतेन 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः'[४] इति सूत्रभाष्ये समवायः समवायिभ्यः परमाणुद्व्यणुकेभ्योऽत्यन्तं भिन्न इति समवायलक्षणेनान्येनैव सम्बन्धेन तेभ्यः सम्बध्नातीति वाच्यम्, अत्यन्तभेदसाम्यात्। तथा च तस्य तस्यान्यान्यसम्बन्धकल्पनेनानवस्थाप्रसङ्ग इति कथनमप्यपास्तम्।

अत्रायं निष्कर्षः—समवायलक्षणघटकमयुतसिद्धत्वं पृथगाश्रयाश्रयित्वाभावरूपं पृथग्गतिमत्वाभावरूपं वेति परिष्कृतं वैशेषिकैः। एवं समवायकल्पनं प्रति समवायिनोर्भेदो न हेतुः; परन्तु जातिव्यक्त्यादीनामपृथगवस्थितानां विशिष्टधीनिर्वाहकत्वमेव प्रयोजकमिति स्वीकृतं वैशेषिकैः। एवं समवायः स्वरूपापरपर्यायतादात्म्यसम्बन्धेन वर्तत इत्युररीक्रियते। अथ चायं समवाय एको नित्योऽतीन्द्रियश्चेति वैशेषिकः पन्थाः। न चैवमेकत्वे समवायस्य द्रव्ये कर्मत्वादिसमवायस्य सम्भवाद् द्रव्यत्वादीनां सङ्करप्रसङ्ग इति वाच्यम्, आधाराधेयनियमादेवासङ्करात्। तथा हि—यद्यपि य एव द्रव्यत्वसमवायः, स एव गुणत्वकर्मत्वादीनामपि, तथापि तेषां द्रव्यं नाधारस्तत्र तेषामप्रतीयमानत्वात्। द्रव्येष्वेव द्रव्यत्वस्य प्रतीतेः, न त्वन्यत्रेत्यन्वयव्यतिरेकदर्शनादेव नियमः। एतेन

---

१. वै.द., ७.२.२७; २. प्र.भा., पृ. ७७६।

३. प्र.भा., पृ. ७७७; ४. ब्र.सू., २.२.१३।

स्पर्शसमवायवति वायौ रूपवत्ताप्रतीतिः स्यादिति दूषणमपि निरस्तम्। न हि वायौ रूपमित्याधारता वायोः प्रतीयते। न हि रूपवत्ताप्रतीतेर्नियामको रूपसमवायः, अपि तु समवायसम्बन्धेन रूपम्। सम्बन्धस्य हि लोके अनुयोगिप्रतियोगिसापेक्षत्वानुभवो दृश्यते। न च रूपादेस्सम्बन्धतया भानमनुभवसिद्धम्। न चैवमभावस्यापि सम्बन्धत्वेन भानाननुभवात् तत्रापि वैशिष्ट्यमन्यत् स्यादिति शङ्कनीयम्, अभावस्य प्रतियोगिनं विना कुत्रापि भानासम्भवात्। नञः प्रतियोग्यनुयोगिज्ञानमन्तरा बोधजनकत्वाभावात् सम्बन्धवत् सप्रतियोग्यनुयोगिकोऽभावः स्वयं सम्बन्धरूपोऽपि भवितुमर्हति, न तथा रूपादिभानं प्रतियोग्यनुयोगिसाकाङ्क्षमिति विशेषात्। तथा च वाय्वनुयोगिकत्वविशिष्टो रूपप्रतियोगिकत्वविशिष्टश्च समवायो वायौ रूपवत्ताप्रतीतिनियामकः। वाय्वनुयोगिकत्वविशिष्टसमवाये रूपप्रतियोगिकत्वाभावाद् वायू रूपवानिति प्रतीतिर्नापादयितुं शक्य इत्यलमतिविस्तरेण।

किञ्च गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्, दण्डी पुरुष इति विशिष्टबुद्धिवद् इत्यनुमानं समवायसिद्धौ प्रमाणमित्यभिप्रयन्ति काश्यपीयाः। न चैवं सति 'दण्डी पुरुषः', 'घटस्य ज्ञानम्', 'घटस्याभावः' इत्यादिषु व्यवहारेषु द्रव्य-विषय-प्रतियोग्यादिविशिष्टबुद्धिष्वपि विशिष्टबुद्धित्वसत्त्वेनातिप्रसङ्ग इति वाच्यम्, निर्विषयकभावमात्रविषयकलौकिकप्रत्यक्षत्वमत्र विशिष्टबुद्धित्वं विवक्षितम्। सविषयाविषयकत्वे सति, अभावाविषयकत्वे सति लौकिकप्रत्यक्षत्वमिति तदर्थः। ज्ञानविषयकविशिष्टबुद्धेर्निरासाय प्रथमसत्यन्तं निवेशनीयम्। द्वितीयसत्यन्तेन अभावविषयकविशिष्टबुद्धेर्व्युदासः। इदानीमाकाशे वीणायां शब्द इत्यादिप्रतीतिनिरासार्थं लौकिकेति विशेषणं दीयत इति नोक्तदोषावसर इत्यलमतिचर्चया।

अतो वैशेषिकाभिमतं समवायमधिकृत्य यानि च दूषणानि पूर्वोत्तरमीमांसादिग्रन्थेषु तत्र तत्र प्रत्यपादिषत तत्तत्तीर्थङ्करैस्तानि सर्वाण्यापातरमणीयान्येवेति प्रतीम इति।

●

# भारतीयदर्शनानां पर्यालोचनम्
# [ चार्वाकदर्शनविवेचनम् ]

**डॉ. हरिप्रसाद-अधिकारी**
उपाचार्यः, तुलनात्मकदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



## किं नाम भारतीयदर्शनम् ?

भारतीयदर्शनमिति शब्देन कानि कानि दर्शनानि गृह्यन्ते? विषयेऽस्मिन् प्रायो विप्रतिपद्यन्ते सुधियः। अत्र तावद् वैदिकदर्शनान्येवायान्तीति केचन धार्मिकाः पारम्परिकाश्च मन्यन्ते। अपरे तु चार्वाकबौद्धजैनानामपि भारतीयत्वमङ्गीकुर्वन्ति। एतदेव समुचितं प्रतिभाति। इतरे खिस्तमुस्लिमादीनामप्यत्र समावेशः करणीय इति यतमाना विलोक्यन्ते। एवमेव भारतीयदर्शनानां वास्तविकसंख्यानिर्धारणेऽपि नास्त्येकमत्यं विदुषाम्। सर्वदर्शनसङ्ग्रहकारेण माधवाचार्येण षोडशदर्शनानि समुपन्यस्तानि। केनचिद् द्वादशदर्शनसङ्ग्रहोऽपि विरचितः। पुनश्चास्तिकनास्तिकादि-भेदेनापि दर्शनानां विभागः परिलक्ष्यते। इत्थं भारतीयदर्शनानां सर्वमान्यसंख्या-निर्धारणं न कठिनमेवापि त्वसम्भवमिव प्रतीयते। सम्प्रति समकालिकदर्शनत्वेन गान्धि-अरविन्दप्रभृतीनां दर्शनमपि समाद्रियमाणमास्ते। ग्रन्थेऽस्मिन् भारतीयदर्शन-शब्देन केवलं चार्वाक-जैन-बौद्ध-सांख्य-योग-न्याय-वैशेषिक-मीमांसा-वेदान्त-दर्शनान्येव गृहीतानि वर्तन्ते। एतेषां दर्शनानां नवीनपद्धत्या तुलनात्मकदिशा च विवेचनं विधास्यते। तत्रादौ चार्वाकदर्शनं प्रस्तूयते—

## क आसीत् चार्वाकः ?

सर्वेषु दर्शनेषु प्रायश्चार्वाकदर्शनं पूर्वपक्षरूपेणोपस्थाप्य तन्निराकरणपुरःसरं स्वसिद्धान्तप्रतिपादनं विधीयते। यदि चार्वाकदर्शनस्यास्तित्वं नाभविष्यत् तदा पूर्वपक्षाभावाद् दर्शनानामेतावती प्रगतिरपि नाभविष्यत्; परन्त्वेतादृङ्महत्त्वपूर्ण-सिद्धान्तप्रतिपादकः क आसीदिति विषये बहवो विभेदात्मकविचारा दरीदृश्यन्ते

शास्त्रकाराणाम्। पुराणादिषु देवगुरुणा बृहस्पतिना दैत्यानामसुराणाञ्च सम्मोहनाय शास्त्रमिदं प्रणीय प्रचारितमिति परम्परायां पाठ्यते श्रूयते च। बृहस्पतिशास्त्रमिदं कथं चार्वाकदर्शनाख्यां जगामेति तु रहस्यगर्भ एवावतिष्ठते। चर्वयन्ति भक्षयन्ति इति चार्वाकाः, अथवा चारु कोमला वाग् येषां ते चार्वाकाः। अनया रीत्या ये केवलं भोजनादिसांसारिकसुखेप्सवस्ते चार्वाकाः, अथ च तत्सुखलाभाय कोमलवाग्व्यवहारशीलत्वात् तेषां चार्वाकसंज्ञेति मतं सुधियः सङ्गिरन्ते। चार्वाकदर्शनमिदं बार्हस्पत्यदर्शननाम्ना लोकायतनाम्ना च प्रथते। बार्हस्पत्यशब्देन बृहस्पतिसम्बन्धोऽस्य सूच्यते। लोकायतशब्देन तु दर्शनस्यास्य सर्वलोकप्रियत्वं सर्वत्राव्याहतगतित्वञ्च सोसूच्यते। दर्शनस्यास्य सर्वसिद्धान्तप्रतिपादकः प्रामाणिको ग्रन्थो नासाद्यते। केवलं बार्हस्पत्यसूत्रनाम्ना कानिचन सूत्राणि, प्रायोऽष्टमशताब्द्यां जयराशिभट्टनामकेन विदुषा विरचितः 'तत्त्वोपप्लवसिंह'नामा ग्रन्थश्च चार्वाक-दर्शनोत्सरूपेणासाद्यन्ते। एतदतिरिक्तं तु तेषु तेषु दर्शनेषु पूर्वपक्षरूपेणोपस्थापिता विचारा एव चार्वाकदर्शनस्य ज्ञानसाधनानि भवन्ति।

सर्वदर्शनसङ्ग्रहकारेण श्रीमन्माधवाचार्येण केचन श्लोकाश्चार्वाकपक्षतः समुल्लिखिताः; परमेते श्लोकाः प्रतिपक्षिभिश्चार्वाकखण्डनाय स्वयं विरचिता इति मन्यन्ते साम्प्रतिकाः समालोचकाः। देवगुरुणा बृहस्पतिना दर्शनमिदं विरचितमिति मतं तु न विश्वासयोग्यं प्रतीयते दार्शनिकानाम्। अतो बृहस्पतिनामकस्य कस्यचन भौतिकवादप्रचारणपरस्याचार्यस्य दर्शनमेव चार्वाकदर्शननाम्ना लोके प्रसिद्धिमवापेति स्वीकरणं समुचिततरं प्रतिभाति मे। यतो हि भौतिकवादापरनामधेयो जडवादोऽनादिकालादेव राजते जगतीतले। एतच्च वेदोक्तदेवासुरसङ्ग्रामादेव प्रमाणितं जायते। वेदस्मृतिपुराणेतिहासादिषु भौतिकवादिविचारा यत्र तत्र प्राचुर्येण समुपलभ्यन्ते। तत्सङ्ग्रहकर्ता प्रचारकश्च कश्चन बृहस्पतिनामा विद्वान् भवितुमर्हति। नामसाम्यात् पश्चाद् देवगुरौ तदारोपः सम्भवति। यथा हि—व्यासनाम्ना बहूनां ग्रन्थानामस्तित्वमवलोक्यते, शङ्कराचार्यनाम्ना चासंख्यरचना वर्तन्ते। व्यासनाम-साम्याद् अयं सत्यवतीसुत एवेति न निश्चेतुं पार्यते। एवमेव देव्यपराधक्षमापनस्तोत्रप्रभृतिस्तोत्राण्याद्यशङ्कराचार्येणैव विरचितानीति वक्तुं नो-चितम्, यतो हि तत्स्तोत्रे—'मया पञ्चाशीतेरधिकमपनीते तु वयसि' इति पङ्क्त्यैवाद्यशङ्कराचार्येणेदं न विरचितमिति प्रमाणीक्रियते। यतो हि शङ्कराचार्यविषये प्रसिद्धिरियमस्ति, यत्—

अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।
षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्।।

अतो हेतोश्चार्वाकापरनामधेयः कश्चन लौकिको बृहस्पतिर्भौतिकवाद-समर्थनपरं लोकायतमतं प्रसारयामासेति सिद्धान्तपक्षावलम्बनमुचिततरं प्रतीयते।

**प्रमाणनिरूपणम्**

प्रायशः सर्वाणि भारतीयदर्शनानि स्व-स्वस्वीकृतप्रमाणद्वारेण प्रमेयपरिशीलनं कुर्वन्ति। सर्वमाहत्याष्टौ प्रमाणानि भारतीयैः स्वीकृतानि। तानि च प्रत्यक्षानुमानोप-मानशाब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यानि वर्तन्ते। एतेषां प्रमाणानां विशदं विवेचनं तत्तद्दर्शनव्याख्यानावसरे विधास्यते। चार्वाकास्तु केवलं प्रत्यक्षप्रमाणमधिकृत्य प्रवर्तन्ते। प्रत्यक्षमेकं चार्वाकाः। इन्द्रियजन्यज्ञानं प्रत्यक्षमित्यभिधीयते। सर्वप्रमाणा-नामाधारभूतेन प्रत्यक्षेणैवासन्दिग्धं ज्ञानं कर्तुं शक्यते। चार्वाकनयेऽन्यानि प्रमाणानि केवलं प्रमाणाभासरूपाणि वर्तन्ते। अत एव प्रत्यक्षातिरिक्तानां प्रमाणानां निरासः क्रियते चार्वाकैः। तत्प्रमाणखण्डनपद्धतिः सङ्क्षेपेणात्र प्रस्तूयते।

**अनुमानप्रमाणखण्डनम्**

चार्वाकनये व्याप्त्याधारितत्वादनुमानं न प्रमाणम्। यतो हि नैय्यायिकाः 'यत्र यत्र धूमस्तत्र तत्र वह्निः' इति व्याप्तिं स्वीकृत्य तदाधारेणैवानुमानं प्रकुर्वते; परन्तु यत्र यत्र धूमस्तत्र तत्र वह्निरिति साधनायानुमानसिद्धेः प्रागेवानुमानाश्रयणं विधीयते। सर्वजगद्वर्तिधूमवह्न्योः प्रत्यक्षं विना व्याप्तिः कथं निश्चीयते नैय्यायिकैः। भूतभविष्यद्वह्निधूमसंयोगानां का कथा? वर्तमानकालीनसम्बन्धोऽपि सुतरामज्ञेयः। अतोऽन्योन्याश्रयदोषग्रस्तत्वाद् व्याप्तेः सिद्धिरेव न जायते। व्याप्तिसिद्धिमन्तरा कथं सम्भवेदनुमानसिद्धिः। अतोऽनुमानं नासन्दिग्धं प्रमाणम्। शब्दप्रमाणेनापि व्याप्तिसिद्धिर्न सम्भवा। यतो हि शाब्दिकप्रमासिद्धिरप्यनुमानेनैव विधीयते। इत्थं कार्यकारणभावाधारितस्यानुमानस्यासन्दिग्धप्रामाणिकत्वं कथमपि साधयितुं न शक्यते चार्वाकदर्शने। अथ च धूमवह्न्योः सम्बन्धो न सार्वभौमोऽपि तूपाधिजन्यः। इन्धनार्द्रतोपाधिकारणादेव धूमोत्पत्तिर्जायते। अतः सोपाधिकत्वाद् व्याप्तिसम्बन्धोऽयं न सार्वकालिको निश्चयात्मकश्च। स्वयमसिद्धः सन् कथं परान् साधयेत्? यत्किञ्चिद् अनुमानस्य प्रामाणिकत्वं लोके दृश्यते तदप्याकस्मिकमेव। अतोऽनुमानस्य स्वाभाविकप्रमाणत्वं न स्वीकर्तुमुचितम्। अत्रैकं महत्त्वपूर्णं तथ्यमवगन्तव्यं यच्छ्रीजयराशिभट्टविरचिते 'तत्त्वोपप्लवसिंह'नामकग्रन्थे तु सर्वप्रमाणखण्डनं विहितम्। एवमेव प्रमाणेन सहैव सर्वभूतसिद्धिरपि विखण्डिता। एतेन विदुषा पाण्डित्यपूर्णशैल्या जैनसौगतन्यायव्याकरणप्रभृतिदर्शनानां प्रमाणपद्धतिः सूक्ष्मदृष्ट्या विचूर्णिता।

**शब्दप्रमाणनिरसनम्**

एवमेवापरोक्षवस्तुवर्णनपरं शब्दप्रमाणमपि न स्वीक्रियते चार्वाकैः। शब्दप्रमाणशिरोमणिभूतस्य वेदस्य विषये स्वमतमिदं प्रतिपादयन्ति चार्वाकाः—

त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्भरी-तुर्फरीत्यादिपण्डितानां वचः स्मृतम्।।
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता।।
स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र दानतः।
प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते? [१]।।

अतश्च शब्दप्रमाणसिद्धिरप्यनुमानाधीना वर्तते। अनुमानस्य प्रामाणिकता पूर्वमेव विखण्डिता। शब्दानुमानयोर्विखण्डनेन तदाधारितानामुपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्यानां प्रमाणाभासानां स्वतो निरासः समभवदिति मन्तव्यम्।

**तत्त्वविमर्शः**

विश्वस्मिन् वर्तमाना सर्वे दार्शनिकाः प्रायस्तत्त्वज्ञानाय तत्खण्डनमण्डनाय वा चिन्तने प्रवर्तन्ते। जीवेश्वरजगद्वर्तिविषयेष्वभवति दार्शनिकचिन्तनानां परिभ्रमणम्। तत्त्वमेकमनेकं जडं चेतनं विलक्षणमनिर्वचनीयशून्यमित्यादिभिर्बहुप्रकारैर्विवेचितं दार्शनिकैः। चार्वाकास्तु तत्त्वं जडरूपं चतुर्भूतसमन्वितं वेति वर्णयन्ति। अप्रत्यक्षत्वादाकाशास्तित्वं न स्वीक्रियते तैः। तन्मते जडभूतेभ्य एवोद्भिजादिसजीवपदार्थानां सृष्टिर्विलक्षणसंयोगाज्जायते। तत्त्वानां विलक्षणसंयोगात् प्राणिनां जन्म तद्वियोगाच्च नाशो जायते। सर्वदर्शनसङ्ग्रहकारेण तन्मतमित्थमुट्टङ्कितम्—

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।।
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।।

**नित्यात्मेश्वरखण्डनम्**

अस्मिन् देहे चैतन्यस्वरूपो नित्यात्मा भवतीति प्रायशः सर्वाणि भारतीयदर्शनानि प्रतिपादयन्ति। अस्य शरीरसंयोगाज्जन्यवियोगाच्च मृत्युरिति कथ्यते। उपनिषत्सारभूतायां गीतायामात्मतत्त्वमित्थं वर्णितम्—

---

१. सर्वदर्शनसङ्ग्रहे—चार्वाकदर्शनप्रकरणे।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।।

शरीरनाशादात्मनाशो न जायत इत्यपि स्पष्टरूपेणोक्तं गीतायामेव—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे[१]।।

एवमेव सर्वस्य ब्रह्माण्डस्य सृष्टिस्थितिनाशकर्ता भवति सर्वशक्तिमान् कश्चन परमेश्वर इति प्रायशो भारतीयदर्शनानि स्वीकुर्वन्ति। न्यायदर्शनस्य मतमस्ति—'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवत्'। अनया पद्धत्या कार्यकारणभावाधारेणेश्वरसिद्धिर्विधीयते। तदभावे कस्यापि कार्यस्य समुत्पत्तिर्न जायत इति साधयन्तो वदन्ति नैय्यायिकाः—

जगतां यदि नो कर्ता कुलालेन विना घटः।
चित्रकारं विना चित्रं स्वत एव भवेत्तदा।।

सर्वमाहत्येश्वर एव सर्वस्य जगतः सञ्चालकोऽस्ति तन्मते। यथोक्तं गीतायाम्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।

चार्वाकास्तु तथाविधस्यात्मन ईश्वरस्य चास्तित्वं नाङ्गीकुर्वन्ति। नित्यात्मसत्ताभावात् तन्मोक्षस्य प्रश्न एव नोदेति। न च सम्भाव्यते नरकवासः। ईश्वरात्ममोक्षविषये चार्वाकमतनिष्कर्षोऽत्र वर्णितः[२]—

"अत एव कण्टकादिजन्यं दुःखमेव नरकः। लोकसिद्धो राजा परमेश्वरः। देहच्छेदो मोक्षः। चैतन्यविशिष्टो देह एवात्मा। देहात्मवादे च स्थूलोऽहं, कृशोऽहं, कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः। मम शरीरमित्यादिव्यवहारस्तु 'राहोः शिरः' इतिवदौपचारिकः"। तन्मतसारसङ्ग्रहो यथा—

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः।।
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः।
देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते।।

---

१. गीताद्वितीयेऽध्याये।
२. सर्वदर्शनसङ्ग्रहे, चार्वाकदर्शनप्रकरणे।

अहं स्थूल: कृशोऽस्मीति सामानाधिकरण्यत:।
देह: स्थौल्यादियोगाच्च स एवात्मा न चापर:।।

अनया रीत्या चार्वाकै: कार्यकारणभावादीनां सिद्धान्तानां पुनर्जन्म-समर्थकयुक्तीनाञ्च खण्डनं विधीयते। जडतत्त्वान्तर्गतस्वभावादेव जगदुत्पत्ति-र्जायते। तत्कृतेऽतिरिक्तस्येश्वरतत्त्वस्य स्वीकरणमनावश्यकं मन्यन्ते ते। अतो हेतोश्चार्वाकसिद्धान्तोऽयं स्वभाववादनाम्ना यदृच्छावादनाम्ना च ज्ञायते।

चार्वाकदर्शनविवेचनपरस्तत्त्वोपप्लवसिंहनामको ग्रन्थो यथान्यदर्शनोक्तप्रमाण-प्रमेयादीनां निरसनपरायणो दृश्यते, न तथा स्वसिद्धान्तप्रतिपादने तन्मण्डने वा बद्धादरोऽवलोक्यते। अतो न्यायदर्शनपरिभाषयायं ग्रन्थो वितण्डावादपरिपोषको वर्तते। सर्वाणि दर्शनानि प्रमाणान्यधिकृत्य प्रमेयचिन्तने प्रवृत्तानि जायन्तेऽतस्तत्खण्डनेन सर्वेषां सकृदेव सारल्येन खण्डनं जायत इति धिया क्रमश: प्रमाणखण्डने समुत्साहवान् विलोक्यते जयराशिभट्ट:।

यथाह स: स्वग्रन्थारम्भ एव[१]—'अथ कथं तानि न सन्ति। तदुच्यते—सल्लक्षणनिबन्धनं मानव्यवस्थापनम्। माननिबन्धना च मेयस्थिति:। तदभावे तयो: सद्व्यवहारविषयत्वं कथम्?' अनया रीत्या प्रमाणेषु खण्डितेषु प्रमेयतत्त्वानां स्वतो निरासो जायते। जयराशिभट्टेन स्वग्रन्थे न्याय-मीमांसा-सांख्य-जैन-बौद्ध-वैय्याकरण-पौराणिकमतानि विस्तरश: खण्डितानि; परन्तु ग्रन्थस्यास्य (तत्त्वोपप्लवसिंहस्य) विचारा: पारम्परिकचार्वाकमतेभ्यो बहुषु स्थलेषु पार्थक्यमपि धारयन्ति। अन्ये चार्वाका: प्रत्यक्षप्रमाणं चतुर्भूतानि च समर्थयन्ति, परमस्मिन् ग्रन्थे तु सर्वेषां प्रमाणानां भूतानाञ्चासिद्धि: प्रदर्शिता।

एतद्विवेचनेनेदं निर्गलितं यत् चार्वाकापरनामधेयं भौतिकदर्शनमिदमति-प्राचीनकालादेव प्रवर्तते। एतत्खण्डनव्याजेनैवान्येषां दर्शनानामेतावती प्रगतिर्जाता। अतो हेतोश्चार्वाकदर्शनस्योपेक्षा नोचिता; अपि तु तदुत्थापितपक्षाणां सयुक्तिकं खण्डनं परिशीलनञ्चावश्यकमिति दिक्।



१. तत्त्वोपप्लवसिंहग्रन्थे प्रारम्भे।

# श्रीमुण्डकोपनिषत्सारः

**डॉ. एस.रेवती**
प्रवाचिका, संस्कृतविभागस्य
मद्रपुरीविश्वविद्यालये
चेन्नई



उपनिषत्सु अष्टाविंशतिरथर्वशाखीयानि। 'अष्टाविंशत्युपनिषदानि ब्रह्मवेदस्य' इत्युक्तमथर्वपरिशिष्टे। १. मुण्डाः, २. प्रश्नाः, ३. ब्रह्मविद्या, ४. क्षुरिका, ५. चूलिका, ६. अथर्वशिरः, ७. अथर्वशिखा, ८. गर्भोपनिषत्, ९. महोपनिषत्, १०. ब्रह्मोपनिषत्, ११. प्राणाग्निहोत्रम्, १२. नादबिन्दुः, १३. ब्रह्मबिन्दुः, १४. अमृतबिन्दुः, १५. ध्यानबिन्दुः, १६. तेजोबिन्दुः, १७. योगशिखा, १८. योगतत्त्वम्, १९. नीलरुद्रः, २०. कालाग्निरुद्रः, २१. तापिनी, २२. एकदण्डी, २३. संन्यासविधिः, २४. आरुणिः, २५. हंसः, २६. परमहंसः, २७. नारायणोपनिषत्, २८. वैतथ्यम्, इत्येता उपनिषदः अथर्वशाखीयाः। गर्भ, जन्म, जरा रोगाद्यनर्थपूगं निशातयति, परं ब्रह्म वा गमयति, संसारकारणमविद्यादि अत्यन्तमवसादयतीति ब्रह्मज्ञानमौपनिषद-मुपनिषत्पदवाच्यम्। उपनिपूर्वस्य सदेरेवमर्थस्मरणात् पाणिनीयानाम्। तादृश-ज्ञानतात्पर्याद् ग्रन्थोऽप्युपनिषद् इति उपचारादुच्यते।

विद्यासम्प्रदायकर्तृपारम्पर्यसम्बन्धमाह आदौ। श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति। देवानां प्रथमः, विश्वस्य स्रष्टा गोप्ता, ज्येष्ठपुत्राय सर्वविद्याप्रतिष्ठां ब्रह्मविद्यां प्राह। स ज्येष्ठपुत्रोऽथर्वा अङ्गिरोनाम्ने प्रोवाच। सोऽङ्गिराः सत्यवहनाम्ने भरद्वाजगोत्रायाह। स भरद्वाजोऽङ्गिरसे उवाच। तमङ्गिरसं महाशालः शौनकः, विधिवदुपगत एकविज्ञानेन सर्वविज्ञानोपायं जिज्ञासुः प्रार्थयामास। अयमेतादृशः प्रश्नो मुण्डके, छान्दोग्यषष्ठे श्वेतकेतुसद्विद्यायां, जनकयाज्ञवल्क्यसंवादे बृहदारण्यके च त्रिषु समानः श्रूयते। तेन अद्वैततात्पर्यं सर्वासामुपनिषदां निर्धारितं भवति। परा अपरा च द्वे विद्ये वेदितव्ये। षडङ्गसहिताश्चत्वारो वेदाः, अन्ये चापरविद्या वैराग्योत्पादनाय प्रथममुपदिश्यते। नारदावगतं सर्वमपरविद्यैवेत्याह सनत्कुमारः छान्दोग्यसप्तमे भूमविद्याप्रकरणे। अथ इत्यारम्भात् परविद्यासम्बन्धः

अपरविद्याया अध्यासरूपाया अत्यन्तं लेशतोऽप्यभावं सूचयति। यत्तदुद्देश्यमग्राह्यमित्यादिना भूतयोनिं, धीरैः साक्षात्क्रियमाणं परविद्याविषयं निर्गुणं ब्रह्म परं तत्त्वं दर्शयति। अथ चत्वारो मन्त्राः ६,७,८,९ संख्याता मिथो व्याख्यारूपाः।

भूतयोनिरक्षरमित्युक्तम्। तस्य कथं भूतयोनित्वमित्याह सप्तमो मन्त्रः। लूताकीटः ऊर्णनाभिः कारणान्तरमनपेक्ष्य स्वशरीरव्यतिरिक्तानेव तन्तून् बहिः प्रसारयति, पुनस्तानेव गृह्णाति = स्वात्मभावमापादयति यथा तथा ब्रह्मभूतयोनिः। अनेन प्रथमेन ऊर्णनाभिदृष्टान्तेन नैयायिकाभिमतस्य—'ब्रह्म न कारणं सहायशून्यत्वात् कुलालमात्रवत्' इत्यनुमानस्य अनैकान्तिकत्वमुक्तम्। तथा च व्यासो भगवान् 'लोकवत्तु लीलाकैवल्यम्' इति। यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ताः स्वात्माव्यतिरिक्ता एव प्रभवन्ति। अनेन द्वितीयेन दृष्टान्तेन 'ब्रह्म जगतो नोपादानं, तदभिन्नत्वात्, स्वरूपस्येव' इत्यनुमानमपि अनैकान्तिकं दर्शितम्। यथा च सतो विद्यमानत्वात्, जीवतः पुरुषात् केशाश्च लोमानि च विलक्षणानि जडानि सम्भवन्ति। अनेन तृतीयेन दृष्टान्तेन 'जगद् न ब्रह्मोपादानकं तद्विलक्षणत्वात्, यद्यद् विलक्षणं तत्तदुपादानकं न, यथा घटो न तन्तूपादानकः' इत्यनुमानं व्यभिचरितमुक्तम्। तथा च न विलक्षणत्वाधिकरणं प्रवृत्तम्। यद्यपि एकस्मिन्नेव दृष्टान्ते सर्वानुमानानां व्यभिचरितत्वं योजयितुं शक्यम्, अथापि बहुदृष्टान्तोपादानं सुखेन अर्थप्रबोधनार्थम्। अष्टमो मन्त्रो बदरमुष्टिप्रक्षेपवन्न युगपज्जगदुत्पत्तिः; अपि तु क्रमेणेति क्रमं नियच्छति। ब्रह्म अक्षरं तपसा ज्ञानमयेन, चीयते बहु स्यामिति ईक्षणवद् भवति। अक्षरात्, अन्नं सर्वप्राणिसाधारणमव्याकृतं जायते। ततः प्राणो हिरण्यगर्भः। ततो मनः सङ्कल्पविकल्पसंशयनिर्णयात्मकम्। ततः सत्यं सच्च त्यच्चेति भूतपञ्चकम्। ततो लोकास्तेभ्यः कर्माणि तेषु च अमृतं भोगं विना अनश्वरं फलम्, जायत इति सृष्टिक्रमः।

एवं सर्वजगदुपादानमक्षरं सामान्येन सर्वं जानाति, विशेषेणापि सर्वं वेत्ति। ज्ञानमयं तपो नायासलक्षणं, ततो ब्रह्म हिरण्यगर्भाख्यम्। देवदत्तादि नाम, शुक्लादिरूपं, व्रीहियवाद्यन्नं च समस्तं जायते। इत्युपसंहृतम्, 'जन्माद्यस्य यतः' इति सूत्रसूचितमर्थजातम्। ऋग्वेदाद्यपरविद्याविषयः संसारः' अक्षरब्रह्मविद्यायाः पराया मोक्षो विषय इति विवेकार्थमुत्तरो ग्रन्थ आरभ्यते। अपरविद्याविषयं संसारमपि 'तदेतत्सत्यम्' इति श्रुतिर्व्यावहारिकं सत्यमाह, तृतीये खण्डेऽपि 'तदेतत्सत्यम्' इति वक्ष्यमाणत्वात्। उभयोः सत्यत्वस्य एकविधस्याबाधितत्वरूपस्यासम्भवात्। फलाविसंवादि व्यावहारिकं बाध्यमानमपीत्यर्थः। सर्वाण्यपि होमकर्माणि आवापस्थाने हविःप्रक्षेपेण साधनीयानि। आज्यभागयोः चक्षुःस्थानीययोरन्तरालमावापः। काल्यादि सप्तजिह्वा जातवेदसः। तत्र ज्वलिते लेलायमाने ग्रसनयोग्यहोमाः कार्याः। एवं कर्मणां स्वर्गः फलम्। अविद्यारूपत्वाद् जरामृत्युं ते पुनरेवापि यन्ति। अतो विज्ञानार्थमात्यन्तिकाविद्यानाशकामाः समित्पाणयो ब्रह्मनिष्ठं

श्रोत्रियमुपसर्पेयुः। सोऽप्यक्षरब्रह्मविद्यामुपदिशेत् कर्मभिः शुद्धचित्तायाधिकारिणे। एवं प्रथममुण्डकेन अपरां विद्यां प्रपञ्च्य परविद्यां प्रपञ्चयति यथा सुदीप्तादित्यादिना। अत्र—'तान्याचरथ नियतं सत्यकामाः' इत्यस्य सत्यकामा मोक्षकामाः कर्माण्याचरथ इति व्याख्याय समुच्चयाभिप्रायं कथयन्ति केचित्। तत्र—'एष वः पन्थाः सुकृतस्य लोके' इति स्वर्गफलसाधनत्वविषयः, वाक्यशेषविरोधात्। अत्राधिकरणन्यायसञ्चारस्य युक्तत्वात्। द्वितीयमुण्डके प्रथमखण्डे उपसंहृतम्—'सर्वं खलु इदं ब्रह्म' इतिवत् 'पुरुष एवेदं विश्वम्' इति। 'यो वेद एतत्, सोऽविद्याग्रन्थिं विकिरतीह' इत्यत्र 'इह' इति ज्ञानादेव केवलाद् अविद्यानिवृत्तिः प्राणोत्क्रमणं विना इह इति च दर्शितम्।

द्वितीयमुण्डकद्वितीयखण्डेन यस्य सकृदुपदेशमात्रेणाद्वितीयं ब्रह्मास्मीति वाक्यार्थज्ञानमवगत्यन्तं न भवति, तेनोपाया अनुष्ठेया इत्याह। वाक्यार्थस्यैव पुनः पुनर्भावना युक्त्यनुसन्धानं चोपायः। 'यदस्ति यद्भाति तदात्मरूपम्, नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित् प्रतिभाति केवलम्, ग्राह्यं ग्रहीतेति मृषैव कल्पना'। प्रजानां विज्ञानात् परं लौकिकविज्ञानगोचरम्। अत एव सर्वपदार्थेषु वरेषु वरिष्ठं वरतमम्। तद्धि एकं ब्रह्म, अतिशयेन वरम्, सर्वदोषरहितत्वात्। विचारासमर्थश्चेत् प्रणवमवलम्ब्य, ब्रह्मात्मैकत्वे चित्तसमाधानं क्रममुक्तिफलं दर्शयत्युपायम्—'धनुर्गृहीत्वा'-मन्त्रः। प्रणवो धनुः, शर आत्मा, ब्रह्म लक्ष्यम्, जागरूकेण बोद्धव्यम्। शरवत्तन्मयो भवेदिति। आत्मानं रथिनमिति काठके प्रोक्तोपायवत्। धानुष्कोपायोऽत्र प्रोक्तः। अद्वैतवाक्यार्थावगमः साक्षात्कारपर्यन्तो जीवन्मुक्तिफलकः क्रममुक्ति-फलकमुपासनम्। उभयोः फलं भिद्यते हृदयग्रन्थिरित्यादिकम्। नवमदशमैकादश-मन्त्रास्त्रयो ज्योतिषां ज्योतिरात्मा, सूर्याद्यप्रकाश्यम्, सर्वप्रकाशकम्, जलोल्मुकाद्य-ग्निसंयोगात्, अग्निं दहन्तमनुदहति, न स्वतः, नापि पितृपुत्रानुगमनवत्, गमन-क्रियावत्, भानक्रियाद्वयमपि त्वेकमेव भानमन्यगतं भ्रान्त्या भातीत्युपसंहृत्य पुरस्तात्, पश्चात्, दक्षिणतः, उत्तरेण च, ऊर्ध्वमधश्च विश्वमिदं प्रसृतं ब्रह्मैवेति च जगन्मिथ्यात्वं, पृथक् जीवचैतन्याभावं च प्रदर्शयामास द्वितीयखण्डान्ते। अथ तृतीयमुण्डकेन विचारस्योपासनायाश्चोपायस्य सहकारीणि सत्यादिसाधनानि वक्तव्यान्याह। छान्दोग्यभूमविद्यायामिवात्रापि—

विजानन् विद्वान् भवते नातिवादी आत्मक्रीडः आत्मरतिः।
क्रियावान् एष ब्रह्मविदां वरिष्ठ इत्याह॥

१. सत्येन लभ्यः—मृषावदनत्यागः। २. तपसा लभ्यः इन्द्रियमन एकाग्रतया। मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तप इति स्मरणात्। नेतरश्चान्द्रायणादि। ३. सम्यग्ज्ञानेन—यथाभूतात्मदर्शनेन एष आत्मा लभ्यः। ४. ब्रह्मचर्येण—

मैथुनासमाचारेण लभ्य एष आत्मा। नित्यं सत्येन सर्वदा इत्यर्थः। नित्यं तपसा, नित्यं सम्यग्ज्ञानेन इति सर्वत्रान्वयः। अन्तर्दीपिकान्यायेनानुषङ्गः कार्यः। वक्ष्यति च—'नयेषु जिह्ममनृतं न माया च' इति सत्यादिसहकारिसाधनस्तुत्यर्थोऽयमर्थवादः, 'सत्यमेव जयते' इति मन्त्रः। ज्ञानप्रसादेन तं पश्यते निष्कलं ध्यायमानः। एवं दुर्बोधात्मज्ञानादाह—'तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः' इति। यद्यपि यं यं लोकमिति दशमो मन्त्रः सगुणविद्याफलप्रतिपादकः, अथापि निर्गुणविद्यास्तुतये प्ररोचनार्थमत्रोच्यते। मुमुक्षोः कामत्याग एव प्रधानं साधनम्। प्रवचन-मेधा-बहुश्रुतैर्न लभ्यः। अनन्यवरणेनैव लभ्यः। नित्यलब्धस्वभावत्वात्। बलाप्रमादतपांसि संन्यासयुक्तानि च साधनानि। यद्यपि इन्द्र-जनक-गार्गिप्रभृतयः श्रूयन्ते आत्मज्ञाः संन्यासरहिताः, अथापि, संन्यासो नाम सर्वत्यागात्मकस्तेषामपि स्वत्वाभिमानाभावात्, अस्त्येवान्तरः संन्यासः। बाह्यं तु लिङ्गमविवक्षितम्। 'न लिङ्गं धर्मकारणम्' इति स्मरणात्। परिमुच्यन्ति—परामृता जीवन्त एव ब्रह्मभूताः सन्तः परि समन्तात्, प्रदीपनिर्वाणवत्, घटाकाशवच्च, निवृत्तिमुपयन्ति, न देशान्तरं गन्तव्यमपेक्षन्ते। 'अनध्वगा अध्वसु पारयिष्णवः, शकुनीनामिवाकाशे, जले वारिचरस्य च पदं यथा न दृश्येत, तथा ज्ञानवतां गतिः'। इति श्रुतिस्मृतिप्रामाण्यात्। 'परेऽव्यये सर्व एकीभवन्ति। नदीनां समुद्रे लयवत् परात्परं पुरुषमुपैति दिव्यम्। गताः कलाः पञ्चदशप्रतिष्ठाः'। ब्राह्मणग्रन्थे षष्ठप्रश्ने अन्त्ये परिपठिताः स्वस्वस्थानं गच्छन्ति। एवं जीवन्मुक्त्यवस्था मुक्तिस्वरूपं च विवृतं, तृतीयमुण्डकद्वितीयखण्डेन।

'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्यन्ते अधिकारिविशेषणं शिरोव्रताचरणं विधिवद् उक्तम्। किं तदिति विचारणीयम्। 'शिरोव्रतम्'—शिरस्यग्निधारणलक्षणम्, यथाऽऽथर्वणानां वेदव्रतं प्रसिद्धमिति भाष्यं दृश्यते। एतद्विवरणं सूतसंहितायां, तद्व्याख्याने श्रीविद्यारण्यकृते, एवं देवीभागवते एकादशस्कंन्धीयनवमाध्याये च दृश्यते। अग्निहोत्रभस्म, विरजाभस्म, औपासनभस्म, समिदाधानाग्निभस्मान्यतमेन, 'अग्निरिति भस्म सर्वं ह वा इति भस्म', 'त्र्यायुषं जमदग्नेः' इत्यादिना, त्र्यम्बकमन्त्रेण च भस्मोद्धूलनपूर्वकं, मानस्तोकमन्त्रेण तीर्थेण द्वादशस्तु, षोडशस्तु वा प्रदेशेषु शिरोललाटवक्षःस्थलां सबाहूचक्षुःश्रोत्रजङ्घापादादिषु सश्राद्धं लेपनं यत् पाशुपतव्रतमित्युच्यते, तदेव शिरोव्रतमिति व्यक्तं दृश्यते। अग्निपदं गौण्या माणवके इव भस्मनि प्रसिद्धम्। तस्य शिरसि अग्निधारणमित्यपि भाष्याशयः पूर्वोक्तसूतसंहिता-देवीभागवत-विद्यारण्यव्याख्यानानुरोधेन युज्यत एव कथमन्यथा शिरसि निरूढाग्निधारणं शिरोव्रतमित्यर्थों घटेत इति विमृशन्तु सुधितम निर्मत्सरम्। एवं मुण्डकाद्वैतमप्रतिहतमास्ते।



# मीमांसकशक्तिखण्डने तर्कोऽप्रतिष्ठः

**डॉ. उज्ज्वलापानसेझा**
संस्कृतप्रगताध्ययनकेन्द्रम्
पुणेविद्यापीठम्, पुणे



सकलप्रेक्षावतां विदितमेव एतद्यद् विविधकार्यकारणसामग्रीनिरूपणावसरे मीमांसकैः शक्तिः कारणत्वेन रूपेण अङ्गीक्रियते। शक्तिर्द्रव्यगुणकर्मनिष्ठोऽर्थापत्तिगम्यः कश्चन गुण इति भाट्टाः। तथा हि, अग्न्यादिनिष्ठा दाहकत्वशक्तिर्द्रव्यगता, हिंसादीनां नरकपातसाधकत्वशक्तिः कर्मनिष्ठा, काम्यपशुयागादिविधिवाक्येषु श्वेतगुणविशिष्टस्यैव द्रव्यस्य इष्टफलसाधनत्वश्रवणाच्छक्तिः श्वेतरूपगुणनिष्ठा इति।

प्राभाकरैस्तु शक्तिः पदार्थान्तरत्वेनानुमानगम्यत्वेन च स्वीक्रियत इत्यपि विदुषां ज्ञातपूर्वमेव, तदस्तु। तार्किकास्त्विमां शक्तिं कारणत्वेन रूपेण नैव स्वीकुर्वन्ति, किन्तु प्रतिबन्धकाभावं स्वतन्त्रकारणतया मन्यन्त इति कोऽत्र तर्कः, का युक्तिरित्येवास्य निबन्धस्य विषयः।

**मीमांसकमतम्**

'वह्निर्दहति', 'विषं हन्ति' इत्यस्माकमनुभवः; परन्तु चन्द्रकान्तमणिसन्निधाने वह्निर्दाहयितुं नैव समर्थः। मन्त्रादिप्रभावाच्च विषमपि न मारणाय अलमिति तत्र कार्यकारणभावहेतुरन्वयव्यतिरेकौ वह्नि-दाहयोर्विषमारणयोश्च न दृश्येते। तथा हि वह्निर्यदि वह्नित्वेन रूपेण दाहकारणं तर्हि मणिसमवधाने सत्यपि वह्निर्वह्नित्वेनैव रूपेण तिष्ठति। वह्निस्वरूपं तावन्नैव भ्रष्टमिति कुतः कार्यं न दृश्यते? 'तत्सत्त्वे तत्सत्त्वम्, तदभावे तदभावः' इति।

अन्वयव्यतिरेकौ हि कार्यकारणभावनिर्धारणे हेतू। अत्र तु 'वह्निसत्त्वे दाहः, वह्न्यभावे च दाहाभावः' इति नास्त्येव स्थितिः। कदाचित् क्वचिद् वह्निसत्त्वेऽपि दाहाभावात्, यथा

वह्निः + चन्द्रकान्तमणिः = दाहाभावः।

अत्रोच्यते, वह्निर्न स्वरूपेण नाम वह्नित्वेन रूपेण दाहकारणम्, अपि तु वह्निस्तन्निष्ठदाहानुकूलशक्तिमत्त्वेन रूपेणैव दाहं जनयति। तथा हि, यदा वह्निः

शक्तिमान् तदा दहति, यदा तु मण्यादिना तन्निष्ठा शक्तिः प्रतिबध्यते तदा दाहो न जन्यते। पुनः यदा प्रतिबन्धकमण्यादिरपसार्यते तदा दाहो भवत्येव। एतेन— 'शक्तिसत्त्वे कार्यम्', 'शक्त्यभावे कार्याभावः' इत्यन्वय-व्यतिरेक-नियमोऽपि सुप्रतिष्ठितो भवति। किञ्च, शक्त्यनभ्युपगमे द्रव्यविशेषो न स्यात्। तदा पादपं छेत्तुं परशुर्यथा उद्यम्यते तथा पादुकाप्युद्यम्येत घटार्थी तन्तुसमुदायं स्वीक्रियेत तथा पटार्थी मृत्पिण्डम्; परन्तु न तथा दृश्यते। तत्तत्कार्यजनने तत्तत्कारणमेवोपादीयतेऽस्माभिः।

एवं रीत्या कारणोपादाननियमादपि तत्तत्कार्यानुकूला कारणनिष्ठा शक्तिरेव साक्षात्कारणत्वेन रूपेण सिद्ध्यतीति मीमांसकमताभिप्रायः।

**तार्किकाक्षेपाः**

अत्र नैयायिकशिरोमणिर्जयन्तभट्टः—तदेतदनुपपन्नम्। यत्तावदुपादान-नियमादिति उक्तं तत्रोच्यते—न हि वयमद्य किञ्चिदभिनवं भावानां कार्यकारणभावमुत्थापयितुं शक्नुमः; किन्तु यथाप्रवृत्तमनुसरन्तो व्यवहरामः। न हि अस्मदिच्छया आपः शीतं शमयन्ति कृशानुर्वा पिपासाम्। तत्र छेदनान्वयव्यतिरेकाभ्यां वा वृद्धव्यवहाराद्वा परश्वादेरेव कारणत्वमध्यवगच्छाम इति तदेव तदर्थिन उपादद्महे न पादुकादिरिति।

ननु प्रतिबन्धकसमवधाने कथं कार्यं न दृश्यत इत्यत्र जयन्तभट्टा युक्तिं ददति, 'यदपि विषदहनसन्निधाने सत्यपि मन्त्रप्रयोगात् तत्कार्यादर्शनं तदपि न शक्तिप्रतिबन्धननिबन्धनम्, अपि तु सामग्र्यन्तरानुप्रवेशहेतुकम्।

ननु मन्त्रेण प्रविशता तत्र किं कृतम्? न किञ्चित्कृतं सामग्र्यन्तरं तु सम्पादितम्। काचिद्धि सामग्री कस्यचित् कार्यस्य हेतुः।

अत्र मीमांसकः पुनः शङ्कते, 'यद्यपि मन्त्रः कृतस्तथापि विषदहनयोः स्वरूपं तु तदवस्थमेव; न तत्र कश्चन विपरिणामो दृश्यते।

अत्र जयन्तः—यद्येवमभक्षितमपि विषं कथं न हन्यात्? तत्र आस्य-संयोगाद्यपेक्षणीयमस्तीति चेद् मन्त्राभावोऽप्यपेक्ष्यताम्। अयमेवाभिप्रायो जयन्त-भट्टानाम्, आस्यसंयोगादिः कारणसामग्रीमध्ये आवश्यकस्तर्हि मन्त्राभावोऽपि सहकारि-कारणसमुदायघटक एव। तदभावे कार्यं नैवोत्पद्यत इति सर्वमुपपन्नं शक्तिं विनैव।

पुनरस्मिन्नेव विषये जयन्तोऽपरां युक्तिमुपन्यस्यति—शक्तिपक्षेऽपि वा मन्त्रस्य को व्यापारः? मन्त्रेण हि शक्तेर्नाशो वा क्रियते प्रतिबन्धो वा? न तावन्नाशः, मन्त्रापगमे पुनस्तत्कार्यदर्शनात्। प्रतिबन्धस्तु स्वरूपस्यैव शक्तेरिवास्तु।

ननु स्वरूपस्य किं जातम्? अत्र मीमांसकस्यायमभिप्रायो यत् स्वरूपं हि प्रतिबन्धकेन नाशयितुं न शक्यम्। तर्हि कथं कार्यनिरोधः? तार्किकः पृच्छति— शक्तेरपि किं जातम्? कार्यौदासीन्यमिति चेत्तदितरत्रापि समानम्।

परन्तु स्वरूपं त्वविच्छिन्नं प्रत्यक्षतया दृश्यत इति चेत्, जयन्त उत्तरयति, 'शक्तिरपि अस्त्येव पुनः कार्यदर्शनेनानुमीयमानत्वात्'।

नव्यनैयायिकैरपि शक्तेः खण्डनं प्रतिबन्धकाभावं कार्यसामान्यं प्रति कारणत्वेन रूपेण स्वीकृत्यैव क्रियते। तथा हि—वह्निः स्वरूपेणैव नाम वह्नित्वेन रूपेणैव दाहकारणम्। यदा तु मण्यादिसन्निधानं भवति, तदा प्रतिबन्धकस्य तत्र सत्त्वात्, प्रतिबन्धकाभावस्य च कार्यत्वावच्छिन्नं प्रति कारणत्वान्न कार्योत्पत्तिरिति। अत्र मीमांसकः शङ्कते—प्रतिबन्धकाभावो यदि कार्यत्वावच्छिन्नं प्रति हेतुः स्यात्, तर्हि उत्तेजकसन्निधानात् कार्योत्पत्तिः प्रतिबन्धकसत्त्वेऽपि दृश्यत एव।

नैयायिकमते तत्र उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वमिति सर्वमुपपन्नम्।

**परिष्कारः**

इदमत्रावधेयम्—सर्वोऽपि प्रयासः कार्यकारणभावनिर्णयनिमित्तः। स च यावच्छक्यं लाघवयुक्तः समश्चापेक्षितः।

नव्यनैयायिकमतानुसारेण कार्यकारणभावलाघवं तस्यैकरूपत्वमपि नैव निराबाधम्। कथमिति चेत्, इत्थम्—नैयायिकानां सिद्धान्त ईदृशः—

१. स्वरूपेणैव कारणत्वम्—अस्यायं फलितार्थो यत् कारणसत्त्वे कार्यसत्त्वम्। यथा वह्निसत्त्वे दाहः।

२. प्रतिबन्धकाभावः कारणम्। अस्यायमर्थः—प्रतिबन्धकाभावविशिष्ट-कारणसत्त्वे कार्यम्। यथा मण्याद्यभावविशिष्टवह्निसत्त्वे दाहः।

३. पुनः इदमप्युच्यते यद् उत्तेजकाभावविशिष्टप्रतिबन्धकाभावः कारणम्। अस्यायमर्थः—उत्तेजकाभावविशिष्टप्रतिबन्धकाभावविशिष्टकारणसत्त्वे कार्यम्, यथा उत्तेजकमण्यादिविशिष्टप्रतिबन्धकमण्यादिविशिष्टवह्निसत्त्वे दाहः।

अथ चात्र अन्वयव्यतिरेकनियमोऽपि भग्नः। कुत इति चेत्, अन्वयस्तु वह्निसत्त्वे दाहः, व्यतिरेकस्तु प्रतिबन्धकसत्त्वे दाहाभावः। वह्नेस्तत्रैवोपस्थितेः। तथापि दाहाभावदर्शनात्।

इदमेव फलितमत्र—अन्वयस्तत्सत्त्वे तत्सत्त्वम्, व्यतिरेकोऽतत्सत्त्वे वा तदितरसत्त्वे वा तदभावः। यः 'तदभावे तदभावः' इति नास्त्येव व्यतिरेकः। तदभावस्यैवासत्त्वात् कार्याभावस्य च सत्त्वात्।

किञ्च, अनन्तशक्तिकल्पनगौरवरूपदोषोऽपि नैयायिकैः प्रदर्श्यते मीमांसकानां युक्तिविशेषे। मन्मते तु कार्यकारणभावगौरवापेक्षया अयं न खलु ज्यायान् दोषः। लघुतरदोषस्वीकारस्यैव प्रमाणत्वात्। अन्यच्च यद्यपि प्रतिबन्धकाभावः कारणत्वेन स्वीक्रियते, तथापि कार्यसत्त्व-कार्याभावनिरूपणार्थं प्रतिबन्धकाभाव-प्रतिबन्धकसत्त्वस्यापि कल्पना अनन्ता एव, तर्हि समान एव दोषः।

किञ्च, यदा शक्तिः कारणत्वेन रूपेण स्वीक्रियते तदानीं, यद्यत्तत्र परम्परासम्बद्धं तत्सर्वमप्यन्यथासिद्धम्। यतो हि तदेव केवलं कारणत्वेन स्वीक्रियते यत्साक्षात् कार्यजनने व्यापृतं भवति। अयमेव नैयायिकानामप्यभिप्रायो यद्विश्वनाथोक्तम्—'अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः'। वयं त्वत्र तस्य कारणसामग्रीघटकस्य निर्णयं कर्तुमुद्युक्ताः, यः साक्षाद् अव्यवहिततया कार्योत्पादने व्यापृतः। तस्य घटकस्य नाम दीयते 'शक्ति'रिति।

यदा वह्निः शक्तिमान् तदा दहति यदा न तदा न दाह इति सूक्तः कार्यकारणभावः। अतः शक्तिरवश्यं स्वीकार्या।

पुनश्च यदि जयन्तभट्टानां युक्तीः पश्यामः, तर्हि ममायमभिप्रायः—'न हि अस्मदिच्छया आपः शीतं शमयन्ति कृशानुर्वा पिपासाम्' इति वदता जयन्तभट्टेन शक्तिरेव अङ्गीकृता। शीतशमने अपां सामर्थ्यं नास्ति, कृशानुश्च नालं पिपासाशमनायेत्येवार्थः परिणमति तस्य वचनस्य। अस्मदिच्छया तत्तद्वस्तुनिष्ठा शक्तिर्नैव हीयते, अन्यत्र च नैवोत्पद्यत इति वचोविन्यासवैचित्र्यं खलु प्रस्तुतं तत्रभवता जयन्तभट्टेन।

अपि च वृद्धव्यवहारात् परशुरेव छेदनकारणत्वेन स्वीक्रियते, अन्वयव्यतिरेकाभ्यां वेत्युक्तं तैः। अत्रोच्यते मया यत्, अन्वयव्यतिरेकोऽपि शक्तिमेव साधयति। कथमिति चेत्, इत्थम्—

यदा कोऽपि पादुकां गृहीत्वा वृक्षच्छेदने प्रवृत्तो भवति, तदा तत्र तस्मिन् कारणे छिदिक्रियाकरणसामर्थ्यं नास्तीत्येव दृढीकरोति, ततः परशुं गृह्णातीत्यलं विस्तरेण।

पुनश्च यदि जयन्तभट्टानामन्यां युक्तिं पश्यामः। तैरेका युक्तिः प्रदत्ता—'शक्तिपक्षेऽपि मन्त्रस्य को व्यापारः? मन्त्रेण हि शक्तेर्नाशो वा क्रियते प्रतिबन्धो वा? न तावन्नाशः। मन्त्रापगमे पुनस्तत्कार्यदर्शनात्'। (न्यायमञ्जरी)

इयं युक्तिर्न स्वीकारार्हा, यतोऽत्र शक्तेर्नाशो न भवतीत्येवाभिप्रायः परन्त्वेवमप्युदाहरणमस्ति यत्र शक्तेर्नाशो भवत्येव। शास्त्रदीपिकायां पार्थसारथिमहोदयैरुच्यते—'बीजादिषु सत्सु अङ्कुरादिकारणत्वमवगम्यते। सत्स्वपि च बीजेषु

मूषिकाऽऽघ्रातेषु अङ्कुरानुत्पत्तेरकारणत्वं प्रतिभासते। सोऽयं कारणत्वाकारणत्वयोर्विरोधः शक्तिकल्पनया समाधीयते। घ्राणक्रियायाः क्षणिकत्वाद् उत्तरकालं तदभावे सत्यप्यङ्कुरानुत्पत्तेः'। गागाभट्टा भाट्टचिन्तामणौ एवमेवाभिप्रयन्ति— 'बीजत्वावच्छेदेनाङ्कुरजनकत्वे गृहीते मूषिकाऽऽघ्रातेषु तददर्शनेन कारणत्वसन्देहे मूषिकाऽऽघ्राणनाश्या व्रीहिनिष्ठा कारणशक्तिः कल्प्यते' इति। जयन्तभट्टानां युक्तिर्नैव स्वीकर्तुं शक्यत इति सुस्पष्टमेव, अधुना यतस्तैर्यत्कारणं तत्र पुरस्कृतं तत्कारणमेव न सङ्गतमिति।

अन्यच्च। जयन्तभट्टैः शक्तेर्निराकरणं क्रियते, अर्थापत्तेः स्वतन्त्रप्रमाणत्वनिरासचर्चायामर्थापत्तिर्न स्वतन्त्रप्रमाणमित्येतेषामभिप्रायः। अस्य पक्षस्य सिद्धान्तस्तु तैरेवं रचितः—'अपि वा शक्तिरतीन्द्रिया अनुमानस्यैव विषयः। कार्यस्य कारणपूर्वकत्वेन व्याप्तिग्रहणात् स्वरूपमात्रस्य च कारणत्वानिर्वहणाद् अधिकं किमप्यनुमास्यते सा शक्तिरिति'।

अयमेव तेषां शक्तिचर्चायाः सिद्धान्तः। मन्मते जयन्तभट्टैर्मीमांसकशक्तिरत्र स्वीकृतैव। तेषां युक्तियुक्तन्यायपाण्डित्यं कविवृत्तिर्वा किमपि नैवालमासीत् शक्तिखण्डनायेति मीमांसकविजयोऽयम्। यद्यपि जयन्तभट्टैरेवंरीत्या शक्तिः स्वीकृता, तथापि तेषां परवर्तिभिर्नव्यनैयायिकैः पुनः शक्तिः खण्डिता एव। अस्माभिर्नव्यनैयायिकयुक्तौ किं किं न सङ्घटते तदपि पूर्वमेव दृष्टम्।

अधुना अन्या अपि काश्चन युक्तीर्दर्शयामि। रामानुजाचार्यैस्तेषां तन्त्ररहस्ये विषयस्यास्योहापोह इत्थं कृतः—'सर्वभावेष्वतीन्द्रिया शक्तिः कार्येणानुमीयते, तथा हि—यथाभूतादेव वह्नेर्दाहो दृष्टः, मणिमन्त्रौषधिप्रयोगे सति तथाभूतादेव वह्नेर्दाहो न दृश्यते। अतो मणिमन्त्रादिप्रतिबन्धनीयं तद्विनाश्यं वा किञ्चिदतीन्द्रियं शक्तिसामर्थ्यादिपदवाच्यमभिधेयम्। तस्य च स्वाश्रयकारणादुत्पत्तिः। कार्यानुत्पत्तौ द्वयी गतिरभिभवो वा विनाशो वा। यत्र पुनः कार्यं न जन्यते तत्र विनाशः। यत्र तु जन्म तत्राभिभव इति।

ननु मणिमन्त्रादिसन्निधानादेव कार्यानुदयः स्यात्, न, कारणावैगुण्ये कार्योदयविघातासम्भवात्। तर्हि तदप्रयोगोऽपि तदुत्पत्तिनिमित्तमिति चेत्, न, प्रयोगस्य प्रतिबन्धकतया तदभावस्य केवलं तन्निवृत्तिरूपत्वमेव। न तु निमित्तत्वम्। कार्योत्पत्तिस्तु निवृत्तप्रतिबन्धायाश्शक्तेरेव'।

अन्यच्च—'किञ्च क्वचित्प्रयोगेऽपि प्रतीकारवशेन कार्योत्पत्तिदर्शनान्न तदभावस्य निमित्तत्वम्। एवमपि निमित्तत्वमङ्गीकृत्य शक्तिरपह्नूयते चेत् स्पर्शवद्द्रव्यसंयोगेन पतनप्रतिबन्धे तदभावस्यैव तन्निमित्तत्वाद् गुरुत्वं

दत्तजलाञ्जलिः स्यात्। असति प्रतिबन्धे गुरुत्वात्पतनमिति हि त्वन्मतस्थितिः। तदुक्तं 'संयोगप्रयत्नाभावे गुरुत्वात्पतनम्' (वैशेषिकसूत्रे, ५.१.७) इति।

प्रयोगस्तु—मणिमन्त्रादिप्रयुक्तो वह्निः स्वकार्योत्पत्तौ परिदृश्यमानरूपातिरिक्तरूपान्तरापेक्षः सत्यपि तस्मिन् कार्यानुत्पादकत्वात्। यद्यस्मिन् सत्यपि नोत्पादयति तत्तदतिरिक्तापेक्षं, यथा केवलं तथेति।

किञ्च, शक्त्यनङ्गीकारे कार्यार्थिभिर्नियतकारणोपादानं न स्यात्। तदङ्गीकारे तु यच्छक्तं तदेवोपादीयते नान्यदिति नियमसिद्धिः'। (तन्त्ररहस्ये, पृ. २०)

रामानुजाचार्यैरत्र 'गुरुत्व'विषये यः प्रश्न उत्थापितस्तस्योत्तरं शक्तिं पुनरपि खण्डयता विश्वनाथेन नैव दत्तम्। तच्चिन्त्यम्।

**उपसंहारः**

उपरितनचर्चायाः फलरूपेणेदमेव पर्यवस्यति यच्छक्तिः सर्वथा समर्थनीया, यतो हि —

१. तेन कार्यकारणभावः सुप्रतिष्ठितो भवति।
२. कार्यकारणभावहेतुः अन्वयव्यतिरेकनियमो नैव व्याहन्यते।
३. कार्यकारणभाव एकरूपेण वक्तुं शक्यते।
४. कारणवैजात्यकल्पनापि गौरवदोषदुष्टा नैव आवश्यकी तत्स्वीकारे।
५. गुरुत्वं तत्र नैव दत्तजलाञ्जलिर्भवति। गुणसङ्ख्यापि तस्मान्नैव घटत इति शम्।



# आधुनिके संस्कृतकाव्ये प्रौढिः

**डॉ. सदाशिवकुमारो द्विवेदी**
प्रवक्ता, संस्कृतविभागस्य
काशीहिन्दूविश्वविद्यालये, वाराणसी



आधुनिके युगे संस्कृतभाषया भूयांसि काव्यानि रच्यन्ते, येषु परिलक्ष्यन्ते नानाविधा विधाः। तत्रैवैका महाकाव्यविधापि। अनयाऽप्यधुना भूयस्यः कृतयः प्रकाशमाप्ताः। सनातनकविभिराचार्यरेवाप्रसादद्विवेदिभिर्विरचितं 'स्वातन्त्र्यसम्भवम्' तेष्वेवान्यतमम्। त्रयस्त्रिंशत्सर्गात्मकस्यास्याद्या अष्टाविंशतिसर्गा मुद्रिताः प्रकाशिताश्च नवतितमे वर्षे[1]। प्रकाशितेऽस्मिन्नंशे या प्रौढिः, सा हि अनितरसाधारणा। तत्र यान्यास्तिकनास्तिकानि दर्शनानि तेषां विविधाः सन्दर्भाः संलक्ष्यन्ते। कानिचन निदर्शनान्यत्र प्रस्तूयन्ते। तथा हि—आस्तिकानि दर्शनानि सांख्यमेव प्रथयन्ति।

## सांख्यदर्शनम्

दर्शनस्यास्य मुख्यानि तत्त्वानि त्रीण्येव 'प्रकृतिः त्रैगुण्यं पुरुषश्चे'ति। स्वातन्त्र्यसम्भवस्य चतुर्थे सर्गे प्रयागस्य सितासितं सङ्गमं वर्णयता कविना त्रैगुण्यमिदमेवं स्मृतम्—

सत्त्वं तमश्चान्तरितं रजश्च धात्रा त्रिवेणीमिषतो नु यस्मिन्।
सांख्यस्य योगस्य च सिद्धसिद्धः सिद्धान्तराजः परिपाठ्यतेऽद्धा[2]॥

अत्रैव प्रयाग एष त्रैगुण्यतीर्थमिति निगद्यते कविना—

छन्दांसि शास्त्राणि च मूर्त्तिमन्ति त्रैगुण्यतीर्थेऽवतरन्ति यस्मिन्।
प्रत्यब्दमेवोत्तमतापसानां व्याजेन माघे विविधव्रतानाम्[3]॥

---

१. 'स्वातन्त्र्यसम्भवम्' (१-२८ सर्गाः), प्र. कालिदाससंस्थानम्, २८ महामनापुरी, वाराणसी, १९९०।

२. स्वातन्त्र्यसम्भवम्-४.५;  ३. तदेव-४.११।

प्रयागपदमुत्तरापथे सरित्प्रवाहसङ्गमार्थे प्ररूढम्। अत्र पुनरन्यादृशोऽप्येकः प्रयागः स्मर्यते, स च 'अनुरक्तिः, विरक्तिः, ज्ञप्तिश्चे'ति तिसृणां सङ्गमः। तथा हि—

अस्यैव शाखासु निबद्धनौको मनुष्यजातेः प्रभवोऽपि कामान्।
कल्पक्षयान्ते लभतेऽनुरक्तिविरक्तिवित्तित्रिसरित्प्रयागः[1]॥

अत्र भगवति मनौ प्रयागस्य अनुरागे यमुनायाः, विरागे गङ्गायाः, ज्ञाने च वित्तिरूपे मातुः सरस्वत्या आरोपो नितान्तमनुरूपः। अन्योऽप्यत्र संस्मर्यते प्रयागः। स च 'तपो नयः प्रेमे'ति त्रयाणां प्रवाहानाम्। तदुक्तम्—

अत्र प्रयागे तपसां नयानां प्रेम्णां च धारा असिताः सिताश्च।
प्राज्ञेषु गुप्ता अपि तापसेषु प्रत्यक्षतामश्नुवते त्रिवेण्या[2]॥

अक्षय्यः प्रयागनामा वटोऽत्र प्रयागत्रिवेणीं दर्शयति। अष्टषष्ट्या पद्यरत्नैः (४।३।७०) वर्ण्यमाने प्रयागतीर्थे पद्यानां चतुर्विंशत्या चित्र्यमाणः—

पत्रावलीर्मारकतस्य रोचिः संमुष्णती रत्नवरस्य बिभ्रत्।
यो व्योमगर्भेऽपि कलिन्दकन्याधाराशतीं श्यामरुचं सुनीते॥
यत्पत्रपालीषु निलीय तिष्ठन् सितो वकानां समजो नृलोके।
व्यापारयत्यक्षिसरोरुहाणां शतानि शश्वत् त्रिदशाङ्गनानाम्॥
राशिं मणीनामिव यः समिद्धं गारुत्मतानां प्रतिपत्रपात्रम्।
विवस्वते तस्य सुतां जिगीषुर्भक्त्यार्घ्यपाद्येषु समाचिनोति[3]॥

स एष सांख्यशास्त्रे स्थालीपुलाकः। सन्दर्भान्तरेष्वत्र २६।१५ पद्यं सविशेषं स्मार्यम्—'संसार एष परभागगुणो गुणानामुच्चावचत्वमवतां नवतां दधानः' इत्येवं रूपम्।

**मीमांसाशास्त्रम्**

कर्ममीमांसाऽध्वरमीमांसा पूर्वमीमांसेति प्रसिद्धं यद् दर्शनं तत्र विश्वस्यास्य विसृष्टिर्नाभ्युपेयते, सान्तत्यमात्रेणैव व्यवहारस्य निर्वाहात्। स्वातन्त्र्यसम्भवे स एष भाव एवमुपनिबध्यते—

१. स्वातन्त्र्यसम्भवम्-४.३५; २. तदेव-४.१५।
३. तदेव-४.२३,२४,२६।

देहेऽपि नित्यत्वमिमे श्रयामो मीमांसका वेदपथे चरामः।
असौ ह्यमीषां प्रतिभाति मानान्यस्माकमुच्चैःशिरसां महात्मा[१]॥

प्रयागतीर्थस्थः श्यामो वटोऽक्षय्यः शरीरेणापि, अत एव हुँमायुसूनुना निकृत्तमुख्यकाण्डस्योपरि प्रतप्तस्यायसः सेकेनाप्यसौ नाशं नाशान, भूमिं प्रविभिद्य प्रत्युत शतशाखतामदर्शयत्। तदेतदुक्तम्—

अयः प्रतप्तं परिषिच्य कृत्ते मुख्ये तनौ यस्य हुँमायुसूनुः।
कृती न जातः शतशाखभावात् स वावृधीति प्रविभिद्य दुर्गम्[२]॥

समुज्ज्वलं निदर्शनमिदमक्षय्यतायाः। परिपुष्टिमेति एतेन मीमांसायाः शरीरनित्यत्ववादः सान्तत्यार्थतात्पर्यकः। एवंविधानि सुबहूनि सन्ति काव्यरत्नेऽत्र वचनानि। सेयं पूर्वमीमांसा। अथ वेदान्तशब्दप्रतीता उत्तरमीमांसा ब्रह्माद्वैत-प्रविचाररूपा।

**वेदान्तशास्त्रम्**

मीमांसका आध्वर्यवं कर्म प्रतिपाद्य 'अथातो ब्रह्मजिज्ञासा' इत्युत्तरमीमांसया विविधान् वेदान्तानुपपादयन्ति। तेष्वेषु शङ्करभगवत्पादप्रवर्तितो ब्रह्मात्मैक्य-निश्चयात्मको वेदान्तः। सरसीति संज्ञके एकादशे सर्गे शाङ्करमद्वैतमिदमेवं प्रस्तूयते—

जिज्ञास्यते न खलु तिष्ठति यत्र साक्षाद्
ब्रह्मैव दृष्टिविषयीभवितुं समुत्कम्।
तत्रैव यत् परमहंसमहामहर्षि-
ब्रह्मिष्ठ-सिद्ध-यति-योगिजना रमन्ते[३]॥

ब्रह्मप्रतिपादकं दर्शनं वेदान्त इत्युपनिषदिति चोच्यते। भारतं सम्प्रबोधयन् कविर्वक्ति—

वेदान्तसांख्यशिवशास्त्रमहोपदेशाः
प्रज्ञां तवोज्ज्वलयितुं प्रबलं क्रमन्ते।
श्रीरामरावणयुधिष्ठिरकौरवाणां
कीर्त्यन्त एव चरितान्यधुनापि सद्भिः[४]॥

---

१. स्वातन्त्र्यसम्भवम्, ४.३८; २. तदेव ४.२२।
३. तदेव-११.१६; ४. तदेव-२४.१८।

समाधिदशायां 'दृश्यं, दृक्, द्रष्टा' चेति यद् द्वैतत्रिकं तत् परिलीयते समुपजायते च कैवल्यमद्वयत्वरूपम्। तदिदं वैशद्येन प्रतिपाद्यते स्वातन्त्र्यसम्भवस्य पञ्चविंशे सर्गे। तथा हि—

समाधिस्तद्दास्ये भवति चरितार्थो यतिवरैः
सहस्रैरब्दानां कथमपि समासादितकणः।
न दृश्यं न द्रष्टा न च दृगपि यत्रास्ति परमा
रमाभिः प्रारब्धा बहुविधरसा रासरसना[1]।।

अस्यां रासरसनायां निमज्जनस्य फलमपि कविनैवाऽत्रैवमुपनिबध्यते—

निमग्नानां तस्यां जननि! न हि कालस्य सकल-
प्रपञ्चप्राकाम्यप्रलयविकरालस्य कलना।
न वा दिग्देशानां रविशशिमहाकाशपवनाऽ-
नलाम्भोभूमीनामणुपरिमिताप्यस्ति रचना[2]।।

अस्या अपि परिणतेः परिणाम एवंविधः—

तदानीं ब्रह्मत्वं भवति चरितार्थं मम महान्
विवर्त्तो भूतानां भवति मम शून्येन भरितः।
तदानीं सर्वज्ञोऽहमिह गुणसांराविणि गुणे
द्वयत्वप्राग्भारे पुरुष इव साक्ष्यस्मि भविता[3]।।

**न्यायदर्शनम्**

न्यायदर्शनमेवौलूक्यदर्शनमित्युच्यते सर्वदर्शनसङ्ग्रहे। तत्रात्र न्यायो नाम हेतुः। तस्यास्य नव्यतमे पर्यये नव्यन्याये सम्बन्धविचारोऽप्यतितमां सूक्ष्मतामवगाहते। स च सम्बन्धोऽनुयोगिताप्रतियोगितास्वरूपः। तत्र प्रतियोगी विशेषणभूतः पदार्थः, अनुयोगी च विशेष्यभूतः। अनुयोगिन उद्देश्यत्वं विधेयत्वं च प्रतियोगिनः। सेयं प्रतियोगिता अभावस्यापि भवतीति 'यस्याऽभावः स प्रतियोगी'ति तार्किकवाक्येन सिद्धम्। सेयमनुयोगिता प्रतियोगितेव न शक्यते स्प्रष्टुमभिधया। आकाङ्क्षामात्रभास्या सा। तदिदमुच्यते स्वातन्त्र्यसम्भवे—

---

१. स्वातन्त्र्यसम्भवम्, २५.५९; २. तदेव-२५.६०।
३. तदेव-२५.६१।

स्वातन्त्र्याय नमस्तस्मै यस्याऽनुप्रतियोगिनौ।
शिवौ मृणालसूत्रस्य यथा चक्राह्वदम्पती[१]।।इति।

अभेदभेदोभयभिन्नगात्रीं प्रपञ्चमूर्त्या च परिस्फुरन्तीम्।
पराम्बिकां वा प्रणमामि किञ्चिन्नैयायिकानां प्रतियोगितां वा[२]।। इति च।

अत्रैव परिसमाप्तं विशेषनाम्नोऽतिरिक्ततया प्रतिपादितस्य पदार्थस्य कृते प्रसिद्धं वैशेषिकं दर्शनम्।

इयं या भिन्नानामभेदधीस्तत्र तान्त्रिकाणां दृष्टान्तो मयूराण्डरसः। यथा हि चित्रवर्णस्य मयूरगात्रस्य सर्वेऽपि वर्णा मयूराण्डरसे परस्परमभिन्न एव तिष्ठन्ति, तथैव वैचित्र्यमयेऽस्मिन् प्रपञ्चे भासमाना इदन्तदात्मतया प्रतीताः पदार्थास्तस्मिन् परस्मिँस्तत्त्वे। इदमुच्यते—

सापेक्षतामात्रमुपाश्रितानामिदन्तदाकारतयाञ्चितानाम्।
मयूरतद्वर्णसमानसीम्नां नमामि भूम्नां तनुमेकरूपाम्[३]।।

सेयमभेदभेदोभयगाथा परापश्यन्तीमध्यमावैखरीति तन्त्रभाषयाऽप्युद्दिश्यते। तत्र मूलभूता भगवती परा, ततः पश्यन्ती, ततो मध्यमा, ततश्च वैखरी समुद्भिद्यत इति क्रमः शिवदृष्ट्यादिष्वागमिकेषु ग्रन्थेषु प्रपञ्चिततमः। स एष क्रमः स्वातन्त्र्यसम्भवेऽप्येवमुल्लिख्यते—

पश्यन्तिकाभूयमियं परैव यथा परैवैति च मध्यमात्वम्।
तथैव मातस्त्वयि पक्षपातः प्रबुध्यतेऽस्मासु तव क्रियासु[४]।।

यदिदं जगन्मिथ्यात्वं तत्र स्वातन्त्र्यसम्भवकविर्विप्रतिपन्नः। स हि कथयति—

रें दण्डिनो! यदिह दर्शनमस्ति मिथ्यै-
वैष प्रपञ्च इति सा प्रतिसर्गभाषा।
सर्गप्रयोगनिपुणेषु नटेषु या वै
लीला रसप्रसविनी कविता तु सा नः[५]।।

नर्मदाम्बारूपैव सैषा कविता या हि प्रलयेष्वप्यलया[६]।

---

१. स्वातन्त्र्यसम्भवम्, १.३; २. तत्रैव, २५.७३।
३. तत्रैव, २५.७४; ४. तत्रैव, २५.७७।
५. तत्रैव, २५.७५; ६. तत्रैव, २६.११।

अध्यारोपापवादयोः कथापि सर्वेषामेव दर्शनानां प्रिया। अत्राप्युच्यते—

सर्पापसर्प नहि रज्जुतनौ त्वमासी-
नों वा भविष्यसि तमःप्रतिभासमूर्ते!।
रज्जो! वधान धृतिमाशु तवाऽपलाप-
वार्त्ताऽप्यपैति परमार्थतया स्थितायाः[1] ।।

नित्यत्वाभिमुख्येवासौ विमर्शवीथी।

महाकाव्येऽस्मिन् योगशास्त्रमपि सङ्गृहीतम्। यानि च यमनियमासन-प्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाण्यत्राष्टावङ्गानि, तेष्वाद्यौ यमनियमौ सुकविना महाकाव्येऽत्रानेकश उपनिबध्येते यश्चान्तिमं समाधिरूपमङ्गं तस्याप्यस्त्येव पौनःपुन्येनाम्रेडनमस्मिन् सुमहति महाकाव्ये।

अथ नास्तिकानि मतानि गवेषयामः स्वातन्त्र्यसम्भवे। तान्यप्यत्रोल्लिख्यन्त एव नाम्ना। तथा हि—

**सौगतमतानि**

स्वातन्त्र्यसम्भवस्य एकादशे सर्गे हंसः पद्मं मानसं सर उपगन्तुं निमन्त्रयति। उत्तरे पद्मो यद् ब्रवीति तत्र सौगतमतान्यपि सङ्कीर्त्यन्ते। तथा हि—

आकर्षणं महदिदं मम तत्र याने
यत् तत्र माध्यमिकदर्शनशाखिनोऽपि।
विज्ञानवादनिपुणा इव भिक्षुसङ्घा
वैभाषिकैः सह चरन्ति सुबुद्धियोगात्[2] ।।

इत्येवमत्र बौद्धं मतत्रयं माध्यमिकम्, विज्ञानवादः, वैभाषिकमिति नाम्ना निर्दिश्यते। एतानि ह्युपलक्षणानि योगाचारसौत्रान्तिकयोरपि। वैनाशिकत्वमप्यत्र पदं लभते। एतेषु माध्यमिकानां सर्वशून्यत्ववादः, योगाचाराणां बाह्यार्थशून्यत्ववादः, सौत्रान्तिकानां बाह्यार्थानुमेयत्ववादः, वैभाषिकाणां पुनर्बाह्यार्थप्रत्यक्षत्ववादः सुप्रसिद्धाः। विज्ञानवाद एषां विपाकः।

आर्हता जैनाः पौद्गलिकाः। एतेऽपि कृतपदाः स्वातन्त्र्यसम्भवे। दैगम्बरत्वेनापि स्मर्यन्त एते।

---

१. स्वातन्त्र्यसम्भवम्, २५.७८; २. तत्रैव-११.२४।

कवेरस्य निश्चयो यत् सर्वाण्यपीमानि वर्त्मानि 'शम'धनान्येवेति लक्ष्ये सर्वाण्यपीमान्यभिन्नान्येवेति। उच्यत इदमेवैवम्—

स्युर्वैदिकाः सुगतमार्गजुषोऽथवा स्यु-
दैगम्बराः शमधना खलु सर्व एव।
काष्ठेन वा भवतु सिद्ध्यतु विद्युता वा
पाकः स एव यदि किं नु भिदा क्रियेते[1]॥

दर्शनसमन्वयस्वर एषोऽत्रैव विविधं प्रत्युद्गतः। शैवे सम्प्रदाये यदेव ब्रह्मपदेन प्रतिपाद्यते तदेव शून्यपदेनापीति नास्ति तिरोहितं विदुषाम्। अत्राप्युच्यते—

शून्यं परात्परयितुं क्रमताममीषां
ब्रह्मैव हन्त परमा गतिरित्यवैमि।
नेतीति यद् ग्रहणमस्य हि कोटियुग्मं
ब्रह्मेति शून्यमिति यत् क्षपणा गृणन्ति[2]॥

एवमेवोच्यते—

शून्यं फलेन मम कर्म हि दृष्टशान्त्याऽ-
पोहाध्वना फलति किञ्चन भूमभूयम्।
तद् ब्रह्म तत्र मम चित्तसमाधिरेष
ब्राह्मे सरस्यतितरां ननु सन्निकृष्टः[3]॥

ये हि वैदिकास्ते मीमांसका इत्युच्यन्ते। तत्रापि जागरूकतैवालक्ष्यते पूर्णत्वरूपिणि समन्वये। तथा हि—

मीमांसकोऽस्मि न हि दृष्टनिराचिकीर्षु-
र्दृष्टेतरस्य तु यथास्मि समाजिहीर्षुः।
कर्माध्वनि प्रियतमो मम पात्रवर्त्ति-
ज्वालाघृतत्रितयसञ्जनितः प्रकाशः[4]॥

---

१. स्वातन्त्र्यसम्भवम्, ११.२९; २. तदेव-११.२५।
३. तदेव-११.२७; ४. तदेव-११.२६।

बौद्धानां सर्वशून्यत्ववाद इव वेदान्तिनां त्रिकालबाधितसंसारत्ववादो वस्तुतो भगवतो मृत्योः शिक्षा। तथा चोक्तम्—

वैवस्वतस्य कृपया सुखदुःखसक्ति-
प्रद्वेषयोः सुमनसां समवर्त्तितैव।
तल्पे प्रसूननिचिते यदि वा चिताग्नौ
प्रेतः समं स्वपिति निर्विचिकित्समानः[१]॥

अन्यदप्युच्यते—

आध्यात्मिकोऽस्मि, न परन्तु विभाषयापि
वैनाशिकोऽस्मि जगतामभिसंसृतानाम्।
सान्तानिकेऽपि खलु यस्य विचारमार्गे
पात्राऽपनोदनविधौ न मतिप्रवृत्तिः[२]॥ इति।

त्वं बादरायणमहर्षिप्रसूत-स्व-
ब्रह्मसूत्र-परिभाषित-तात्त्विकोऽसि।
त्वत्केवलान्वयिन एव समेऽपि तर्का
आस्तिक्यमेदुरितचिल्ललिताः प्रथन्ते[३]॥

विद्वान् भवानपरिसीमितचिद्विलास-
शास्त्रार्थकोटिकलनाकमनीयताढ्यः।
स्मेरं मुखं तव निरीक्ष्य पराजयन्ते
नास्तिक्यकौशिकघटाः स्वत एव तास्ताः[४]॥

भारतीयाभारतीयानि यान्येतानि दर्शनानि एतेषां फलं राष्ट्रस्य व्यक्तेश्च परिपोषः। अतः सर्वेष्वप्येतेषु नास्ति बुद्धिमतां विमानना—

पद्म त्वदीयमपि दर्शनमस्ति राष्ट्र-
व्यक्तिप्रपोषपरमेधफलप्रदातृ।
तत्रापि तेन मम नास्ति विमाननाऽस्मि
बौद्धोऽपि वेदपथिको व्यवहारमार्गे[५]॥

---

१. स्वातन्त्र्यसम्भवम्, ११.३०; २. तदेव-११.४९।
३. तत्रैव, ११.५१; ४. तदेव-११.५५; ५. तदेव-११.६०।

आत्मनित्यतावाद एष महदेवौषधं परमाणुशस्त्रविभीषिकामयेऽत्र समये। तथा चोच्यते—

यत् पारमाणवमिदं भयमद्य सृष्टि-
मेतां जिघत्सतितरामविलम्बमेव।
मित्र! त्वदीयमिह दर्शनमेतदस्या-
प्याश्वेव शान्तिमुपपादयिता न शङ्का[1]॥

यच्चेदं परमाणवं भयं तदिदं परिदुर्बलतैव मानवस्य मते:। उक्तमिदम्—

गर्ज्जन्ति यत् प्रतिदिशं परमाणुशस्त्रा-
ण्यद्याऽऽर्यशील! परिदुर्बलता मते: सा।
स्पर्धेत संभृतसमस्तसमृद्धिकं तै:
स्वर्गेण सार्धमवनीतलमन्यथा वा[2]॥

शैवशास्त्रादीनि सोमसिद्धान्तादीनि च यान्यन्यानि दर्शनानि तेषामपि सिद्धान्ता: काव्येऽत्र बहुत्रोपलभ्यन्ते सूत्रिता:।

एतेषां सिद्धान्तानां कृते संदृब्धा या: पुराणकथास्तास्वपि जागरितैव धी: सनातनकवे:। प्रयागेऽक्षय्यो यो वटस्तत्र स्पष्टभूयिष्ठमिदं तथ्यम्। ये च साम्प्रतिका समाजवादसाम्यवादादयो वादास्तेषामपि स्फुरितैव प्रतिमा काव्येऽत्र। इदं पुनरत्र पार्यन्तिकं यत् काव्यं काव्यशास्त्रं प्रतिभातत्त्वं च तदिदमप्यनेकश: सम्भृतश्रीकमत्र महति काव्ये। अत्रापि यन्मूलभूतं प्रतिभातत्त्वं तत् प्रस्तूयतेतरामत्रानेकधा। तथा हि काव्यं किमिति प्रश्ने सनातनकवेरुत्तरम् 'उत्कृष्टतमा अलंभावप्रपा कविता' इति—

आनन्दकोषस्योल्लासे लोकोत्तरविभावनाम्।
अलंभावप्रपामांद्यां वदन्ते कवितां सुधी:[3]॥

अत्र योऽयमलम्भाव: प्रतिपादित: स 'काव्यालङ्कारकारिका'दिषु काव्यशास्त्रसन्दर्भेषु सनातनेनैव। अत्र 'अलङ्कार'पदे यदुत्तरं कारपदं तत् स्वरूपपरम्, भावपदवाच्यार्थकमेव। यच्चालमिति पूर्वं पदं तस्यात्रार्थ: पर्याप्तिरेव

---

१. स्वातन्त्र्यसम्भवम्, ११.६८; २. तदेव-११.६९;
३. तदेव-१.१०।

पूर्णतारूपा। एवञ्चात्र काव्यात्मभावं प्रतिपद्यतेऽलङ्कार एव। तमिममलंभावं सुकविरेष भूयोऽप्येवं स्पृशति—

तस्य स्थावरपार्थिवस्य शिखरादाविर्भवन्तीमिमां
वाग्देवीं श्रवसोर्नभस्तल इयं कृत्वा स्थिरामिन्दिरा।
नैवाकाङ्क्षदिलां न वा दिवमहंभावेन रिक्ताऽप्यलं-
भावाढ्या कवितेव काचिदुदिताद्वैता रसैरान्तरैः[१]॥

कवितेयमत एवोच्यते 'ब्रह्मर्षीणां राजर्षीणां च तपसां दुहिते'ति[२]।

काव्यशास्त्रस्यापि भारतीयस्यानेके सिद्धान्ताः स्वातन्त्र्यसम्भवेऽपि स्थानमापुः। एषु 'रसः, वक्रोक्तिः, अलंभावरूपोऽलङ्कारः, ध्वनिः, साहित्यं, रीतिश्च सविशेषमुल्लिखिताः। अलङ्कारेष्वपि 'विभावना, आक्षेपः, श्लेषः, अर्थान्तरन्यासः, रूपकम्, उत्प्रेक्षा, अनन्वयः, उपमेयोपमा, उपमा' अन्ये चानेके विच्छित्तिविशेषा नाम्नापि स्मृता उपनिबद्धाश्च तत्र तत्र। काव्यस्य कारणत्वं केवला प्रतिभैवाधत्त इति काव्यालङ्कारकारिकायां कविनैतेनैव निरणायि। स्वातन्त्र्यसम्भवेऽपि सैषा स्मर्यते। नेहरोर्जवाहरस्याङ्के कन्या प्रियदर्शिनी कवितरि प्रतिभेव भाति या हि कविताया अर्थं प्रसूते—

कवितरि प्रतिभेव विभास्वरारुचदसौ पितरि द्युतिशालिनि।
भरतभूवलयस्य शुभयुताक्षरमयीव लिपिः कवितार्थदा[३]॥

काव्यार्थप्रसूत्वमत्र कण्ठरवेणैवोदीरितं प्रतिभायाः। प्रतिभैव प्रतिभानम्। तच्च सांसारिकान् विधीन् विसिनोति सामान्यतः। यदि च सांसारिका विधय एव प्रतिभानमनुसरन्ति, यदुच्यते 'वाचमर्थोऽनुधावति' इति, स खलु विशिष्ट एव कश्चन क्रमः। उक्तमिदम्—

सांसारिकेषु विधिषु प्रतिभानभाजा-
मग्रेसरन्ति सुधियः खलु ये नुमस्तान्।
सांसारिकास्तु विधयः प्रतिभानभाजो
यान् स्वामिवत् परिचरन्ति भवन्ति तेऽन्ये[४]॥

यदा हि जवाहरलालो मुक्तिं प्रत्यासीदति तदा भूयोऽप्यस्या भगवत्याः

१. स्वातन्त्र्यसम्भवम्, २५.८०। २. तदेव-३.२६।
३. तदेव-१०.६०; ४. तदेव-२६.१७।

प्रतिभायाः परिणामान् कविरसौ चतसृभिः स्रग्धराभिरुपनिबध्नाति १४-१७ संख्यामाबिभ्रतीभिः अष्टाविंशतितमे सर्गे। तथा हि—

वाग्देवी मम याति शान्तिमिह नो वर्णाश्च मे साम्प्रतं
व्यक्तिं सन्दधते पदानि सहसा मन्त्रत्वमाबिभ्रति।
एषोऽहं कवितामयीं भगवतीमाविश्य तां छन्दसां
प्रस्तारान् विविधान् गृणन्निह परां सङ्गीतिमास्वादये।। (२८।१४)

तन्त्री सम्प्रति हृन्मयी मम चितेस्ताँस्तान् स्वरान् मुञ्चती
मौनं सम्प्रतिपद्यते स्वनति सा सांराविणीं स्वां कथाम्।
रावः सः, श्रुतिरप्यसौ, गतिमती या मूर्च्छना साप्यसा-
वैकात्म्यं मयि लम्भ्यतेऽस्म्यहमहो मोक्षस्वरूपो रसः।। (२८।१५)

प्रतिभा हि प्रतिभासात्मा भवति विद्युदुद्योत इव। तत्राऽत्र भित्तिभूते ये केचिदर्था भासन्ते तेऽपि प्रतिभासात्मान एव भवन्ति। तेषामपि पर्यवसानं भवति कस्मिँश्चित्तात्पर्यभूते महावाक्यार्थे। अयं हि कान्तासम्मित उपदेशः। निबद्धा एते समेऽप्यभिप्रायाः स्वातन्त्र्यसम्भववेधसा स्वैरम्। तथा हि—

अत्र ज्योतिरिरम्मदेन तुलितं पश्यामि यस्यान्तरे
रेखां काञ्चन भावयामि तिलकप्रख्याकृतिं भास्वतीम्।
ज्ञाने कर्म समाप्तिमृच्छतितरां ज्ञानं च भक्तौ शृणो-
म्येतां काञ्चन पुत्रि! तन्मुखगतां सङ्गीतिकागीतिकाम्।।
(२८।१६)

इरम्मदपदेन मेघज्योतिरादीयते 'मेघज्योतिरिरम्मद' इति। तस्यास्य स्फुरितं प्रतीतचरमेव। सेयं प्रतिभैव भगवती। कविरग्रेऽप्यमुमेवार्थं प्रस्तौति—

रेखाऽन्याप्यभिवीक्ष्यतेऽत्र नितरां श्लक्ष्णा महायोगिनः
प्रज्ञेव स्फुरदात्मवैभवभरा ज्योतिष्मती काचन।
यस्यां भावितदृक्तटीमहमिमां मीराऽरविन्दच्छटा-
सम्भाषां कलयाम्यपूर्व-कविता-पीयूष-मेदस्विनीम् ।।
(२८.१७)

प्रतिभापदवाच्योऽर्थः केवलः परमात्मा शिवः, कवेः प्रत्यक्चैतन्यात्मा स्वात्मा वा। अत एव प्रणमतितमां तामेतां तत्रभवान् महामाहेश्वर आचार्योऽभिनवगुप्तो ध्वन्यालोकप्रथमोद्योतलोचनान्ते।

यदुन्मीलनशक्त्यैव विश्वमुन्मीलयति क्षणात्।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्।।इति।

अत्र वैविध्यसम्पत्तये कौमुदीकारादिभिः 'यदुन्मीलयुक्त्यैवे'ति पठ्यते ध्वन्यालोकचतुर्थोद्योतस्यैव 'युक्त्याऽनयाऽनुसर्त्तव्यो रसादिर्बहुविस्तरः'[१]. इति कारिकार्थं स्मरद्भिः।

स्वातन्त्र्यसम्भवं खलु नवीनतमं संस्कृतमहाकाव्यम्, तत्रैवंविध-प्रौढतमार्थगर्भवत्त्वं महाकाव्यस्य प्राचीनां परम्परामनुस्मारयतीति शम्।

●

१. ध्वन्यालोकः, ४.३।

# आत्मतत्त्वनिरूपणे तर्कस्य कथङ्कारमुपयोगः

**डॉ. वि.स्वामिनाथन्**
१८-३-६१, मेन रोड, शान्ती नगर
के.टी.रोड, तिरुपति

***

अशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदं निष्कलं निष्क्रियं निर्गुणं निरञ्जनमेकं सर्वान्तरं नित्यशुद्धबुद्धमुक्तस्वभावं साक्षादपरोक्षं यदसंसार्यात्मतत्त्वं तदद्वैतमिति गृणन्ति श्रुतयः—'प्रपञ्चोपशमं शान्तं शिवमद्वैतम्'[1], 'सलिल एको द्रष्टाद्वैतो भवति'[2], 'एकमेवाद्वितीयम्'[3] इत्याद्याः। अद्वैतात्मसाक्षात्कारान्निखिल-संसारदुःखनिवृत्तिपूर्वकं नित्यनिरतिशयज्ञानानन्दरूपे स्वात्मनि प्रतिष्ठानं मोक्षाख्यममृतत्वं भवतीति 'तरति शोकमात्मवित्'[4], 'निचाय्यतं मृत्युमुखात्प्रमुच्यते'[5], 'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'[6], 'यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति'[7] इत्याद्याः श्रुतय आमनन्ति। परमपुरुषार्थसाधनमद्वैतात्मज्ञानं वेदान्तवाक्येभ्यो लभ्यते। तथा च श्रुतिः—'तं त्वौपनिषदं पुरुषं पृच्छामि'[8] इति। अस्याः श्रुतेर्वेदान्तवाक्यमेवात्मनि प्रमाणं नान्यदिति गम्यते। यदि श्रुतिरन्यच्च प्रमाणं तदा औपनिषदत्वविशेषणं व्यर्थं स्यात्। उक्तं च भाष्यकारैः—'औपनिषदः पुरुषः अशनायादिवर्जित उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्य इति'[9]। अयमेवार्थः श्रुत्यन्तरे व्यतिरेकमुखेनाप्युक्तः, 'नावेदविन्मनुते तं बृहन्तम्'[10] इति। अपरोक्षनिश्चयात्मकमात्मज्ञानं वेदान्तादेव जायत इति 'वेदान्तविज्ञानसुनिश्चितार्थाः'[11] इति श्रुतिरावेदयति। तदेवमद्वैत आत्मा अन्वयव्यतिरेकाभ्यां श्रुत्येकसमधिगम्य इति निर्विवादम्।

---

१. मा.उ., ७;
२. बृ.उ., ४।३।३२।
३. छा.उ., ६।२।१;
४. तत्रैव, ७।१।३।
५. क.उ., ३।१५;
६. मु.उ. ३।२।८।
७. क.उ., ६।८;
८. बृ.उ. ३।९।२६।
९. बृ.उ.भा., ३।९।२६;
१०. तै.ब्रा., ३।१२।९।
११. मु.उ., ३।२।६।

वेदान्तवेद्ये वस्तुनि न क्रमन्ते लोकावगतानि प्रत्यक्षादीनि प्रमाणानि। प्रतिषेधन्ति च श्रुतय आत्मनः प्रत्यक्षगोचरत्वं कण्ठोक्त्या—'न तत्र चक्षुर्गच्छति न वाक्'[१], 'तं दुर्दर्शं गूढमनुप्रविष्टम्'[२] 'न सन्दृशे तिष्ठति रूपमस्य'[३], 'यत्तदद्रेश्यम्'[४] इत्याद्याः।

तथा अनुमानमप्यात्मनि वारयन्ति। उक्तं हि काठके—'न नरेणावरेण प्रोक्त एषः सुविज्ञेयो बहुधा चिन्त्यमानः। अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् ह्यतर्क्यमणुप्रमाणात्'[५] इति। अस्यार्थः—अस्ति नास्ति कर्ता अकर्त्ता शुद्धोऽशुद्ध इति वादिभिरनेकधा चिन्त्यमान एष आत्मा प्राकृतबुद्धिना उक्तो न सम्यग् विज्ञातुं शक्यः। आगमवता आचार्येणानन्यतया प्रोक्त आत्मा सुविज्ञेयः। इतरथा हि अतर्क्योऽणुप्रमाणो न तर्क्यः स्वबुद्ध्यभ्यूहेन केवलेन तर्केण। तर्क्यमाणे अणुपरिमाणे केनचित् स्थापिते आत्मनि ततोऽणुतरमन्योऽभ्यूहति ततोऽप्यन्योऽणुतरमिति, न हि तर्कस्य निष्ठा क्वचिद्विद्यत[६] इति। एवमेव 'नैषा तर्केण मतिरपनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ'[७] इति च। अस्यार्थः—अनन्यप्रोक्ते आत्मनि आगमप्रभवा या मतिः, एषा तर्केण स्वबुद्ध्यभ्यूहमात्रेण न प्रापणीया, न बाधनीया वा। तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कथयति। अत एव कुतार्किकादन्येनैव वेदविदा आचार्येण प्रोक्ता सुज्ञानाय अनुभवरूपफलाय भवतीति[८]।

बृहदारण्यकेऽपि सर्वान्तरस्यात्मनोऽनुमानगम्यत्वं प्रतिषिद्ध्यते—'अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीः'[९] इति। अस्यार्थः—परमार्थतत्त्वस्य प्रश्न आगमविषयः। तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्नः, केवलमनुमानमवलम्ब्य प्रवृत्तत्वात्। आगमेन प्रष्टव्यं तत्त्वमनुमानेन मा प्राक्षीः[१०] इति अनुमानेन तत्त्वं बुभुत्सन्तीं गार्गीं प्रति याज्ञवल्क्यस्य प्रतिषेधवचनम्। उदाहृतवेदान्तवाक्याभ्यां परमार्थतत्त्वस्यात्मनोऽनुमानानधिगम्यत्वं निर्विचिकित्समुक्तम्।

---

१. के.उ., १।३; २. क.उ., २।१२।
३. तत्रैव, ६।९; ४. मु.उ., १।१।६।
५. क.उ., ३।८; ६. क.उ.भा., ३।८।
७. क.उ., ३।९; ८. क.उ.भा., ३।९।
९. बृ.उ., ३।६।१; १०. बृ.उ.भा., ३।६।१।

श्रुतिमनुसरन्तः सूत्रकारा बादरायणाचार्याः परमार्थतत्त्वाधिगमो वेदान्तप्रमाणादेव भवतीत्याचक्षते, शास्त्रयोनित्वादिति[1] सूत्रेण। एवं 'श्रुतेस्तु शब्दमूलत्वात्'[2] इति सूत्रेणापि। अयमस्य सूत्रस्यार्थः—शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियप्रमाणकम्, तद्यथाशब्दमुपगन्तव्यम्। शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयति अकृत्स्नप्रसक्तिं निरवयवत्वं च। लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्याच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते। ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्ते, अस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति। किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत। तथा चाहुः पौराणिकाः—'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्' इति। तस्माच्छब्दमूल एव अतीन्द्रियार्थयाथात्म्यावगम[3] इति। एवमेव—'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः'[4] 'दर्शयतश्चैनं प्रत्यक्षानुमाने'[5], 'अनावृत्तिः शब्दात्'[6] इत्यादीनि सूत्राण्यपि अतीन्द्रिये आत्मविज्ञाने आगम एव प्रमाणं नान्यदिति घोषयन्ति। एवमौपनिषदमात्मज्ञानं स्वतन्त्रमेवान्यनिरपेक्षं पुरुषार्थसाधनमिति 'पुरुषार्थोऽतः शब्दात्'[7] इति सूत्रेण निरूपयन्ति सूत्रकाराः। तथैवान्येष्वनेकेषु सूत्रेष्वतीन्द्रियार्थविषयकं ज्ञानं श्रुतेरेव नान्यत इति च।

वेदान्तवेद्यस्यात्मतत्त्वस्य तर्कागोचरत्वमप्युच्चावचैर्वचोभिः प्रकाशयन्ति। तथा हि—'तर्काप्रतिष्ठानाद् अन्यथाऽनुमेयमिति चेत्, एवमप्यविमोक्षप्रसङ्गः'[8] इति सूत्रेण तर्कस्य दोषग्रामग्रस्तत्वेन वस्तुनिरूपणे अविश्वसनीयतामुररीकुर्वन्ति। अयमत्र सूत्रार्थः—नागमगम्ये अर्थे केवलेन तर्केण प्रत्यवस्थातव्यम्, यस्मान्निरागमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति। उत्प्रेक्षाया निरङ्कुशत्वात्। तथा हि कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यैराभास्यमाना दृश्यन्ते तैरप्युत्प्रेक्षिताः सन्तः ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुम्, पुरुषमतिवैरूप्यात्। अथ कस्यचित् प्रसिद्धमाहात्म्यस्य कपिलस्यान्यस्य वा सम्मतस्तर्कः प्रतिष्ठित इत्याश्रीयेत; एवमप्यप्रतिष्ठितत्वमेव।

---

१. ब्र.सू., १।१।३; २. तत्रैव, २।१।२७।
३. ब्र.सू.भा., २।१।२७; ४. ब्र.सू., २।३।१७।
५. तत्रैव, ४।४।२०; ६. तत्रैव, ४।४।२२।
७. तत्रैव, ३।४।१; ८. तत्रैव, २।१।११।

प्रसिद्धमाहात्म्याभिमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात्। अथोच्येत, अन्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यतीति...........एवमपि, क्वचिद्विषये तर्कस्य प्रतिष्ठितत्व-दर्शनेऽपि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य। न हीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमागममन्तरेणोत्प्रेक्षितमपि शक्यम्। रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः, लिङ्गाद्यभावाच्च नानुमानादीनाम्। अपि च सम्यग्ज्ञानान्मोक्ष इति सर्वेषां वादिनामभ्युपगमः। तच्च सम्यग्ज्ञानमेकरूपं वस्तुतन्त्रत्वात्। एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः। लोके तद्विषयं ज्ञानं सम्यग्ज्ञानमित्युच्यते यथाग्निरुष्ण इति, तत्रैवं सति सम्यग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना। तर्कज्ञानानां त्वन्योन्यविरोधात् प्रसिद्धा विप्रतिपत्तिः। यद्धि केनचित्तार्किकेणेदमेव सम्यग्ज्ञानमिति प्रतिष्ठापितं तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापितं ततोऽपरेण व्युत्थाप्यत इति प्रसिद्धं लोके। कथमेकरूपानवस्थितविषयं तर्कप्रभवं सम्यग्ज्ञानं भवेत्। न च प्रधानवादी तर्कविदामुत्तम इति सर्वैस्तार्किकैः परिगृहीतो येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि। न च शक्यन्ते अतीतानागतवर्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्तुं, येन तन्मति-रेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात्। वेदस्य तु नित्यत्वे विज्ञानोत्पत्ति-हेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेस्तज्जनितस्य ज्ञानस्य सम्यक्त्वमतीतानागतवर्तमानैः सर्वैरपि तार्किकैरपह्नोतुमशक्यम्। अतः सिद्धस्यैवोपनिषदो ज्ञानस्य सम्यग्ज्ञानत्वम्। अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्येत। अत आगमवशेन आगमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति स्थितम्[१]।

न विलक्षणत्वाधिकरणोक्तैस्तर्काप्रतिष्ठानादित्यादिभिर्हेतुभिर्न केवलं सांख्यतर्क एव, अपि तु वैशेषिकवादप्रसिद्धाः सर्वेऽपि तर्का निराकृता वेदितव्याः। तथा च सूत्रम्—'एतेन शिष्टापरिग्रहा अपि व्याख्याताः'[२] इति। अस्यार्थः—शिष्टैर्मनुव्यासप्रभृतिभिर्वेदविद्भिरपरिगृहीताः परमाणुस्वभावाभाववादाश्रितास्तर्का अपि निरस्ताः, निराकरणहेतूनां परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं, तर्कस्य चाप्रतिष्ठितत्वम्, अन्यथानुमानेऽप्यविमोक्षः, आगमविरोधश्चेत्येतेषां तुल्यत्वात्[३]।

---

१. ब्र.सू.भा., २।१।११; २. ब्र.सू., २।१।१२।
३. ब्र.सू.भा., २।१।१२।

अतीन्द्रियवस्तुनिरूपणे वैशेषिकतर्कस्य सर्वथा हेयत्वमाहुः सूत्रकाराः— अपरिग्रहाच्चात्यन्तमनपेक्षा[१] इति। वैशेषिकराद्धान्तो दुर्युक्तियोगाद् वेदविरोधात् शिष्टापरिग्रहाच्च नापेक्षितव्यः[२]। वेदान्तवाक्यानां ब्रह्मपरत्वं निरूपयितुं शारीरक-मीमांसाशास्त्रं प्रवृत्तम्, न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः कञ्चित् सिद्धान्तं साधयितुं दूषयितुं वा। वेदान्तवाक्यकुसुमग्रथनार्थानि हि सूत्राणि। वेदान्तवाक्यानि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगति-र्नानुमानादिप्रमाणान्तरनिर्वृत्ता[३]। तस्मात् 'जन्माद्यस्य यतः' इति सूत्रं ब्रह्मणि नानुमानोपन्यासार्थम्; किन्तु यद्वेदान्तवाक्यार्थविचाराद् ब्रह्मज्ञानं निश्चयात्मकं निर्वर्तते तस्य वाक्यस्य प्रदर्शनार्थम्[४]।

प्रत्यक्षविषयवैलक्षण्याद् वादिविप्रतिपत्तिदर्शनाच्च प्रत्यक्षान्नात्मास्तित्व-सिद्धिः। तथानुमानादपि। यादृशमात्मतत्त्वं वेदान्तप्रतिपाद्यं न तत्रानुमानं क्रमते। आगमेन त्वात्मास्तित्वे अवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैस्तदनुसारिणो मीमांसकास्तार्किकाश्च अहंप्रत्ययलिङ्गानि वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षानुमेयश्चात्मेति[५]। आत्मनि, स्वातन्त्र्येणानुमानं प्रमाणमित्यभिप्रायेण श्रुत्या प्राणनादिलिङ्गं नोपन्यस्तम्, परन्तु कारणसम्भावनामात्रम्[६]।

वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यम्, रवेरिव रूपविषये। पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितं चेति विप्रकर्षः[७]। श्रुतिश्च प्रमाणमतीन्द्रियार्थ-विज्ञानोत्पत्तौ[८]। श्रुत्येकग्राह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम्[९]।

सांख्याः, काणादाः, अन्ये च तार्किका बौद्धार्हतदृष्ट्यनुसारिणः, वेदान्तैकवेद्यमपि ब्रह्म प्रमाणान्तरगम्यमिति मन्यमाना वाक्याभासयुक्त्या-भासावष्टम्भा आत्मैकत्वदर्शनमाक्षेप्तुं प्रवर्तन्ते[१०]। यास्तु शास्त्रबहिर्मुखैस्तार्किकैः परिकल्पिताः कुदृष्टयः (आत्मबहुत्ववादिन्यः) ता अनृज्व्यो निरूप्यमाणा न घटनां प्राञ्चन्ति। तस्मादात्मभेदपरिकल्पना वृथैव तार्किकैः क्रियते[११]। पञ्चकोशान्तरस्थः शुद्धः स्वयं प्रकाशोऽद्वैत आत्मा वेदैकवेद्यो न

१. ब्र.सू., २।१।१७; २. ब्र.सू.भा., २।२।१८।
३. तत्रैव, १।१।२; ४. तत्रैव, १।१।२।
५. बृ.उ.भा., १।१।१; ६. तत्रैव, १।१।१, आनन्दगिरीयव्याख्या।
७. ब्र.सू.भा. २।१।१; ८. तत्रैव, २।३।१।
९. तत्रैव, २।१।३१; १०. तत्रैव, १।१।५।
११. मा.का.भा., ३।५, ११, १३।

तार्किकपरिकल्पिततात्मवत् पुरुषबुद्धिप्रमाणगम्यः। स्वभाव-यदृच्छा-काल-कर्म-देव-विज्ञानमात्रशून्यानि वादिभिः परिकल्पितानि। अतोऽनेकविप्रतिस्थानत्वान्न जल्पन्यायेन वस्तुनिर्णयः[1]।

एकस्याप्यात्मनोऽविद्याकृतनामरूपोपाधिनिमित्तो हि विशेषोऽभ्युपगम्यते, बन्धमोक्षादिशास्त्रकृतसंव्यवहाराय। परमार्थतोऽनुपाधिकृतं तत्त्वमेकमेवाद्वितीयमनुपादेयं तार्किकबुद्ध्यनवगम्यं ह्यजमभयं शिवमिष्यते। शास्त्रप्रणयनाद्युपपत्तिमाह शास्त्रम्, अन्यत्र परमार्थवस्तुस्वरूपाद् अविद्याविषये; 'यत्र हि द्वैतमिव भवति'[2] इत्यादि विस्तरतो वाजसनेयके। अत्र च (प्रश्न.उ.) प्रविभक्ते विद्याविद्ये परापरे इति आदावेव शास्त्रस्य। अतो न तार्किकवादभटप्रवेशो वेदान्तराजप्रमाणबाहुगुप्ते इहात्मैकत्वविषये[3]। उदाहृतेषु श्रुतिवाक्येषु सूत्रे भाष्ये च तर्कशब्देन येषु दर्शनेषु केवलया युक्त्या वस्तु निरूप्यते तानि गृह्यन्ते, तार्किकशब्देन च तथा वस्तु निरूपयन्तो वादिनः।

ब्रह्मवित्प्रकाण्डो भगवान् भर्तृहरिरपि अतीन्द्रियेष्वर्थेषु आगमस्यैव प्रमाणत्वम्। अनुमानस्य दोषकलापकवलिततया वस्तुनिरूपणेऽसमर्थतया चानादरणीयतां मुक्तकण्ठं विस्तरतो ब्रवीति। तथा हि—

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते।
अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु॥
भावानामनुमानेन प्रसिद्धिरतिदुर्लभा॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते॥
हस्तस्पर्शादिवान्धेन विषमे पथि धावता।
अनुमानप्रधानेन विनिपातो न दुर्लभः[4]॥ इति।

प्राचीननैयायिकमूर्धन्या वाचस्पतिमिश्रा अपि प्रमाणान्तराविषयस्य ब्रह्मणः साधने बाधने च तर्कस्य सामर्थ्यं नास्ति, यथा शब्दस्य साधने बाधने च

१. बृ.उ.भा., ३।२।१३; २. बृ.उ., २।४।१४।
३. प्र.उ.भा., ६।३; ४. वाक्यपदीये ब्रह्मकाण्डे।

चक्षुरिन्द्रियस्येति निर्विशङ्कमभिदधति। 'सामान्यतो दृष्टमनुमानं ब्रह्मणि न प्रवर्तते'[१]; 'केवलागमगम्येऽर्थे स्वतन्त्रतर्काविषये न सांख्यादिवत् साधर्म्यवैधर्म्यमात्रेण तर्कः प्रवर्तते, शुष्कतर्को हि स भवत्यप्रतिष्ठानात्'[२]; 'श्रुतिस्मृतीतिहासपुराणेषु तावदत्र भवतः सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्य जगद्योनित्वमवगम्यते, न तत् पृथग्जनसाधारण्यानुमानाभासेन आगमविरोधिना शक्यमपह्नोतुम्'[३] इति च।

नव्यनैयायिकधौरेया दीधितिकारा अपि 'अखण्डानन्दबोधाय पूर्णाय परमात्मने'[४] इति परमात्मनोऽखण्डानन्दबोधात्मत्वं वदन्तः परमात्मस्वरूपं श्रुत्येकसमधिगम्यमिति सूचयन्ति। 'विदुषां निवहैरिहैकमत्यैर्यददुष्टं निरटङ्कि यच्च दुष्टम्। मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथा'[५]॥ इति च वदन्तस्ते वस्तुनिरूपणे परस्परविरुद्धार्थसाधकस्य तर्कस्य सर्वथा अविश्वसनीयत्वमेव विवक्षन्ति, न त्वात्मनः प्रतिवादिपराजयकरणकौशलम्।

प्रदर्शितश्रुतिसूत्रभाष्यवाक्येभ्यः प्रामाणिकानां प्राचां विदुषां ग्रन्थेभ्यश्च अद्वैतात्मज्ञानं प्रति साधनत्वमनुमानस्य कथमपि न घटत इति स्फुटं प्रतीयते। तथापि वस्तुनिश्चयाय तर्कस्यापेक्षा अस्त्येव। तथा हि श्रवणजनितमपि वेदान्तवाक्यार्थज्ञानमसम्भावनाविपरीतभावनाभिभूतविषयत्वात् प्रतिष्ठां नैव लभते। अतः प्रतिबन्धकनिरासेन प्रतिष्ठित्यै तर्कमपेक्षते आत्मैकत्वविद्या। 'श्रोतव्यो मन्तव्य'[६] इति श्रवणव्यतिरेकेण मननं विदधती श्रुतिस्तर्कमपि स्वार्थनिश्चये सहायत्वेन बोधयति[७]। बादरायणप्रणीतानि वेदान्तसूत्राण्यपि तर्कोपकृतान्येव वेदान्तवाक्यार्थनिर्णये प्रवृत्तानि। उक्तञ्च भाष्यकारैः—तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यार्थमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयत[८] इति। तत्र किंरूपोऽयं तर्कः? कथङ्कारं तस्य वेदान्तवाक्यार्थाध्यवसाने उपकरणत्वम्? इति जिज्ञासा समुन्मिषति।

अत्रोच्यते—अर्थापत्तिरनुमानं चात्र तर्कशब्दार्थः। तद्रूपा वेदान्तमीमांसापि तर्क एव। तदविरोधिनो येऽन्येऽपि तर्काः पूर्वमीमांसायां न्याये च वेदप्रत्यक्षादि-

---

१. भामती, १।१।२; २. तत्रैव, २।१।११।
३. तत्रैव, १।२।१८; ४. अनुमानदीधितिः, मङ्गलश्लोकः।
५. दीधितिः; ६. बृ.उ., २।४।५।
७. ब्र.सू.भा., १।१।२; २।१।४; ८. तत्रैव, १।१।१।

प्रामाण्यपरिशोधनादिषु उपयुक्तास्तेऽप्यत्र विवक्षिता:। अत्र चार्थापत्तिरनुमानं वा वेदान्ताविरोधि तदुपजीवि च वेदितव्यम्[१]। वेदप्रमाणजनितस्य आत्मैकत्वज्ञानस्य असम्भावनादिप्रतिबन्धकनिरासेन दार्ढ्यसम्पादनाद् अनुमानादीनां प्रमाणानुग्राहकत्व-रूपं तर्कत्वमेव, न तु स्वतन्त्रं प्रमाणत्वम्, तेषां श्रुत्येकसमधिगम्येऽर्थे अप्रसरात्। आगमप्रमाणविषयस्य युक्त्या भासनिराकरणेन विवेचनस्तदनुसारी तदुपजीवी च तर्को मननम्; स एव 'मन्तव्य:' इति विधीयते[२]। श्रवणेन लब्ध: श्रुत्यर्थस्तर्केण सम्भावनीय इत्यर्थ:। श्रुत्यनपेक्ष: केवलस्तर्क: शुष्को भवति। शुष्कत्वं च तर्कस्यानुग्राह्यमानहीनतया निरालम्बनत्वम्[३]।

अयमत्र निष्कृष्टोऽर्थ:। अनुमानादीनां लौकिकप्रमाणानामविषय आम्नायैकगोचर: परमार्थतत्त्वभूत आत्मा अद्वितीय इति (वस्तु निरूपयतां श्रुत्यनुसारिणां प्रेक्षावतां निर्णय:)। आत्मनोऽद्वितीयत्वमिदानीं निरूप्यते।

'सलिल एको द्रष्टाद्वैतो भवति'[४], 'प्रपञ्चोपशमं......शान्तं चतुर्थं शिवमद्वैतम्'[५] इत्याद्या: श्रुतय आत्मनोऽद्वितीयत्वमामनन्ति। अत्र द्वैतशब्द:, अर्थविशेषे सङ्कोचे मानाभावात्, अनात्मवस्तुमात्रपरो ग्राह्य:। तथा चाद्वैतशब्दोऽ-नात्ममात्रं निषेधति।

'सदेव इदमग्र आसीद् एकमेवाद्वितीयम्'[६] 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन'[७] इत्याद्या ब्रह्मणोऽद्वितीयत्वं घोषयन्ति। अत्रापि प्रतिषेधविषयो द्वितीयं वस्तु पूर्ववदनात्ममात्रम्। आत्मब्रह्मणोरुभयोरपि अद्वितीयत्ववचनात् तयोरैक्यं सिद्ध्यति।

'अयमात्मा ब्रह्म'[८], 'यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर:'[९], 'अहं ब्रह्मास्मि'[१०], 'तत्सत्यं स आत्मा तत्त्वमसि'[११] 'ब्रह्मविदाप्नोति परम्'..... 'तस्माद्वा एतस्मादात्मन आकाश:'[१२] इत्याद्या आत्मब्रह्मणोरभेदं मुक्तकण्ठं प्रतिपादयन्ति।

---

१. भामती, कल्पतरु:, १।१।१;
२. भामती, २।१।१६।
३. आनन्दगिरीयन्यायनिर्णय:, २।१।१६;
४. बृ.उ., ४।३।३२।
५. मा.उ., ७;
६. छा.उ., ६।२।१।
७. रो.उ., १।१;
८. बृ.उ., २।५।१९।
९. तत्रैव, ३।४।१;
१०. तत्रैव, १।४।१०।
११. छा.उ., ६।४।७;
१२. तै.उ., २।१।

आत्मब्रह्मणोरभेदश्रवणाद् आत्मबहुत्वं लोकावगतं न वास्तविकम्; किन्तु औपाधिकमित्यापतति। श्रुतयश्च एकस्यैवाद्वितीयस्य ब्रह्मण उपाधिवशाद् अपारमार्थिकं नानात्वं प्रतिपादयन्ति—

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।।
एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्[1]।। इत्याद्याः।

इदानीमनात्मप्रपञ्चविषये श्रुतेर्हृदयं प्रदर्श्यते।

'स एष नेति नेति'[2], 'अस्थूलमनणु'[3], 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन'[4] 'एकमेवाद्वितीयम्'[5] इत्याद्या अनात्मप्रपञ्चं साक्षादेव प्रतिषेधन्ति।

उदाहृतश्रुतिवाक्यैः प्रतिषिद्ध्यमानो जडोऽनात्मप्रपञ्चो घटादिः प्रत्यक्षादिभिर्लौकिकप्रमाणैः सन्नित्येव गृह्यते, न तु शशविषाणादिवद् असन् इति। शुक्तिरजतादिवत् प्रमाणान्तरजन्यज्ञानानपोद्यत्वात् तस्य सत्यत्वमभ्युपेयम्।

'सत्यं ज्ञानमनन्तं ब्रह्म'[6], 'तत्सत्यं स आत्मा तत्त्वमसि'[7], 'अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मा'[8], 'अजो नित्यः शाश्वतः'[9] 'महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म'[10] इत्याद्या आत्मनः सत्यत्वमवगमयन्ति।

तथा च आत्मानात्मनोरुभयोरपि सत्यत्वं श्रुत्या प्रत्यक्षादिभिश्च प्रतीयते। तथापि प्रत्यक्षादिभिरावेद्यमानं यज्जडप्रपञ्चस्य सत्यत्वं, श्रुतिभिरुपदिष्टं यदात्मनः सत्यत्वं, तदुभयमपि एकरूपमिति वक्तुं न शक्यम्, अनात्मप्रपञ्चस्य श्रुतिभिरभावबोधनात्। अत आत्मनः सत्यत्वापेक्षया प्रत्यक्षाद्यवगतमनात्मनः सत्यत्वं विलक्षणमेष्टव्यम्।

'एष ते आत्मा अन्तर्याम्यमृतोऽतोन्यदार्तम्'[11], 'यो वै भूमा तदमृतम्, यदल्पं तन्मर्त्यम्'[12] इत्याद्या आत्मनः सत्यत्वमुक्त्वा अनात्मनां

---

१. ब्र.वि.उ., १२; २. बृ.उ., ४।५।१५।
३. तत्रैव, ३।८।८; ४. तत्रैव, ४।४।१९।
५. छा.उ., ६।२।७; ६. तै.उ., २।१।
७. छा.उ., ६।८।७; ८. तत्रैव, ४।५।१५।
९. क.उ., २।१८; १०. बृ.उ., ४।४।२२।
११. तत्रैव, ३।७।२३; १२. छा.उ., ७।२४।१।

तद्विपरीतधर्माक्रान्तत्वमुपदिशन्ति। अतोऽपि विज्ञायते, अनात्मनः सत्यत्वमात्मनः सत्यत्वमपेक्ष्यात्यन्तं विभिन्नमिति।

आत्मानात्मनोः स्वरूपभेदे श्रुतीनामैककण्ठ्यात् तद्गतसत्यत्वयोरवश्यं विशेष उपपादनीयः। सत्यत्वमबाध्यत्वम्, तच्चात्मानात्मनोः समानम्; परन्तु अभावप्रतियोगित्ववचनाज्जडप्रपञ्चः कालविशेषवर्ती, न सार्वदिकः। आत्मनोऽभावप्रतियोगित्वाश्रवणाद्, आत्मा सार्वदिकः। तथा चात्मनः सर्वदैवाबाध्यत्वरूपं सत्यत्वम्, अनात्मनः किञ्चित्कालाबाध्यत्वरूपं सत्यत्वमिति व्यवतिष्ठते। शुक्तिसाक्षात्कारपर्यन्तं रजतानुवृत्तिवद् अधिष्ठानब्रह्मसाक्षात्कारपर्यन्तमनात्मप्रपञ्चोऽनुवर्तते, जाते साक्षात्कारे निवर्तते। प्रत्यक्षादीनां प्रमाणत्वमपि आत्मसाक्षात्कारपर्यन्तमेव। उक्तञ्च प्राचीनैराचार्यैः—

'देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्'[१] इति।

प्रपञ्चस्य आत्मसाक्षात्कारेण बाध्यत्वमेव मिथ्यात्वमिति शास्त्रे व्यवह्रियते। तस्य चाब्रह्मज्ञानमनुवर्तमानप्रपञ्चगतसत्यत्वेन नास्ति विरोधः। लोकेऽपि शुक्तिसाक्षात्कारेण निवर्तितं रजतं मिथ्येति प्रसिद्धम्, अनात्मप्रपञ्चस्य आत्मसाक्षात्कारेण बाधः सर्ववेदान्तप्रसिद्धः, विद्वान्नामरूपाद् विमुक्तः'[२], 'तरति शोकमात्मवित्'[३], 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्'[४], 'एतद्यो वेदविहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह लोके'[५] इत्यादिश्रुतिप्रतिपाद्यः।

वेदान्तगतेषु सृष्टिप्रकरणेषु स्वोपादाने ब्रह्मणि प्रपञ्चस्योत्पत्तिं स्थितिं च प्रतिपाद्य तत्रैव तन्निषेधवचनमपि तन्मिथ्यात्वे मानम्।

आत्मनः सत्यत्वं पारमार्थिकं त्रिकालाबाध्यत्वात्, अनात्मनः सत्यत्वं तु व्यावहारिकं व्यवहारकालाबाध्यत्वादिति शास्त्रे व्यवहारः। उक्तं सत्यत्वस्य द्वैविध्यं श्रुतिरेव प्रमाणयति। तथा हि—'सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्'[६] इति प्रधानभूतप्राणोपलक्षितस्य कृत्स्नस्य प्रपञ्चस्य ब्रह्मणश्च आम्नायमानं सत्यत्वमेकरूपं भवितुं नार्हति। तथा सति ब्रह्मणः प्राणाद्यपेक्षयाऽभिधीयमानो य

---

१. ब्र.सू.भा., १।१।४;
२. मु.उ.।
३. छा.उ., ७।१।३;
४. बृ.उ., ४।५।१५।
५. मु.उ., २।१।९;
६. बृ.उ., २।३।६।

उत्कर्षस्तद्रूपो वाक्यार्थः पीड्येत। ब्रह्मणः सत्यत्वमुत्कृष्टं प्रपञ्चस्य त्वपकृष्टमिति खलु वाक्यात् प्रतीयते। तच्च पूर्वोक्तरीत्या सर्वकालकिञ्चित्कालप्रयुक्तम्। प्रकारान्तरेण उत्कर्षापकर्षयोरसम्भवात्। विधान्तरेण तत्सम्भवेऽपि प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वग्राहकश्रुत्यन्तरैकार्थ्याद् उत्कर्षापकर्ष एव पर्यवस्यति[१]।

तदेवं जीवानां ब्रह्माभेदाद् अनात्मप्रपञ्चस्य मिथ्यात्वाच्च आत्मा एकोऽद्वितीयः सकलवेदान्तैस्तात्पर्येण प्रतिपाद्यमानः। उक्तञ्च भगवत्पादैः—ब्रह्म सत्यम् जगन्मिथ्या, जीवो ब्रह्मैव नापर[२] इति।

उक्तं मिथ्यात्वं तैस्तैराचार्यैस्तत्तच्छ्रुतिवाक्यमवलम्ब्य तथा तथा लक्षितम्। 'नासदासीन्नो सदासीत्'[३] इति श्रुतिमनुसृत्य सदसद्विलक्षणत्वमिति मिथ्यात्वस्य लक्षणं प्रणीतम्। एवं 'नेह नानास्ति किञ्चन'[४] इति श्रुतिमाश्रित्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति, 'तथा विद्वान्नामरूपाद्विमुक्तः'[५], 'तरति शोकमात्मवित्'[६] इत्याद्याः श्रुतीरनुसृत्य ज्ञाननिवर्त्यत्वमिति, 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते'[७] इति श्रुतिमपेक्ष्य स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वमिति 'अतोऽन्यदार्तम्'[८] इति श्रुतिमुपजीव्य सद्विविक्तत्वमिति च लक्षणान्तराणि प्रणीतानि। तथा च सर्वाण्यप्येतानि मिथ्यात्वलक्षणानि श्रुतिमूलानि।

दर्शनानां दर्शनीयतममद्वैताख्यमौपनिषदं दर्शनमन्ये[९] वादिनो न्यायवैशेषिकतर्कशरणा दूषयाम्बभूवुः। यद्यपि असारतर्कसन्दृब्धत्वात् श्रुतिविरुद्धत्वात् श्रुतिप्रवणैः शिष्टैर्मन्वादिभिरपरिगृहीतत्वाद् वस्तुनिर्णये श्रुत्यर्थग्रहणे च वैशेषिकशास्त्रस्य मनागपि नास्त्यवकाश इति सूत्रकारैरेवोक्तम्, तथापि परोक्तानि दूषणानि उत्सारणीयान्येव; यतः सूत्रकारा एव तर्कनिमित्तानामाक्षेपाणां दूरीकरणाय एकं पादं[१०], आत्मैकत्वदर्शनप्रतिपक्षभूतानां सिद्धान्तानां निराकारणाय एकं पादं[११] च शारीरकमीमांसायां निबध्नन्तोः दूषणपरिहरणस्यावश्यकर्तव्यतां सूचयन्ति। सूत्रकारचित्तमनुसरन्तोः भाष्यकारा अपि परमतेषु दोषप्रदर्शनमवर्जनीयं मन्यन्ते।

---

१. सिद्धान्तलेशसङ्ग्रहः, २; २. विवेकचूडामणिः।
३. ऋ.वे.; ४. बृ.उ., ४।४।१९।
५. मु.उ., ३।२।८; ६. छा.उ., ७।१।३।
७. बृ.उ., ४।३।१०; ८. बृ.उ., ३।४।२।
९. न्यायरत्नावली; १०. ब्र.सू., २।१।
११. तत्रैव., २।२।

उक्तञ्च तैः—तार्किकाणां दर्शनं न सम्यग्दर्शनम्, तेषां रागद्वेषास्पदत्वात्। स्वसिद्धान्तरचनायां निश्चिताः कपिलकणादबुद्धार्हतादिदृष्ट्यनुसारिणस्तार्किकाः 'एवमेवैष परमार्थो नान्यथा' इति तत्र तत्रानुरक्ताः प्रतिपक्षं चात्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेवान्योऽन्यं विरुध्यन्ते, परमार्थदर्शनादन्यत्रापकर्षन्ति च श्रेयोऽर्थिनः पुरुषान्[१]। अतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमेकत्वदर्शनं प्रत्यादरवन्तो मुमुक्षवः स्युरिति[२] तार्किकमतदोषप्रदर्शनं किञ्चित् क्रियतेऽस्माभिः, न तु तार्किकवत्तात्पर्येण[३]। परविद्वेषकारणे परमत-निराकरणे नास्माकमाग्रहः[३]। अपि तु तेषामसारतोपपादनेन श्रेयःप्राप्तिसाधनत्वं तेषु नास्तीति प्रतिपादन एव तात्पर्यम्[४]।

सूत्रकारभाष्यकारप्रदर्शितां सरणिमनुरुन्धानाः विवरणकारानन्दबोध-श्रीहर्षानन्दानुभवचित्सुखानन्दगिरिरामाद्वयाचार्यप्रमुखा अद्वैताचार्या उदयनव्योम-शिववल्लभशिवादित्यवादिवागीशादिभिर्न्यायवैशेषिकतर्कानुसारिभिर्विद्वद्भिरद्वैतदर्शनोपरि साक्षात् परोक्षाद्वा आरोपितानां दोषाणामपमार्जनाय, श्रुतिविरुद्धस्य वैशेषिकतर्कस्य दौर्बल्यनिरूपणमुखेन वेदान्तदर्शनस्य प्रमाणराजश्रुतिप्रतिष्ठितस्य शिथिलतर्केणा-नाक्षेप्यताप्रदर्शनाय च ग्रन्थान् व्यरीरचन्[५], न तु परे इव मतान्तरदूषणायैव केवलम्[६]।

मध्वसिद्धान्तानुसारिणः पण्डितधौरेया व्यासतीर्थमहाभागा अपि न्यायवैशेषिकतर्काश्रयणेन आत्मैकत्वदर्शनमदूदुषन्। अद्वैतिव्यतिरिक्ताः सर्वेऽपि वादिनो द्वैतिनः प्रपञ्चसत्यत्ववादिनः। प्रपञ्चस्य मिथ्यात्वे निराकृते अद्वैतसिद्धान्तः स्वयमेव नङ्क्ष्यतीति मन्यमानाः प्रपञ्चमिथ्यात्वं तत्कारणीभूतामविद्यां च खण्डयितुं प्रवृत्ताः। व्यासतीर्थमहाभागा अपि तथैव मन्यमाना ग्रन्थारम्भे मिथ्यात्वलक्षणानि दोषग्रस्तानीति प्रदर्शनाय उद्युक्ताः। तैरुद्भावितानां दूषणानां निरवकाशत्वं न्यरुरूपन् मधुसूदनसरस्वतीमहानुभावाः। तदनन्तरमुदिता खण्डनप्रतिखण्डनधारा अद्य यावदनुवर्तत्त इति।

●

---

१. मा.का.भा., ३।१७; २. प्र.उ.भा., ६।३।
३. ब्र.सू.भा., २।२।१; ४. तत्रैव, २।२।१७।
५. तत्रैव, २।२।१७; ६. प्र.उ.भा., ६।३।

# कार्यकारणभावविषये विशिष्टाद्वैतिनां सिद्धान्तः

**प्रो॰ का॰ इ॰ देवनाथन्**
विशिष्टाद्वैतवेदान्तविभागाध्यक्षः
राष्ट्रीयसंस्कृतविद्यापीठम्, तिरुपतिः



विशिष्टाद्वैतवेदान्ते कार्यकारणयोरभेद उच्यते। यथा मृदः कारणस्य कार्यस्य घटस्य चाभेदः। तत्र प्रमाणं 'मृदयं घटः' इति प्रामाणिकानामनुभव एव। तार्किकाः कार्यकारणयोरभेदं निराकुर्वन्त एतानि अनुमानानि प्रयुञ्जते। (अत्र कारणशब्देन उपादानकारणं विवक्षितम्) कार्यं कारणाद् नाभिन्नम्, (१) विलक्षणबुद्धिबोध्यत्वात्, (२) विलक्षणशब्दवेद्यत्वात्, (३) विलक्षणकार्यकारित्वात्, (४) भिन्नकालिकत्वात्, (५) भिन्नाकारवत्त्वात्, (६) कारणसत्तासमानकालिकनाशप्रतियोगित्वात्, (७) भिन्नसंख्यावत्त्वात्, (८) कारणसत्तासमानकालीनकारकव्यापारप्रयोज्यत्वाच्च। अत्र तान्यनुमानानि विशदीकृत्य विशिष्टाद्वैतिनां समाधानं प्रदश्यते।

**१. विलक्षणबुद्धिबोध्यत्वात्**—तन्तव इति कारणे बुद्धिर्जायते। पट इति च कार्ये बुद्धिः। तेन तयोर्भेद आवश्यकः। न हि लोके विलक्षणप्रतीतिविषययो-र्घटपटयोरैक्यं दृश्यते।

**२. विलक्षणशब्दवेद्यत्वात्**—पट इति कार्ये शब्दः प्रयुज्यते, तन्तव इति कारणे। अतस्तयोर्भेदः सिद्धः।

**३. विलक्षणकार्यकारित्वात्**—घटेन कार्येण उदकमाह्रियते न तथा कारणेन मृदा, एवञ्च तयोर्भेदः सिद्धः।

**४. भिन्नकालिकत्वात्**—कारणं तन्तवः पूर्वकालवृत्तित्ववन्तः, पटस्तु तदनन्तरकालवृत्तिः, कथमनयोरभिन्नत्वम्।

**५. भिन्नाकारवत्त्वात्**—कार्यस्य घटस्याकारः पृथुबुध्नोदरत्वम्, कारण-भूताया मृदस्ततो भिन्न आकार इति तयोर्नैक्यम्।

६. **कारणसत्तासमानकालिकनाशप्रतियोगित्वात्**—सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते। यदि मृद्घटयोरैक्यं स्यात्, तदा मृदि सत्यां घटो नष्ट इति व्यवहारो न स्यात्।

७. **भिन्नसंख्यावत्त्वात्**—एकः पटः, बहवस्तन्तव इति कार्यकारणयोः संख्याभेदो दृश्यते। यदि तयोरैक्यं स्वीक्रियते, विरुद्धम् एकत्व-बहुत्वरूपसंख्याद्वयं कथं तत्रोपपद्येत।

८. **कारणसत्तासमानकालीनकारकव्यापारप्रयोज्यत्वात्**—कारणस्य सत्ता-काले कारकव्यापारेण कार्यं निष्पद्यते। यदि कार्यकारणयोरनन्यत्वं स्वीक्रियते, तदा कार्यस्य कारणसत्त्वकाल एव सत्त्वात् तदुत्पत्त्यर्थं कारकव्यापारो व्यर्थः स्यात्।

एवमादिभिर्हेतुभिस्तार्किका उपादानकारणस्य तदुपादेयस्य च भेदं समर्थयन्ति।

**विशिष्टाद्वैतिनां सिद्धान्तः**

विशिष्टाद्वैतिनस्तु कार्यकारणयोरनन्यत्वमूरीकुर्वन्ति। तेषामयमाशयः—मृद्-हिरण्यादेः संस्थानान्तरभावत्वमात्रेण विलक्षणबुद्ध्यादय उपपद्यन्त इति। यथा वा एक एव देवदत्तोऽवस्थाविशेषैस्तदा तदा विशिष्टो बालः, युवा, वृद्ध इत्यादिविलक्षणशब्दैर्निर्दिश्यते, तथैव मृदेव घटशरावादिशब्दैर्व्यपदिश्यते। एवं बुद्धिप्रभृतिवैलक्षण्यमप्युपपादनीयम्।

एवमुत्पत्तिनाशादयोऽपि कारणभूतस्य वस्तुनोऽवस्थाविशेषा इति सिद्धान्तः। एवञ्च सत्यामेव मृदि घटो नष्ट इति व्यवहारो मृदमेव कपालत्वावस्थापन्नां विषयीकरोतीति न दोषः। एवं कारकव्यापारोऽपि अवस्थाविशेषरूप-भविष्यद्धर्मविशिष्टवस्तुप्रयोजकत्वात् सार्थक एव।

न च कार्यकारणयोर्भेद आवश्यकः, अन्यथा पूर्वमेव सतः कथमुत्पत्ति-रुपपद्येत—इति वाच्यम्, यत उत्पत्तिर्नाम प्रथमक्षणसम्बन्धः, स च पूर्वमेव सतः कारणस्य प्राचीनावस्थाविशिष्टस्वरूपे यद्यपि बाधितः, तथापि घटत्वाद्य-वस्थाविशिष्टेऽबाधितः। अयं भावः—घट उत्पद्यत इति हि व्यवहारः, न तु मृदुत्पद्यत इति। तेन मृत्स्वरूपस्याद्यक्षणसम्बन्धरूपोत्पत्तिर्न विवक्षिता। यतो घट उत्पद्यत इति व्यवहारः, ततो घटत्वावस्थाविशिष्ट एव प्रथमक्षणसम्बन्धवान् इति तद्वाक्याद् बोधः। 'सविशेषणे हि विधिनिषेधौ' इति न्यायेन सोत्पत्तिरन्ततो मृद्धर्मे घटत्व एव पर्यवस्यतीत्यन्यदेतत्। न च भवन्मते कार्यकारणयोरनन्यत्वं यत्

स्वीकृतम्, तत्र किं शाब्दं प्रमाणमिति वाच्यम्। यतः 'वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यम्' इति श्रुतिः (छा. ६.७) 'मही घटत्वं घटतः कपालः कपालिका चूर्णरजस्ततोऽणु'रिति विष्णुपुराणवचनं च तत्र प्रमाणम्। वाचारम्भणमिति श्रुत्यर्थ एवम्—

आरभ्यते आलभ्यते स्पृश्यते इत्यारम्भणम्, 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। वाचा—वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। घटेनोदकमाहर इत्यादिवाक्पूर्वको हलुदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये, तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषः, तत्प्रयुक्तं च घट इत्यादिनामधेयम्, स्पृश्यते उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग् भवति। अतो घटाद्यपि मृत्तिकेत्येव सत्यम्, मृत्तिकादिद्रव्यमित्येव सत्यम्, प्रमाणेनोपलभ्यत इत्यर्थः, न तु द्रव्यान्तरत्वेन। इति (श्रीभाष्यम्, पृ. सं. २०६ काञ्चीप्रकाशनम्)।

पुराणवचनार्थस्तु स्पष्टः। न च सत्कार्यवादो भवदिष्टः साङ्ख्योक्ताभिव्यक्तिवादाद् भिन्नोऽभिव्यक्तिपक्षे, अभिव्यक्तिपक्षे इव भवन्मतेऽपि उत्पत्तिरूपावस्थाया उत्पत्त्यन्तरापेक्षत्वेऽनवस्था, उत्पत्तेरुत्पत्तिसापेक्षत्वाभावे घटादेर्नित्यत्वापत्तिरिति चोद्यमवशिष्यत इति वाच्यम्, न हि केवलाया उत्पत्तेरुत्पत्तिरुच्यतेऽस्मत्सिद्धान्ते। उत्पत्तिः काचिदवस्था। अवस्थावत्त्वं द्रव्यस्य लक्षणम्। उत्पत्तेरुत्पत्तिमत्त्वे तस्या द्रव्यत्वं स्यात्; परमुत्पत्तिर्नाम सत एव द्रव्यस्य तत्क्षणसम्बन्धिधर्मविशेषः। एवञ्चोत्पत्तिर्द्रव्यस्यैव भवति, न धर्मस्येति न कोऽपि दोषः।

न च संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति वाच्यम्, असत्कार्यवादेऽपि उत्पत्तेरुत्पत्त्यभावे सत्कार्यवादप्रसङ्गः, उत्पत्तेरुत्पत्तिमत्त्वेऽनवस्था इति प्रतिबन्धासम्भवात्। अवस्थानां पृथगुत्पत्तिस्थित्यादिकं नास्ति। एवञ्च अवस्थावत एवोत्पत्त्यादिकं भवति। तथा च नानवस्थादयो दोषाः।

न च कारणस्य कार्यस्य च संख्याभेदो दृश्यते, स च तयोर्भेदं विना नोपपद्यत इति वाच्यम्, बहुतन्तुकपटस्थले तन्तुषु बहुत्वं, तन्तुगतपटत्वावस्थायामेकत्वमिति स्वीकारात्। भवद्भिरपि एकतन्तुना बृहता यत्र पटादिकं कृतं तत्र कारणकार्ययोः संख्याभेदस्य वक्तुमशक्यत्वात्। न च एकः पट इत्यत्र प्रयोगे एकत्वं पटत्वावस्थाविशिष्टतन्त्वन्वयि इति विवक्ष्यते वा, पटत्वान्वयीति विवक्ष्यते वा? आद्ये बाधः, बहुतन्तुकपटस्थले तन्तुषु बहुत्वस्यैव सत्त्वात्। द्वितीये तु एकत्वस्यैकदेशान्वये यत्र बहवो घटाः। तत्र घटत्वे एकत्वान्वयतात्पर्येण एको

घटोऽस्तीति प्रयोगः स्यादिति वाच्यम्, अगत्या द्वितीयपक्षस्य स्वीकारात्। न हि तादृशैकदेशान्वयः सर्वथा अप्रामाणिकः। नैयायिकमतेऽपि पश्य मृगो धावतीत्यत्र धावनविशिष्टमृगकर्मकदर्शनबोधस्य सम्भवेऽपि धावनस्य यथा कर्मत्वं पर्यवस्यतीत्युच्यते, तथा पटत्वविशिष्टतन्तुषु एकत्वे बोधितेऽपि पटत्वे एकत्वं पर्यवस्यतीति वक्तुं शक्यत्वात्।

केचिद् अवयवावयविनोर्भेदाभेदं स्वीकुर्वन्ति। स च चिन्त्यः पक्षः। न हि अवच्छेदकधर्ममन्तरेण भेदाभेदञ्चैकत्र स्वीकर्तुं शक्नुमः। समन्वयाधिकरणभाष्ये भेदाभेदवादपरिशीलनं स्पष्टमेवेति विरम्यतेऽत्र।

न च कार्यकारणयोरनन्यत्वे 'सर्वाग्रहणमवयव्यसिद्धेः, धारणाकर्षणोपपत्तेश्च, सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्' इत्यादिगौतमसूत्रोक्तदूषणानि प्रसज्यन्ते। तथा हि—अवयवातिरिक्तोऽवयवी यदि न स्वीक्रियते, तदा द्रव्याणां परमाणुपर्यन्तत्वमेवापतति। ते च परमाणवो महत्त्वशून्या न प्रत्यक्षा इति कस्यापि द्रव्यस्य प्रत्यक्षं न स्यात्। एवं धारणमाकर्षणं च द्व्यणुकादिक्रमेण परिनिष्पन्न-स्यावयविनोऽस्वीकारे दुरुपपन्ने। न हि समुदायमापन्नानामेकावच्छेदरहितानां तण्डुलानां धारणमाकर्षणं वा सम्भवति। एवं परमाणूनां समूहस्य अवयविशब्द-वाच्यत्वमित्यपि न सम्भवति, परमाणूनामतीन्द्रियत्वात्। न हि शतमपि अन्धानां न पश्यतीति न्यायेन समुदायभावेऽपि प्रत्यक्षत्वानुपपत्तेरिति वाच्यम्, अस्मन्मते एतेषां दोषाणामप्रसरात्। वयं हि प्रकृतिकारणतावादिनः। तत्र हि व्यापकीभूतप्रकृतेरेव कारणत्वमिति परमाणुकारणतावादोक्तदूषणं न प्रसजति। न हि अस्मन्मते अदृश्यः परमाणुर्नैयायिकवत् कल्प्यते। प्रकृतेः कथं कारणत्वं, तस्याः कारणत्वे प्रसक्ताः शङ्काः, तत्समाधानं च विस्तरभयान्न विमृश्यत इति शम्।



## अहो शिष्यवात्सल्यम्!



काशीमहाराजकुमारं श्रीमन्तम् अनन्तनारायणसिंहशर्माणं शिक्षयन्तः श्रीशास्त्रिपादाः

# भट्टोपाह्वः काशीनाथस्तत्कृतयश्च

**प्रो० व्रजवल्लभद्विवेदः, डॉ० शीतलाप्रसाद-उपाध्यायः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी



तन्त्रागमशास्त्रस्य प्रथिततमानां विदुषां प्रो. चिन्ताहरणचक्रवर्तिमहोदयानां 'Kashinath Bhatt and his works' इति नामको निबन्धः[1] अस्माकं दृष्टिपथमागतः। तदाऽस्माभिरपि वाराणसीस्थे "सरस्वतीभवन" इत्याख्यया प्रसिद्धिमागते हस्तलेख(मातृका)ग्रन्थागारे भूयांसो ग्रन्था अवलोकिता भट्टोपाह्वस्य काशीनाथस्य। तत्र नैके ग्रन्थास्तादृशा आसन्, येषां नामानि निबन्धेऽस्मिन् नैव सन्दर्भितानि। चक्रवर्तिमहोदयैः षोडश[2] मातृका(हस्तलेख)विवरणसूचीनां साहाय्येन सप्तपञ्चाशत्(५७)संख्याकानां ग्रन्थानां परिचयः समुपस्थापितो विषयविभाग-मनुसृत्य। अत्र प्राधान्यं कलिकातास्थ-एशियाटिक-सोसाइटी-मातृकाणां विद्यते। एकादशपृष्ठात्मकेऽस्मिन् निबन्धे प्रारम्भिकेषु प्रायश्चतुर्षु पृष्ठेषु काशीनाथस्य, तत्पितुः, पितामहस्य, अनन्ताख्यस्य गुरोरन्येषां च केषाञ्चन विदुषां परिचयः प्रस्तुतः। काशीनाथसम्बद्धानां वसतीनाम्, तदीयस्य कालस्य च पूर्वापरे सीमनी अत्र निर्धारिते। काशीनाथो हि दक्षिणामूर्तिशिवस्य दक्षिणाचारपद्धत्या समुपासक आसीत्, वामाचारपद्धतिश्च तेन निराकृता। अत्र निबन्धकारेण[3] दक्षिणाचार-वामाचारपद्धत्योः संक्षिप्तं विवरणमुपस्थाप्य काशीनाथस्य तन्त्रागमशास्त्रप्रावीण्यं सप्रमाणं स्थापितम्। अत्र यदस्माभिर्वक्तव्यम्, तदनुपदमेव चर्च्यते।

अस्माभिरत्र प्राधान्येन सरस्वतीभवनस्थितानां प्रायः पञ्चाशत्परिमितानां मातृकाणां तदन्यग्रन्थागारीयविवरणात्मकसूचीषु च विवृतानां ग्रन्थानां

---

१. "जर्नल ऑफ दी रायल एशियाटिक सोसाइटी ऑफ बंगाल" (लेटर्स) इत्यत्र (भा. ४, सन् १९३८, नं. ३) मुद्रितोऽयं निबन्धः।
२. पूर्वोक्तस्य निबन्धस्यान्तिमे पृष्ठे (पृ. ४६५) परिचयो द्रष्टव्यः।
३. दक्षिणाचार-वामाचारशब्दौ परवर्तिषु तन्त्रागमग्रन्थेषु प्रथितमौ। चक्रवर्तिनिबन्धे (पृ. ४५६) खण्डन-मण्डनपराः काशीनाथस्य ग्रन्थाश्च द्रष्टव्याः।

पुष्पिकावाक्यानि सङ्कलितानि। सप्तनवतिसंख्याका ईदृशा ग्रन्था भट्टोपनामकस्य काशीनाथस्य अत्राक्षरानुक्रमेण परिचायकाः सन्ति। संगृहीतैरेतैः पुष्पिकावाक्यैर्नानाविधाः सूचनाः समधिगम्यन्ते, यैश्चक्रवर्तिमहोदयैः काशीनाथादीनां विषये प्रदत्तस्य परिचयस्य पुष्टिर्भवति, काश्चन नूतनाः सूचनाः प्राप्यन्ते, कुत्रचिच्च संशोधनानि स्थापयितुं शक्यन्ते। चक्रवर्तिमहोदयैः स्वकीये निबन्धे ये ये ग्रन्था विवृतास्तेषामपि निर्देशोऽत्र विद्यते पृष्ठसंख्यानिर्देशपुरस्सरम्। अनया पद्धत्या चक्रवर्तिविवृतानां सरस्वतीभवनस्थानामुभयत्र वा स्थितानां ग्रन्थानां परिचयः सारल्येन समुपलभ्येत।

## काशीनाथभट्टः

निबन्धेऽस्मिन् संगृहीतासु पुष्पिकासु [1]भडोपनामकस्य काशीनाथस्य तत्पितुर्जयरामभट्टस्य, तत्पितामहस्य[2] शिवरामभट्टस्य, गुरोरनन्तस्य च प्रायो बाहुल्येनोल्लेखो वर्तते। काशीनाथस्य दीक्षानाम[3] शिवानन्दनाथ इत्यपि यत्र तत्र सूच्यते। एवमेव विश्वनाथनाम्नाऽपि सोऽत्र (क्र.६६,९४) स्मर्यते। अन्यत्र (क्र. ८१) विश्वनाथपदेन काशीपुराधीशो विश्वेश्वरः स्मर्यते। भड इति, भट्ट इति, भट्टभट्ट इति च विभिन्नसामाजिकस्थितिसूचकानि पदानि तज्ज्ञैरेव परीक्षणीयानि। ''श्रीवैद्यनाथचरणारविन्दमिलिन्देन''[4] इत्यादिभिः पुष्पिकावाक्यैर्ज्ञायते वैद्यनाथोऽयं काशीनाथभट्टस्य गुरुरिति। स स्पष्टमेव वक्ति—''वैद्यनाथप्रसादेन मन्त्रसारसमुच्चयः। नाम्ना पुत्रः सतां वन्द्यो मम वक्त्राद्विनिर्गतः।।'' इति। ''[5]श्रीकाशीनाथात्'' इत्यादिकेन श्लोकेन ज्ञायते यत् ४६-क्रमाङ्कस्थितदक्षिणामूर्तिशेखरटीकाकर्ता दीनानाथः काशीनाथेन लब्धदीक्षस्तच्छिष्य इति। अतो नायं ग्रन्थः काशीनाथस्य, किन्तु तच्छिष्यस्य दीनानाथस्येति विभावनीयम्। श्राद्धनिर्णयदीपिका-मातृकाया लेखकोऽपि ''हस्ताक्षरदवेत्युपनामरङ्गनाथात्मजदीनानाथः। अनेन काश्यां संवत् १८७३ श्रावणशुक्ल-१४ भौमवासरे मातृकेयं

---

१. भडोपनामक इत्यस्य स्थाने भट्टोपनामक इत्यपि पाठो यत्र क्वचन दृश्यते।
२. अलवर-मातृकायां शिष्यराम इति नामं वर्तत इति चक्रवर्तितः ४५५-पृष्ठे, २ टिप्पण्याम्।
३. क्र. २७, ५८, ७०, ८७ स्थितग्रन्थपुष्पिकावाक्यानि द्रष्टव्यानि। अत्र शिवानन्दनाथ इति, विश्वनाथ इति च नामद्वयविषये चक्रवर्तिनिबन्धस्था (पृ. ४५५) प्रथमा टिप्पणी च द्रष्टव्या।
४. अत्र ६०-६१ (क) क्रमाङ्कस्थग्रन्थयोः पुष्पिकावाक्ये द्रष्टव्ये। ६८-क्रमस्थमातृकालेखको ब्राह्मणवैजनाथस्तु भिन्न एव।
५. क्र.४६-दक्षिणामूर्तिशेखरटीकापुष्पिका, क्र.९२-श्राद्धनिर्णयदीपिकापुष्पिकाऽवलोकनीया।

समाप्तिं नीता'' इति सूचयति। सोऽयं दीनानाथो दक्षिणामूर्तिशेखरटीकाकर्ता दीनानाथः काशीनाथशिष्य एव स्यात्। काशीनाथस्यानन्ताख्यो गुरुरिति बहुभिः पुष्पिकावाक्यैर्ज्ञायते; किन्तु मन्त्रसारसमुच्चयटीकापुष्पिकायाम्—''काशीनाथसुतललितागर्भसंभवानन्तभट्टविरचितायाम्'' इति दर्शनाद् मन्त्रसारसमुच्चयस्य टीकाकारोऽनन्तः काशीनाथस्य पुत्रः, अस्य मातुश्च नाम ललितेति ज्ञायते। मन्त्रसारसमुच्चयटीका काशीनाथेनापि रचितोपलभ्यते। अतोऽनयोर्भिन्नाभिन्नत्वं परीक्षणीयमास्ते।

सोऽयं भडोपनामकः काशीनाथो जयरामात्मज इति, वाराणसीगर्भसम्भव इति, दक्षिणाचारानुसारीति, दक्षिणाचारमतप्रवर्तक इति, मन्त्रशास्त्रप्रवीण इति, शिवभक्त इति, परमशिवभक्त इति, शिवभक्तसूनुरिति, शिवाराधक इति, तन्त्रशास्त्रधुरीण इति, श्रुतिस्मृतिमतप्रमाणपारावारीण इति, सर्वतन्त्रदक्षिणाचारतन्त्रधुरीण इति, दक्षिणाचारानुसारीति च नानाविधैर्विशेषणैः पुष्पिकावाक्येषु सभाजितो शतप्रायाणां नानाविषयकग्रन्थानां रचयितेति नानाशास्त्रवैदुष्यमस्य स्फुटीभवति।

## जयरामभट्टः (पिता)

काशीनाथस्य पितुर्नाम जयरामभट्ट इति प्रायः सर्वासु मातृकासु स्थापितैः पुष्पिकावाक्यैरेव ज्ञायते। अत्र सोऽयं श्रुतिस्मृतिमतप्रमाणपारावारीण इति, सर्वतन्त्रस्वतन्त्र इति, दक्षिणाचारतन्त्रधुरीण इति, भट्टोपाख्य इति, दक्षिणामूर्तिचरणारविन्दमिलिन्द इति, शिवरामभट्टाङ्गज इति च विशेषणैः सभाजितः। तन्त्रहृदयमातृकापुष्पिकायां (क्र.३१) सोऽयं भट्टभट्ट इति वाराणसीविद्वन्मण्डलीषु समादरातिशयसूचकेन विशेषणेन समलङ्कृत आस्ते। ''नानातन्त्राणि विज्ञाय जयरामपितुर्मुखात्'' (क्र.३३) इति वचनेन जयरामोऽयं काशीनाथस्य गुरुरपीति ज्ञायते। ''गङ्गातीरे गह्वरेण रामलिङ्गस्य सूनुना। लिखिता जयरामेण आनन्दवनवासिना।।'' (क्र.५७घ) इत्यत्र स्मृता मन्त्रचन्द्रिका काशीनाथरचितमन्त्रचन्द्रिकया भिन्ना। जयरामश्चायं रामलिङ्गस्य सूनुरिति शिवरामसुतकाशीनाथपितुर्जयरामभट्टतो भिन्न एव।

## शिवरामभट्टः (पितामहः)

श्रीमद्भडो(ट्टो)पनामकशिवरामभट्टाङ्गजजयरामभट्टसुतशिवभक्तसूनु-तन्त्रशास्त्रप्रवीण-दक्षिणाचारानुसारि-काशीनाथभट्ट....इतीदृशेषु केषुचित् पुष्पिकावाक्येषु

काशीनाथस्य पितामहोऽयं स्मर्यते। मन्त्रशास्त्रप्रवीण इत्यपि कुत्रचिद् दृश्यते, दक्षिणाचारमतप्रवर्तक इति च। नातोऽधिकं शिवरामभट्टस्य विषयेऽत्र किमपि समुपलभ्यते। ५४-क्रमाङ्कितः प्रायश्चित्तव्यवस्थासारसंग्रहो वंगलिपिमयः सरस्वतीभवनग्रन्थालये वर्तते। सप्तं प्रणम्य काशीनाथेन रचितोऽयं ग्रन्थः। सप्तशब्दे नात्र सप्ताश्वः सूर्य एव वन्दितः स्यात्। "श्रीशिवनाथदेवशर्मणः पुस्तकमिदं स्वाक्षरं च" इति पुष्पिकावाक्येन वंगीयेन विदुषा वंगलिप्यां लिखितमिदं पुस्तकमिति ज्ञायते। अत्रैव ८७तमे क्रमाङ्के शिवानन्दविरचिता शिवार्चाविधिपद्धतिर्वर्तते। ग्रन्थस्यास्य शिवरामेण कथमपि सम्बन्धः स्थापयितुं न शक्यत इति काशीनाथग्रन्थेषु नास्य समावेशः कर्तव्यः।

### अनन्तः (गुरुः)

"अनन्ताख्यं गुरुं नौमि" इत्येवं बहुषु पुष्पिकावाक्येषु स्थितेन वचनेन काशीनाथस्य गुरोर्नाम अनन्त इति ज्ञायते। अस्मिन् वाक्ये कवित्वप्रतिभाकर इति शास्त्रवल्लीजलधर इति च विशेषणद्वयेन स सभाज्यते। वैदिकतान्त्रिकाधिकारनिर्णये (आगमोत्पत्त्यादिवैदिकतान्त्रिकनिर्णये), अत्र ७४क्रमसंख्यायां स्थापिते ग्रन्थे ३(ख)तमे पत्रेऽनन्तभट्ट उद्धृतः। सोऽयमनन्तो[1] ग्रन्थकर्तुः काशीनाथस्य मातामह इति चक्रवर्तिमहोदयाः सूचयन्ति। तत्र प्रमाणत्वेनोद्धृते "अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्। शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्॥" इत्यस्मिन् वचने तु तन्न दृश्यते।

अत्र ६१क्रमसंख्यायां "मन्त्रसारसमुच्चयटीका" इत्याख्ये मातृके विवृते। तत्र प्रथममातृकापुष्पिकावाक्येन काशीनाथगुरुर्वैद्यनाथो मन्त्रसारसमुच्चयकर्ता "गुरुं श्रीमत्पंचभाई इत्युपनामकानन्तभट्टाख्यम्" इत्येवमनन्ताख्यं गुरुं स्मरति। गूढार्थादर्शाख्यटीकाकारोऽत्र काशीनाथः। तेनाऽत्र स्मृतोऽनन्तोऽयं काशीनाथस्य गुरुरेव स्यात्। अपरस्यां मातृकायामपि—"श्रीमत्पंचभाई इत्युपनामकानन्तभट्टाख्यं गुरुम्" इति वाक्यं दृश्यते। एषा च मातृका पदार्थादर्शाख्यटीकायाः। अस्याश्च कर्ता काशीनाथसुतो ललितागर्भसम्भवोऽनन्तभट्टोऽत्र निर्दिष्टः। तेन काशीनाथस्य पुत्रोऽप्यनन्तभट्ट इति विभावनीयम्। उभाभ्यामपि पितृपुत्राभ्यां मन्त्रसारसमुच्चयो व्याख्यातः। तत्र काशीनाथकृता टीका गूढार्थादर्शनाम्नी अनन्तकृता च पदार्थादर्शनाम्नीति विभज्य ज्ञातव्यम्। ६०क्रमसंख्याक-मन्त्रसारसमुच्चय-मातृकायां

---

१. चक्रवर्तिनिबन्धे पृष्ठसंख्या ४५५तमी, तत्रत्या तृतीया टिप्पणी च द्रष्टव्या।

तु काशीनाथभट्टोऽस्य कर्तेति सूच्यते। अत्रैव "वैद्यनाथप्रसादेन", "वैद्यनाथचरणारविन्दमिलिन्देन" इति च विशेषणद्वयं काशीनाथेन सह संयोज्यत इति ग्रन्थकारस्य टीकाकारयोश्च सम्यक् परिचयः समेषामेषां ग्रन्थानां सामस्त्येनाध्ययनानन्तरमेव ज्ञायेत। अनन्तेन काशीनाथभट्टगुरुणा तत्त्व-बोधाख्यो ग्रन्थो रचित इति चक्रवर्तिमहोदयाः सूचयन्ति, राजपूजातरङ्गिणी चात्र तैश्चर्चिता (पृ. ४५५)।

## वासस्थानम्, आश्रयदाता च

काशीनाथभट्टो वाराणसीवास्तव्य इति तु निश्चप्रचम्। पुष्पिकावाक्येषु पन्नगपुरे (क्र. ३१), पुण्यग्रामे (क्र. ३३,८४), चन्द्रपुरपीठे (क्र. ७७), नागपुरे (क्र. ८६ख), फणिपुरे (क्र. ९७क) इति च दर्शनादेषु स्थानेषु तास्ता मातृका लिखिता इति ज्ञायते। अत्र पन्नगपुरम्, फणिपुरमिति च नागपुरस्यैव पर्यायान्तरमिति ज्ञातव्यम्। तेन पुण्यग्रामे, नागपुरे, चन्द्रपुरपीठे च ग्रन्थकारेण प्रवासः कृतः स्यादिति संभाव्यते। "लिखितं ब्राह्मण बैजनाथ लिखायितं श्रीकृष्णजी, सं. १८४७ रामाय नमः" (क्र. ६८) इत्यत्र स्थाननिर्देशो नास्ति। शिवाद्वैतप्रकाशिकाया मातृका (क्र. ८६ख) नागपुरे भवानीपण्डितगृहे लिखिता। "स्वकार्ये परकार्ये वा गुरुदत्ताख्यधीमता। लिखेन्मेतत्पुरे(?) रम्ये गोपालाख्येषु चैव हि ॥" (क्र. ९७ ख) इत्यत्र लिपिकारो गुरुदत्तः, गोपालपुरं लिपिस्थानमिति कल्पयितुं शक्यते। द्वितीया च संक्षेपाह्निकचन्द्रिकामातृका (क्र. ९७क) विश्वनाथात्मजहरभट्ट-मयूराश्वोपनाम्ना पुण्यस्तम्भनिवासिना फणिपुरे लिखिता। अत्र पुण्यग्राम एव पुण्यस्तम्भ इति कल्पना साध्वी न वेति विद्वांस एव प्रमाणम्।

अत्र क्र.४४-स्थितदक्षिणामूर्तिचन्द्रिकापुष्पिकायाम् "मण्डलेशपुराधीशः श्रीमद्रमणव्यङ्कटः। तस्याश्रयप्रदानेन निर्मिता वृत्तिरुत्तमा॥" इति श्लोको वर्तते। तेन ज्ञायते कश्चन मण्डलेशपुराधीशो रमणव्यङ्कटः काशीनाथस्य आश्रयदाताऽऽसीदिति। विषयेऽस्मिन् नाधुना किमपि वक्तुं शक्यते।

## काशीनाथो दक्षिणामूर्तिसमुपासकः

काशीनाथभट्टेन मङ्गलपद्येषु प्रायः पञ्चाशदधिका देवताः स्तूयन्ते, तथापि प्राधान्यं तत्र दक्षिणामूर्तिशिवस्यैव वर्तते। न केवलं शिवस्य, नानारूपाणां

---

१. चक्रवर्तिमहोदयानां ४५६-तमपृष्ठस्था प्रथमा टिप्पणी द्रष्टव्याऽत्र। एतैः स्वनिबन्धे ब्रह्मानन्दस्य नाम चर्च्यते।

शक्तीनामपि समुपासकोऽयं दक्षिणाचारपद्धत्यैव ताः समर्चयति। दक्षिणाचारमतप्रवर्तकोऽयं तत्समर्थकान् वामाचारखण्डनपरांश्च ग्रन्थान् रचयति। प्रसिद्धावेतौ शब्दाविति नात्र तद्व्याख्यानाय प्रयत्यते। "राजराजेश्वरी गङ्गा-माधवो मणिकर्णिका। अन्नपूर्णा च विश्वेशो" श्लोकोऽयमत्र स्थलचतुष्टयेषु (क्र. २७,५८,६१,६९क) दृश्यते। एवमेव "विश्वेश्वरं विशालाक्षीं ढुण्ढिराजं च माधवम्। दण्डपाणिं कालराजम्" इत्यपि श्लोकोऽत्र (क्र. ५७ख) वर्तते। एतदनुकारम्—"विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्। वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ।।" इति श्लोकः काशीवासिभिः सादरं पठ्यते।

अत्र निबन्धे देवतानामानि सर्वत्र भिन्नाक्षरेषु स्थाप्यन्ते। नामावल्यामस्यां सप्तपदेन (क्र. ५४), अचलेशपदेन (क्र. ७७) च कस्याः कस्या देवताया ग्रहणमिति चिन्तनीयम्।

**काशीनाथस्य कालः**

अत्र संगृहीतेषु मातृकापुष्पिकावाक्येषु १८३९तमविक्रमसंवत्सरत आरभ्य १९१०तमसंवत्सरपर्यन्तं तिथिक्रमो निर्दिष्टो वर्तते। यत्र क्वचन शकसंवत्सरकालोऽप्युट्टङ्क्यते। ज्ञानार्णवतन्त्रटीकासमाप्तिकालः काशीनाथेनेत्थं निर्दिष्टः—"प्रभवाब्दे त्विषे शुक्लपञ्चम्यां लालिताप्तये। श्रीशिवानन्दनाथेन काशीनाथाख्यशर्मणा। कृता टीका गुरुप्रीत्यै भजन्तु सदुपासकाः।।" इति। सार्धश्लोकममुं टिप्पण्याम् (पृ.४५७) उद्धृत्य चक्रवर्तिमहोदयैः १६८७, १६३७, १७४७ई.वत्सरेषु प्रभवाब्दस्य स्थितिः सूचिता। अत्रान्तिमा तिथिरेव ज्ञानार्णवतन्त्रटीकासमाप्तिकाल इति निश्चेतुं शक्यते, इतः परवर्तिनामेव सर्वेषु पुष्पिकावाक्येषु तिथीनां दर्शनात्। तेन अष्टादशी, ऊनविंशी च ई.शताब्दी स्थितिकालोऽस्य निर्धारयितुं शक्यते।

काशीनाथभट्टस्य पूर्वकालसीमानिर्धारणार्थं चक्रवर्तिमहोदयैर्भट्टोजीदीक्षितस्य महीधरस्यामृतानन्दनाथस्य च कालावधिर्निर्धारितः (पृ.४५७)। अत्र काशीनाथग्रन्थेषु कवीन्द्राचार्यस्य भास्कररायस्य च स्मरणात् ततः परमेवास्य स्थितिः साधनीया। चक्रवर्तिस्मृतग्रन्थकारत्रयापेक्षया परवर्तिनावेतावाचार्याविति काशीनाथभट्टस्य पूर्वकालसीमानिर्धारणे संकोचः समायाति। तथा हि योगिनी-हृदयदीपिकाकारोऽमृतानन्दस्त्रिष्वाचार्येषु प्राचीनतमः। तस्य हि कालोऽस्माभि-[1]

१. तन्त्रागमीय धर्म-दर्शन : भाग-२, प्रो. व्रजवल्लभ द्विवेदी (पृ. ६१५-६१७)।

श्चतुर्दशशताब्द्या उत्तरार्ध: स्थापित:। [1]माधवानन्दनाथशिष्योऽष्टाङ्ग-निर्णयामृतचषकस्य कर्ताऽमृतानन्दस्तु दीपिकाकारतोऽतीवार्वाचीन इति विभावनीयम्। भट्टोजिदीक्षितस्य महीधरस्य च स्थितिकाल: षोडशी शताब्दीति चक्रवर्तिमहोदया एव सूचयन्ति। एतदपेक्षया कवीन्द्राचार्यस्य (नृसिंहाश्रमस्य) समयस्तदीयकविकल्पद्रुमकाव्यसाहाय्येन निर्धारयितुं शक्यते। तत्र हि दाराशिकोहेन प्रथितेन मुस्लिमसंस्कृतविदुषा शाहजहाँपुत्रेण प्रेषितं पत्रं संस्कृतभाषा-मयमेवमुट्टङ्क्यते—"शङ्कराचार्यसमानेषु नृसिंहाश्रमेषु.... ॐ नमो नारायणायेत्यष्टाक्षरमन्त्रपूर्वका नमस्कारा: सन्ति"[2]। कवीन्द्राचार्यविरचिते कविचन्द्रोदयकाव्ये काशीनाथेन टीका निर्मितेति निश्चितमेव काशीनाथस्तत्परतम:। अत्र क्र.९-मातृकाविवरणं द्रष्टव्यम्। एवमेव काशनाथेन ७०-क्रमस्थे ललितासहस्रनामटीकाख्ये ग्रन्थे भास्कररायकृतं ललितासहस्रनामभाष्यं स्मृतम्। भास्कररायस्य च समय: श्रीमद्भि: शास्त्रिवर्यैर्बटुकनाथखिस्तेमहोदयै: १६७५ई.वर्षत: १७६८ई.पर्यन्तं निर्धारित:[3]। तेन तत्पश्चाद्वर्ती तत्समसामयिको वा काशीनाथ इति मन्तव्यम्।

## काशीनाथरचिता ग्रन्था:, तन्मातृकाश्च

चक्रवर्तिमहोदयै: काशीनाथग्रन्थानां परिचयो विषयविभागमङ्गीकृत्य कृत:, अस्माभिश्चाक्षरानुक्रमेणेति पूर्वमुक्तमेव। ग्रन्थानामेषां सर्वेषां पौर्वापर्यं साम्प्रतं निर्धारयितुं न शक्यते, यथा हि केषाञ्चन कृतं चक्रवर्तिमहोदयै:[4]। सर्वेषामेषां ग्रन्थानां प्रकाशनं चिकीर्षितं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन। तदैव सामस्त्येन कालक्रमोऽयमुपलब्धप्रमाणसाहाय्येन कर्तुं शक्येत चक्रवर्तिपद्धत्या। अत्रास्माभिस्सप्तनवतिमितानां काशीनाथग्रन्थानां परिचय: प्रस्तुत:। अन्येऽपि केचन ग्रन्था: स्यु:, तेषामुद्धारोऽपेक्षित:। सप्तनवतिमितेषु ग्रन्थेषु न सन्ति सर्वे ग्रन्था: काशीनाथस्यैवेति नामावल्या अस्या: परीक्षणमपेक्षितम्। तदेवात्र क्रममनुरुद्ध्य विधीयते।

तथा हि—४६क्रमाङ्कस्था दक्षिणामूर्तिशेखरटीका न काशीनाथभट्टविरचिता, किन्तु तच्छिष्यस्य दीनानाथस्य कृति:। ४८ क्रमस्थो 'नामपारायणप्रकार:' केन

---

१. तन्त्रयात्रा : प्रो. व्रजवल्लभ द्विवेद: (पृ. ३९)।

२. निगमागम संस्कृति : प्रो. व्रजवल्लभ द्विवेदी (पृ. ११५)।

३. भास्करराय भारती दीक्षित : व्यक्तित्व एवं कृतित्व : प्रो. बटुकनाथ शास्त्रि खिस्ते, डॉ. शीतला प्रसाद उपाध्याय (पृ. २०-२३)।

४. विषयेऽस्मिन् तन्निबन्धस्था (पृ. ४५७) द्वितीया टिप्पणी द्रष्टव्या।

रचित इति नाधुना ज्ञातुं शक्यते। किञ्च ५७ क्रमस्थमन्त्रचन्द्रिकाया मातृकाचतुष्टयमत्र विवृतम्। तत्र चतुर्थी मातृका न काशीनाथेन, किन्तु रामलिङ्गस्य सूनुना जयरामेण रचितस्य ग्रन्थस्य। ६१(ख)क्रमस्था 'मन्त्रसारसमुच्चयटीका' काशीनाथेन तत्पुत्रेणानन्तेन च रचितेत्यनयोर्भिन्नाभिन्नत्वं परीक्षणीयम्। ८७ क्रमस्था 'शिवार्चापद्धति:' शिवानन्दस्य ग्रन्थ:। सोऽयं शिवानन्द: शिवानन्दनाथात् काशीनाथाद् भिन्नोऽभिन्नो वेति परीक्षणीयम् । एवमेव ७४ क्रमस्थ-'वैदिकतान्त्रिकाधिकारिनिर्णय:', ३ क्रमस्थ-'आगमोत्पत्त्यादिवैदिकतान्त्रिकनिर्णय:' इति वा ग्रन्थ: ८०क्रमस्थ-शास्त्रव्यवस्थाख्यग्रन्थतोऽभिन्न एव स्यात्। चक्रवर्तिमहोदयै: (पृ. ४५९) पृथक्-पृथग् एतौ विवृतौ। शिवसिद्धान्तमञ्जरी शैवसिद्धान्तमञ्जरी च एकस्यैव ग्रन्थस्य नामद्वयं प्रतीयते। न्यूनतामागता काशीनाथग्रन्थानामेषा संख्या नूतनग्रन्थानामुपलब्ध्या परिबृंहिताऽपि स्यादिति संख्यायामस्यां नात्यादरो विधेय:। अपि च ६०क्रमस्थ-मन्त्रसारसमुच्चय-मातृकासमाप्तौ कश्चन वैष्णवसम्प्रदायस्य ग्रन्थ: काशीनाथेन लिखित इति तस्यापि परीक्षणमावश्यकम्। एवमेव ७९(क)क्रमस्थ-शारदातिलकटीकामातृकायां चत्वारोऽन्येऽपि ग्रन्था लिखिता: सन्ति—श्यामाभक्तिसुधार्णव-ग्रहमन्त्रप्रदीपिका-तन्त्रसारटीका-प्रपञ्चसारटीका इत्याख्या:। सर्वे चैते ग्रन्था: काशीनाथेन रचितेभ्यो ग्रन्थेभ्योऽभिन्ना एव प्रतीयन्ते।

काशीनाथरचितग्रन्थमातृकास्वत्र संगृहीतासु द्वौ श्लोकौ विशेषतोऽवधानार्हौ दृश्येते। तौ चेमौ—

यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरु:।
यावच्चन्द्रादित्यौ तावदिदं पुस्तकं जयतु।।
सर्वे ब्रह्म वदिष्यन्ति सम्प्राप्ते [ तु ] कलौ युगे।
नानुतिष्ठन्ति मैत्रेयी शिश्नोदरपरायणा:।।

अत्र प्रथमे श्लोके व्यक्तीकृत: सोऽयमभिलाषो ग्रन्थकारस्य स्वकृतिविषये स्वाभाविक एव। द्वितीये च श्लोके "कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव" इत्याभाणकस्यैवाभिप्रायो द्योत्यते।

अन्ते च—कवीन्द्राचार्यग्रन्थालयसंगृहीतेषु सर्वेषु ग्रन्थेषु यथा—"सर्वविद्या-निधानकवीन्द्राचार्यसरस्वतीनामिदं पुस्तकम्" इति वाक्यं सर्वत्र यथोपलभ्यते, तथैव काशीनाथग्रन्थेष्वपि—"मालवीय-बालमुकुन्दस्येदं पुस्तकम्" इति लिखितं दृश्यते। मालवीय-बालमुकुन्दस्य च विषयेऽनुशीलनमपेक्षितम्। इति शिवम्।

### १. अवतारभेदप्रकाशिका

RASB. VIII. A. 6221; CHC. p. 460

### २. अष्टादशपुराणव्यवस्था[१]

SB. 15711

### ३. आगमोत्पत्त्यादिवैदिकतान्त्रिकनिर्णयः

RASB. VIII.i. 6226; CHC. p. 459

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते आगमोत्पत्तिनिर्णयम्।।२।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचित आगमोत्पत्त्यादिवैदिकतान्त्रिकनिर्णयः समाप्तः।।

### ४. आपस्तम्बाह्निकम्

IM. 3006; NP.VIII.10; Ujjain I. p.22; SB. 9138[२], 9139

नत्वा श्रीदक्षिणामूर्तिमाह्निकं तैत्तिरीयके।
काशीनाथः प्रतनुते जयरामात्मजः सुधीः।।

।। इति भडोपनामक-काशीनाथकृतापस्तम्बाह्निकं समाप्तम्।।

### ५. आम्नायः

RASB.VIII.i. 6285; CHC p. 459

।। इति श्रीआम्नायः समाप्तः।।

इदं पुस्तकं कोतपल्युपनामकचिन्तामणिमणिशर्म्मणेन लिखितं। श्रीगुरुचरणार-विन्दार्पणमस्तु। संवत् १८९६ पौष्य शुद्ध १४ शुक्रवासरे समाप्तः।। शुभम्।।

### ६. आम्नायप्रकाशः

RASB.VIII.i. 6286; CHC, p. 459

---

१. सारस्वतीसुषमायां १३ वर्षे १-४ अङ्केषु मुद्रिता।
२. अत्र ग्रन्थप्रमाणं १३०० इत्यङ्कितम्।

श्रीललिताम्बार्पणमस्तु। श्रीदक्षिणाचारमतप्रवर्तक-काशीनाथभट्टभडेन लिखितमिदं। श्रीदक्षिणामूर्तिगुरुभ्यो नमः। श्रीअन्नपूर्णायै नमः। श्रीकालभैरवाय नमः।

### ७. आश्वलायनाह्निकः, आह्निकः, आह्निकचन्द्रिका, ऋग्वेदाह्निकचन्द्रिका वा

America. 52; BORI. 518 of 1883–84; BP. p. 296; D.p. 376; IM.3006; RASB.II. 412; SB. 6917

ढुण्डिराजपदद्वन्दं निधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते ऋग्वेदाह्निकचन्द्रिकाम्।।

।। इति श्रीमद्भडोपनामक-जयरामभट्टात्मज-काशीनाथविरचिता ऋग्वेदाह्निकचन्द्रिका समाप्ता ।। शुभमस्तु।।

### ८. कर्पूरस्तवदीपिका

Adyar (with text); IM. 3663 (with text); RASB. VIII. B.6627; SB. 20340; CHC. p 459

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।१।।

न जानामि तीर्थं न जानामि योगं
न जानामि मुक्त्यालयं वा किमेतत्।
न जानामि भक्तिं व्रतं चापि मात-
र्गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।२।।

कालिकां सकललोकपालिकां
लोहिताक्तगलमुण्डमालिकाम्।
भावयामि कविताप्रणालिकां
देहकान्तिजितमेघमालिकाम्।।३।।

नत्वा विश्वेश्वरीं देवीं मातरं पितरं तथा।
काशीनाथः प्रतनुते कर्पूरस्तवदीपिकाम्।।४।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-दक्षिणाचार-मतप्रवर्तक-काशीनाथविरचिता कर्पूरस्तवदीपिका समाप्ता।।

## ९. कविचन्द्रोदयटीका (पदार्थादर्शः)

L.VIII. 2756

नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा।
वदामि कामेश्वरनाम निर्मलं
स्मरामि कामेश्वरतत्त्वमव्ययम्।।
अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।
वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्।।
कविचन्द्रोदये काव्ये गुरूणामुपदेशतः।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते।।

समाप्तौ—

श्रीमत्त्रिपुरसुन्दर्याः प्रीत्यर्थं लिखिता मया।
कृता टीका गुरुप्रीत्यै प्रीयतां जगदीश्वरः।।

।।इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारीण-भडोपाख्यजयरामभट्टात्मज-वाराणसीगर्भसंभव-काशीनाथाख्यशिवानन्दनाथविरचितायां पदार्थादर्शाभिधानायां कविचन्द्रोदयटीकायां कविचंन्द्राचार्यप्रशंसा।। समाप्तोऽयं ग्रन्थः।।

कविन्द्राचार्यकृतकविचन्द्रोदयाभिधानकोषकाव्यस्य व्याख्यानम्।

## १०. कापालिकमतव्यवस्था

BORI. 958 of 1984-87; RASB.VIII.A. 6444-45; Rgb. 958; SB. 62199; CHC. p. 461

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमौलिना।
रच्यते काशिनाथेन कापालिकमतक्रमः।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता कापालिकमतव्यवस्था समाप्ता।।

## ११. कामेशार्चनचन्द्रिका

RASB. VIII. B. 6459; CHC. p. 463

नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा।
वदामि कामेश्वरनाम निर्मलं
स्मरामि कामेश्वरनाथमव्ययम्।।१।।
श्रीमत्सुन्दरनाथस्य देवीं शफरलोचनाम्।
कलये हृदये नित्यं कदम्बवनवासिनीम्।।२।।
नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते कामेशार्चनचन्द्रिकाम्।।३।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां कामेशार्चनचन्द्रिकायां प्रथमः प्रकाशः.........तृतीयः प्रकाशः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## १२. कालनिर्णयदीपिका

NP.VI. 24; SB. 13978; CHC. p. 461

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रतनुते कालनिर्णयदीपिकाम्।।२।।

।। इतिं श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता कालनिर्णयदीपिका समाप्ता।।

## १३. कालीभक्तिरसायनम्

RASB. VIII.A. 6304; CHC. p. 463

महाकालीपदद्वन्द्वं विधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते कालीपूजारसायनम्।।

।। इति कालीभक्तिरसायने आचारनिर्णयाख्यः प्रथमः प्रकाशः।।

।। इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टसुतशिवभक्तसूनु-तन्त्रशास्त्रप्रवीण-दक्षिणाचारानुसारि-काशीनाथभट्टविरचिते कालीभक्तिरसायने पुरश्चरणविधानाख्योऽष्टमः प्रकाशः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## १४. कृष्णपूजातरङ्गिणी

RASB. III. 2874; CHC. p. 463

## १५. कौमारसंहिताटीका

SB. 24812

अलिकुलमण्डितगण्डं विघ्नालिध्वान्तमार्तण्डम्।
सिन्दूरारुणशुण्डं कलये देवं सदा हि गजतुण्डम्।।१।।
सिन्दूराभं सिद्धलक्ष्मीजुष्टाङ्कं कुञ्जराननम्।
महागणपतिं देवं भक्तिविघ्नघ्नमाश्रये।।२।।
अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।३।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।४।।
कुमारसंहितातन्त्रे गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते।।५।।

।। इति श्रीमद्भडोपनामक-जयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां कौमारसंहिताटीकायां वाञ्छाकल्पलताविधानं नाम दशमोऽध्यायः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## १६. कौलगजमर्दनम्

NW. 220; CHC. p. 460

काशीनाथः, पत्राणि ३, पंक्तयः ९, कर्गदः, देवनागरी लिपिः।

विवरणम्—कौलमतस्य खण्डनम्, नवीनमशुद्धञ्च।

## १७. गङ्गाभक्तिरसायनम्

RASB (?) ; CHC. p. 464

## १८. गणेशार्चनदीपिका

RASB. III. 2892. Sucipatra 39.; SB 61412; Tagore 37. CHC. p. 463

ढुण्ढिसजपदद्वन्द्वं निधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते गणेशार्चनदीपिकाम्।।

।।इति गणेशार्चनदीपिकायां चतुर्थः प्रकाशः।। (११ निरङ्के)

।।इति श्रीमद्भडोपनामकजयरामभट्टात्मज-काशीनाथविरचिता गणेशार्चन-दीपिका समाप्ता।। (१-१३ पत्राणि)

## १९. गायत्रीपुरश्चरणचन्द्रिका

Adyar. II. p. 213a; Alwar. 2108; BORI. 961 of 1884-87; PUL.I. p.116; Rgb. 961; SB. 62232; CHC. p. 464

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।
नत्वा ब्रह्ममयीं देवीं सच्चिदानन्दरूपिणीम्।
काशीनाथः प्रतनुते पुरश्चरणचन्द्रिकाम्।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-भट्टविरचिता गायत्रीपुरश्चरणचन्द्रिका समाप्ता।।

## २०. गायत्र्यर्चनदीपिका

RASB. VIII.A. 6420; SB. VI. 24809; CHC. p. 464

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमौलिना।
रच्यते काशीनाथेन गायत्र्यर्चनदीपिका।।

।।इति श्रीभडोपनामक-शिवरामभट्टाङ्गज-जयरामभट्टाभिध-शिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-काशीनाथविरचिता गायत्र्यर्चनदीपिका समाप्ता।।

## २१. गुरुपूजाक्रमः

NW. 254; CHC. p. 464

## २२. गूढमन्त्रार्थकौमुदी

SB. VI. 24016

कामेश्वरपदद्वन्द्वं निधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते गूढमन्त्रार्थकौमुदीम्।।

।।इति श्रीमद्भडोपनामक-जयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता गूढमन्त्रार्थकौमुदी समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## २३. ग्रहमन्त्रप्रदीपिका

SB. 23977

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।१।।
नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते ग्रहमन्त्रप्रदीपिकाम्।।२।।

अत्र १-२पत्रद्वयमात्रमुपलभ्यते। एतावता ग्रन्थोऽपूर्ण एव दृश्यते।

## २४. चक्रसङ्केतचन्द्रिका

RASB. VIII. A. 6144; CHC. p. 459

योगिनीहृदयटीका चक्रसङ्केतपटलस्य।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता चक्रसङ्केतचन्द्रिका।।

।।इदं काशीनाथभट्टभडेन लिखितम्।। मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## २५. चण्डिकार्चनदीपिका

Alwar. 2125; Extr. 620; RASB. VIII. A. 6405–6; CHC. p. 464

करधृतवीणां वाणीं जगत्प्रवीणां प्रसूनभृतवेणीम्।
विद्वत्प्रवीणताप्त्यै शोभनवाणीमहं प्रणमे।।
एकवीरापदद्वन्द्वं निधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते चण्डिकार्चनदीपिकाम्।।

।।इति श्रीमद्भडोपनामक-जयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता चण्डिकार्चनदीपिका समाप्ता।।

## २६(क). चण्डीमाहात्म्यटीका (चण्डीपाठटीका)

NW. 250; Varendra 1789; CHC. p. 459

काशीनाथः, पत्राणि ९४, पंक्तयः १२, कर्गदः, देवनागरीलिपिः।

## (ख). चण्डीपूजारसायनम्

NP. VI.52

## २७. ज्ञानार्णवतन्त्रटीका

L.II 826; RASB. VIII.A. 5816; CHC p. 458

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा।
वदामि कामेश्वरनाम निर्मलं
स्मरामि कामेश्वरतत्त्वमव्ययम्।।२।।
या विद्येत्यभिधीयते श्रुतिपथे शक्तिः सदाद्या परा
सर्वज्ञा भवबन्धभित्तिनिपुणा सर्वाशये संस्थिता।
दुर्ज्ञेया सुदुरात्मभिश्च मुनिभिर्ध्यानास्पदं प्रापिता
प्रत्यक्षा भवतीह सा भगवती बुद्धिप्रदा मेऽस्तु वै।।३।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।४।।
वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्।।५।।
ज्ञानार्णवे महातन्त्रे गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते।।६।।
× × × × × × × × × × × × ×

समाप्तौ—

राजराजेश्वरी गङ्गा माधवो मणिकर्णिका।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवम्।।

श्रीमत्त्रिपुरसुन्दर्या: प्रीत्यर्थं लिखिता मया।
प्रभवाब्दे [त्विषे] शुक्लपञ्चम्यां ललिताप्तये।।
श्रीशिवानन्दनाथेन काशीनाथाख्यशर्मणा।
कृता टीका गुरुप्रीत्यै भव(ज)तु सदुपासका:।।

।।इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारीण-सर्वतन्त्र[ स्वतन्त्र ]दक्षिणाचार-तन्त्रधुरीण-भडोपाख्यजयरामभट्टात्मज-वाराणसीगर्भसंभव-काशीनाथाख्यशिवानन्द-नाथविरचितायां ज्ञानार्णवटीकायां त्रयोविंशतितम: पटल: समाप्त:।।

## २८. तन्त्रभूषा

RASB.VIII. A. 6227; CHC. p. 460

वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्।।१।।
नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथ: प्रतनुते तन्त्रभूषां समासत:।।२।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता तन्त्रभूषा समाप्ता।।

## २९. तन्त्रसारटीका

SB. 23977, 85384[१]

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां तन्त्रसारटीकायां गूढार्थादर्शाभिधायां प्रथम: परिच्छेद:।।

अत्र ३-४ पत्रे स्त:। ग्रन्थ: खण्डित:।

## ३०. तन्त्रसिद्धान्तकौमुदी

RASB.VIII.A.6222-23[२]; CHC. p. 460

• अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नम:।।१।।

---

१. अत्र १-१३ पत्राणि। ग्रन्थ: पूर्ण:।

२. मालवीयबालमुकुन्दस्येदं पुस्तकमिति ग्रन्थान्ते।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते तन्त्रसिद्धान्तकौमुदीम्।।२।।

समाप्तौ—

देहप्राणसुखादिभिः प्रतिकलं संरुध्यमानो जनः
पूर्णानन्दघनामिमां न चिनुते स्वादेश्वरीं स्वां चितिम्।
तां वै बोधसुधाब्धिविश्वमभितस्तत्फेनपिण्डोपमं
यः पश्यत्युपदेशतस्तु कथितः साक्षात्स एकः शिवः।।

।।इति [ श्री ]मद्धडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां तन्त्रसिद्धान्तकौमुद्यां शाम्भवोपायप्रदर्शनं नाम प्रथमः प्रकाशः।। शाक्तोपायप्रदर्शनं नाम द्वितीयः प्रकाशः।। आणवोपायप्रदर्शनं [ नाम ] तृतीयः प्रकाशः।।

## ३१. तन्त्रहृदयम्

SB.VI. 23891[१], 24788

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।२।।

नान्यं निषेवे न तु चान्यमीहे
न चापरं दैवतमर्चयामि।
कदापि नाहं परमार्थरूपां
श्रीसुन्दरीं चेतसि विस्मरामि।।३।।

---

१. अस्यां मातृकायां तृतीय-चतुर्थश्लोकौ इत्थं वर्तेते—
वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्।।३।।
करधृतवीणां वाणीं जगत्प्रवीणां प्रसूनभृतवेणीम्।
विद्वत्प्रवीणताप्त्यै शोभनवाणीमहं प्रणमे।।४।।

श्रुतीनां तन्त्राणां बहुलकथनात्पन्नगपुरे
समायाते द्विजवरगुणानां तु विदुषाम्।
अतस्तैः संपृष्टे हरिहरविरिञ्च्यादिचरणे
स्तुवन् काशीनाथो रचयति हि तन्त्रस्थहृदयम्।।४।।

पन्नगपुरे = नागपुरे........इति व्याख्या।

समाप्तौ—

गुरुरेव शिवो गुरुमेव भजे गुरुणे(णै)व सहास्मि नमो गुरवे।
न गुरोरधिकं शिशुरस्मि गुरौ गतिरस्ति गुरौ जयनाथगुरौ।।

।। इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारपारीण-सर्वतन्त्रस्वतन्त्र-दक्षिणाचार-तन्त्रधुरीण-श्रीमद्दक्षिणामूर्तिचरणारविन्दमिलिन्देन श्रीजयरामभट्ट-भडात्मज-काशीनाथेन विरचितं चतुःषष्टितन्त्रस्थहृदयाख्यं प्रकरणं समाप्तम्।।

।।संवत् १८६३ भाद्रमासे कृष्णपक्षे सप्तम्याम्।।

## ३२. तान्त्रिकाग्निमुखप्रयोगः

SB. 24790

।। इति श्रीभट्टोपनामकजयरामभट्टात्मज-काशीनाथविरचितस्तान्त्रिकाग्निमुखप्रयोगः समाप्तः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ३३. तारापूजारसायनम्

RASB. VIII. A. 6330; CHC. p. 464

या विद्येत्यभिधीयते श्रुतिपथे शक्तिः सदाद्या परा
सर्वज्ञा भवबन्धभीतिनिपुणा सर्वाशये संस्थिता।
दुर्ज्ञेया सुदुरात्मभिश्च मुनिभिर्ध्यानास्पदं प्रापिता
प्रत्यक्षा भवतीह सा भगवती बुद्धिप्रदा मेऽस्तु वै।।

नानातन्त्राणि विज्ञाय जयरामपितुर्मुखात्।
करोति काशीनाथोऽयं तारापूजारसायनम्।।

।।इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारपारीण-सर्वतन्त्र[ स्वतन्त्र ]दक्षिणाचारतन्त्रधुरीण-दक्षिणामूर्तिचरणारविन्दमिलिन्देन जयरामभट्टभडात्मजकाशीनाथेन विरचितं तारापूजारसायनं पुण्यंग्रामे समाप्तम्।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

### ३४. तिथिनिर्णयदीपिका तिथिदीपिका वा

Baroda. 10724; BISM. वि. 76/7; SB. 13911-12[१]; CHC. p. 461

प्रणम्य श्रीगुरुं विष्णुं दक्षिणामूर्तिशङ्करम्।
जयरामाख्यपितरं श्रौतस्मार्तविशारदम्।।
काशीनाथेन सुधिया सारमुद्धृत्य शास्त्रत:।
शिष्टानां तन्मते तुष्ट्यै तिथिनिर्णयदीपिका।।

### ३५. त्रयोदशश्लोकी

SB. 4151

द्व्यभ्रात्यष्टि(१७०४)मिते शाके शार्वर्यब्दे शुचौ मिते।
इयं त्रयोदशश्लोकी काशीनाथेन निर्मिता।।१४।।

### ३६. त्रिकूटारहस्यटीका

NP. VI. 56; CHC. p. 458

### ३७. त्रिपुरसुन्दर्यर्चनक्रमः

RASB. VIII. A. 6355; CHC. p. 464

अनेकशक्तिसंघातप्रकाशलहरीयुत:।
शुद्धसंविन्मय: पायात् श्रीशम्भु: परमेश्वर:।।१।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नम:।।२।।
नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथ: प्रतनुते संहितोक्तार्चनक्रमम्।।३।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथविरचितं श्रीदक्षिणामूर्तिसंहितोक्तं श्रीमहात्रिपुरसुन्दर्यर्चनक्रमं समाप्तम्।।

---

१. अन्ते खण्डिते उभे प्रती।

## ३८. त्रिस्थलीसेतुः

Stein. 91. Extr. 306; CHC. p. 461

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः॥
ध्यायन् ध्यायन् शिवं ब्रह्म स्मारं स्मारं गुरोर्गिरः।
रच्यते त्रिस्थलीसेतुः शिष्यप्रेरितमेधया॥

समाप्तौ—

श्रीदुर्गे जगदम्बिकेति सहसा ध्यायन्ति ये मानवा-
स्ते सर्वे न पतन्ति मोहसलिले ख्यातिस्त्वियं वर्तते।
श्रुत्वैवं विविधा तवात्र महिमा श्रुत्यर्थसंसेविता
नाना चागमवादिभिः प्रकथिता यातोऽस्म्यहं पाहि माम्॥

॥इति श्रीभडोपनामजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथविरचितं त्रिस्थलीसेत्वन्तर्गतं काश्यादिसर्वतीर्थयात्राक्रमप्रकरणं समाप्तम्॥

॥ संवत् १८६४, पत्राणि १६, श्लोकाः ६५५ ॥

## ३९. दक्षिणाचारतन्त्रराजटीका (गूढार्थादर्शः)

RASB. VIII. A. 6140; SB 61551[१]; CHC. p. 459

॥इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-तन्त्रशास्त्रधुरीण-दक्षिणाचारानुसारि-काशीनाथभट्टविरचितायां श्रीदक्षिणाचारतन्त्र-राजटीकायां गूढार्थादर्शाभिधायां षड्विंशः पटलः॥२६॥

यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः।
यावच्चन्द्रादित्यौ तावदिदं पुस्तकं जयतु॥

## ४०. दक्षिणाचारतन्त्रटीका

SB. 73329

नत्वा ब्रह्ममयीं देवीं सच्चिदानन्दरूपिणीम्।
ब्रह्मेशविष्णुजननीं भक्तानुग्रहविग्रहाम्॥

---

१. आदौ १-२ पत्रद्वयं नास्ति। ३-३४ पत्राणि सन्ति।

दक्षिणाचारतन्त्रस्य गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते।।

।।इति श्रीमद्भडोपनामकजयरामभट्टात्मज-वाराणसीगर्भसंभव-काशीनाथ-रचितायां दक्षिणाचारतन्त्रटीकायां गूढार्थाभिधायां तृतीयः पटलः[१] ।।

## ४१. दक्षिणाचारदीपिका

N.P. III.64; CHC. p. 460

## ४२. दक्षिणामूर्तिकल्पः (मन्त्रपद्धतिः)

Adyar. II. P. 207b.

## ४३. दक्षिणामूर्तिकौस्तुभः

RASB. VIII.B. 6452; CHC. p. 463

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।

वीरासनैकनिलयाय हिरण्मयाय
न्यग्रोधमूलगृहिणे निटिलेक्षणाय।
गङ्गाधराय गजचर्मविभूषणाय
प्राचीनपुण्यपुरुषाय नमः शिवाय।।२।।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते दक्षिणामूर्तिकौस्तुभम्।।३।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिते दक्षिणामूर्तिकौस्तुभे मूलकारिका समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ४४. दक्षिणामूर्तिचन्द्रिका

Alwar. 2163. Extr. 628; SB. VI. 24974[२] ; CHC. p. 463

।।इति दक्षिणामूर्तिचन्द्रिकायां चतुर्दशः पटलः।।

---

१. (९ साङ्के)। इति चतुर्थपटलः (१० साङ्के)। पत्राणि १-११। अपूर्णोऽयं ग्रन्थः।

२. आदौ १-५५ पत्राणि न सन्ति।

× × × × × × × × × × × ×

मण्डलेशपुराधीश: श्रीमद्रमणव्यङ्कट:।
तस्याश्रयप्रतापेन निर्मिता कृतिरुत्तमा।।

।।इति श्रीभडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्र-शास्त्रप्रवीण-काशीनाथविरचिता दक्षिणामूर्तिचन्द्रिका समाप्ता।। शुभं भूयात्।। संवत् १८५०।।

## ४५. दक्षिणामूर्तिदीपिका

RASB. VIII. A. 6453; CHC. p. 463

नत्वा गणेश्वरं देवीं पितरौ राघवं शिवम्।
काशीनाथ: प्रतनुते दक्षिणामूर्तिदीपिकाम्।।

।।इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-काशीनाथविरचिता दक्षिणामूर्तिदीपिका समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ४६. दक्षिणामूर्तिशेखरटीका

SB. 61748[1]

श्रीकाशीनाथनाथाद् द्विजवरनमितात् पूर्णपूर्णाभिषेकं
धृत्वाऽहं नाथशब्दं सुललितकविता तद्दिनात् संनिविष्टा।
श्रीविद्या मन्मुखस्था गुरुमनुसहिते पादुके यस्य मूर्ध्नि
दु:साध्यं तस्य किं स्यान्निजसकलमिदं नाथदेवप्रसादात्।।

।। दीनानाथविरचितायां दक्षिणामूर्तिशेखरटीकायां गूढार्थादर्शाभिधायां पञ्चविंशतितम: प्रकाश:।।२५।।

## ४७. दुर्जनमुखचपेटिका[2]

(क) RASB. V. 4111; SB. 16259; Stein 209; CHC. p. 461

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नम:।।१।।

---

१. पत्रे २२-२३ (आदौ खण्डिता)।

२. अनूदितं फ्रेंचभाषायां बर्नफमहोदयेन, Preface, Le Bhāgavata Purāna, p. LXXXV.

या विश्वं वितनोति पालयति या संहर्ति कल्पक्षये
ब्रह्माणं च हरिं हरं च मनसैवोत्पादयन्ती गुणैः।
सावित्रीं रमामुमां च तनुजां दत्वाथ तेभ्यः पृथक्
जुष्टा पश्यति दृश्यते च सकलं तां नौमि विश्वेश्वरीम्।।२।।

सुन्दरीसुन्दरं नत्वा ब्रुवे शास्त्रविनिश्चयम्।
देवीभागवते ग्रन्थे आर्षानार्षत्वसंशये।।३।।

।।इति श्रीभडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-दक्षिणाचारमत-प्रवर्तक-काशीनाथभट्टविरचिता दुर्जनचपेटिका समाप्ता।। १८४९ माघ सुदि नवमी रवि।।

**(ख)** IO. 3367

'दुर्जनमुंखचपेटिका' इति नामधेयमत्र दृश्यते।

## ४८. नामपारायणप्रकारः[१]

SB. 24789

## ४९. पक्षप्रदोषार्चनचन्द्रिका

RASB. III 2855

## ५०. पार्थिवार्चनदीपिका

RASB.III. 2854; SB. 11708[२]

ज्योतिर्मात्रसदानन्दनिर्मलज्ञानरूपिणे।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये।।
नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते पार्थिवार्चनदीपिकाम्।।

## ५१. पुरश्चरणदीपिका[३]

K 46; CHC. p. 461

---

१. ग्रन्थारम्भे समाप्तौ च श्लोकादिकं पुष्पिका वा नास्ति। अतो न ज्ञायते कस्यायं ग्रन्थ इति। मुखपृष्ठे काशीनाथस्य नाम। अत्रत्यानि पत्राणि च २४७८८ संख्याक-तन्त्रहृदयग्रन्थेन सारस्वत्यां सुषमायां मुद्रितेन अष्टादशपुराणव्यवस्थाख्येन ग्रन्थेन च समानानि।

२. अपूर्णोऽयं ग्रन्थः प्रतीयते।

३. प्रकाशितोऽयं ग्रन्थः वाराणसीतः, १८७३ ई.।

## ५२. पूजाक्रमः

NW. p. 254

काशीनाथः। पत्राणि २५। पंक्तयः ७। कर्गदः। देवनागरीलिपिः। विवरणम्—गुरुशिष्यलक्षणम्, दीक्षाविधिः, इत्यादि-गणेशपूजा।

## ५३. प्रपञ्चसारटीका (पदार्थादर्शः)

SB. 22877[1], 85389

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
..............................................णिका
जटाजूटे गङ्गा तुहिनगिरिकन्या च हृदये।
समन्ताद् ब्रह्माद्यैः स्तुतमहीगणाभूषिततनुं
स्मरामस्तं देवं पर...........................।।२।।
करधृतवीणां वाणीं जगत्प्रवीणां प्रसूनभृतवेणीम्।
विद्वत्प्रवीणताप्त्यै शोभनवाणीमहं प्रणमे।।३।।
प्रपञ्चसारतन्त्र.................................।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते।।४।।

## ५४. प्रायश्चित्तव्यवस्थासारसंग्रहः

SB. 12195 (वंगलिपिः)

प्रणम्य शिरसा सप्तं श्रीकाशीनाथशर्मणा।
प्रायश्चित्तकदम्बानां क्रियते सारसंग्रहः।।

श्रीशिवनाथदेवशर्मणः पुस्तकमिदं स्वाक्षरं च।

## ५५ (क) बटुकभैरवार्चनदीपिका

SB. 61704[2]

आनन्दपूर्णहृदयः सदयः सर्वजन्तुषु।
कालनाथो जगद्वन्द्यो ममाऽस्तु किल रक्षणे।।

---

१. अत्र प्रथमपत्रमेव दृश्यते। सम्पूर्णो ग्रन्थोऽन्वेषणीयः।

२. पत्र १-१[illegible] अपूर्णा प्रतिः।

शङ्कराचार्यमारभ्य श्रीसाम्बावधिमुत्तमाम्।
शाम्भवाचार्यनिःश्रेणीमाश्रयेत्युमतिप्रदाम्( ? )।।
दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रतनुते बटुकार्चनदीपिकाम्।।

..................................................

।। बटुकभैरवार्चनदीपिकायां चतुर्थः प्रकाशः ।।

## ५५ (ख) बटुकार्चनदीपिका

NP.VI. 50; SB. 24007[१]; CHC. p. 463

[ काशीनाथः ] प्रतनुते बटुकार्चनदीपिकाम्।।

।।इति श्रीमद्बडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां बटुकभैरवार्चनदीपिकायां सप्तमः प्रकाशः।।७।।

## ५६. ब्रह्माद्वैतप्रकाशिका

SB. 28359

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।१।।

नित्यं नमामि भवसागरतारणाय
मल्लारिपादयुगलं परमार्थरूपम्।
ब्रह्मादिवन्दितमशेषसुखप्रदाय
चिन्तामणिं सकलमङ्गलकामधेनुम्।।२।।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते ब्रह्माद्वैतप्रकाशिकाम्।।३।।

।।इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारपारीण-सर्वतन्त्र[ स्वतन्त्र ]दक्षिणाचारतन्त्रधुरीण-श्रीमद्दक्षिणामूर्तिचरणारविन्दमिलिन्देन श्रीजयरामभट्टात्मजकाशीनाथेन विरचिता ब्रह्माद्वैतप्रकाशिका समाप्ता।।

## ५७(क). मन्त्रचन्द्रिका

Bomb. Uni.1755; RASB. VIII.A. 6240; SB. 25430, 85388[२]; CHC. p. 459

---

१. प्रथमं पत्रं नास्ति।
२. अस्य ग्रन्थस्य नाम 'मन्त्रदीपिका' इति।

विश्वेश्वरं नमस्कृत्य मातरं पितरं तथा।
काशीनाथः प्रतनुते सिद्धिदां मन्त्रचन्द्रिकाम्।।

।।इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-दक्षिणाचारमतप्रवर्तक-काशीनाथविरचिता मन्त्रचन्द्रिका समाप्ता। दक्षिणामूर्तिशिवार्पणमस्तु।

## (ख). मन्त्रचन्द्रिका

Peters. VI. Extr. p. 37

विश्वेश्वरं नमस्कृत्य मातरं पितरं तथा।
काशीनाथः प्रतनुते सिद्धिदां मन्त्रचन्द्रिकाम्।।

समाप्तौ—

विश्वेश्वरीं विशालाक्षीं ढुण्ढिराजं च माधवम्।
दण्डपाणिं कालराजं स्मरन् सिद्धिमवाप्नुयात्।।

।।इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-दक्षिणाचारमतप्रवर्तक-काशीनाथविरचिता मन्त्रचन्द्रिका समाप्ता।।

## (ग). मन्त्रचन्द्रिका

L. 1709

नत्वा कात्यायनीं देवीं हरं विघ्नहरं तथा।
काशीनाथेन क्रियते सुरम्या मन्त्रचन्द्रिका।।

समाप्तौ—

विश्वेश्वरं विशालाक्षं ढुण्ढिराजं च माधवम्।
दण्डपाणिं कालराजं स्मरन् सिद्धिमवाप्नुयात्।।इति दिक्।

।।इति श्रीभट्टोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्र-शास्त्रप्रवीण-दक्षिणाचारमतप्रवर्तक-काशीनाथभट्टविरचिता मन्त्रचन्द्रिका समाप्ता।।

पत्राणि ४२, पंक्तयः १२, श्लोकाः ११३४, संवत् १८६१।

## (घ). मन्त्रचन्द्रिका

श्रीमोहनलाल़जीशुक्लः, ब्रह्मपुरी, जयपुरम्, पत्रसं० ६–११४।

समाप्तौ—

गङ्गातीरे गह्वरेण रामलिङ्गस्य सूनुना।
लिखिता जयरामेण आनन्दवनवासिना।।

।। संवत् १८५५ शके १७२० आषाढशुक्लपौर्णमास्यां गुरुवासरे लिखितमिदं पुस्तकम् ।।

## (ङ). मन्त्रचन्द्रिकाविषयसूची

SB. 10021

## ५८(क). मन्त्रमहोदधिटीका

Bomb. Uni. 1759; RASB.VIII.A. 6254-56; SB. 25543; CHC. p. 459

समाप्तौ[१]—

राजराजेश्वरी गङ्गा माधवो मणिकर्णिका।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवम्।।
श्री[शि]वानन्दनाथाख्यकाशीनाथेन धीमता।
कृता टीका गुरुप्रीत्यै भजन्तु सदुपासका:।।

।।इति श्रीभट्टोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां मन्त्रमहोदधिटीकायां पञ्चविंशति[त]मस्तरङ्ग:।।२५।।

।।पुस्तकं कृष्णदयालकायस्थ(थेन) लिखितम्।।

## (ख). मन्त्रमहोदधिटीका

NW. p. 222

काशीनाथ:, पत्राणि ४११, पङ्क्तय: ९, कर्गद:, देवनागरीलिपि:।

## (ग). मन्त्रमहोदधिटीका

RASB.VIII. 6254

श्रीगणेशाय नम:। श्रीदक्षिणामूर्तिगुरुभ्यो नम:।

करैर्दधान: परशुं कुरङ्गं वराख्यमुद्रामुपदेशमुद्राम्।
वटस्थमूले विबुधोपसेव्य: सदा शिवायास्तु सदाशिवो न:।।

---

१. विवरणमिदं सरस्वतीभवनस्थमातृकाया:। अत्रादौ १-१२ पत्राणि न सन्ति।

नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रकुरुते टीकां मन्त्रमहोदधेः।।

## (घ). मन्त्रमहोदधिटीका

RASB. VIII. 6257

वीरासनैकनिलयाय हिरण्मयाय
न्यग्रोधमूलगृहिणे निटिलेक्षणाय।
गङ्गाधराय गजचर्मविभूषणाय
प्राचीनपुण्यपुरुषाय नमः शिवाय।।

नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा।
वदामि कामेश्वरनाम निर्मलं
स्मरामि कामेश्वरतत्त्वमव्ययम्।।

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः करोत्येतां टीकां मन्त्रमहोदधेः।।

## (ङ). मन्त्रमहोदधिपदार्थादर्शटीका

L.IV. 1714

पत्राणि ९०, पङ्क्तयः १६-१७, श्लोकाः ४६१४, संवत् १८४८।

करैर्दधानः परशुं कुरङ्गं
वराख्यमुद्रामुपदेशमुद्राम्
वटस्य मूले विबुधोपसेव्यः
सदा शिवायास्तु सदाशिवो वः।।

मन्त्रमहोदधौ तन्त्रे गुरूणामुपदेशतः।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते।।

समाप्तौ—

यदत्र किञ्चिन्मम सम्प्रदायतोऽ-
न्यथोदितं स्यात् पतितं यदि क्वचित्।
तत्सर्वमार्यैः परिशोधनीयं
नेर्ष्या विधेया मयि सन्नतात्मनि।।
राजराजेश्वरो गङ्गा माधवो मणिकर्णिका।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवम्।।
श्रीशिवानन्दनाथाख्यकाशीनाथेन धीमता।
कृता टीका गुरुप्रीत्यै भजन्तु सदुपासकाः।।

।।इति श्रीमद्भट्टोपनामकशिवरामभट्टात्मजजयरामभट्टाभिध-शिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-काशीनाथविरचितायां मन्त्रमहोदधिपदार्थादर्शटीकायां षट्कर्मादि-निरूपणं नाम पञ्चविंशतितमः प्रकाशः।।

अनेन भगवच्छ्रीमद्दक्षिणामूर्तिशङ्करः।
गुर्वात्मा प्रीयतां नित्यं तत्त्वज्ञानं प्रदास्यताम्।।

संवत् १८४८।

### ५९. मन्त्रराजसमुच्चयः

SB. 26033[१]–34[२]

### ६०. मन्त्रसारसमुच्चयः

Oudh XX 248; SB. 62138; CHC. p. 460

नत्वा गुरुं महाविष्णुं दक्षिणामूर्तिशङ्करम्।
जयरामाख्यपितरं श्रौतस्मार्तविशारदम्।।
काशीनाथेन सुधिया सारमुद्धृत्य शास्त्रतः।
शिष्टानां तन्यते तुष्ट्यै मन्त्रसारसमुच्चयः।।
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययोः।।

---

१. सानुक्रमणिकः, पूर्वार्द्धमात्रम्।
२. सानुक्रमणिकः, उत्तरार्द्धम्।

समाप्तौ—

शिवरामात्मजश्रीमज्जयरामसुतेन तु ।
कृतोऽयं काशिनाथेन मन्त्रसारसमुच्चयः ॥
वैद्यनाथप्रसादेन मन्त्रसारसमुच्चयः ।
नाम्ना पुत्रः सतां वन्द्यो मम वक्त्राद्विनिर्गतः॥

यदत्र किञ्चिल्लिखितं मयात्र
तन्नव्य(य?)मस्तीत्यवमे(हे)लनीयम् ।
यतो हि मूलार्थनिबन्धमार्गं
विमृश्य सद्भिः परिभाव्यमेव ॥

॥इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-श्रीवैद्यनाथ-चरणारविन्दमिलिन्देन काशीनाथेन विरचिते मन्त्रसारसमुच्चये पञ्चविंशः पटलः॥२५॥

पत्राणि १-६८। सम्पूर्णोऽयं ग्रन्थः॥

अत्रैव ग्रन्थान्तरम्—

SB. 2585[१]

अस्मदाचार्यमारभ्य श्रीकान्तावधिमुत्तमाम्।
वैष्णवाचार्यनिःश्रेणीमाश्रयेऽत्युद्गतिप्रदाम्॥

इदं भडोपनाम्ना काशीनाथेन लिखितम्। (पञ्चमे पत्रे साङ्के)

## ६१(क). मन्त्रसारसमुच्चयटीका

SB. 26426

आनन्दपूर्णहृदयः सदयः सर्वजन्तुषु।
वैद्यनाथो जगद्वन्द्यो मय्यस्तु किल रक्षणे॥

मन्त्रसारसमुच्चये गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते॥

तत्र तावन्मन्त्रसारसमुच्चयनामकं ग्रन्थं चिकीर्षुराचार्यः ...... गुरुं श्रीमत्पंचभाई इत्युपनामकानन्तभट्टाख्यम्।

---

१. रामानुजसम्प्रदायस्य कश्चन ग्रन्थस्तस्य टीका च प्रतीयते। अत्र १-२, ४-५ पत्राणि सन्ति। सम्पूर्णोऽयं ग्रन्थः काशीनाथेन लिखित इति प्रतीयते।

यदत्र किञ्चिल्लिखितं मया त-
न्न नव्यमस्तीत्यवहेलनीयम्।
यतो हि मूलार्थनिबन्धमार्गं
विमृश्य सद्भिः परिभाव्यमेव॥
राजराजेश्वरी गङ्गा माधवो मणिकर्णिका।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवम्॥

॥ इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभवश्रीवैद्यनाथ-चरणारविन्दमिलिन्दकाशीनाथेन विरचितायां मन्त्रसारसमुच्चयटीकायां गूढार्थादर्शाभिधायां पञ्चविंशः पटलः।

## (ख). मन्त्रसारसमुच्चयटीका

SB. 62140[१]

विदितसकलवेद्यं कार्यलिङ्गेन गम्यं
निखिलजगदधीशं सर्वविद्यादिहेतुम्।
विधिहरिहररूपं देवतासार्वभौमं
सकलगुणनिवासं नौमि लक्ष्मीगणेशम्॥१॥
प्रणम्य मातापितरौ दक्षिणामूर्तितत्परौ।
रामेश्वरं वैद्यनाथं काशीविश्वेश्वरं तथा॥२॥
तातयुक्तिविचारेण मन्त्रसारसमुच्चये।
पदार्थादर्शटीकेयमनन्तेन वितन्यते॥३॥

श्रीमत्पंचभाई इत्युपनामकानन्तभट्टाख्यं गुरुम्।

॥ इति श्रीमद्भडोपनामकजयरामभट्टात्मज-काशीनाथसुतललितागर्भ-संभवानन्तभट्टविरचितायां मन्त्रसारसमुच्चयटीकायां पदार्थादर्शाभिधायां पञ्चविंशः पटलः॥२५॥

## ६२. मन्त्रसिद्धान्तमञ्जरी

RASB.VIII. A. 6224; CHC. p. 460

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः ।
काशीनाथः प्रतनुते मन्त्रसिद्धान्तमञ्जरीम्॥

॥इति भडोपनामककाशीनाथविरचिता मन्त्रसिद्धान्तमञ्जरी समाप्ता॥

१. पत्राणि १-१५, सम्पूर्णोऽयं ग्रन्थः।

## ६३. मन्त्रोद्धारदीपिका

SB. 24813

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः ।
काशीनाथः प्रतनुते मन्त्रोद्धारप्रदीपिकाम्।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता मन्त्रोद्धारदीपिका समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ६४. महिम्नःस्तोत्रटीका

RASB.VII. 5598; CHC. p. 459

## ६५. यन्त्रचन्द्रिका

Alwar. 2229. Extr. 662; CHC. p. 461

## ६६. योगसिद्धान्तमञ्जरी

RASB.VIII. B. 6608; CHC. p 461

वीरासनैकनिलयाय हिरण्मयाय
न्यग्रोधमूलगृहिणे निटिलेक्षणाय।
गङ्गाधराय गजचर्मविभूषणाय
प्राचीनपुण्यपुरुषाय नमः शिवाय।।१।।

ललिताम्बापदद्वन्द्वं निधाय हृदि सुन्दरम्।
रच्यते काशीनाथेन योगसिद्धान्तमञ्जरी।।२।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथापर-पर्यायविश्वनाथविरचिता योगसिद्धान्तमञ्जरी समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ६७. रहस्यत्रयव्याख्या (गूढार्थादर्शः)

SB. 23146, 61615[१]

१. द्रष्टव्यम्—"चण्डीमाहात्म्यटीका"।

।। इति श्रीभडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां सप्तशतीटीकायां गूढार्थादर्शाभिधायां रहस्यत्रयव्याख्यासंपुट-विधानाख्योऽष्टादशः प्रकाशः।।१८।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ६८. रामपूजातरङ्गिणी

RASB.III, 2882–83; Ujjain. I.p.78; CHC. p. 463

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमौलिना।
रच्यते काशीनाथेन रामपूजातरङ्गिणी।।

।।इति श्रीमद्भडोपनामकशिवरामभट्टाङ्गज-जयरामभट्टाभिधशिवभक्तसूनु-मन्त्रशास्त्रप्रवीण-काशीनाथविरचिता रामपूजातरङ्गिणी समाप्ता।।

।।लिखितं ब्राह्मणबैजनाथ, लिखायितं श्रीकृष्णजी, सं. १८४७, रामाय नमः।।

पत्राणि १–१९, सम्पूर्णम्।

## ६९क. ललितातिलकं सटीकम्

SB. 25653

सृष्ट्वाखिलं जगदिदं सदसत्स्वरूपं
शक्त्या त्वया त्रिगुणया परिपाति विश्वम्।
संहृत्य कल्पसमये रमते तथैका
तां सर्वविश्वजननीं मनसा स्मरामि।।१।।

कल्याणशैलपरिकल्पितकार्मुकाय
मौर्वीकृताखिलमहोदरनायकाय ।
पृथ्वीरथाय कमलापतिसायकाय
हालास्यमध्यनिलयाय नमः शिवाय।।२।।

जडाजडं जगत्सर्वं यस्याः पादसमुद्भवम्।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये।।३।।

ललितातिलके तन्त्रे गुरूणामुपदेशतः।
पदार्थादर्शटीकेयं काशीनाथेन तन्यते।।४।।

अथ चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिकाम: परमशिष्ट: काशीनाथ: परदेवतासन्धानपूर्वकमिष्टदेवतानमस्काररूपं मङ्गलमारचयति—

या विद्येत्यभिधीयते श्रुतिपथे शक्ति: सदाद्या परा
सर्वज्ञा भवबन्धभिति(त्ति)निपुणा सर्वाशये संस्थिता।
दुर्ज्ञेया सुदुरात्मभिश्च मुनिभिर्ध्यानास्पदं प्रापिता
........प्रत्यक्षा भवति बुद्धिप्रदा मेऽस्तु वै।।

नानातन्त्राणि विज्ञाय जयरामपितुर्मुखात्।
करोति काशीनाथोऽयं ललितातिलकं शुभम्।।

समाप्तौ—

राजराजेश्वरी गङ्गा माधवो मणिकर्णिका।
अन्नपूर्णा च विश्वेशो ददतां मेऽनिशं शिवम्।।

।।इति भडोपनामककाशीनाथविरचिते ललितातिलके पञ्चम: पटल: समाप्त:।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभवकाशीनाथभट्ट-विरचितायां ललितातिलकटीकायां पदार्थादर्शाभिधायां पञ्चम: पटल: समाप्त:।।

## ख. ललितार्चनकौमुदी

SB. 85383

## ७०. ललितासहस्रनामटीका (नामार्थसन्दीपिका)

SB. 19399, 19684

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।

सृष्ट्वाऽखिलं जगदिदं सदसत्स्वरूपं
शक्त्या त्वया त्रिपुरया परिपाति विश्वम्।
संहृत्य कल्पसमये रमते तथैका
तां सर्वविश्वजननीं मनसा स्मरामि।।२।।

कल्याणशैलपरिकल्पितकार्मुकाय
मौर्वीकृताखिलमहोदरनायकाय ।
पृथ्वीरथाय कमलापतिसायकाय
हालास्यमध्यनिलयाय नमः शिवाय॥३॥

जडाजडं जगत्सर्वं यस्याः पादसमुद्भवम्।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये॥४॥

वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्॥५॥

[1]करधृतवीणां वाणीं जगत्प्रवीणां प्रसूनभृतवेणीम्।
विद्वत्प्रवीणतास्यै(प्त्यै) शोभनवाणीमहं प्रणमे॥६॥

कृष्णं कलिमलमथनं कृतजलनिधिमन्थनं नूनम्।
कविकृतगुणगणकथनं वन्दे कंसादिमन्थनं नाथम्॥७॥

नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
ललितानामसाहस्रटीका प्रारभ्यते मया॥८॥

मया काशीनाथभट्टभट्टेन।

समाप्तौ—

श्रीमद्भास्करभाष्यदुर्गमसरिन्नानार्थबोधाकुलान्
बालान् वीक्ष्य भडोपनामक इमां गम्यार्थसंगुम्फिताम्।
काशीनाथपदाभिधो हि दयया युक्तोऽन्वकार्षं मुदा
तत्सारार्थतरं विमृश्य ललितानामार्थसन्दीपिकाम्॥

॥इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारपारीण-सर्वतन्त्र[ स्वतन्त्र ]-दक्षिणाचारतन्त्रधुरीण-श्रीमज्जयरामभट्टसूरिसूनुना काशीनाथेन शिवानन्दनाथेति दीक्षानामशालिना विरचितायां ललितासहस्रनामटीकायां नामार्थसन्दीपिकाभिधायां तृतीयः प्रकाशः॥३॥

यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः।
यावच्चन्द्रादित्यौ तावदियं पुस्तकं जयतु॥

॥श्रीदक्षिणामूर्तिशिवार्पणमस्तु॥

---

१. श्लोकद्वयमेतत् १९६८४ संख्याके ग्रन्थे नास्ति।

## ७१. वामाचारमतखण्डनम्

RASB.VIII.A. 6446; CHC. p. 460

वीरासनैकनिलयाय हिरण्मयाय
न्यग्रोधमूलगृहिणे निटिलेक्षणाय।
गङ्गाधराय गजचर्मविभूषणाय
प्राचीनपुंण्यपुरुषाय नम: शिवाय।।१।।

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रीवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।२।।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथ: प्रतनुते वामाचारस्य खण्डनम्।।३।।

।। इति श्रीमच्छ्रुतिस्मृतिमतप्रमाणपारावारपारीण-सर्वतन्त्र[ स्वतन्त्र ]दक्षिणाचारतन्त्रधुरीण-श्रीमद्दक्षिणामूर्तिचरणारविन्दमिलिन्देन श्रीजयरामभट्टभडात्मज-काशीनाथेन विरचितं वामाचारमतखण्डनं समाप्तम्।।

## ७२. विप्रानन्दतरङ्गिणी[१]

CHC. p. 464

## ७३. विरजादीक्षा

SB. 8715, 70483

अथ विरजादीक्षा[२]।

× × × × × ×

।।इति महापाशुपतदीक्षाविधानम्।।

काशीनाथ:[३]।

## ७४. वैदिकतान्त्रिकाधिकारिनिर्णय:

RASB.VIII.A. 6225; SB. 85597[४]; CHC. p. 459

---

१. प्रकाशितोऽयं ग्रन्थ: 'सरस्वतीभवनस्टडीज'-(VII. pp. 190-91) ग्रन्थमालायाम्।

२. स्कन्दपुराणे कालिकाखण्डे।

३. प्रतिलिपिकार इति प्रतीयते।

४. अत्र ३ बी-पत्रे अनन्तभट्ट उद्धृत:, यो हि ग्रन्थकर्तु: मातामहो वर्तते।

।।इति श्रीमद्भडोपनामकदक्षिणाचारमतप्रवर्तककाशीनाथेन विरचितो वैदिकतान्त्रिकाधिकारिनिर्णयः समाप्तः।।

।।श्रीललिताम्बार्पणमस्तु।। श्रीदक्षिणामूर्तिगुरुभ्यो नमः।।

## ७५. शक्तिपूजातरङ्गिणी

SB. 25295

।।इति श्रीमद्भट्टोपनामकशिवरामभट्टाङ्गजजयरामभट्टाभिधशिवभक्तसूनुमन्त्रशास्त्रप्रवीण-दक्षिणाश(चा)रमल(त)प्रवर्तककाशीनाथेन विरचिता शक्तिपूजातरङ्गिणी समाप्ता।।

## ७६(क). शरभतन्त्रटीका

SB. 24811

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।

शरभाख्ये महाकल्पे गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते।।

।।इति शरभेश्वरतन्त्रे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे यन्त्रपूजार्चनविधिर्दशमः पटलः।। ग्रन्थश्च सम्पूर्णः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## (ख). शरभेश्वरतन्त्रव्याख्या

SB. 85267

## ७७. शाक्तानन्दतरङ्गिणी

SB. 24791

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।

आनन्दपूर्णहृदयः सदयः सर्वजन्तुषु।
अचलेशो जगद्वन्द्यो ममास्तु किल रक्षणे।।२।।

कालिकां सकललोकपालिकां
लोहिताक्तगलमुण्डमालिकाम्।
भावयामि कविताप्रणालिकां
देहकान्तिजितमेघमालिकाम्।।३।।

नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते शाक्तानन्दतरङ्गिणीम्।।४।।

।।इति श्रीमद्भट्टोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता शाक्तानन्दतरङ्गिणी चन्द्रपुरपीठे समाप्ता।।

## ७८. शाम्भवाचारकौमुदी

RASB.VIII.B.6461; SB. 24792; CHC. p. 462

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।
श्रीचिदम्बरपादाब्जभ्रमरीभूतमानसः[१]।
काशीनाथः प्रतनुते शाम्भवाचारकौमुदीम्।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां शाम्भवाचारकौमुद्यां द्वितीयः प्रकाशः[२]।।

## ७९(क). शारदातिलकटीका

NP.III. 38, VI. 50; SB. 23977; CHC p. 459

अनन्ताख्यं गुरु नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
शारदातिलके तन्त्रे गुरूणामुपदेशतः।
गूढार्थादर्शटीकेयं काशीनाथेन तन्यते।।२।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां शारदातिलकटीकायां गूढार्थादर्शाभिधायां प्रथमः पटलः।।१।।[३]

---

१. 'मौलिनी(ना)। रच्यते काशिनाथेन शाम्भवाचारकौमुदी' इति पाठन्तरमिति—RASB. 6461.

२. पञ्चमः प्रकाशः। संवत् १८४९ काश्याम् इति—RASB. 6461 इत्यत्र दर्शनात्। ग्रन्थोऽपूर्णः प्रतिभाति।

३. पत्राणि १-१३, मध्ये खण्डिता।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां शारदातिलकटीकायां गूढार्थादर्शाभिधायां द्वितीयः पटलः।।२।।[1]

अस्यामेव मातृकायामधोलिखिता ग्रन्था अपि सन्ति—

श्यामाभक्तिसुधार्णवः, ग्रहमन्त्रप्रदीपिका, तन्त्रसारटीका, प्रपञ्चसारटीका।

## (ख). शारदातिलकटीका

NW. p. 224

काशीनाथः, पत्राणि ११४, पङ्क्तयः १८, कर्गदः, देवनागरीलिपिः।

## ८०. शास्त्रव्यवस्था

RASB.(?); CHC. p. 461

## ८१. शिवपूजातरङ्गिणी

Alwar. 2394. Extr. 671; SB. 9081; CHC. p. 463

विश्वनाथपदद्वन्द्वं निधाय हृदि सुन्दरम्।
काशीनाथः प्रतनुते शिवपूजातरङ्गिणीम्।।

।।इति श्रीमद्भडोपनामकजयरामसुत-वाराणसीगर्भसंभव-काशीनाथविरचिता शिवपूजातरङ्गिणी समाप्ता।।

## ८२. शिवभक्तिरसायनम्

RASB. VIII.B. 6458; CHC. p. 462

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।
अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।२।।
नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते शिवभक्तिरसायनम्।।३।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिते शिवभक्तिरसायने प्रथमोल्लासः।।........पञ्चमोल्लासः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

---

१. ७ पत्राणि अस्तव्यस्तानि।

## ८३. शिवभक्तिसुधार्णवः

A.S. p. 201. Proceed. ASB. 1869. 136; CHC. p. 462

## ८४. शिवमुक्तिप्रबोधिनी

RASB.VIII. B. 6460; CHC. p. 462

नमः शिवाय त्रिदशार्चिताय
विनष्टदोषाय गुणार्णवाय।
विमुक्तिमार्गप्रतिबोधनाय
वेदादिवेद्याय नमः शिवाय॥१॥

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रकुरुते शिवमुक्तिप्रबोधिनीम्॥२॥

॥इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता शिवमुक्तिप्रबोधिनी पुण्यग्रामे समाप्ता॥

॥मालवीयबालमुकुन्दस्येदं पुस्तकम्॥

## ८५. शिवसिद्धान्तमञ्जरी

RASB. VIII. B. 6457; CHC. p. 462

(द्रष्टव्या—"शैवसिद्धान्तमञ्जरी")

## ८६(क). शिवाद्वैतप्रकाशिका

IO. IV. 2513; RASB. VIII. B. 6454; CHC. p. 462

करैर्दधानं परशुं कुरङ्गं
वराख्यमुद्रामुपदेशमुद्राम्।
वटस्य मूले विबुधोपसेव्यः
सदा शिवायास्तु सदाशिवो वः॥१॥

वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मातृरूपेण सततं सहस्रारेऽखिलेष्टदाम्॥२॥

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्॥३॥

.............................................॥४॥

दुण्ढिराजं महोदेवीं नत्वा श्रीभारतीगुरुम्।
काशीनाथः प्रतनुते शिवाद्वैतप्रकाशिकाम्॥५॥

॥इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-शिवाराधक-काशीनाथविरचितायां शिवाद्वैतप्रकाशिकायां प्रथमोल्लासः॥

॥मालवीयबालमुकुन्दस्येदं पुस्तकम्॥

### (ख). शिवाद्वैतप्रकाशिका

RASB. VIII. B. 6455; SB. 61416; CHC. p. 462

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्॥१॥

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः॥२॥

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते शिवाद्वैतप्रकाशिकाम्॥३॥

॥इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता शिवाद्वैतप्रकाशिका नागपुरे भवानीपण्डितगृहे समाप्ता॥

### (ग). शिवाद्वैतप्रकाशिका

IO. 2635 B; CHC. p. 462

पत्राणि २०, प्रथमतः पञ्चपत्राणि न सन्ति, पंक्तयः १४-१५। द्वितीयोल्लासारम्भः—

अथोत्पत्तिं प्रवक्ष्यामि शैवशास्त्रानुसारतः।
निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः॥

॥ इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-दक्षिणामूर्ति-शिवाराधक-काशीनाथविरचितायां शिवाद्वैतप्रकाशिकायां तृतीयोल्लासः॥

## ८७. शिवार्चापद्धतिः

SB. 11310

॥इति श्रीशिवानन्दविरचिता शिवार्चाविधिपद्धतिः॥

## ८८. शिवाष्टाक्षरपद्धतिः

SB. 11717

काशीनाथेन सुधिया दक्षिणामूर्तिसेविना।
अष्टाक्षरस्य संक्षिप्ता क्रियते पद्धतिः शुभा।।

।।इति शिवाष्टाक्षरपद्धतिः संक्षिप्ता।। संवत् १८८६, मिति भाद्रवदि ७ समाप्तः।।

## ८९. शैवसिद्धान्तमञ्जरी

SB. 26235

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय शिवाय गुरवे नमः।।१।।

पराप्रासादमन्त्रोद्यत्सच्चिदानन्दतेजसे।
अग्नीषोमस्वरूपाय साम्बिकाय नमोऽस्तु ते।।२।।

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रतनुते शैवसिद्धान्तमञ्जरीम्।।३।।

समाप्तौ—

ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिन्तनम्।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम्।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचिता शैवसिद्धान्तमञ्जरी समाप्ता।।

AS. 6457—

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते शिवसिद्धान्तमञ्जरीम्।।२।।

## ९०. शैवसिद्धान्तमण्डनम्

RASB. VIII. B. 6456; CHC. p. 462

ज्योतिर्मात्रसदानन्दनिर्मलज्ञानरूपिणे।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये।।१।।

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रतनुते शैवसिद्धान्तमण्डनम्।।२।।

।। इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितं शैवसिद्धान्तमण्डनं समाप्तम्।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ९१. श्यामाभक्तिसुधार्णवः

SB. 23977

।।इति श्रीमच्छ्रुतिस्मृतिपुराणमतप्रमाणपारावारपारीण-सर्वतन्त्र[ स्वतन्त्र ]-दक्षिणाचारतन्त्रधुरीण-जयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथविरचिते श्यामा-भक्तिसुधार्णवे सप्तमस्तरङ्गः।।७।।

अत्र ३० पत्राणि, १–१० पत्राणि न सन्ति। मध्ये-मध्ये च खण्डितो ग्रन्थः।

## ९२. श्राद्धनिर्णयदीपिका

SB. 12574

नत्वा श्रीदक्षिणामूर्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते श्राद्धनिर्णयदीपिकाम्।।

अपूर्णोऽयं ग्रन्थः।

SB. 13786

अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम्।
शास्त्रवल्लीजलधरं स्फुरत्कीर्तिकरं परम्।।१।।

अनाद्यायाखिलाद्याय मायिने गतमायिने।
अरूपाय सरूपाय दक्षिणामूर्तये नमः।।२।।

नत्वा श्रीशङ्कराचार्यचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते श्राद्धनिर्णयदीपिकाम्।।३।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां श्राद्धनिर्णयदीपिकायां षोडशश्राद्धादि सप्तमः प्रकाशः समाप्तः।। साम्बशिवार्पणमस्तु।।

।।हस्ताक्षर दवेत्युपनामरङ्गनाथात्मजदीनानाथेन कानूयां संवत् १८७३, श्रावणशुद्ध १४, भौमवासरे ग्रन्थः समाप्तः।।

## ९३. श्रीविद्यान्यासदीपिका

SB. 25475

कामराजपदद्वन्द्वं निधाय हृदि सुन्दरम्।
रच्यते काशिनाथेन श्रीविद्यान्यासदीपिका।।

।।इति भडोपनामककाशीनाथकृता श्रीविद्यान्यासदीपिका समाप्ता।। श्रीललिताम्बार्पणमस्तु।।

## ९४. श्रीविद्यामन्त्रदीपिका

RASB. VIII. A. 6345; CHC. p. 464

नमामि कामेश्वरपादपङ्कजं
करोमि कामेश्वरपूजनं सदा।
वदामि कामेश्वरनाम निर्मलं
स्मरामि कामेश्वरनाथमव्ययम्।।१।।

नत्वा ब्रह्ममयीं देवीं सच्चिदानन्दरूपिणीम्।
ब्रह्मेशविष्णुजननीं भक्तानुग्रहविग्रहाम्।।२।।

दक्षिणामूर्तिपादाब्जभ्रमरीभूतमौलिना ।
रच्यते काशिनाथेन श्रीविद्यामन्त्रदीपिका।।३।।

।।इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथापरपर्यायविश्वनाथविरचिता श्रीविद्यामन्त्रदीपिका समाप्ता।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ९५. श्रुत्युक्ताचारकौमुदी

SB. 24810

ॐकारस्थं कल्पवृक्षस्य मूले
दीप्ताकारं रत्नसिंहासनस्थम्।
चूडाचन्द्रं पञ्चवक्त्रं त्रिनेत्रं
दिव्याकल्पं श्रीगुरुं तन्नमामि।।१।।

विश्वेश्वरीं नमस्कृत्य मातरं पितरं तथा।
काशीनाथः प्रतनुते श्रुत्युक्ताचारकौमुदीम्।।२।।

।।इति श्रीमद्धडोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथ-विरचितायां श्रुत्युक्ताचारकौमुद्यां कालीतारामन्त्रविधानाख्योऽष्टमः प्रकाशः।। इति पूर्वार्धः।।

।।मालवीयबालमुकुन्दस्येदं पुस्तकम्।।

## ९६. षोडशावरणम्

RASB. II. 779

महारुद्रार्चनपद्धतिरियम्।

## ९७(क). संक्षेपाह्निकचन्द्रिका

SB. 11358

प्रणम्य मातरं गङ्गां दक्षिणामूर्तिशङ्करम्।
जयरामाख्यपितरं श्रौतस्मार्तविशारदम्।।
काशिनाथेन सुधिया सारमुद्धृत्य शास्त्रतः।
शिष्टानां तन्यते तुष्ट्यै संक्षेपाह्निकचन्द्रिका।।

।। इति श्रीभट्टोपनामकजयरामभट्टसुत-वाराणसीगर्भसंभव-काशीनाथविरचिता संक्षेपार्चनचन्द्रिका समाप्ता।।

।।सं. १९१०, शके १७७५ प्रमादिनामसंवत्सरे........इदं पुस्तकं विश्वनाथात्मजहरभट्टमयूराश्वोपनाम्ना पुण्यस्तम्भनिवासिना फणिपुरे लिखितं शुभं भवतु।।

## (ख). संक्षेपाह्निकचन्द्रिका

SB. 13120

आदौ खण्डिता। समाप्तिः ११३५८ समाना। इयान् विशेषः—

शैलाग्न्यद्रिवसुन्धरामितशके १७३७ मासे मघौ चासिते
पक्षे वह्न्यधिपाख्य १ तिथ्यसहिते चाह्नाधिपे वासरे।
व्याघाते युजि तैतिलाख्यकरणे पञ्चाङ्गमेतन्मया
संक्षेपाह्निकचन्द्रिका हि लिखितं(ता) विद्वन्मनोह्लाशिने(दिनी)।।१।।

स्वकार्ये परकार्ये वा गुरुदत्ताख्यधीमता।
लिखेन्मेतत्पुरे(?) रम्ये गोपालाख्येषु चैष हि॥२॥
सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते [तु] कलौ युगे।
नानुतिष्ठन्ति मैत्रेयी शिश्नोदरपरायणा:॥३॥

## सङ्केत-सूची

Adyar = A Catalogue of the Sanskrit Manuscripts in the Adyar Library.

Alwar = Catalogue of the Sanskrit Manuscripts in the Library of His Highness the Maharaja of Alwar by Peter Peterson. Bombay, 1892.

America = A Census of Indic Manuscripts in the United States and Canada by H.I. Polemen, 1938.

AS = Catalogue of Printed books and Manuscripts in Sanskrit belonging to the Oriental Library of the Asiatic Society of Bangal. Calcutta, 1904.

ASB = A Descriptive Catalogue of Sanskrit Manuscripts of the Asiatic Society, Calcutta.

Baroda = An Alphabetical List of Manuscripts in the Oriental Intitute, Baroda, 1942 & 1950.

BISM = Two lists of Sanskrit Manuscripts in Bhārtīya Itihās Saṁsodhak Maṇḍal, Poona.

Bomb Uni = A Descriptive Catalogue of the Sanskrit and Prakrita Manuscripts in the Library of the University of Bombay, 1944.

BORI = Manuscripts in the Bhandarkar Oriental Research Institute, Deccan Gymkhana, Poona.

BP = Report on the search for Sanskrit Manuscripts in the Bombay Prisidency during the year 1883-84. By R.G. Bhandarkar, Bombay, 1887.

CHC = "Kashinath Bhatt and his Works"—Chintaharan Chakravarti, JASB, Letters 1938, pp. 455-65.

D = A Catalogue of the collections of Manuscripts deposited in the Deccan College, By Shridhar R. Bhandarkar, Bombay, 1888.

IM = A hand list of the 11286 Sanskrit Manuscripts in the Indian Museum, Calcutta.

IO = A Catalogue of Sanskrit and Prakrit Manuscripts in the Indai Office Library, London.

K = A Catalogue of Sanskrit Manuscripts existing in the Central Provinces, Nagpur, 1874.

L = Notices of Sanskrit Manuscripts, By Rajendralala Mitra, Calcutta, 1871-90.

NP = A Catalogue of Sanskrit Manuscripts in Private Library in the North-Western Provinces, Allahabad, 1877-86.

NW = A Catalogue of Sanskrit Monuscripts in the Private Library of North-West Provinces, Part I, Banaras, 1874.

Oudh = Catalogue of Sankrit Manuscripts existing in Oudh. Compiled by Pandit Deviprasad.

Peters = Reports on the Search for Sanskrit Manuscripts by Peter Peterson.

PUL. = A Catalogue of Sanskrit Manuscripts in the Punjab University Library, Lahor, 1932, 1941.

RASB. = A Descriptive Catalogue of the Sankrit Manuscripts in the Goverment collection under the care of Royal Asiatic Society of Bangal.

Rgb. = Report on the search for Sanskrit Manuscripts in the Bombay Presidency by Ramkrishna Gopal Bhandarkar, Bombay, 1894.

SB = A Descriptive Catalogue of the Sanskrit Manuscripts, Sarasvati Bhavan, Varanasi.

Stein = Catalogue of the Sanskrit Manuscripts in the Raghunatha Temple of His Highness of the Maharaja of Jammu & Kashmir, Prepared by M.A. Stein, Bombay, 1894.

Ujjain = A Catalogue of the Manuscripts in the Oriental Manuscripts Library (Prācya Granth Saṅgraha, now colled Scindia Oriental Institute), Ujjain.

Varendra = A hand-list of 1935 Manuscripts in the Varendra Research Society, Rajshahi, Bangal.



महामहिमश्री ५ काशीनरेशैः क्रियमाणं श्रीशास्त्रिपादानां सम्माननम्

# श्रीभास्कररायास्तेषां भावनोपनिषद्भाष्यञ्च

**डॉ. राजनाथत्रिपाठी**

उपाचार्यः, सांख्ययोगतन्त्रागमविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी



स जयति भास्कररायो यत्पादपङ्कजस्मरणेन।

स्फुरन्ति त्रिन्मरीचयः समुदेति परा ललिताम्बा।।

वैदिकागमिकपन्थानौ लोकपरलोकसाधनपरौ सर्वथा इष्टसाधनं विधत्तः। तत्रापि लघुनोपायेनागममार्गः स्वल्पेन साधनेन स्वल्पश्रमेणैव देशकालादिवशादिदानीं सर्वेष्टसाधको भवतीति न तिरोहितं प्रेक्षावद्भिः। किञ्च तत्तच्छास्त्रेषु तत्तदुपदेशात् क्वचिल्लोकविद्या क्वचिच्च परलोकपन्थान एव साध्यतां यान्ति, परं तन्त्रागममार्गो नूनं स्ववैशिष्ट्येनोभयविधेष्टसाधकतां धत्ते इत्यभियुक्तवचोभिर्ज्ञायते। तद्धि—

यत्रास्ति योगो न हि तत्र भोगो यत्रास्ति भोगो न हि तत्र योगः।

श्रीसुन्दरीसाधनतत्पराणां योगश्च भोगश्च करस्थ एव[१]।। इत्युक्तम्।

एवं त्रिपुरसुन्दर्याः साधनस्यानेके पन्थानोऽत्र शास्त्रे सन्ति निर्दिष्टास्तत्र को मार्गः समालम्बनीय इति जिज्ञासायामुच्यते देव्यथर्वशिरसि—'एषा आत्मशक्तिः। एषा विश्वमोहिनी। पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या। य एवं वेद स शोकं तरति' इति। अतः श्रीमहाविद्यायाः साधनं सर्वविधदेव्युपासनमार्गेषु सर्वेष्टसाधकं सच्चरमे मोक्षं प्रयच्छति। अतस्तज्ज्ञानायाराधनाय च श्रीभास्करराया दयालवः श्रीविद्यातत्त्वं साक्षात्कृत्य लोकमुपादिदिशुः।

तच्चोपासनमान्तरबहिर्भेदेन द्विविधं सत् स्थूल-सूक्ष्म-पररूपभेदेन त्रिविधं तत्क्रियाऽपि कायिक-वाचिक-मानसभेदेन त्रिधा सिद्धा। सा चोपासनत्वेन

---

१. रुद्रयामलवचनम्।

नामरूपभेदघटितं किमपि वस्त्वेव ग्रहीतुं शक्यते। तथा च तदुपास्यमूर्ति-तद्वाचकनाम-तन्मननसाधकमन्त्र-तन्त्र-यन्त्रादीनां स्वरूपावगमो जायते। एवञ्च मन्त्र-तन्त्र-यन्त्र-पूजासङ्केतकबोधकं श्रीविद्यारहस्यदीपिकाभूतग्रन्थजातं परश्शतमुपलभ्यते, तन्मध्ये श्रीभास्कररायभाष्यभूता ग्रन्थाः परिज्ञानाय प्रस्तूयन्ते। ते च यथा—

१. खद्योतवार्तिकम्, २. नाथनवरत्नमाला, ३. कौलोपनिषद्व्याख्या, ४. भावनोपनिषद्भाष्यम्, ५. त्रिपुरोपनिषद्भाष्यम्, ६. शिवनामकल्पलतालवालः, ७. तृचभास्करः, ८. वरिवस्यारहस्यम्, ९. दुर्गासप्तशत्या गुप्तवती टीका, १०. सौभाग्यभास्करः, ११. योगिनीहृदयस्य सेतुबन्धटीका च विशिष्टरचनाः सन्ति। एतदतिरिक्ता आचार्यपादानां काश्चनान्या रचनास्तासां नामानि यथा—

१. पूर्वमीमांसावादकुतूहलम्, २. चन्द्रलाम्बामाहात्म्यम्, ३. भाट्टचन्द्रिका, ४. वृत्तचन्द्रोदयश्च सन्ति।

लघुरचनासु—१. श्रीगुरुस्तवारार्तिकम्, २. श्रीत्रिपुरसुन्दर्या आरार्तिकम्, ३. शिवाष्टकम्, ४. शिवदण्डकम्, ५. बिल्वसमर्पणाष्टकम्, ६. बाह्यवरिवस्याविधिप्रभृतयो दरीदृश्यन्ते। एवं क्रमेण समाकलने सति एकविंशतिसंख्याका रचना आचार्यपादानां माहात्म्यमुपस्थापयन्ति।

एवमत्र विशेषतोऽवधेयं यद् उपासनन्नाम न केवलमाराध्यदेवदेवतास्वरूपज्ञानपूर्वकं तत्तोषाय क्रियमाणं यत्किमपि कर्म, 'स्थाणुरयं भारहारः किलाभूत्' इतिवत् तत्पर्यवस्येत्। तस्मादुपासने किमप्यान्तरतत्त्वमपेक्ष्यते, तत्तत्त्वमेव क्रमेण भक्तितत्त्वमुच्यते। सा च भक्तिस्तदा स्थिरा भवति यदाऽर्थावगमपूर्वकं स्वं स्वं विहितं कर्म कुर्वाणः साधकः, कर्मणा परिशुद्धचित्तो लोकेनात्यन्तमसक्तो न वा सक्तः, आराध्यविषयिणीं प्रीतिं वहति। आराध्यविषयिण्या वृत्त्या क्रमेण साधकान्तःकरणमाराध्याकाराकारतया परिणमति। सा हि वृत्तिरुद्भिन्ना प्ररोहति, सैव भक्तिरित्युच्यते। तदुक्तं भागवते—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु[1]।। इति।

एवमनुस्यूताऽऽराध्य स्मृतिर्निरुपाधिका सती 'मयि चानन्यभावेन भक्तिरव्यभिचारिणी' आराध्यस्यैव लक्ष्यमाणस्वरूपा भक्तिरुच्यते। सैव भक्तिः 'सा परानुरक्तिरीश्वरे'[2] इत्यनेन विविच्यते।

एवं हि तां भक्तिभूमिकामारुरुक्षुरुपासनं साधनतया प्रथमं स्वीकुरुते।

---

१. श्रीमद्भागवते, नृसिंहचरिते प्रह्लादोक्तिः; २. शाण्डिल्यभक्तिसूत्रम्।

भक्तिभूमिकामारूढोऽपि तदेवोपासनमनुवर्तते उपास्यस्यानन्यतासिद्धये। सा च नवविधा शास्त्रेषूपदिष्टा।

इत्थं च 'भक्तिर्द्विविधा गौणी मुख्या च। तत्राद्या सगुणदेवताध्यानार्चन-जपनामकीर्तनादिरूपा सम्भवत्समुच्चायिका। मुख्या चैतज्जन्मानुरागविशेषरूपा'[१] इति। उपासनञ्च देवतान्तरङ्गभूतं भक्तिश्च प्रथमं सगुणे इष्टदेवे एव घटेते। ततो नामरूपपुरस्सरं देवतां ध्यायतस्तद्गतचित्तवृत्तेस्तदात्मकचित्तवृत्तिः समुत्पद्यते। ततोऽपगतभेदोपाधिभूतनामरूपकल्पनं, तदेव देवतातत्त्वं, साधकस्य पुरत आत्मानमुपस्थापयति कृपयेत्यनुभवविदामभिमतम्।

उपासनपद्धतिश्च तान्त्रिक-वैदिक-मिश्रभेदेन त्रिधा सङ्गच्छते। तत्रापि मिश्राचाराधाराश्रितैव साधकैराद्रियते, वैदिककाले चित्तवृत्तिनिरोधासम्भवात्। अतो देवीमानसपूजास्तुतौ भगवता शङ्कराचार्येणोक्तम्—

मन्त्रान् तान्त्रिकवैदिकान् परिपठन् सानन्दमत्यादरात्।
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु।। इति।

अतस्तान्त्रिक-वैदिकयोर्न मिथो विरोधः, प्रत्युत परस्परमुपकार्योपकारकता च सर्वत्र प्रसिद्धा।

तान्त्रिक्यपि बहुप्रकारा स्वकीयदेहगताङ्गप्रत्यङ्गेषु स्फुरन्तीमूर्जमन्यामन्यां शक्तिं भगवत्याः स्वरूपतया विभाव्य तत्तच्छक्त्याराधनभूता भावनाप्रकारा एकत्र, तां देवीं स्वाराध्यां स्वस्माद्भिन्नामाकलय्य तस्या मूर्तिभूतायास्तदनुरूपस्नानोद्वर्तन-वस्त्रधारणभूषणभोजनविश्रामादिसपर्याप्रकारा अन्यत्र शिवशक्त्योरैक्यरूपत्वेन परत्र, कामराजाङ्कगतत्वेन पञ्चप्रेतासनस्थितत्वेन चैकत्र, नीरूपेत्यन्यत्र, क्वचिच्च तेजः-पुञ्जतया, क्वचिदेकरूपेणेत्यादिदेवतास्वरूपभावनानुरूपाः सपर्याक्रमा विविधा दृश्यन्ते। तत्तन्मार्गानुयायिनोऽन्येऽन्ये इत्येकत्र, एक एव साधकस्त-त्तत्कालिकस्वमनोवृत्त्यनुरूपं धारणोपयोगितया विविधोपासनप्रक्रियाभिराराधयती-त्यन्यत्र इत्येवं तत्तन्मार्गा विविधा अपि एकामेव परां देवतां श्रीविद्यापराभट्टारिकां श्रीविद्योपासनमार्गेणाभिगच्छन्ति। एतन्निखिला अपि उपासनपद्धतयः सर्वथा स्वांशे प्रतिफलन्तीति शङ्कराचार्यभास्कररायप्रभृतयो गुरवः प्रतिपादयन्ति। न तत्र कुत्रापि परस्परं विरोधः। एवं त्रिपुरसुन्दर्या ललिताम्बायाः श्रीविद्येत्यपरनामधेयाया आराधनमनुवर्तनञ्च तन्त्रागमपद्धतौ सङ्गच्छते।

**श्रीभास्कररायदीक्षितसोमयाजिनां संक्षिप्तः परिचयः**

तत्रभवतां परमास्पदं गतानामाचार्यभास्कराचार्याणामवतार आदिशङ्कराचार्य-

---

१. योगिनीहृदये, सेतुबन्धटीकायां भास्कररायपादाः प्राहुः।

भगवत्पादानामन्वय एव जात इति भारतीयसनातनवैदिकपरम्परास्थापन-परत्वेनाचार्यचरितस्य रहस्यमेतत्कृतग्रन्थानामालोडनेन ज्ञायते। अत्र ह्यन्तर्बहिःसाक्ष्यसापेक्ष्येणेदं वक्तुं पार्यते यन्महाभागानामवतारो वेदशास्त्रोद्धाराय, लोककल्याणाय, सनातनवैदिकमार्गानुसारितन्त्रागमराद्धान्तानां रहस्यप्रकाशनाय, तत्क्रियाणाञ्च पुनः प्रतिष्ठानाय जातः। एते विश्वामित्रगोत्रीया महाराष्ट्रदेशीया ऋग्वेदस्याश्वलायनशाखावलम्बनीया आसन्। एतेषां पूर्णं नाम 'श्रीभास्कररायदीक्षितसोमयाजी' इत्यासीत्। एतेषामावासः कर्णाटकप्रान्तस्य 'बीजापुर'राज्ये आसीत्। पूर्णमध्ययनं 'श्रीनृसिंहाध्वरि' इति गुरुभिः सम्पन्नम्। पितुर्नाम 'श्रीगम्भीररायदीक्षितः' तथा मातुर्नाम 'कोणाम्बिका' इत्यासीत्। दीक्षागुरवो गुर्जरप्रान्तीयाः 'सूरत' इति स्थानवास्तव्या 'श्रीशिवदत्तशुक्लाः' अभूवन्। पूर्णाभिषेकान्ते आचार्याणां दीक्षानाम 'भासुरानन्दनाथ' इति बभूव। एतेषां जीवनवृत्तविषयकविशेषाख्यानं बहुग्रन्थेषूपलभ्यते, परं सर्वं तत् सङ्कलय्याचार्य-श्रीबटुकनाथशास्त्रिविरचिते 'श्रीभास्कररायभारतीदीक्षित-व्यक्तित्व एवं कृतित्व' इति ग्रन्थे साङ्गोपाङ्गतया विवृतं विद्यत इति। तेषामवस्थानं पञ्चसप्तत्युत्तर-षोडशशतखीष्टाब्दे (१६७५ई.), पररूपप्राप्तिश्च अष्टषष्ट्युत्तरसप्तदशशतके (१७६८ई.) बभूव। विशेषतश्च जिज्ञासुभिस्तत एवावगन्तव्यम्।

**भास्कररायाचार्या भावनोपनिषच्च**

भावनोपनिषत् षट्त्रिंशच्छुत्यात्मिका। तत्र हि भावनाविषये चतुस्त्रिंशच्छुतावुक्तम्—'एवं मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति, स एव शिवयोगीति गद्यते' इति। तत्र च भास्कररायभाष्ये—'एकमित्यनेनाव्यवहितपूर्वोक्ता स्वात्ममात्रविषयिणी स्वासंस्तम्भसहिता निर्विकल्पकवृत्तिरुच्यते, तदभिन्नभावनायां परस्तत्रैवासक्तो भावनेतरव्यापारशून्यो धारावाहिकभावनावानिति यावत्। स जीवन्मुक्तिरूपफलभाग् अचिरादेव जायते। जैगीषव्यादयश्शिवयोगित्वेन ये व्यवह्रियन्ते तेऽप्येतादृशा भावनाशालित्वादेवेति तत्पदप्रवृत्तिनिमित्तमीदृशभावनेत्यर्थः' इत्युक्तम्। एतेन शिवयोगित्वेन शिवे निर्विकल्पसमाधित्वेनावस्थितस्य जीवन्मुक्तस्य योगिनोऽवस्थानं नाम भावना इत्याचार्याणां भावोऽभिव्यज्यते। सा च भावना अन्तर्बहिर्भेदेन द्विविधा। बहिर्भेदेन चक्रस्यानन्योपासकतया सविकल्पकसमाधिद्वारा चक्रेश्वर्याः सर्वविधसमर्पण-स्यानन्यभावः। अन्तर्मुखेन तस्यामेव भूमिकायामवस्थानं निर्विकल्पक-भावेनावस्थानम्। तत्तु जीवन्मुक्तस्यैव सम्भवतीति। चक्ररहस्य-ज्ञानायैवाचार्याणां प्रभूततराः प्रयासाः सेतुबन्धटीकायाम्, सौभाग्यभास्करे, वरिवस्यारहस्यादौ च सर्वत्रानुस्यूता दृश्यन्ते। एतत्सर्वमाकलय्यैतदेव वक्तुं शक्यते यच्चक्रसङ्केते प्रोक्तं चक्रं द्विविधं बाह्यमाभ्यन्तरं च। बहिश्चक्ररूपिण्या ललिताम्बाया अपरं नाम

श्रीविद्या, यस्या आराधनं बहिर्यागः, अन्तश्चक्ररूपिण्या देव्या आराधनमन्तर्यागः। तच्चान्तश्चक्रं कुण्डलिन्यधिष्ठानं षट्चक्रमयम्। तत्रान्तर्यागभावनामयी अम्बा तत्त्वासना सती तत्त्वमयी षट्चक्रोपरि स्थिता विसतन्तुतनीयसी शिरःस्थिता चन्द्रनिभा, भालस्था इन्द्रधनुःप्रख्या, हृदयस्था रविप्रभा, तडिल्लतासमरुचिस्त्रिकोणान्तर्गतदीपिका इत्येवं भावना चक्रमयी परापराम्बास्वरूपमुपपद्यते।

**तन्त्रसङ्केतः**

मननकर्तृकत्राणकर्मकाश्च मन्त्राः। तदुक्तं पद्धत्याम्—मननत्राणकर्माऽसौ मन्त्रोऽयं परिकीर्तित इति।

तस्मान्मन्त्राश्चिन्मरीचयः। मन्त्रसङ्केतपदे सङ्केत इत्यज्ञातार्थे 'क'प्रत्ययः। तन्त्रागमराद्धान्ते मनुशब्दो मन्त्रबोधकत्वेनोपयुज्यते। स्त्रीदेवतायाश्च मन्त्रा विद्यापदेनाभिधीयन्ते। ते च मन्त्राः शिवाद् विनिर्गता तत्तद्देवतारूपाधायकाः साधकानामिष्टप्रदा भवन्ति। तदुक्तं स्वच्छन्दतन्त्रे—

मन्त्राख्यं तु महाज्ञानमीशानात्तु विनिर्गतमिति।

एवं हि—

सद्योजातस्तु ऋग्वेदो वामदेवो यजुः स्मृतः।
अघोरः सामवेदस्तु पुरुषोऽथर्व उच्यते।।
ईशानश्च सुरश्रेष्ठः सर्वविद्यात्मकः स्थितः[1]।।इति।

महार्थमञ्जर्यां तु—

मननमयी निजविभवे निजसङ्कोचमयी त्राणमयी।
कवलितविश्वविकल्पा अनुभूतिः काऽपि मन्त्रशब्दार्थः[2]।।इति।

अत एव प्रतिफलति—चित्तं यदा हि बाह्यवेदसमूहसंहृत्यान्तर्हितचिद्रूपतां सहाभेदमामर्शयति तदा मन्त्रो येन सह सामरस्यमाधत्ते एतादृगाराधकस्य चित्तं मन्त्र इत्युच्यते। तदुक्तं स्वच्छन्दे—

शब्दब्रह्मस्वरूपेयं शब्दातीतं तु जप्यते[3]।। इति।

किञ्च मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वरादिषु सप्तप्रमातृषु शुद्धविद्यातत्त्वं मन्त्रप्रमातृत्वेन मन्त्र इत्युच्यते आगमसम्प्रदाये। एतदेव तत्त्वं नेत्रतन्त्रस्यैक-

---

१. स्वच्छन्दतन्त्रे, एकादशपटले ४५, ४२, ४३ श्लोकाः।

२. महार्थमञ्जर्याम्, ४८;    ३. स्वच्छन्दोद्योते, ४३।

विंशाधिकारे समारोहेण प्रकाशितं विवृतञ्च दृश्यते। एवं हि श्रीक्रमे त्र्यक्षरी, नवाक्षरी, पञ्चदशी, षोडशीति विधानेन मन्त्रविधानं सङ्गच्छते।

**पूजासङ्केतः**

पूजा नाम सपर्या। देवताया आन्तरबहिर्भेदेनाधिकारिभेदात् पूजाभावभेदो भवति। तदुक्तं योगिनीहृदये पूजासङ्केतस्यादौ मन्त्रे—

पूजासङ्केतमधुना कथयामि तवानघे।
यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते[१]।। इति।

सौन्दर्यलहर्यां तु—

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु मे विलसितम्[२]।। इत्युक्तम्।

अत्रायं निष्कर्षः—हे मातः! यन्मे विलसितं तत्सर्वं सपर्यापर्यायो भवतु। आवाहनादिरूपविरचितं भवतु, तदुक्तं जल्पो जपो भवतु। जपं विना वाग्विलासो माभूदित्यर्थः। तथैव सकलमपि शिल्पं मुद्राविरचना भवतु। मुद्राविरचनामन्तरा क्वचिद् व्यापारो मास्त्वित्यर्थः। तथैव गतिः प्रादक्षिण्यक्रमणमस्तु। प्रदक्षिणमन्तरा गतिर्मास्त्वित्यर्थः। तथा अशनादि आहुतिविधिरस्तु। आहुतिविधिं विना अशनं माभूदित्यर्थः। एवं संवेशः प्रणामोऽस्तु। प्रणामं विना संवेशो मास्तु। तथैवात्मार्पणधिया अखिलं समग्रं सुखमस्तु। तत्त्वन्तु त्वयाभिन्नस्यात्मनो यत्समर्पणं तत्सर्वं सुखमेव भवत्विति। समर्पणभावविषये गीतायामप्युक्तम्—

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्[३]।। इति।

जपश्च उच्चारणोपांशुर्मानसात्मकः। अजपाजपश्च मानस एव। अत एवात्र भावः प्रतिफलति—ननु यदि मूलप्रकृतिरूपिणी श्रीललितामहाभट्टारिका सर्वव्यापिनी विनिश्चिता तदा तस्या गन्ध-पुष्प-धूप-दीप-नैवेद्यादिपञ्चोपचारप्रारम्भे षोडशोपचार-विंशति-चतुःषष्टिसंख्यैः फल्गुभिः परिमितैरनित्यद्रव्यपरिकल्पितैरुपचारैः किं प्रयोजनम्। स्वेच्छया सर्वत्रैव सर्वदा सुलभैः पदार्थैर्यदि पूजनं भवति

---

१. योगिनीहृदये, पूजासङ्केते, १।

२. सौन्दर्यलहर्याम्, २७; ३. भगवद्गीतायाम्, ९।२७।

तदैव तस्याः परितोषो महत्या देवताया महापूजयैव परितोषलाभात्। तत्र हि द्विविधा पूजा—अल्पसारा महासारा च। अल्पसारा फल्गुप्रयोजना, पुनः कर्मफल-मालिन्यजननी धूपादि, महासारा तु मनोभावनिवेदिता परिमिता विच्छिन्नतत्त्वरूप-भावना पूजा। तामनुप्रविष्टानां महापुरुषाणां सा भगवती प्रत्यक्षमेव दृश्यमान-मूर्तिर्जायते। सा खलु पूजा अवधूतसंन्यासिनामेव सम्भवति। सा चेत्पूजा न प्रकाश्यते तदाऽखण्डज्ञानसिद्धानां तदनुरूपपूजासिद्धौ का गतिः स्यात्। तस्मादन्तर्मुखी महासारा पूजा तव स्वरूपे उपकल्पयामि। अतोऽत्रत्यसमग्रस्य स्तुतिभावस्यायमेवाभिप्रायो यद् हे अम्ब! मम यद्यद् विलसितमस्ति तन्निखिलमपि तव सपर्यापर्यायो भवत्विति।

एवं भगवत्याः पराम्बात्रिपुरसुन्दरीललिताम्बायाः श्रीविद्या इत्यपर-नामधेयायाः सामान्येन नानाग्रन्थोदितस्वारस्यं यत्किञ्चिन्निवेद्य भावनोपनिषदुक्तं मानसोपचारपुरस्सरं योगिजन्यार्चनस्वरूपं किञ्चिदुद्भाव्यते—

भावनोपनिषदि प्रतिपादिता भावना जीवन्मुक्तिपरा। कायिक-वाचिक-भावनाभिर्मानसभावनाभावेनान्तर्गतपराम्बापूजनपरा योगिनो जीवन्मुक्ताः सन्तोऽनु-श्वासं तामेव मानसीं सपर्यामभिकृत्य यजन्ते। तदुक्तं चन्द्रज्ञानविद्यायाम्—

सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम्।
पाशाङ्कुशधनुर्बाणान् धारयन्तीं प्रपूजयेत्।। इति।

यत्तु कायिकवाचिकविधिभ्यां त्रिपुरतापिन्युपनिषदुपदिष्टो पूजाविधिस्तु सामान्य-मध्यमसाधकैराचरणीयं भवति। एताभ्यामाचाराभ्यां तोषिता भगवती सूक्ष्म-स्वरूपावरणभङ्गा सामरस्यभावापन्ना योगिज्ञानध्यानजपपूजाश्रया भवति। तस्या एवैतत् क्रिया शिवयोगिभिः कथमाचरणीया भवतीति भावनोपनिषदिममेव विषयं व्यनक्ति। तथा च कालचक्रान्तर्गतश्रीचक्रस्य भावनासपर्या कथमुदेतीति विमर्शे भावनोपनिषद्युक्तं भवति—'श्रीगुरुः सर्वकारणभूता शक्तिः' 'तेन नवरन्ध्ररूपो देहः'[१] इति।

इह भावनामयी सपर्या यद्यपि कादिमत-कौलमतभेदेन द्विविधा, तथापि भावनोपनिषदि कादि(कामराज)मतानुसारेणैव भगवत्याः स्वरूपनिरूपणमुपपन्नम्। कादिमतेनान्तश्चक्रभावना प्रतिपादिता—'य एवं वेद सोऽथर्वशिरोऽधीते'[२] इत्युपसंहारात्। अतः कादिमतमनुसृत्य भास्कररायाचार्यैर्भावनोपनिषद्भावनोपनिषद्-भाष्यमुपबृंहितम्।

---

१. भावनोपनिषदि, १-२।

२. तत्रैव, ३६।

श्रुतौ 'सर्वकारणभूता शक्तिरेव गुरुः' 'तेन नवरन्ध्ररूपो देहः' इत्यत्र वर्णिता आद्याशक्तिरेव सर्वकारणभूता गुरुर्भवति। यदुक्तं तन्त्रराजे—

गुरुराद्या भवेच्छक्तिः सा विमर्शमयी मता।
नवत्वं तस्य देहस्य रन्ध्रत्वेनावभासते।। इति।

अत्र श्लोके आद्या एव सर्वकारणभूता कारणस्य कार्यपूर्वभावित्वेनाद्यत्वात्। ईश्वरानुग्रहेण जायमानो विवेक एव सर्वसंशयभेदेन मन्त्रवीर्यप्रकाशनेन तात्त्विकपदार्थानामवकाशप्रदानाद् विमर्शपदाभिधेयो गुरुः। गुर्वभिन्नरन्ध्रवान् इति। शिवसूत्रे च 'गुरुरुपायः' इत्युक्तम्। शिवसूत्रस्य वार्तिककृता च—

गुरुरेव पराशक्तिरीश्वरानुग्रहात्मिका।
अवकाशप्रदानेन सैव यायादुपायताम्।।
अकृत्रिमाहमामर्शस्वरूपाद्यन्तवेदनात्।
परमेष्ठिसमत्वेन परमोपायता गुरोः।। इत्युक्तम्।

मालिनीतन्त्रे च—

गुरुर्मनसमः प्रोक्तो मन्त्रवीर्यप्रकाशकः। इत्याद्युक्तम्।

तस्मात् तादृशविवेकाख्यवृत्त्यवच्छिन्नचिच्छक्तिस्तु प्राणशक्तिविहारावसाना सुषुम्नाख्या नाड्येव विमर्शमयीत्युच्यते। गुरुस्तु मानव-सिद्ध-दिव्यभेदेन त्रिरूपो भवति। तत्रैकैकं पुनस्त्रिविधं प्रकाशानन्दनाथादिसुभगानन्दनाथान्तभेदेन नवरूपकं जायते। एवमेतस्या विमर्शशक्तेर्देहः स्वरूपं नवरन्ध्रमयं तत्तत्कोणेषु प्रतिष्ठितं जायते। ते च नवरन्ध्राः श्रोत्रचक्षुर्नासानां द्वयं द्वयम्। जिह्वागुह्यपायव एकैकमिति नवभी रन्ध्रैः कोणाकारैः स्वस्वविषयविमर्श उपादेयोपदेशग्रहणमनुपादेयमोचनादिकं च भवतीत्यादिसाधर्म्यात्तानि नवरन्ध्रमयानि कोणाकाराणि विमर्शरूपाण्येव। तदुक्तं योगिनीहृदये—

यस्य विज्ञानमात्रेण त्रिपुराज्ञानवान् भवेत्।
चक्रस्य नवधात्वं च कथयामि तव प्रिये।।

आदिमं भूत्रयेण स्याद् द्वितीयं षोडशारकम्।
अन्यदष्टदले प्रोक्तं मनुकोणमनन्तरम्।।

पञ्चमं दशकोणं स्यात् षष्ठं चापि दशारकम्।
सप्तमं वसुकोणं स्यान्मध्यत्र्यस्रमथाष्टमम्।।

नवमं त्र्यस्रमध्यं स्यात् तेषां नामान्यतः शृणु।
त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम्।।

सर्वसंक्षोभणं गौरि सर्वसौभाग्यदायकम्।
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम्।। इत्यादयः।

अत्रेदमप्यवधेयं यत् खगोलाख्यान्तरिक्षविज्ञाने त्रिकोण एव सूर्यादि-ग्रहाणामवस्थितिर्वर्ण्यते। सर्वदर्शनस्याण्ड-पिण्डैक्यविधानेऽप्येतदेव सन्दर्भेऽभि-व्यज्यते। अन्तश्चक्राण्यपि कोणाकाराण्येव भवन्ति, तत्रैव बिन्दुस्थाने शिवशक्तेः साम्राज्यं राजते। इत्येवं नवयोन्यात्मकं त्रिपुराम्बाया अन्तर्बाह्यस्वरूपदेहगत-नवरन्ध्राणि नवनाथरूपाणीति तन्त्रराजे एतन्निमित्तमेवोक्तं सङ्गच्छते।

भावनोपनिषदि वर्णितेषु नवरन्ध्रतत्त्वेषु श्रोत्रद्वयं वाक् च दिव्यौघः, दृग्द्वयमुपस्थश्च सिद्धौघः, अन्ये चक्षुर्नासानां द्वयं द्वयं गुह्यश्च पञ्चैते मानवौघ इति सम्प्रदायविदो वदन्ति। एतद्विमर्शनवकस्य मूलभूतमुपादानं सुषुम्नानाड्येव, सरन्ध्रसुषुम्नामूलाधारे श्रोत्रादिनाडीनां मिलितत्वेन सुषुम्नावच्छिन्नचिच्छक्तेरेव तन्नाडीद्वारा तद्विषयावभासकत्वात्। नाडीनामवस्थानप्रकारो भाष्ये वर्णितः —

प्रागुक्तमूलाधारस्य मध्यस्थत्र्यस्रमध्यतः।
सुषुम्नापृष्ठवंशाख्यवीणादण्डस्य मध्यगा।।
मूर्ध्नि ब्रह्मरन्ध्रान्ता नासाग्राद्द्वादशाङ्गुला।
तन्मूलात् पायुगा प्रोक्ताऽलम्बुसाख्या तु नाडिका।।
त्र्यस्रादुत्थिता नाडी कुहूर्नाम ज्वलान्तगा।
तद्वामदक्षपार्श्वाभ्यां सवितोदरवारणे।।
जठरान्तसर्वगा च प्रोक्ते तद्वदनन्तरे।
हस्तिजिह्वायशस्विन्यौ पादागुष्ठान्तविस्तृते।।
तथैवेडापिङ्गले द्वे नासारन्ध्रद्वयान्तगे।
गान्धारी च तथा पूषा नेत्रद्वयगते क्रमात्।।
तथैव कर्णगामिन्यौ शङ्खिनी च यशस्विनी।
जिह्वाग्रगा सरस्वत्याख्यैवं नाड्यश्चतुर्दश।।

मूलाधारे नाडीनां स्थितिक्रमो यथा—

मूलाधारे त्र्यस्रमध्ये सुषुम्नाऽलम्बुसे उभे।
प्राक्प्रत्यगास्थिते अन्यास्त्रिकोणाग्रात्प्रदक्षिणा।।
लेखासु संस्थिता नाड्यः कुहूश्चैव तु वारणा।
यशस्विनी पिङ्गला च पूषानाम्नी पयस्विनी।।

सरस्वती शङ्खिनी च गान्धारी तदनन्तरम्।
इडा च हस्तिजिह्वा च ततो विश्वोदराभिधा।।
रन्ध्रपायुध्वजाशेषपन्नासानेत्रकर्णगाः।
जिह्वाकर्णाक्षिनासाङ्घ्रिजठरान्ताश्चतुर्दश[1]।। इत्युक्तम्।

एतेन रन्ध्रनवककार्यभूत एव स्वविषयविमर्शनवकसमष्टिं गुरोरभेदेन भावयेदिति सिद्धान्तितम्। केचित्तु श्रोत्राद्यवयवानां च तत्तन्नाडीनां च तत्तन्नाथाभेदभावमिच्छन्तीति।

स्वदेहे ज्ञानेन्द्रिय-कर्मेन्द्रियबुद्ध्यादिषु च सङ्क्रान्ता ये जनकजनन्योरंश-विशेषा अस्थ्यादिमांसादिरूपास्ते वाराहीत्वेन कुरुकुल्लात्वेन कामाद् भावनीया इति भाष्यकाराणामाशयः। एवमेव देहे नवरत्नद्वीपानां भावना मनसि च सङ्कल्प-कल्पतरवस्तेजःकल्पोद्यानं भवन्ति। रसनायां षड्रसभूताः षडर्तवः, ज्ञातृ-ज्ञान-ज्ञेयेष्वभेदभावना चान्तर्भावनया शिवयोगिन आत्मनि सम्भाव्य श्रीचक्रस्यात्मरूपस्यार्चनमनुक्षणं सम्पादयन्ति।

एवं ह्यान्तरपूजाभावनायां चतुर्दशनाड्यः, सर्वसङ्क्षोभिण्यादिचतुर्दशशक्तय उपपन्नाः। दशारदेवताः प्राणापानादिपञ्च-देवदत्तधनञ्जयादिपञ्च इति दशवायव-स्तेषामन्तर्दशकलाश्च स्वशरीरे भावयन्ति। एवं हि तन्मात्राः, मन-राग-द्वेषादयः शक्तिरूपविलासेन सर्वमात्मनि परिभाव्य बहिर्भावमान्तरतत्त्वेषु विनियुज्य साधकः परापराम्बा ललिताम्बास्वरूपं निधायामृतरूपो जीवन्मुक्तो भवतीति भास्कररायदेशिकः सर्वथा सिद्धभूतः सन्नस्मानमृततत्त्वप्रापणाय प्रेरयतीति शिवम्। तथा हि—

श्रीचक्रस्यात्मरूपत्वं यो वेत्ति भावनाधिया।
तन्नमामि महाशैवं भास्करं भास्कराभिधम्।।इति।

●

१. भावनोपनिषदि १-२ श्रुत्योः भास्कररायभाष्ये उक्तम्।

# आचार्यश्रीनिवासरथस्य काव्यश्रियो वैशिष्ट्यम्

**डॉ. मनुलताशर्मा**
संस्कृतविभागाध्यक्षा
आर्यमहिलामहाविद्यालयस्य
वाराणसी



इदानीन्तने काव्यजगति नवं चिन्तनं, नूतनं विषयं, नवां विधां नवप्रयोगञ्चाधिकृत्य रचनारतेषु कविषु उज्जयिनीस्थाः 'अभिनवकालिदास' इति संज्ञया विभूषिताः, कविताकौमुदीपार्वणेन्दवो रथोपाह्वाः 'श्रीनिवासा' वस्तुतः काव्यश्रियोऽधिष्ठानभूता विद्योतन्तेतराम्। साम्प्रतमधिभारतं काव्यपाठप्रवीणेषु कविषु सर्वोत्कृष्टं स्थानं दधानानामेतेषां मेघवन्नादनिर्घोषो मुरजवद्गम्भीरध्वनिः केकीकेङ्कार-समस्वरः समेषां सहृदयानां मनांस्यावर्जयति। काव्यमञ्चानां प्रभावर्धनानामेतेषां सङ्गीतमय्यो नवा गीतयो नादलययोरद्भुतं सामञ्जस्यं निर्वहन्ति।

कार्तिकमासस्य शुक्लपक्षे चतुर्दशीगतपूर्णिमायां बुधवासरे संवत् १९९० तदनुसारं १९३३ ऐशवीये वत्सरे उत्कलप्रान्ते जगन्नाथपुर्यां प्राप्तजन्मानो श्रीनिवासाः पण्डितप्रवरश्रीजगन्नाथशास्त्रिणो लक्ष्मीदेव्याश्च सप्तसन्ततिषु तृतीयाः सन्त्यनुक्रमेण। श्रीधर-श्रीकर-श्रीनिवास-शारदा-श्रीकान्त-श्रीनाथ-श्रीवत्स इति नाम्नां सप्तसन्ततीनां मध्ये श्रीसरस्वत्योर्धारण-सर्जन-निवास-प्रियत्व-प्रभुत्व-वात्सल्यादिगुणानां कल्पनां कुर्वद् एतेषां पितृभ्य एव संस्कृतशिक्षा जाता।

प्राच्यप्रतीच्योभयविधविधिना लब्धशिक्षोपाधय एभिरेकतः काशीहिन्दूविश्व-विद्यालयतः संस्कृतविषये 'एम.ए.' इत्युपाधिः प्राप्तोऽपरतो राजकीयसंस्कृतमहा-विद्यालयतो य इदानीं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयो वर्तते, आचार्योपाधिः साहित्यविषये गृहीतः। विक्रमविश्वविद्यालयस्य पूर्वसंस्कृतविभागाध्यक्षाः, कालिदासाकादमीनिदेशकचरा राष्ट्रपतिपुरस्कारेण पुरस्कृताः, कालिदास-समारोहस्याऽऽरम्भिकसूत्रधारेषु परिगण्या भारतीतिलकायिताः, श्रुति-समुज्ज्वलगीतिकाः, पारम्परिकवैदुष्येण वैदुष्यमन्तोऽपि नवां दृष्टिं दधाना रथाः

साम्प्रतिकयुगबोधं प्रति जागरूकाः सन्नद्धाश्च सन्ति। एतेषां गीतानां मुखरं कालसंवादित्वमेतेभ्यस्तादृशं वैशिष्ट्यमर्पयति येन साम्प्रतिके काव्यजगति भवतां मूर्धाभिषिक्तता सुनिश्चिता जाता।

एतेषां व्यक्तित्वं विविधगुणानां पुञ्जं वर्तते। एकतो दम्भोलिवत् काठिन्यं प्रतिभाति, अपरतोऽन्तर्मनसि कारुण्यं, गम्भीरता, स्पष्टता, प्रेरणा, लोकवीक्षा-निर्भीकतादयः सद्गुणाः समुच्छलन्तो लसन्तेतराम्। निद्रातन्द्राभयमालस्यं क्रोधादयश्च दुर्गुणा एतान् विजेतुमशक्ता जाताः। एतेषामिमानेव गुणान् वर्णयन्तोऽभिराजराजेन्द्रमिश्राः कथयन्ति—

यं सम्प्राप्यातिसाध्वी कलयति नितरां साधुता साधुभावं
वैनीत्यं यन्महिम्ना स्वयमपि सततं भाति सम्यग्विनीतम्।
पुंवद्यावङ्गता श्रीः कुवलयवनिकावासिनी यस्य योगा-
ज्जीयाच्छ्रीश्रीनिवासो गुणगणनिचयस्सोऽग्रजो मामकीनः[1] ।।

मरुषु रसजुषां वारिधीनां विधातृणामेतेषां व्यक्तित्वमभिलक्ष्येदं वक्तुं शक्यते यदेते नातिदीर्घा अपि सुदीर्घाः, श्यामा अपि अश्यामाः, गभीरा अपि अगभीराः, अभरता अपि भरताः, श्रमलवविजिताचार्यचर्याधुरीणाः, नानासूक्तिसदुक्तिरत्न-समन्विता रत्नाकराः, ऋषिगतगुरुतासनाथाः, स्वाग्रहाय दृढमतयः, सत्ये प्रीतिं दधानाः, आचार्यसम्मानं प्रति समर्पिता एकनिष्ठाः शिक्षकास्सन्ति। एत एव गुणा डॉ. भास्कराचार्यत्रिपाठिनं वक्तुं प्रेरयन्ति—

नेत्रस्पन्दे यदीये तिरति तनुधरो नाट्यकर्ता स भासः
पद्ये व्यासः प्रबन्धे बुधजनमहिते सत्कुमारोऽपि दासः।
वाचां गुम्फे च साक्षात् पुलकपरिचितो लक्ष्यते कालिदासः
सोऽयं श्रीहर्षभाषः सहृदयविजयी सद्रथः श्रीनिवासः[2] ।।

साहित्याकादमीपुरस्कारेण पुरस्कृतं '**तदेव गगनं सैव धरा**' एतेषां काव्यगीतीनां सङ्कलनमस्ति। सङ्कलनेऽस्मिन् एकचत्वारिंशद् रचनाः सङ्कलिताः सन्ति, याश्च प्रायः छन्दोबन्धननिर्मुक्ता कुत्रचित् छन्दसामाग्रहेण बद्धा अपि विशिष्टस्वरलयात्मिकाः, सानुप्रासिकाः, विविधभावानामभिव्यञ्जिकाश्च सन्ति।

---

१. कालिदासपुनर्नवा, श्रीनिवासाभिनन्दनम्।

२. तत्रैव, स्वर्गिरां कोऽपि गाता।

एतासु रचनासु साम्प्रतिके जीवने जगति च सर्वत्र प्रतिदिनं परिदृश्यमानः सिद्धान्तविपर्यासः, आचारविपर्यासः, पुरुषार्थविपर्यासः, नेतृवर्गे स्वार्थान्धता, स्वपक्षपोषणैकपरता, दुरन्ता जीवनयात्रा, अनुदिनं वर्धमाना भौतिकता, लिप्सा, निरर्गला कार्यप्रणाली, स्वार्थप्रेरितं चिन्तनं, सर्वत्र प्रसृतं युवजननैराश्यं, परिवर्तमाना सामाजिकता, सामान्यजनताया विवशता चेत्येते विविधा विषया विशेषतयोपनिबद्धा चिन्तनबिन्दवः सन्ति। संस्काराणां विघटनं, यौतुकलिप्सा, औचित्यानौचित्ययोः स्वकपोलकल्पिता परिभाषा चेत्यादि मुखरितं दृश्यते। युद्धोन्मादबुभुक्षादरिद्रताभयरोगादिभिर्मानवानां पीडनं तेभ्यस्त्राणार्थमाकुलताऽपि कविवाणीषु बहुधा निबद्धाऽवलोक्यते।

न केवलं वस्तुचिन्तनविषये परं काव्यानुकूललयविधानेऽपि रथमहाभागानां नवीना दृष्टिः समधिका समुज्ज्वला प्रतिभाति। परम्परानुमोदितया पदयोजनया साकं लयविधानस्य नवत्वं योगं संयोजयद्भिरेभिः क्वचित् परम्परागतप्रचलितछन्दांसि समाश्रित्य क्वचिच्च छन्दसामाग्रहनिर्मुक्तो भूत्वा गीतवस्त्वनुसारि नवं लयविधानं प्रस्तुतम्।

एतदतिरिक्तं स्वकीयं गुरुवर्यं प्रख्यातसंस्कृतोपासकं बलदेवोपाध्यायमभिलक्ष्य अद्यावधि षट्सर्गपर्यन्तं रचितं महाकाव्यं 'बलदेवचरितम्' इति नामकं तेषामपरा रचनाऽस्ति। काव्यस्याऽस्य षट्सर्गा दूर्वापत्रिकायां प्रकाशिता जाताः। अत्रोपनिबद्धानां श्लोकानां पठनेन श्रवणेन चेदं स्पष्टं प्रतिभाति यदाचार्यवर्या नवीनानां गीतीनां विन्यासे यथा पारङ्गतास्तथैव पारम्परिकश्लोकप्रणयनकलायामपि सिद्धहस्ताः सन्ति। कानिचिन्निदर्शनानि समवलोकनीयानि सन्ति। महामनीषिणः सुमेधसः स्वगुरोराचार्यबलदेवोपाध्यायस्य कर्मभूमिं, सर्वविद्याधिपतेर्भगवतो विश्वनाथस्य गरीयसीं नगरीं, सर्वविद्यानां राजधानीमनुगङ्गं विराजमानां वाराणसीं वर्णयन्तो कथयन्ति रथमहोदया यत् प्रयागे निपीतजला या सरस्वती गुप्ताऽपि त्रिवेणिकां सृजति, सैव काश्यां बुधसमाजे सततमद्भुतरसा निस्स्यन्दमानाऽवलोक्यते—

स्रोतस्विनी भुवि निपीतजला प्रयागे या गीयते भगवती सृजती त्रिवेणीम्।
काश्यां सदा बुधसभासु सरस्वती सा प्रस्यन्दतेऽद्भुतरसा तरसाऽनुगङ्गम्[1]॥

अन्यच्च समग्रेऽपि विश्वे विख्यातां वाराणसीनिर्मितां शाटिकां वर्णयतामेतेषामनल्पमनोहरा कल्पना सहृदयानां मनांसि सुतरामावर्जयति। तथा हि—

---

१. बलदेवचरितम्, ४।९।

शैलाधिराजतनयापरिधानयोग्यं वासः ससर्ज किमिहैव स कृत्तिवासाः।
वाराणसीत्यनुदिशं प्रमदामनांसि शाटीसमुत्सुकतया तरलीकरोति[1]॥

भगवतो विश्वनाथस्य शिरःशेखरीभूता कृतदुरितभङ्गा गङ्गा काश्यामुत्तरवाहिनी प्रवहति, यस्यां सकृत्सवनेनाऽपि पुनर्जन्म न भवतीति विलक्षणया उक्तिभङ्ग्या कवमानाः कवयः कथयन्ति—

श्रीविश्वनाथकरुणाप्रगुणीकृतश्रीर्वाराणसीसुरधुनी दुरितं धुनोति।
पापात्मनामपि सकृत्सवनेन सार्धमह्नाय सा भुवि पुनर्जननं हिनस्ति[2]॥
काशीविहायसि विशिष्य विशेषिताशा प्रत्यूषपेशलतनुः प्रचितप्रकाशाः।
विश्वाभिरामसुषमा विषमेक्षणस्य संलक्ष्यते त्रिजगतीजनवीक्षणीया[3]॥

एवं लोकोपकारपरायणस्य स्तुवतो जनानां विपत्प्रतीकारपरस्य विकटसङ्कट-मोचनस्य हनुमतः स्तुतिरियं सचेतसां चेतो हरति—

सीतां महाशोकवने विपन्नां महोदधेः पारगतां विचिन्वन्।
श्रीरामनामामृतवारिदत्वं त्वामावहस्त्वां शरणं प्रपद्ये[4]॥
तवैव सेवानिरतस्तपस्वी श्रीरामभक्तस्तुलसी रसज्ञः।
बभूव रामायणतत्त्वदर्शी कविप्रियं त्वां शरणं प्रपद्ये[5]॥

बलदेवचरिते ऋतुवर्णनपराणि मनोहराणि कानिचित् पद्यानि कवेर्वर्णनकौशलं विशालयन्ति। प्रायः काश्यां 'राँड़ साँड़ सीढ़ी संन्यासी, इनसे बचै सो सेवै कासी' इयं लोकोक्तिः प्रसिद्धाऽस्ति। प्रतोल्यां प्रायः पुङ्गवा इतस्ततः सरन्ति। वर्षाकाले वा अन्यस्मिन् कस्मिन्नपि समये धाराधरप्रयुक्ता आसारवृष्टि-बिन्दुशरपतनवद् एतान् यदा पीडयति तदा उद्विग्नाः सन्त इमे अवाङ्मुखा उन्नतशृङ्गा उद्धूतपुच्छाश्च प्रतोल्यां धावन्ति। एतस्य चित्रणं कविरित्थं करोति—

धावन्विषाणी वृषभोऽपि बाधां धाराधरासारशवप्रयुक्ताम्।
अवाङ्मुखः शृङ्गमुखेन रुन्धन्नुद्धूतपुच्छः सरति प्रतोलीम्[6]॥

प्रावृषि कदाचित् सूर्यातपे सत्यपि वृष्टिर्भवति तथा क्रीडन्तो बालाः शृगालस्य विवाहकालं मत्वा विनोदवृत्त्या प्रकामं नृत्यन्तीत्यस्य चित्रणं कविः सरसया वाचा प्रस्तौति—

१. बलदेवचरितम्, ४।१५; २. तत्रैव, ४।५; ३. तत्रैव, ४।४।
४. तत्रैव, ५।३९; ५. तत्रैव, ५।४१; ६. तत्रैव, ५।१३।

बाला: शृगालस्य विवाहकालं मत्वा विचित्रातपवृष्टियोगम्।
समेत्य शृङ्गाटकमध्यमाराद्विनोदवृत्त्या ननृतुर्निकामम्[१]॥

कदाचिन्मेघमालायाश्छाया धराया अर्धभागं रुणद्धि, अपरस्मिन् भागे भासमानो भास्वान् अवलोक्यते। इत्थमर्धभागे श्यामच्छाया, अर्धे च भागे सूर्यातपस्य गौरच्छाया यदा प्रादुर्भवति, तदा सितयामुनगाङ्गसङ्ग इव राधामुकुन्दयोर्युगलच्छवि: कवेर्दृष्टिमाकर्षति। तत्प्रस्तौति कवि:—

छायाघनानां रुरुधे धरार्धं पुर: स्थिते भास्वति भासमाने।
राधाघनश्यामजुषं भृशं सा जिगाय लक्ष्मीं सहसा धरित्री[२]॥

स्वकीये दीर्घे क्रियाशीले समाजिकव्यावसायिकजीवने मनुष्या: प्रतिदिनं नवं नवमनुभवन्ति। कदाचिदिमेऽनुभवा अत्यन्तानन्ददायिनो भवन्ति, कदाचिद् झञ्झावातवद् दोधूयमाना व्यथयन्ति। कदाचिदिमे स्रवद्व्रणवदरुन्तुदा भवन्ति, कदाचित् पृष्ठत: प्रहरतां तुच्छां दुर्भावनामनुभावयन्ति। सामान्यतो जना एतान् अनुभवान् स्वकीये स्मृतिपटलेऽङ्कितान् कुर्वन्ति; परं संवेदनशीलै: कविभिरेतेऽनुभवा लेखनीसंस्पर्शात् तथा मूर्तरूपेण शब्दबद्धा: क्रियन्ते, यथा ते युगं यावद् भाविनो जनान् स्वसंवेदनसहभागिनो विदधति। रथमहोदयानां कियतीषु कवितासु एतादृश्येवानुभूति: सहृदयैरनुभूयते। 'अनया दृशा कतिपयान्युदाहरणानि समवलोकनीयानि सन्ति। 'प्रतारिता वयम्', 'वचनवैशसम्', 'चेतना विलीयते', 'किं मधुना', 'उटजं भवतु', 'यातनायतनम्' इत्याद्या रचना एतादृश्य एव सन्ति।

बहुधा जीवने सामाजिकमानमर्यादापदप्रतिष्ठादिभिरलङ्कृतैरेतादृशैर्धूर्तै: सह सम्पर्को भवति ये सर्वदा सहवसन्तोऽपि मित्रताया: सौमनस्यस्य च व्याजं निर्वहन्तोऽपि समापन्ने स्वार्थविघाते स्वकीयां दृष्टिं भावञ्च कृकलासवत् परिवर्तयन्ति, तदाऽनुभवामो यद् वयं प्रतारिता:। एतान् भावान् व्यञ्जयन्त्य इमा: पङ्क्तयो दर्शनीया:—

प्रतारिता वयं सदा तथा त्वयानुकम्पया।
मनोविनोदमन्थरं यथा सहाश्रुधारया॥
प्रभातकाल एव यद्विहङ्गकूजितै: समं
सह त्वयावलोकितं जगन्नवं मनोरमम्।

१. बलदेवचरितम्, ५।२७; २. तत्रैव, ५।२५।

तदेव मेऽधुनाऽऽविलं तवानुभाव ईदृशः
प्रदोषभारधूसरा विरूपतां गता दिशः।।
दशां तवाद्य सन्ध्यया विलोक्य लज्जमानया
विरक्तलोचनेऽधुना निमीलिते निराशया[1]। प्रतारिता......

अयमपि सामाजिको राजनैतिकश्च त्रासो येषां चित्तं गुरुतरपापकर्मणां भारेण स्वयं मलिनं त एव पापप्रक्षालकानां भूमिकां निर्वहन्ति, तेभ्य एवैषा भूमिका समर्प्यते। जना मधुराभिर्वाग्भिः सहानुभूतिसंवेदनाभिर्वशीकृत्य मनोगतान् भावान् जानन्ति, प्राप्ते सति समये तानेव भावान् क्षुरिकावद् प्रयुञ्जते। मन्ये रथमहाभागैरपि सन्त्रासोऽयमवश्यमुपभुक्तः। अत एव एतादृशभावानामभिव्यक्तौ तेषां लेखनी मुखरिता दृश्यते—

यदस्मदीयकर्म तत्फलं परस्य जायते
पदार्थबोधयातना पदे पदेऽनुभूयते।
दुरूहपापकीलितं भृशं यदीयजीवनं
त एव कुर्वतेऽस्मदीयशुद्धतानुशीलनम्।।
सुचारुवाक्प्ररोचनाविधिप्रदर्शिता दया।
नियोजितास्मदीयनाशभूमिकासु मायया।।

प्रतारिता वयं सदा
तथा त्वयानुकम्पया[2]।

धूर्तानां स्वार्थनीतिरेतान् तथाऽपीपिडद् यथा तन्मुखाद् बलाद् ध्वनिरयं स्फुटितोऽभूत्—

कदापि लाभहेतुना स्वयं कृता न याचना
न दूरतोऽपि कल्पिता परार्थरोधभावना।
सदैव मङ्गलाशया हितं तवैव चिन्तितं
समीहितं यदा त्वया यथा तथानुवर्तितम्।।
पदात्पदं न लङ्घितं विना तवानुशंसया।
कृतं हुतं दिवानिशं न वा भिया न शङ्कया।।

प्रतारिता वयं सदा
तथा त्वयानुकम्पया[3]।

---

१-२-३. तदेव गगनं सैव धरा, प्रतारिता वयम्, पृ. ९५।

'चेतना विलीयते' इति शीर्षके तेषां राजनेतॄणां पदे प्रतिष्ठितानां व्यक्तीनां रूपं रेखाङ्कितमस्ति यद्भाषणसमये तु भारतीयसभ्यतायाः संस्कृतेश्च महनीयं स्वरूपं वर्णयन्ति, त्यागतपस्याबलिदानपरोपकारात्मचिन्तनं सर्वहितसमभावादीनां वर्णनं कुर्वन्ति; परं धनपदसुखसुविधादीनां लाभं केवलमात्मीयेषु वितरन्ति। युग-युगान्तरतो निर्धारितसत्यानि प्रशासनकरवालेन खण्डं खण्डं कुर्वन्ति—

समस्तदेशकालधर्मधारणामनोहरं
दयार्द्रनीतिसुन्दरं कवित्वबोधबन्धुरम्।
गुणानुबन्धिभाषणं सुधावधीरणाक्षरं
निशम्य सुस्थिरं परं सदास्मदीयमन्तरम्।।

क्रियान्वये समागते स्वपक्षपोषणादृते
प्रतिश्रुतं पदे पदे स्मरन्ति नैकशोऽपि ते।
सदात्मना प्रकाशितं निहत्य सत्यभाषितं
प्रशासनासिधारया तदन्यथा विधीयते।।

चेतना विलीयते
सदाशयाऽऽकुलीकृते।
विलोललोकजीवने
विषं सुधेति पीयते[1]।।

अद्यार्हतासम्पादका गुणा न सन्ति यथाकथञ्चिद् न्यायतोऽन्यायतो वा अर्जितानि प्रमाणपत्राण्येव निर्णायकानि भवन्ति। प्रपञ्चेन साधिताः केवलं कर्गदेऽङ्किताभिलेखा एव योग्यतायाः परिमापका भवन्ति। स्थितिस्त्वेतादृश्येव प्रतिभाति यथा सिंहानां स्थानं मरकटेभ्यः प्रदत्तम्—

गुणानुरोधकारणात्र योग्यतापरीक्षणं
प्रमाणपत्रदर्पणे कृतं सदात्मतर्पणम्।
पराक्रमो न काम्यते न केसरी समीक्ष्यते
यदत्र पौरुषोचितं प्लवङ्गमाय दीयते[2]।।

---

१-२. तदेव गगनं सैव धरा, चेतना विलीयते।

विश्वविद्यालयेषु शैक्षणिकसंस्थानेषु वर्धमाना राजनीतिः, पदप्राप्त्यै अधिकार-प्राप्त्यै च सदाचारं पृथक्कृत्य प्रयुक्ता दुराग्रहनीतिः, छात्रराजनीतेर्मठाधीशानां स्वस्वत्वरक्षणाय कृता दुरभिसन्धयः केवलं काककोलाहलमुत्पादयन्ति—

विद्यालयपरिसरसंरचना
सपदि दृश्यते पशुबलमलिना।
सदाचारसंहिता परिचिता
चीत्करोति चरणावमर्दिता।।
विषं वमति बलिभुजामूर्जितं
विरावकलुषं कोपचेष्टितम्[1]।

इत्थमेतेषां कवितासु साम्प्रतिके जीवने जगति च विद्यमानानां विविधानां स्थितीनां समीचीनं सुस्पष्टञ्च चित्रणं कृतमस्ति। त्वरया परिवर्तमाना मान्यताः कर्मफलविषयिणी धारणाः, सुकृतदुष्कृतानां नूतनरीत्याऽऽकलनं, स्वार्थसाधनतत्परा राजनीतिः, संस्काराणां ह्रासः, प्रायः प्रतिगृहं वा प्रतिजनाचरणं तुलसीदल-गङ्गाजलानां विलुप्तता सुरास्वादे बहुसङ्ख्यकानां जनानां निमग्नता, नैतिकतायाः स्वकल्पिताः परिभाषा एतान् वक्तुं विवशीकुर्वन्ति—

जीवनगतिरनुदिनमपरा
तदेव गगनं सैव धरा।
पापपुण्यविधुरा धरणीयं
कर्मफलं भवतादरणीयम्।
नैतद् वचोऽधुना रमणीयं
तथापि सदसद्विवेचनीयम्।।
मतिरतिविकला
सीदति विफला
सकला परम्परा
तदेव गगनं सैव धरा[2]।

जनताकृतिः शान्तिसुखहीना
संस्कृतिदशाऽतिमलिना दीना।
केवलनिजहितसाधनलीना
राजनीतिरचना स्वाधीना।।

---

१. तदेव गगनं सैव धरा, वचनवैशसम्, पृ. १०१।
२. तत्रैव, पृ. ३-५।

न तुलसीदलं
न गङ्गाजलं
स्वदते यथा सुरा।
तदेव गगनं सैव धरा[१]।

इत्थमेव 'विपत्रिता'शीर्षकेण रचितायां कवितायां जीवनलतिकायाः पुष्पपत्रविहीनतायाः, तपत्यपि तरणौ तमिस्त्रोद्भावनायाः दृष्टीनां दर्शनेऽसमर्थतायाः प्रतीकात्मकाभिव्यक्तेर्माध्यमेनाऽऽधुनिकजगतो विविधानां दंशदायिनीनां स्थितीनां वर्णनं कृतमस्ति—

विपत्रितेयं जीवनलतिका
केवलकुटिलकण्टकाकुलिता
दूरे कुसुमकथा
सूर्ये तपति तमिस्रा प्रभवति
भवति नयनमयथा[२]।

अद्य दूरदेशस्य तु वार्तैव का? स्वकीये नगरेऽपि परिचितजनानां नेत्रेषु वचनेषु विचारेषु च माधुर्यं लुप्तप्रायं दृश्यते। व्यवहारकौशलं केवलं पदे पदे प्रयोजनसिद्धिं यावत् सीमितं जातम्। अधुना वैज्ञानिकयुगे प्रभूतेष्वपि सुखसौविध्यसाधनेषु जनानां परिवर्तितं चिन्तनं सफलतामिमां विफलयति—

निजनगरीपरिचितजनलोचन
वचनविचारचारुतोपहता
पदे पदे व्यवहारकुशलता
प्रयोजनापेक्षया नियमिता
वैज्ञानिकयुगगणितसफलता
भवतितरां वितथा।
विपत्रितेयं जीवनलतिका
दूरे कुसुमकथा[३]।

१. तदेव गगनं सैव धरा, पृ. ३-५।
२-३. तत्रैव, विपत्रिता, पृ. १२९।

कियतीभिराशाभिर्भावनाभिश्च पतिगृहं प्रेषिताः पुत्र्यो यौतुकज्वालानले भस्मसाद्भवन्त्योऽवलोक्यन्ते। नववधूनां दाहो लोभानलाद् दैनन्दिनीप्रथेव संवृत्तः—

जननीजनकसखीजनचिन्ता
सजलंनयनसम्प्रेषितदुहिता।
श्वसुरसदनलोभानलदग्धा
जीवितेशनिलयं निवेशिता।।

किमति सपदि नववधूविशसनं
दैनन्दिनी प्रथा[1]। विपत्रितेयं.........

स्वभाषाजातिधर्मसंरक्षणमात्रे सीमितां लोकानां मतिं देशकाल-संस्कृतिसम्बन्धिनीनां परम्पराप्राप्तानामादर्शभूतानां परिभाषाणां विफलतां वीक्ष्य कविर्वक्तुं विवशीभवति—

निजभाषानिजजातिधर्मपद-
संरक्षणमात्रे मतिश्चला।
देशकालसंस्कृतिपरम्परा
रूपगता परिभाषा विफला।।

एकस्मिन् बहुधा संवदनं
सञ्जायते वृथा[2]। विपत्रितेयं.......

इत्थमेव 'पाहि मुकुन्द हरे' इति शीर्षकेण रचितायां कवितायां मनोद्वेजकस्थितीनां चित्रणं विधाय ताभ्यः परित्राणस्याभ्यर्थना भगवन्तं मुकुन्दं प्रति कृता वर्तते। एतच्चित्रणानुसारं त्वरितगत्या जायमानं व्यापारी-करणमिदानीन्तनस्य युगस्य सत्यमस्ति पारस्परिकसम्बन्धेष्वप्येतस्य प्रभावः परिलक्ष्यते। अद्य सम्बन्धा अपि लाभतुलायां परिमीयन्ते। तेषां मूल्यमपि निर्धार्यन्ते। तदनन्तरं व्यक्तीनां गौरवलाघवनिर्धारणं क्रियते। दृष्टिषु स्नेहः प्रयासेनाधीयते। विश्वबन्धुत्वस्य वार्तैव का? बन्धुताऽपि शनैः शनैः सङ्कुचिता भवति—

---

१-२. तदेव गगनं सैव धरा, विपत्रिता, पृ. १२९।

विपणिकृपणताधीनजीवने
कृतकसरसतावलितवीक्षितम्।
परिचयहीनमुखेषु राजते
विविधभावनादीपितं स्मितम्।।

प्रतिपदलाभयोजनाकुलता
वसति वचसि मधुरे
पाहि मुकुन्द हरे।

विश्वबन्धुताऽऽदर्शकीर्तनं
जगति परिक्षीयते प्रतिदिनम्।
परहितचिन्ताविमुखतार्जितं
स्वार्थसाधनं केवलं धनम्।।

निरालम्बजनवधविकम्पिता
धरणी विलपति रे।
पाहि मुकुन्द हरे[१]।

देशेन एतादृशो युगोऽवलोकितोऽवलोक्यते च यत्र मानवतायाः कृते समर्पितं धार्मिकं चिन्तनं तदनुयायिभिः क्रियमाणस्य पृथक्करणान्दोलनस्य परपीडनस्य च हेतुर्भवति। धार्मिकस्थानेषु पापाचरणं मनो मथ्नाति—

धर्मधनानां चिन्तनामृतं
तदनुयायिभिर्भवति दूषितम्।
विहाय कुलदेवताऽऽराधनं
तैः स्वीक्रियते परनिपीडनम्।।

पापाचरणमन्त्रणा क्रियते
धर्मकथाऽवसरे।
पाहि मुकुन्द हरे[२]।।

---

१. तदेव गगनं सैव धरा, पाहि मुकुन्द हरे, पृ. १२३।
२. तत्रैव, पृ. १२३-२७।

मारकशक्तिसम्पन्नानि शस्त्राणि समग्रलोकं संहर्तुं क्षमन्ते। विज्ञानमेकतो मानवानां सुखं सौविध्यञ्च सम्पादयति, अपरतो मानवान् विनाशयितुं प्रवर्तते। अयं लोकस्तीक्ष्णायुधानां समूहे विलीन इव भाति—

अन्तरन्तरिक्षं निवेशिता त्रिभुवनदहनोद्यता निपुणता।
सततसेविता वैज्ञानिकता मानवता कल्याणविरहिता।।
मर्त्यलोकरचना विलीयते
निशितायुधनिकरे[1]।
पाहि मुकुन्द हरे।।

जनप्रतिनिधीनां जनैः सह संवादहीनतास्थितिरसमाधेयानां समस्यानां विभीषिकां समुत्पादयति। अधीतिबोधाचरणानां परिभाषा राजनीतिविषधरेण दष्टाः। प्रतिदिशं स्वहितसाधनस्यैवाऽऽकुलता लक्ष्यते। एतादृशीं स्थितिं समीक्ष्यैव कविरित्थं वक्तुं विवशो भवति—

रावणरुचिरिह पुनर्जीविता रामजन्मभूमौ नियोजिता।
मर्यादापुरुषोत्तमार्जिता सत्यशीलता धूलिसात्कृता।।
चीत्करोति सीतावमानिता
सपदि भूमिविवरे।
पाहि मुकुन्द हरे[2]।।

आभिर्दुरवस्थाभिः सङ्घर्षं विधातुमधिकारिणां जनानां मानसिकी कापुरुषता, उपरि प्रतिष्ठाया गर्वाच्छादने सत्यपि आन्तरिकभयेन कम्पिता मनःस्थितिः, अपराधिनो मञ्चस्थान् विधाय कृतमभिनन्दनं सदाचारस्य दुष्टैः कृतं विदलनं संस्कारारोपणे शिक्षाया वैफल्यमित्याद्याः स्थितयो मनो दहन्ति। अस्यां स्थितौ क्रान्तदर्शिनां निर्भीकाणां प्रचलितव्यवस्थायां समागतानां न्यूनतानां निरूपणे क्षमाणां कवीनां वाचामभिव्यक्तिः स्वाभाविकी भवति। तदनु रथमहोदयैरपि स्वस्वरसञ्चारः कृतोऽस्मिन् विषये। वचनवैशसं कविता तासामेव स्थितीनां चित्रणं विदधाति—

उदासीनया धिया भिया वा
त्वया जोषमास्यतेऽन्यथा वा।

---

१-२. तदेव गगनं सैव धरा, पाहि मुकुन्द हरे, पृ. १२३-१२७।

दिशि दिशि विकृतातङ्कशङ्किता
खलीकृताखिलमनुजसभ्यता।।
विद्याभ्यासविफलतास्माकं
जनयति हिंसानुबन्धिशापम्।
दुनोति भुवनं गहनतामसं
दहति मानसम्[१]।।

व्यक्तिगतसामाजिकसम्बन्धेषु वर्धमाना दूरता, क्रमशो विलीयमानं माधुर्यं, स्वार्थलिप्सा, पदलोलुपता, धनाभिलाषः, अहंभावना, नश्यन्ती नैतिकता च सम्भूय साधारणं जीवनं यातनायतनं कुर्वन्ति। एतस्या भावनायाश्चित्रणं 'यातनायतनम्'-नामकरचनायां कृतं वर्तते—

शङ्कालताऽनुवेलं सूते वृथाकाशकुसुमं
सामाजिकसन्त्रासभूमिका वहति फलं विषमम्।
न परिचिनोति यथा निजनयनं
हसति तथा गगनम्[२]।
अनुभवति मनोऽनुदिनं
साधारणं जीवनं जातं
यातनायतनम्[२]।।

एतावत्सु सत्स्वपि गुणानां चरित्राणामादर्शानां नीतीनां महत्त्वमक्षुण्णं प्रतिभाति। अत एव ते आकलयन्ति यद् रावणस्य स्वर्णमयी लङ्का अनन्ता सम्पद् बलं विक्रमञ्च न केनाप्यभ्यर्चन्ते। जनास्तु रामायणस्यामरनायकं पुरुषोत्तमं श्रीराममेव सभाजयन्ति स्मरन्ति च—

रावणरचिता स्वर्णभूषिता लङ्का लोके केन पूजिता?
स्मरति जनः पुरुषोत्तमरूपं रामकथायां मानवतत्त्वम्[३]।।

रथमहोदयानां कवितासु तेषामाधुनिकं चिन्तनं स्फुटं प्रतिभासते।

---

१. तदेव गगनं सैव धरा, वचनवैशसम् पृ. १०३।

२. तत्रैव, यातनायतनम् पृ. १०९।

३. तत्रैव, नवजीवनसंस्कारमहत्त्वम्, पृ. ३९।

भारतीयसंस्कृते रक्षणनाम्ना परम्पराणामनुपालननाम्ना सर्वाभिः प्राचीनपरम्पराभिः संश्लेषस्यैतेषां वृत्तिर्नास्ति। परम्परायास्तेभ्यः प्रतिमानेभ्यो यान्याधुनिकजीवनेऽनुपयुक्तान्यप्रासङ्गिकानि च संवृत्तानि, तेभ्य आत्मानं मुक्तं विधातुं ततः पृथक् किञ्चिद् विचारयितुं चैषां प्रवृत्तिः स्पष्टतयावलोक्यते। भारतीयसमाजे विद्यमानानां विधवानां दीनहीनदशायां तेषां स्वतन्त्रं चिन्तनं सुस्पष्टं विचारोत्तेजकञ्च वर्तते। स्वकीया मानसिकी इच्छा शारीरिकं सुखं सौविध्यमावश्यकताश्च बलाद् दूरीकृत्य संयमपूर्वकतापसजीवनं स्वकीयां नियतिं स्वीकर्तुं विवशानां नारीणां दशा निस्सन्देहमेतान् पीडयति। अनया दृशा 'जटिलापरम्परा'-नाम्नी रचनोल्लेखनीया वर्तते—

या कुरुते तरलं हृदयं
विकला यया धरा।
सा जटिला परम्परा।।

परिचयहीना स्वात्मनि लीना
याति सुनयना काऽपि कुलीना।
या प्राचीना याऽपि नवीना
रेखा नियताकारविहीना।।

सा त्रपते शपते सा क्षमते
सहते सा विधुरा।
सर्वंसहा स्थिरा पश्यन्ती
शिथिला साऽपि गिरा[१]।।

रथमहोदयाः पृथिव्यां सर्वत्र नैराश्यं विषादं सन्त्रासं युद्धोन्मादं निःश्वसन्तीं रुदन्तीञ्च मानवतामेव सर्वत्रानुभवन्तीति नास्ति परं लोकसंवादिनि तन्मनस्यनुभूतेस्तीव्रता वर्तते। यदा ते वैज्ञानिकचमत्कारान् पश्यन्ति, नूतनानामन्वेषणानां चर्चां वा शृण्वन्ति, साम्प्रतिके युगे लोकानां मिथो गाढमैत्रीबन्धनस्य विरलां चर्चामाकर्णयन्ति, तदा ते हर्षातिरेकात् प्रभाविता भवन्ति; परं तत्रैवाऽसम्भावितानां युद्धानां घोषणा तन्मनोऽशान्तं विदधाति। मानवयानस्याऽन्तरिक्षे प्रवेशे सत्याकाशमण्डलमेभ्यः सुरम्यं मनोहरञ्च प्रतिभाति; परं कोटिशो मुद्राणामपव्ययेन

१. तत्रैव, जटिला परम्परा, पृ. ७१।

कृता इमे वैज्ञानिकप्रयोगा बुभुक्षया पीडितानां शिशूनां नरनारीणाञ्च विवशता-बुभुक्षादीनताहीनतानाञ्च समक्षं नगण्यतां यान्ति—

जनानुरागभावना यदा यदा करोति नः
प्रमोदमन्थरं मनः प्रसादयोगनिर्मलम्।
तदैव दूरतः श्रुता नवीनयुद्धघोषणा
तनोति मानसं भृशं भवान्तकल्पनाकुलम्।।

अतीवसुन्दरं यदा नभस्तलं प्रकाशते
मनुष्ययानमन्तरिक्षलोकमाशु गाहते।
अनल्पसाधने तदैव भूतले बुभुक्षया
विशोषितार्भकव्यथा हिनस्ति सौख्यसम्पदम्[१]।।

चन्द्रलोके मानवानां सशरीरं गमनं तत्र क्रियमाणं वैज्ञानिकान्वेषणमगम्यस्य चन्द्रस्य प्राप्तिस्तान् हर्षातिरेकाद् विमुग्धान् कुर्वन्ति, मानवीयमेधासमक्षं ते प्रणता भवन्ति; परं तत्रैव वर्णवर्गजातिभेदादिवशादद्यापि मानवानां मध्ये पार्थक्यं विलोक्य तद्धृदयं विदीर्णं भवति। तदाभ्यन्तरिकः कविरेतान् निबद्धुं विवशो भवति—

यदेन्दुमण्डले पदं निधाय विश्वमानसं
प्रफुल्लरोमजालकं दधाति हर्षमद्भुतम्।
तदैव वर्णभेदनीतिभीतिजातवेदना
विदीर्णचेतना रुजं सृजत्यलं जने जने।।

जीवनेऽधुनातने[२]।

रथमहोदयाः संस्कृतेरुच्चादर्शान् प्रति नितान्तमास्थावन्तः सन्ति, तथापि नूतनविचाराणां कृते तेषां मनः सततं समुन्मीलितं हृदयञ्च समुद्घाटितं वर्तते। ते धर्मान्धाः, रूढवादिनो, दृढाग्रहिणश्च न सन्ति। अन्येषामार्यधर्मेतराणां या धार्मिकपरम्पराः, ये चाऽऽचाराः, याश्चास्थाः सन्ति, तेषामुपहासं विधाय स्वधर्मस्यैव सर्वश्रेष्ठताप्रतिपादने तेषां मानसी स्थितिर्नास्ति। ते स्पष्टं निगदन्ति यदस्माकं देवालयपूजा तावत् प्रशंसनीया नास्ति यावदस्माकं हृदयेऽन्यधर्मान् प्रति आस्था नोदेति। इदमेव कारणं यत्ते काशीं वृन्दावनं मथुरामेव वा भक्तिसाधनं

---

१-२. तदेव गगनं सैव धरा, जीवनेऽधुनातने, पृ. ११३।

नाङ्गीकुर्वन्ति—

देवालयपूजा भवदीया
कथं भाविनी प्रशंसनीया।
धर्मधारणा यदि परकीया
नैव रोचते यथा स्वकीया।।

भक्तिसाधनं न वृन्दावनं
काशी वा मथुरा[1]। तदेव गगनं सैव धरा।

सतीष्वपि बह्वीस्वव्यवस्थासु, दुष्प्रवृत्तिषु तथा जातेषु चारित्रिकह्रासेषु लोकानां केवलं नियतिमाश्रित्य तूष्णीं स्थितिस्तथा स्वकीयगुण-गौरवान्वितस्यातीतस्य, योगस्य दर्शनस्याध्यात्मनो वा गुणगानं समीचीनं नो भाति। अत एव ते कथयन्ति—

पश्यतु जनता सवाष्पनयनं
केवलमिह यदि नियतिनर्तनम्।
किं कुरुते संस्कृतिगुणवचनं
योगदर्शनाध्यात्मचिन्तनम्।।

कविता वा कतमं प्रयोजनं
सम्प्रति पूरयते[2]।

निर्धनानां, शून्यशून्येक्षणानां जनानां जीवनं कथं सार्थकं भवेदेतादृशं चिन्तनमेव ते सफलं मन्यन्ते। तेषामुत्थान एव सर्वधर्माणां सारं तेऽवगच्छन्ति। एतदेवेश्वरस्य साक्षादर्चनं ते मन्यन्ते। राष्ट्रसंवर्धनस्य तेषां मन्त्राः सन्ति, प्रत्येकं राष्ट्रवासिनो जनस्य सम्पन्नता, दुःखदारिद्र्यभयरोगादीनामुन्मूलनञ्च। एतदर्थं सेवाव्रतस्याह्वानं कुर्वन्त इव लक्ष्यन्ते तेऽधोलिखितायां कवितायाम्—

येऽधुना निर्धनाः शून्यशून्येक्षणा
भावि तेषां कथं सार्थकं जीवनम्।
तत्कृते कर्म यत्सर्वधर्मामृतं
तत्र सम्भाष्यते सर्वदेवार्चनम्।।

१. तदेव गगनं सैव धरा, पृ. ५; २. तत्रैव, मलिनतामयते. पृ. ९७।

दुर्बलाराधनं राष्ट्रसंवर्धनं
स्वीकृतं चेतसा यत्त्वया साम्प्रतम्।
तेन सम्पत्स्यते देशरक्षाव्रतं
रक्ष सर्वात्मना रक्ष तद् भारतम्[१]।।

वर्तमानं यथा जीवनं दृश्यते
तत्तवोपेक्षया प्रत्यहं क्षीयते।
यादृशोऽत्र त्वया यत्न आधीयते
तादृशेनैव किं ते मतिस्तृप्यते।।

अश्रुपूर्णेक्षणैस्त्वन्मुखापेक्षिणां
दुःखदारिद्र्यपक्षक्षयो जायताम्।
मुञ्च सङ्कोचमाधत्स्व सेवाव्रतं
रक्ष सर्वात्मना रक्ष तद् भारतम्[२]।।

ते आशासते यथा गाङ्गमम्बु सितं कज्जलाभं कालिन्दीजलञ्च सम्मिल्य पावनं तीर्थराजं सृजतः, तथैव विभिन्नधर्माणां विभिन्नवर्णानां विभिन्नवेशभूषाणां विभिन्नभाषाणाञ्च भारतीयजनानां परस्परसम्मेलनं पावनं मनोहरञ्च भवति। एतादृशं पावनं भारतं रक्षितुं ते भारतीयान् आह्वयन्ति—

गाङ्गमम्भः सितं यामुनं चासितं
पावनं सङ्गमे तीर्थराजाभिधम्।
सङ्गमाशंसिनस्तद्वदेवाधुना
भूयसे श्रेयसे भारतीया जनाः।।

भिन्नधर्मानुगा वर्णभिन्नास्तथा
वेशभाषादिभिर्भेदभाजश्च ये।
सङ्गता यत्र ते लोकतन्त्रोदये
रक्ष सर्वात्मना रक्ष तद् भारतम्[३]।।

'तदेव गगनं सैव धरा' इत्यस्मिन् सङ्कलने सङ्गृहीताः कतिपयकविताः प्रबोधनात्मिकाः कतिपयाश्च वर्णनात्मिकाः सन्ति। आसु प्रमुखाः सन्ति रक्ष तद् भारतम्, उज्जयिनी जयते, शिप्रा सर्वहिता, मध्यप्रदेश जय हे, जयति संस्कृतभारती, शङ्कर तव भाषितं विजयते इत्याद्याः। एतासु उज्जयिनी जयते,

१-२-३. तदेव गगनं सैव धरा; रक्ष तद् भारतम्, पृ. १९-२५।

शिप्रा सर्वहिता कविते क्रमश उज्जयिन्या: शिप्रायाश्च गुणगानमतिरम्यरूपेण विदधाते, तत्रैव 'रक्ष तद् भारतं' काव्यं भारतस्य भौगोलिकं सांस्कृतिकमैतिहासिकं धार्मिकं कलात्मकं साहित्यिकं साङ्गीतिकञ्च माहात्म्यं चारु चित्रयति। महत्त्वशालिनो राष्ट्रस्य श्रेष्ठपरम्पराणां रक्षणार्थं जनान् आह्वयति—

वेदवाग्भासुरा यत्र विश्वम्भरा
ऋग्यजुःसामकाथर्वसंवर्धिता।
विश्वभाषासु या सर्वसम्मानिता
देववाणी शुभा यत्र वाक्संस्कृता।।

यत्र वाल्मीकिना क्रौञ्चशोकाश्रुणा
लोकवृत्ताद्भुतं काव्यमुद्भासितम्।
व्याससम्पादितं यत्र गीतामृतं
रक्ष सर्वात्मना रक्ष तद् भारतम्[१]।।

कवेर्वर्णनकौशलनिदर्शनार्थं कतिपयान्यन्यान्युदाहरणानि समवलोकनीयानि सन्ति। सान्दीपने: शिक्षाभूमिं, विक्रमादित्यस्य पराक्रमभूमिं, भर्तृहरे: साधनाभूमिम्, उदयनवासवदत्तयो: प्रणयभूमिं, महावीरस्य तपोभूमिं, शिप्राया: प्रवाहभूमिं वर्णयन्तो रथमहाभागा उज्जयिन्या रुचिरं चित्रणं 'उज्जयिनी जयते' इत्याख्यायां रचनायां कुर्वन्ति—

उदयनवीणा वादनपुलकितवदना सङ्कुचिता
वासवदत्ता चकिताऽऽकुलिता सुप्तेवालिखिता
प्रणयरसाकुलिता
मनसा मन्त्रयते
उज्जयिनी जयते
शूद्रकभासकलाङ्कितरूपा मेघदूतमधुरा
कादम्बरीकाव्यमीमांसावर्णितकलेवरा।
काव्यालापपरा
भवतापं हरते
उज्जयिनी जयते[२]।।

---

१. तदेव गगनं सैव धरा; रक्ष तद् भारतम्, पृ. १९-२५।
२. तत्रैव, उज्जयिनी जयते, पृ. ११।

सङ्कलने सङ्गृहीतरचनानां काव्यकौशलविमर्शेण ज्ञायते यदासु पारम्परिक-काव्यशास्त्रीयमानदण्डानामनुपालनं तु स्वल्पमेवास्ति। एता गीतयो नवरसानां परिधिषु निबद्धा न सन्ति। विभिन्नानां भावानां रुचिराभिव्यञ्जनात् सहृदयहृदयान् रचना इमाः समधिकमाह्लादयन्ति। पदशय्याऽत्यन्तं सुकोमला वर्तते। आद्यशङ्कराचार्यस्य, जयदेवस्य, पण्डितराजजगन्नाथस्य च काव्येषु यल्लालित्यं, यन्माधुर्यं, या चाऽन्त्यानुप्रासघटितपदावलीनां सरसा रचना, सुबोधता च वर्तते, तादृश्येव श्रुतिसुखदा सानुप्रासा वर्णसंयोजना सरसता सरलता च रथमहेच्छानां कवितास्वनुभूयन्ते। एतेषां भावा अन्तस्तलस्पर्शिणः सन्ति, साम्प्रतिकचिन्तनेन सनाथाश्च सन्ति। अत एवैते भावा विशिष्टलयविधानेन समन्विता भूत्वा रचनाकारं रचनाशीलेष्वाधुनिककविषु मूर्धाभिषिक्ततां ददति। कानिचिदुदाहरणानि निदर्शनार्थमुपस्थाप्यन्ते। सर्वप्रथमं पदलालित्यं विवेचनीयमस्ति। 'उज्जयिनी जयते' इत्यस्याः कवितायाः पङ्क्तयो दर्शनीयाः—

महाकालपूजास्वरललिता
कालिदासकविताकोमलता
भुवनमलङ्कुरुते
उज्जयिनी जयते।
महावीरतपसा परिपूता पशुबलविजयकला
पालीललिततथागतभाषाऽशोकयशोविमला।

धर्मकथाधवला
पुण्यफलं लभते
उज्जयिनी जयते[1]।

एवमुज्जयिनीस्थायाः शिप्राया वर्णने कवेः पदावली समवलोक-नीयाऽस्ति—

निखिलभुवनसन्तापहारिणी
महाकालपरिसरविहारिणी
जयति सदाशिवसेवानिरता

दिव्यामृतसहिता
शिप्रा सर्वहिता[2]।

---

१. तदेव गगनं सैव धरा, उज्जयिनी जयते, पृ. ११।

२. तत्रैव, शिप्रा सर्वहिता, पृ. १५।

अन्यत्र,

जीवनेऽधुनातने
न शान्तिरस्ति कानने
न मानिनी प्रसादने
न चाऽपि योगसाधने।

'किं मधुना' इति शीर्षकेण रचितायां कवितायां मधोर्विधोर्वा शुचिताया अशुचिताया वाऽस्तित्वोपरि प्रश्न उपस्थापित:—

किं मधुना
किमु वा विधुना
यदि जीवनपत्रपुटोपगता
सुधाऽपि सदैव विषं भविता।

किं शुचिना
किमुताऽशुचिना
यदि चेतसि वाचि तथा चरिते
विदिता शुचिता वसनेऽवसिता[१]।

शब्दगतमाधुर्यातिरिक्तमुपमा-रूपक-निदर्शना-दृष्टान्त-अप्रस्तुतप्रशंसादीनामलङ्काराणामभिरामा अभिनवाश्च प्रयोगा अत्र कृता: सन्ति। निदर्शनार्थं केचन काव्यांशा: समवलोकनीया:। चतुर्दिशोऽविश्वासस्य प्रतिक्षणं परिवर्तनशीलाया मनःस्थितेरङ्कनं कूलङ्कषाया नद्या: प्रत्ययरहिताया: शब्दरचनाया माध्यमेन कृतमस्ति—

निजनिःश्वासेऽपि न विश्वासं जनयति मनोदशा।
कूलङ्कषा नदी निजपुलिनं शपति पुनर्विवशा।।
प्रत्ययहीनं प्रकृतिसाधनं
यथा तथा वचनम्[२]।। अनुभवति.........।

दैनन्दिने जीवने समेधमानानां शङ्कानां स्थितीनां तत्कुपरिणामानां चित्रणं रूपकालङ्कारमाध्यमेन कविना कृतमस्ति—

---

१. तदेव गगनं सैव धरा, किं मधुना, पृ. ११५-११७।
२. तत्रैव, यातनायतनम्, पृ. १०९।

शङ्कालताऽनुवेलं सूते वृथाकाशकुसुमम्।
सामाजिकसन्त्रासभूमिका वहति फलं विषमम्॥
न परिचिनोति यथा निजनमनं
हसति तथा गगनम्[१]। अनुभवति........।

एवमल्पज्ञानामसमर्थानाञ्च करेषु पतितं राजशासनं कविरप्रस्तुतप्रशंसया वर्णयति यत् खद्योतानां हस्ते नवीनालोकसंविधानं समागतम्—

ज्योतिरिङ्गणाधीना जाता नवालोकरचना
जनभावना निराशाकुहरं विशतितरां मलिना
सर्वसहा धरित्री विवशा
तुलयति जनं जनम्।
अनुभवति मनोऽनुदिनम्[२]।

स्वोदरपूर्तये जीवनोपयोगिनाञ्च वस्तूनां प्राप्तये अत्यायास-माचरन्तीनामसमये क्षीणकायानां यौवनेऽपि जरतीनां विगलितकेशानां विधवानां मलिनायमानेषु वर्णेषु निष्प्रभेषु मुखेषु व्याकरणस्योत्सर्गसंज्ञायास्तद्गुणालङ्कारस्य च निदर्शनतया वर्णनमतीव मनोरमं पद्येऽस्मिन् प्रतिभाति—

आकृतिरेषा स्वोदरभरणे
विगलितकेशा शुद्धाचरणे।
उत्सर्गसंज्ञिका या व्याकरणे
तद्गुणरूपा साऽलङ्करणे॥
मनसि कृता भवता परिभाषा
लोकादर्शपरा
पठिता सर्वसमक्षं सैषा
घटते हीनतरा[३]॥

सर्वविधसुखसुविधाभिर्वञ्चितानां नियतिकृतां विषमां दुर्दशामुद्वहन्तीनामासां नारीणां शुष्कवदनेषु नीरसेषु मनस्सु सरसि शुष्कानां सरसिजानां वर्णनमप्रस्तुतसंविधानेन कृतं रमणीयं भाति—

१-२. तदेव गगनं सैव धरा, यातमायतनम्, पृ. १०९।

३. तत्रैव, जटिला परम्परा, पृ. ७१-७३।

शुष्यति तामरसं कासारे
विज्ञानकलित इह संसारे।
स्वाधीनसकलसुखसञ्चारे
साकारतरेऽथ निराकारे।।

वयसि नवेऽस्मिन् समागतेयं
सहसा कथं जरा
सा विषमा शापभरा[१]।

पृथक्त्ववादिनां साम्प्रदायिकोन्मादः, कौटनीतिकदुरभिसन्धयः, निरागसां नराणां संहारः, स्वार्थान्धानां नेतृणां पदप्राप्तौ स्पर्धा, शोषितानां शोषणमित्यादि-बहुविधसमस्यानामन्योक्तिमूलिकाऽभिव्यक्तिर्निम्नाङ्कितायां कवितायामवलोकयितुं शक्यते—

प्रलयकालसंवर्तकजलधर
घनतमसा संवृता चेतना।
सहस्रधा सञ्चूर्णितभास्कर
दहनदुर्गतानन्तवेदना
श्मशानधूमाकुलता प्रसरति
शोकाकुलमानवता सीदति
दुरभिसन्धिभीता[२]।

अत्र विषमा समस्याः प्रलयकालिकसंवर्तकादिमेघसमूहैरादर्शानां विघटनं दीप्तांशोः सहस्रधा विदलनेन सीदन्त्या मानवताया श्मशानधूमाकुलितत्वेन मनोहराऽभिव्यक्तिः कृता वर्तते।

एतेषां कवितासु सुबोधतापक्षोऽतीव सशक्तो वर्तते। यद्यपि काव्येषु निबद्धा भावास्तु गम्भीराः विचारोत्तेजकाः गूढाश्च सन्ति; परं सरसाभिव्यक्तिकौशलेन पदावलीनां सुगमतया च सहृदया मधुमिश्रितकटुकौषधिवत् सहजतया सरलतया आस्वादन्तो न किमपि काठिन्यमनुभवन्ति। अत्र 'पुरुषार्थसंहिता'-काव्यस्य पङ्क्तयोऽवलोकनीयाः—

---

१. तदेव गगनं सैव धरा, यातनायतनम्, जटिला परम्परा, पृ. ७१-७३।
२. तत्रैव, पुरुषार्थसंहिता, पृ. ५३।

सविता ताम्यति
धरणी विदलति
ग्रन्थगता गुरुवाणी रोदिति
हिंसा जर्जरिता
रेणुरूषिता व्रणविरोपिता
विलुठति भुवि पुरुषार्थसंहिता[१]।

एवं बलदेवचरितादपि केचन श्लोकाः समुद्धरणीयाः। कवित्व-भावकत्वोभयविधप्रतिभासनाथस्य रसगङ्गाधरकारस्य पण्डितराजजगन्नाथस्य वाणीवैशिष्ट्यं निरूपयतामेषां पदविन्यासकौशलं समवलोकनीयमस्ति—

वाणीविलासलहरीरसमाधुरीशः
काशीवशीकृतसदाशयशेमुषीकः।
गङ्गाधरं रसभरार्द्रतरं तरस्वी
सोऽप्यत्र पण्डितपती रचयाञ्चकार[२]॥

कानिचिद् अलङ्कृतान्यपि पद्यानि समास्वादनीयानि सन्ति—

साम्प्रतं जगति भावसङ्कुले तत्त्वदर्शनमलं न जायते।
आविले पयसि किं निजाननं दर्शनीयमपि दृश्यते क्वचित्[३]॥
सज्जनो भवतु वापि दुर्जनः कर्मणैव भवतीह निर्णयः।
भाषया न खलता न साधुता जायते सुपरिभाषिता क्वचित्[४]॥
दुर्जनोऽपि यदि संस्कृतं वदेत् किं सुजनताऽस्य जायते।
प्राकृतेन वदतां महात्मनां केन वा जगति साधुता धुता[५]॥
सागरैश्च गिरिभिर्नदीजलैर्भूरियं यदि विभज्यते जनैः।
व्याप्य शब्दगुणकं मया नभः सूत्रितं त्रिभुवनं निजात्मना[६]॥

---

१. तदेव गगनं सैव धरा, पुरुषार्थसंहिता, पृ. ५३।

२. बलदेवचरितम्, ४।१३।

३. तत्रैव, ३।३६; ४. तत्रैव, ३।३९।

५. तत्रैव, ३।४०; ६. तत्रैव, ३।४४।

सङ्क्षेपेणेदं वक्तुं शक्यते यत् सार्वजनीनविश्ववादमभिलक्ष्य प्रसरति रथमहाभागानां कविता। तत्र न केवलं भारतीयर्षि-चिन्तनं चित्रितमनुस्यूतञ्चास्ति, अपि तु समग्रभूमण्डलस्य मानवीयमूल्यानां निदर्शनं लक्ष्यते। कस्यापि कवेरिदमेव वैशिष्ट्यं यत् तस्य रचनासु युगबोधः, समस्याः, तासां समाधानञ्च युगपदेव लभ्येत। पाश्चात्त्यसमीक्षकाणां सूक्ष्मेक्षिकया कृते चिन्तने रथमहाभागानां कविताकौमुदी संस्कृतभाषामतिरिच्य विश्वकवित्वंश्रेण्यां प्रविशति। न केवलमिमे नवीनचिन्तने चतुरा, अपि तु आदिकवितः प्रवहमानायां काव्यपरम्परायामपि सिद्धहस्तास्सन्ति। बलदेवचरितमेवास्य निदर्शनम्।

अन्ते च उमाजानिं प्रार्थयन् अभ्यर्थये यत्—

यत्काव्ये लोकवृत्तप्लवनशतमुखी भावगङ्गाम्बुधारा
रिङ्गत्कल्लोललोला तरलयति जनान् कल्मषौघप्रदग्धान्।
यद्गीतिर्हृद्गवाक्षांल्लयहरिमरुत्कोमलस्पर्शघातैः
स्वैरं प्रोन्मीलयन्ती रचयति विपुलां प्रीतिमास्वादभाजाम्[१]॥

एतादृशाः कवयः श्रीनिवासरथमहोदया भगवतः साम्बसदाशिवस्य कृपया दीर्घायुर्युक्ता भवन्तु। तदर्थं कविवरराजेन्द्रमिश्रस्य भारतीमिमां प्रस्तौमि—

साहित्याम्भोधिमन्थोच्छलदमृतपरास्वादपूतान्तरात्मा
द्रौमीं वृत्तिं दधानो निरतिशयकृतोऽबन्धनोऽजातशत्रुः।
विद्यां तुर्यप्रोहामनिशमुपनयन् साहितीसूत्रधारो
भूयादाचार्यवर्यो रथमहितपदश्रीनिवासश्शतायुः[२]॥इति।



१-२. कालिदास-पुनर्नवा, स्वर्गिरां कोऽपि गाता।



श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालये वार्षिकोत्सवावसरे जगद्गुरुश्रीकाञ्चीकामकोटि-पीठाधिपतिश्री १००८ जयेन्द्रसरस्वतीस्वामिचरणेभ्यः शुभाभिनन्दनपत्रं समर्पयन्तः श्रीशास्त्रिपादाः

# सीलं किरेव कल्याणं सीलं लोके अनुत्तरं

**प्रो॰ ब्रह्मदेवनारायणशर्मा**
आचार्योऽध्यक्षश्च
पालि एवं थेरवाद-विभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी



[ विश्वविद्यालयेऽस्मिन् संस्कृतवाङ्मयस्येव पालीप्राकृतवाङ्मययोरपि विशिष्टाध्ययनं विधीयमानं वर्तते। द्वयोरप्यनयोर्विशिष्टा विद्वांसोऽतिवैरल्येन समुपलभ्यन्त इदानीम्, अत एवैतद्वाङ्मये अनुसन्धित्सूनामुपकाराय तयोरन्यतरस्मिन् द्वयोरपि वा कश्चन विशिष्ट: शोधनिबन्ध: सारस्वत्यां सुषमायां प्रत्यङ्कं प्रकाशनीय इति निरचैष्म। साफल्यञ्चास्य सुधीजनानां सम्मतिं सहकारञ्चापेक्षत इति—सं. ]

भगवता बुद्धेन अरहता सम्मासम्बुद्धेन सकललोकपत्थटमहाकरुणा-सिनेहसिनिद्धहदयेन सदेवकस्स लोकस्स अत्थाय हिताय सुखाय धम्मो च विनयो य देसितो पञ्ञत्तो। सो सीलसमाधिपञ्ञापटिमण्डितो सद्धम्मो जनानं हितकरो च सुखकरो च होति। 'सीलं किरेव कल्याणं सीलं लोके अनुत्तरं' विज्जति। सब्बेसु धम्मेसु सीलधम्मो अनुत्तरो सेट्ठो पवरो च पटिभाति। सीलं सब्बबुद्धानं महन्तं तित्थं वट्टति। सीलं च त अप्पटिमं उत्तमं आवुधं सब्बसेट्ठाभरणं अच्चुत्तमं कवचं अत्थि। अज्झत्तिकसाधनाखेत्ते इस्सरियाधिगन्तुं अभिपत्थनं करोति तस्सत्थाय सीलं अनुत्तमं सम्बलं पाथेयञ्च दिस्सति। योगसाधकानं पुग्गलानं सीलं अलंकरणं, अतिपभस्सरं मण्डनं च विज्जति[1]। सीलाभरणेहि समलङ्कतो संविभूसितो च योगावचरो अब्भामुत्तो चन्दो व लोके पभासेति[2]। सीलविसोधिता पञ्ञा, पञ्ञाविसोधितं सीलं सब्बया ओदातं, पभस्सरं च होति। जीवनकान्तारे सीलं

१. सोभन्तेवं न राजानो, मुत्तामणि विभूसिता।
यथा सोभन्ति यतिनो, सीलभूसनभूसिता।। (वि.म., भा. १, पृष्ठ ३८)

२. सीलसम्पत्तिया भिक्खु सोभमानो तपोवने।
पभासम्पत्तिया चन्दो गगने विय सोभति।। (वि. म., भा. १, पृ. १४०)

दीपत्थम्भो विय दिस्सति। सब्बदासीलसम्पन्नो आरद्धविरियो पञ्ञवा नरो इमस्मिं लोके परम्हि च जयं पत्वा अतिविय विरोचमानो सोमनस्ससहगतं सुखानुभवनं करोति[१]।

सीलं तु अतिसेट्ठं सम्माचरणं, सुभाचरणं, सदाचरणं च विज्जति। सदाचरणं विना जीवनस्स चतुरस्स-विकासो न सम्भवति। सदाचारसंवलितो पुग्गलो साधनामग्गे आगतानं पच्चूहानं नीवरणानं निराकरणं कत्वा अनातुरो हुत्वा निवसति। यस्स सीलं आविलं परिभट्ठं च तस्स जीवनं गहनघनान्धकारे निमज्जति। पाणिनं तु सीलं धरणीव पतिट्ठा विज्जति[२]। सीले ठत्वा आतापी निपको सद्धासंपलितो योगावचरो समाधिनिन्नो होति। कायेन वाचाय मनसा यो पुग्गलो सीलानुपालनं समाहितचित्तेन योनिसो मनसिकारेण करोति सो भवपपञ्चं अतिक्कमित्वा साधनामग्गे अग्गसरो हुत्वा अमोसधम्मं उच्चन्तपरिसुद्धं निब्बानं अधिगच्छति[३]।

अस्मिं काले सामाजिके जीवने सीलस्स अतिसय महच्चं बट्टति, यतोहि सब्बे जना दुराचरणेन दुस्सीलेन परिक्लिट्ठा दिस्सन्ति। पापकं असोभनं कम्मं कत्वा जीवनं यापेन्ति। सब्बेसं जनानं हृदये सोमनस्ससम्पयुत्ताय भावनाय तिरोधानं दिस्सति। न कोपि पुग्गलो अस्मि काले बहुजनसुखसम्पादनत्थाय च लोकहिताय च सोभनं कम्मं करोति अपितु लोकसंपीडनाय भयप्पदस्सनाय असोभनं सब्बविनिन्दितं कम्मं निप्फादेव्या संतासं जनेति उप्पादेति। तस्मा कारणा अस्मि येव समये पञ्चसीलस्स अनुपालनं युत्तं विज्जति। सीलावुधेन सब्बेसं दुराचरणानं दुस्सीलानं संभेदनं यदा भविस्सति तदा सब्बेसं जनानं जीवनं सुखावहं पीतियामोज्जसंवलितं भविस्सति। यत्थ तत्थ सब्बत्थ अस्मि समये पाणातिपातं, अदिन्नादानं, मुसावादं, काममिच्छाचारं, पहूतधनलाभाय अपहरणं च दिस्सति। भयाकुला जना गेहे मग्गानुमग्गे वा दुम्मनो हुत्वा विचरणं करोन्ति, तेसं जनानं

---

१. सब्बदा सीलसम्पन्नो, पञ्ञवा सुसमाहितो।
आरद्धवीरियो पहितत्तो, ओघं तरति दुत्तरं'ति।। (सं. नि. १, पृ. ३२)
द्र.–वि. म., भा. १, पृ. ९१।

२. अयं पतिट्ठा धरणीव पाणिनं, इदं च मूलं कुसलाभिवुड्ढिया।
मुखं चिदं सब्बजिनानुसासने, यो सीलक्खन्धो वरपातिमोक्खियो।। (मि. पञ्ह., पृ. ४३)

३. सीले पतिट्ठाय नरो सपञ्ञो, चित्तं पञ्ञं च भावयं।
आतापी निपको भिक्खु, सो इमं विजय्ये जटं ति।। (वि. म., पृ. १९, सं. मि. १/१४)

हृदये कदाचनं सोमनस्सं न सञ्जायते। सब्बत्थ उपद्दवेहि उपद्दुतो हुत्वा जना तज्जिता सम्पीडिता च दिस्सन्ति। सीलाचरणं वा धम्माचरणं वा कस्मिञ्चिपि ठाने अधुना संठपितं दिट्ठिपथं नायाति। समाजे, धम्मिकट्ठाने, राजनीतियं च सब्बत्थ अपराधीकरणं, हिंसनं च विज्जति। अतो अम्हे सरणीयं यं भारतरट्ठस्स सीलं भूसणं अतिमहन्तं मण्डनं विज्जति। सीलसम्पदमन्वाय हि अयं भारतरट्ठो विस्से धरामण्डले सुरियो व विरोचमानं आसी परं अस्मि काले रट्ठोयं सीलपरिभट्ठो कदाचारमापन्नो पटिभाति। अतो हि अस्मि काले सीलस्स अनुपालनं आवस्सकं विज्जति। इदाणिं किं सीलं? केनट्ठेन सीलं? कानस्स लक्खणरस-पच्चुपट्ठानपदट्ठानानि? कतिविधं चेतं सीलं? को सीलस्स संकिलेसो किं वोदानं? किमानिसंसं सीलं ति आदि पञ्हानं विस्सज्जनं करोन्तो सीलस्स वित्थारवण्णना पिटकानुपिटकनयेन कातुमिच्छामि। तत्र किं सीलं ति? 'पाणातिपातादीहि वा विरमन्तस्स वत्तपटिपत्तिं वा पूरेन्तस्स चेतनादयो धम्मा सीलं'। 'अपि च चेतनासीलं चेतसिकं सीलं, संबरो सीलं, अवीतिक्कमो सीलं'ति पटिसम्भिदामग्गे विवेचितं वत्तति। अहिंसा, चागो, ब्रह्मचरियं इमे तयो कायकम्मचेतना तथा सच्चं, अपिसुणं, अफरूसा वाचा, सम्फप्पलापाति इमे चत्तारो वचीकम्मपथा 'चेतना सीलं'ति वुच्चति। तेहेय कारणेन वुत्तं—'चेतनासीलं नाम पाणातिपातादीनि पजहन्तस्स सत्तकम्मपथचेतना'ति[१]। चेतसिकं सीलं ति पाणापातादीहि विरमन्तस्स विरति। अपि च चेतसिकं सीलं नाम 'अभिज्झं पहाय विगताभिज्झेन चेतसा विहरती'ति आदिना नयेन वुत्ता अनभिज्झा अख्यापाद सम्मादिट्ठि धम्मा। संवरो ति संवरणं। यथा अकुसलाधम्मा चित्ते न ओतरन्ति, तथा पिदहनं। सो संवरो पातिमोक्खसंवरो, सतिसंवरो, ञाणसंवरो, खन्तिसंवरो, वीरियसंवरो ति पञ्चविधो[२]। इमिना पातिमोक्खसंवरेण उपेतो होति समुपेतो ति अयं पातिमोक्खसंवरो, अथ च चारित्तवारित्तविभागं विनयपरियापन्नं सिक्खापदसीलं। 'ररक्खति चक्खुरिन्द्रियं चक्खुरिन्द्रिये संवरं आपज्जति इति अयं सतिसंवरो। इन्द्रियानं पटि सावधानता ति अत्थो। ञाणसंवरो ति पञ्ञा। चतुपच्चयपटिसेवनं पटि ञाणसंवलितभावो वा। खन्तिसंवरो ति 'खमो होति सीतस्स उपहस्सा'ति खमनसीलभावो। 'खन्ति परमं तपो तितिक्खा' ति वचनतो खमनसीलता ति।

१. पाणातिपातावेरमणि, आदिन्नादाना वेरमणि, कामेसुमिच्छातारा वेरमणि गुसावाचा वेरमणि, फरुसावाचा वेरमणि, पिसुणावाचा वेरमणि, सम्फप्पलापा वेरमणी ति। सत्त कायवचीकम्मपथा 'चेतनासीसं नाम।' वि.म., पृ.२९। (सं. सं. वि. वि. प्र.)

२. द्र. वि. म., भा. १, पृ. ३०,३१। (सं. सं. वि. वि. प्र.)

वीरियसंवरो ति कामवितक्कादीनं बिनोदनवसेन पवत्तं वीरियं। अनुप्पन्नानं अकुसलानं धम्मानं अनुप्पादाय वायमनं, उप्पन्नानं अकुसलानं धम्मानं पहानाय वायमनं, अनुप्पन्नानं कुसलानं धम्मानं उप्पादाय वायमनं, उप्पन्नानं कुसलानं धम्मानं भिय्योभावाय, बुड्ढि वेपुल्लाय वायमनं, उस्साहो वा वीरियंसंवरो ति जानितब्बं। अवीतिक्कमो सीलं ति समादिन्नसीलस्स कायवाचसिको अनतिक्कमो। इति अयं पञ्चविधो पि संवरो संवरसीलं ति वेदितब्बं।

केन अत्थेन सीलं?ति पञ्हस्स विस्सज्जनं करोन्तो कथितं—'सीलनट्ठेन सीलं। किमिदं सीलनं नाम। समाधानं वा कायकम्मादीनं सुसील्यवसेन अविप्पकिण्णता ति अत्थो। उपधारणं वा कुसलानं धम्मानं पतिट्ठानवसेन आधारभादो। कायकम्मं ति कुसलाकुसलरूपेन दुब्बिधं होति, तत्थ कुसलानं धम्मानं सण्ठपनं एवं संयमनं। अनेन कायसोचेय्यं, वचीसोचेय्यं ति अधिपेतं होति। उपधारणं ति अधिट्ठानं मूलभावो वा। सीलं सब्बेसं कुसलानं धम्मानं आधारो। यथा लतारुक्खादीनं पठविं आधारो होति, तथेव सब्बेसं कुसलानं धम्मानं सीलं आधारो होति। सीले पतिट्ठिता सब्बे कुसला धम्मा न परिहायन्ति। पुन सिरट्ठो सीलं ति। यथा सिरसि छिन्ने सब्बो अत्तभावो विनस्सति, एवं सीले भिन्ने सब्बं गुणसरीरं विनस्सति, तस्मा उत्तमङ्ग अत्थेन सिरट्ठो ति अत्थं कता होति। सीलं सब्बकिलेसपरिलाह वूपसमकरं होति, तस्मा 'सीतलट्ठो'ति वुत्तं। अपि च सयन्ति अकुसला धम्मा एतस्मिं सति अपविट्ठा होन्ती ति सीलं सुपन्ति वा तेन विहतुस्साहानि सब्बदुच्चरितानी ति सीलं, सब्बेसं वा कुसलानं धम्मानं पवेसारहसाला ति सीलं ति एवमादि सीलसद्दस्स अत्थो ति जानितब्बो[1]।

किं लक्खणं सीलं ति पञ्हस्स समाधानं करोन्तो कथितं—'सीलनं लक्खणं सीलं। किमिदं सीलनं नाम—कायकम्मादीनं संयमनं अथवा सब्बेसं कुसलानं धम्मानं आधारो ति। मिलिन्द पञ्हे वुत्तं—'पतिट्ठानलक्खणं सीलं[2]। सीलं सब्बेसं कुसलानं धम्मानं पतिट्ठानं आधारो वा। इन्द्रिय-बल-बोज्झङ्ग-मग्गङ्ग-सतिपट्ठान-सम्मप्पधान-इद्धिपाद-झान-विमोक्ख-समाधि-समापत्तीनं सीलं पतिट्ठा। सीले पतिट्ठितो खो योगावचरो सीलं निस्साय सीले पतिट्ठाय पञ्चिन्द्रियानि भावेति—'सद्धिन्द्रियं, विरियिन्द्रियं, सतिन्द्रियं, समाधिन्द्रियं, पञ्ञिन्द्रियं ति,

१. वि. म., भा. १, पृ. ३२।
२. मि. प., पृ. ४०-४१ (बौ. भा. प्र.)।

सब्बे कुसला धम्मा न परिहायन्ति'[1]। भासितं पेतं भगवता—'सीले पतिट्ठाय नरो सपञ्ञो, चित्तं पञ्ञं च भावयं। आतापी निपको भिक्खु, सो इमं विजटये जटं'ति[2]।

'अयं पतिट्ठा धरणीव पाणिनं, इदं च मूलं कुसलाभिवुड्ढिया।
मुखं चिदं सब्बजिनानुसासने, यो सीलक्खन्धो वरपातिमोक्खो'ति[3]।।

रसं ति किच्चं। सीलस्स किं रसं ति पञ्हे सति दुस्सील्यविद्धंसनरसं अनवज्जरसं वा ति। कायसोचेय्यं, वचीसोचेय्यं, मनोसोचेय्यं' ति पच्चुपट्ठानं। हिरोतप्पं च पदट्ठानं आसन्नकारणं ति अत्थो। हिरि ओतप्पे सति सीलं उप्पज्जति चेव तिट्ठति च। असति नेव उप्पज्जति न तिट्ठती ति[4]। कतिविधञ्चेतं सीलं—

सीलं ताव अत्तनो सीलनलक्खणवसेन एकविधं। चारित्तवारित्तवसेन दुब्बिधं। हीनमज्झिमपणीतवसेन तिविधं। पातिमोक्खसंवर-इन्द्रियसंवर-आजीव-पारिसुद्धिपच्चयसन्निस्सितसीलवसेन चतुब्बिधं। परियन्तपारिसुद्धिसीलादिवसेन पञ्चविधं तथा पहानवेरमणीचेतनासंवरावीतिक्कमवसेन।

तत्थ सब्बेसं कुसलानं धम्मानं आधारवसेन अथवा पतिट्ठानवसेन सीलं एकविधं ति। इदं कत्तब्बं ति पञ्ञत्तसिक्खापदपूरणं, तं चारित्तं। यं 'इदं न कत्तब्बं ति पटिक्खित्तस्स अकरणं, तं वारित्तं। हीनेन छन्देन चित्तेन वा पवत्तितं सीलं हीनं, मज्झिमेहि छन्दादीहि पवत्तितं मज्झिमं। पणीतेहि छन्दादीहि पवत्तितं सीलं पणीतं। अथवा यसकामताय वा समादिन्नं सीलं हीनं। पुञ्ञफलकामताय मज्झिमं। कत्तब्बमेविदं ति अरियभावं निस्साय समादिन्नं सीलं पणीतं ति। भिक्खू आरब्भ पञ्ञत्तसिक्खापदानि रक्खितब्बानि, इदं भिक्खुसीलं। भिक्खुनियो आरब्भ पञ्ञत्तसिक्खापदानि, रक्खितब्बानि, इदं भिक्खुनीसीलं। सामणेरसामणेरीनं दससीलानि अनुपसम्पन्नसीलं। उपासक-उपासिकानं निच्चसीलवसेन पञ्चसिक्खापदानि, उपोसथङ्गवसेन अट्ठा ति इदं गहट्ठसीलं ति। पुन 'इध भिक्खु पातिमोक्खसंवरसंवुतो विहरति, आचारगोचरसम्पन्नो अणुमत्तेसु वज्जेसु भयदस्सावी समादाय सिक्खति सिक्खापदेसु' एवं वुत्तं सीलं पातिमोक्खसंवरसीलं। यं पन

१. मि. प., पृ. ४१ (बौ. भा. प्र.)।
२. वि. म., भा. १, पृ. ८ (सं. सं. वि. वि. प्र.)।
३. मि. प., पृ. ४३।
४. सोचेय्यं पच्चपट्ठानं तमिदं तस्स विञ्ञुहि।
ओनप्पं च हिरी चेव पदट्ठानं ति वण्णितं।। (वि. म., भा. १, पृ. ३४)

चक्खुना रूपं दिस्वा न निमित्तग्गाही होति नानुब्यञ्जनग्गाही, चत्वाधिकरणमेनं चक्खुन्द्रियं असंवुतं विहरन्तं अभिज्झा-दोमनस्सा पापका अकुसला धम्मा अन्वास्सवेय्युं, तस्स संवराय पटिपज्जति रक्खति चक्खुन्द्रियं चक्खुन्द्रिये संवरं आपज्जति। एवं सोतेन सद्दं सुत्वा....घानेन गन्धं घायित्वा....जिह्वाय रसं सायित्वा....कायेन फोट्ठब्बं फुसित्वा....मनसा धम्मं विञ्ञाय न निमित्तग्गाही होति नानुब्यञ्जनग्गाही मनिन्द्रिये संवरं आपज्जति, इदं इन्द्रियसंवरसीलं। इन्द्रियसंवरसीलस्स महत्तभावं पकासेन्तो धम्मपदे वुत्तं—

'चक्खुना संवरो साधु, साधु सोतेन संवरो।
घानेन संवरो साधु, साधु जिह्वाय संवरो।।
कायेन संवरो साधु, साधु वाचाय संवरो।
मनसा संवरो साधु, साधु सब्बत्थ संवरो।।
सब्बत्थ संवुतो भिक्खु, सब्बदुक्खा पमुच्चति[२]।।

आजीवपारिसुद्धिसीलं—ति सुद्धाजीविका, सम्माजीवो वा विसुद्धिमग्गे वुत्तं यं छन्नं सिक्खापदानं वीतिक्कमस्स, 'कुहना लपना नेमित्तिकत्ता निप्पेसिकता लाभेनलाभं निजिगीसनता'ति एवमादीनञ्च पापधम्मानं वसेन पवत्ता मिच्छाजीवा विरति। एवं मिच्छा आजीवं पहाय सम्मा आजीवेन जीविकं कप्पनं, जीवनयापनं वा सम्मा आजीवं। सम्मा आजीवेन सम्पन्नता एव आजीवपारिसुद्धिसीलं ति वुत्तं। उपासकेन पञ्च वाणिज्जं अकरणीया। सत्थवणिज्जा, सत्तवणिज्जा, मंसवणिज्जा, मज्जवणिज्जा, विसवणिज्जा ति[३]। सम्माजीवं एव आजीवपारिसुद्धिसीलं ति[४]। पच्चयपारिसुद्धिसीलं ति चतुपच्चयं पत्वा सन्तोस-आपन्नता। भगवता बुद्धेन चतुपच्चयं विहितं, यथा—चीवरं, पिण्डयातं, सेनासनं, पूतिमुत्तभेसज्जंति एतेसं पच्चयानं पटिसेवनं एव पच्चयपटिसेवनं सीलं ति वुत्तं।

तत्थ चीवरं ति वत्थं। अन्तरवासकं, उत्तरासंगं, संघाटी ति—तीणि चीवरानि। चीवरधारणस्स पयोजनं निद्देसनतो कथितं—न दवाय, न मदाय, न मण्डनाय, न विभूसणाय। केवलं हि सीत उण्हादि पटिघाताय, डंसमकससिरिंसण

---

१. द्र.वि. म., भा. १, पृ. ४०-४१।

२. द्र.वि. म., भा. १, पृ. ६४,६६।
द्र.ध.प. भिक्खुवग्गो, पृ. १७४,१७५।

३. अं. नि. ५।

१. द्र.वि. म., भा. १, पृ. ७०-७१ (सं. सं. वि. वि. प्र.)।

सम्फस्स विरमाय। इमानि पयोजनानि मनसिकत्वा सीत-उण्हादि पटिघाताय पटिसंखा योनिसो चीवरं धारयति। एवं कायपरिहारिको चीवरं धारेति। हिरी पटिच्छादनत्थं वा चीवरं धारणं चीवरपच्चमेन वा सन्तुट्ठो हुत्वा विहरणं।

पिण्डपातं ति यं किञ्चि आहारं। पत्ते पतितत्ता पिण्डपातो ति वुच्चति। यो कोपि पुरिसो कायस्स ठितिगा यापनत्थं पिण्डपातपतिते आहारं भुञ्जिवा जीवनं कप्पेति। अयं हि पिण्डपात पच्चयं न दवाय न मण्डनाय न विभूसनाय भवति अपि च भोजनेसु सन्तुट्ठभावापज्जनता एव पिण्डपातसेवनपच्चयो ति[१]।

सेनासनं ति यत्थ भिक्खु निसीदति सयति वा तं सेनासनं ति। मूलतो रुक्खमूलं अब्भोकासं येव सेनासनं भगवता विहितं। ये केचि पब्बज्जन्ति ते 'घासच्छादनमत्तेनेव सन्तुट्ठो हुत्वा अभिरतपविवेको पब्बज्जन्ति। अनुक्कमेन विहारो, आरामो पासादो, हम्मिय, गुहा अड्ढयोगो इच्चादि नानाप्पकारेहि सेनासनं पञ्ञत्तं। सब्बत्थ भिक्खु तण्हं विहाय विहारं कातब्बं ति इति अनुमतं। तस्मा रागरहितचित्तेन सेनासनं पटिसेवनं एव सेनासनपच्चयो ति।

भेसज्जपरिक्खारा ति—येहि रोगस्स निदानो होति सो भेसज्जं ति वुच्चति। भगवता बुद्धेन केवलं हि पूतिमुत्तभेसज्ज अनुञ्ञातं। पुन तेन सह हरीतकी, दधि-घतं-मधु इच्चदि पि भेसज्जस्स सेवनं विहितं येन रोगस्स उपसमनं भवेय्या ति। इमेसं चतुन्नं पच्चयानं पटिसेवनं योनिसो पटिसंखा कातब्बं ति पच्चयपटिसेवन सीलं ति जानितब्बं।

एवमेतस्मि चतुब्बिधे सीले सद्धाय सम्पादेतब्बं। सद्धासाधनो हि सो। तस्मा यथापञ्ञत्तं सिक्खापदं अनवसेसं सद्धाय समादियित्वा जीविते पि अपेक्खं अकरोन्तेन साधुकं सम्पादेतब्बं। यथा च वुत्तं—

'किकी व अण्डं चमरी व वालधिं
पियं व पुत्तं नयनं व एककं।
तथेव सीलं अनुरक्खमानका
सुपेसला होथ सदा सगारवा'ति[२]।।

किमानिसंसं सीलं ति पञ्हस्स विसज्जनं करोन्तो कथितं—अविप्पटिसारादिअनेकगुणपटिलाभानिसंसं। अपि च वुत्तं हेतं भगवता—

१. द्र.वि.म., भा. १, पृ. ८३।
२. द्र.वि.म., भा. १, पृ. ९०।

'अविप्पटिसारत्थानि खो, आनन्द, कुसलानि सीलानि अविप्पटिसारानिसंसानि'[१]। पञ्चिमे आनिसंसा सीलसम्पदाय—

१. सीलवा सीलसम्पन्नो अप्पमादाधिकरणं महन्तं भोगक्खन्धं अधिगच्छति।

२. सीलवतो सीलसम्पन्नस्स कल्याणो कित्तिसद्दो अब्भुगच्छति।

३. सीलवा सीलसम्पन्नो यञ्ञदेव परिसं उपसङ्कमति विसारदो उपसङ्कमति अमङ्कुभूतो।

४. सीलवा सीलसम्पन्नो असम्मूळ्हो कालं करोति।

५. सीलवा सीलसम्पन्नो कायस्सभेदापरमरणा सुगतिं सग्गं लोकं उपपज्जति। अयं पञ्चमो आनिसंसो सीलवतो सीलसम्पदाय'ति।

एवं अविप्पटिसारादिअनेकगुणानिसंसं सीलं। सीलस्स आनिसंसं पकासयन्तो विसुद्धिमग्गे वुत्तञ्हेतं—

सग्गारोहणसोपानं, अञ्ञं सीलसमं कुतो।
द्वारं वा पन निब्बन, नगरस्स पवेसने।।
सोभन्तेवं न राजानो, मुत्तामणिविभूसिता।
यथा सोभन्ति यतिनो सीलभूसनभूसिता।।
अत्तानुवादादिभयं विद्धंसयति सब्बसो।
जनेति कित्तिहासं च सीलं सीलवतं सदा[२]।।



---

१. वि. म., पृ. ९-१०।

२. वि. म., पृ. १०-११।

# अग्निपुराणोक्तपञ्चाङ्गसाधनविज्ञानम्

**श्रीश्यामदेवमिश्रः**
अतिथि-प्रवक्ता, ज्योतिर्विज्ञानविभागस्य
लखनऊ-विश्वविद्यालये,
लखनऊ



लौकिकवैदिकाखिलकार्यव्यापारमात्रस्य समयाधीनत्वात् सकलचराचरे जगत्यस्मिन् 'सुखं मे भूयाद् दुःखं मे मा भूत्' इत्यभिलषमाणानां जनानां षोडशसंस्कारादिक्रियाकलापाय यागादिवैदिककर्मणे च सुमुहूर्तं निर्दिशति प्राणिनां प्रारब्धकर्मानुगुणफलज्ञापकं[1] स्कन्धत्रयात्मकं[2] कालविधायकं[3] वेदस्य चक्षुर्भूतमिदं[4] ज्योतिषशास्त्रमेवेत्युक्तौ नास्ति विप्रतिपत्तिः।

सुमुहूर्ते कृतमेव यागादिवैदिकं षोडशसंस्कारादिकर्म साफल्यं भजते, अकाले विहितं तदेव कर्म वैफल्यं प्रयाति। अतः कर्मसाफल्याय कालनिर्धारणसमर्थं पञ्चाङ्गज्ञानमपेक्षत एवेत्युक्तौ किं चित्रम्?

---

१. होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।
कर्मार्जितं पूर्वभवे सदादि यत्तस्य पङ्क्तिं समभिव्यनक्ति।। इति।
(बृहज्जातकम्, १।३)

२. ज्योतिषशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं
तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता।
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः।। इति।
(बृहत्संहिता, उपनयनाध्यायः, श्लो.९)

३. वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।
(सिद्धान्तशिरोमणिः, गणिताध्यायः, १.१.९)

४. शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ।
या तु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैः बुधैः।। इति।
(सिद्धान्तशिरोमणिः, गणिताध्यायः, १.१.१०)

तर्हि किमिदं पञ्चाङ्गमित्युक्ते, तिथि-वार-नक्षत्र-योग-करणाख्यानां पञ्चानामङ्गानां समाहार एव पञ्चाङ्गं[1] ज्योतिषेऽभीष्टम्। तदस्य पञ्चाङ्गस्यानयनं ज्योतिर्विद्भिर्भृशमगादि।

**तिथिः**—पञ्चाङ्गेषु प्रथमा तिथिः। तिथिर्नाम चान्द्रदिनम्, तत्तु रविचन्द्रयोः प्रतिद्वादशांशेन अर्थात् खाश्विशैलकला-(७२०')मितान्तरेण तुल्यं भवति। यतो हि दर्शान्तद्वयान्तर्वर्ती यो चान्द्रो मासः, तस्मिन् चान्द्रे मासे चन्द्रार्कयोर्युतिकालादर्थाद् दर्शान्तादन्ययुतिकाल(दर्शान्त)पर्यन्तं चन्द्रार्कयोर्गत्यन्तरांशा भांशाः (३६०°) मितास्त्रिंशत्तिथयो भवन्ति[2]।अतोऽमान्तादर्थात् दर्शान्तादग्रे रवीन्द्वोर्गत्यन्तरांशं द्वादशांशमितं यावत् प्रतिपत्तिथिः, चतुर्विंशत्यंशं यावद् द्वितीया, यदा तयोः (सूर्यचन्द्रयोः) अन्तरांशाः १८०° मितास्तदा पूर्णिमा तथा यदा तयोरन्तरांशमानं ३६०° अंशमितं भवति तदा अन्योऽमान्त इति त्रिंशत्तिथिभिरैन्दवो मास उक्तः।

**करणम्**—'तिथ्यर्धं करणम्' इत्यस्मात् तिथेरर्द्धभागः करणाख्यः। अत एकस्मिन् चान्द्रे मासि त्रिंशत्तिथ्यात्मके षष्टिः करणानि भवन्ति।

चलाचलभेदेन करणमपि द्विविधम्। तत्र शकुनि-नाग-चतुष्पाद-किंस्तुघ्न-भेदेन चत्वारि स्थिरकरणानि भवन्ति, येषां प्रवृत्तिः कृष्णपक्षचतुर्दश्युत्तरार्धात् शुक्लप्रतिपत्पूर्वार्धं यावद्भवति। ततोऽर्थात् शुक्लप्रतिपदुत्तरार्धात् कृष्णचतुर्दशी-पूर्वार्धं यावद् बवादीनि सप्त चलकरणानि सन्ति। येषामष्टौ आवृत्तिरेकस्मिन् चान्द्रमासे भवति।

**नक्षत्रम्**—प्राचीनभारतीयसिद्धान्तानुसारेण सर्वे चन्द्रादिग्रहा भूकेन्द्राभि-प्रायिकस्वस्वकक्षायामूर्ध्वोर्ध्वक्रमस्थितायां भूबिम्बं परितो भ्रमन्ति। ततः सर्वेषामुपरि भचक्रं (नक्षत्रकक्षा) भवति—

'भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा-
वृत्तैर्वृत्तो वृतः सन्....................'॥

(सिद्धान्तशिरोमणिः, गोलाध्यायः, ३.२)

---

१. तिथिर्वासरनक्षत्रे योगः करणमेव च।
इति पञ्चाङ्गमाख्यातं व्रतपर्वनिदर्शकम्॥ इति। (भारतीय कुण्डली विज्ञान, पृ.१)

२. दर्शावधिश्चान्द्रमसो हि मासः॥ इति। (सि. शि., गोलाध्याये, ४.१६)
तथैव, रवीन्द्वोर्युते संयुतिर्यावदन्या विधोर्मास.......। (सि.शि.,गणिता.१.१.१९)
किञ्च, भवन्ति शशिनो मासाः सूर्येन्दुभगणान्तरम्......।
(सूर्यसिद्धान्तः, मध्यमाधिकारः, श्लो.३५)

चक्रलिप्तात्मिकाया नक्षत्रकक्षाया: सर्वेषामुपरि स्थितत्वाद् गगने ततोऽधोऽधो विद्यमाना ग्रहकक्षा अपि ब्रह्मणा अंशकलाभिरन्विता:। अथवा पूर्वसूरिभिर्नक्षत्रकक्षाधारेण ग्रहकक्षा अपि चक्रलिप्ता: परिकल्पिता:। तदुक्तं भास्करेण—

'कक्षा: सर्वा अपि दिविषदां चक्रलिप्ताङ्किताास्ता:'.......॥

अत: प्रत्येकस्य ग्रहकक्षावृत्तस्य चक्रलिप्तात्मकस्य तुल्य: सप्तविंशतितमो भागोऽष्टशतकलात्मको नक्षत्राणां मानं भवति।

ब्रह्माण्डकटाहसम्पुटतटे सन्ति असंख्याका दीप्तिमन्त: पिण्डा: खलु। तत्र पृथिवीं परित: स्थितेषु खगोलवर्त्तिपिण्डेषु ये भ्रमन्त: परिलक्ष्यन्ते ते ग्रहा:। न क्षरतीति नक्षत्रमिति व्युत्पत्त्या येषां पिण्डानां स्वगतेरभावस्ते नक्षत्रनाम्ना व्यवहृता अवशिष्टा: पिण्डा मनीषिभि: पुरा। पृथिवीसम्बन्धिखगोलेऽस्मिन् तादृशानि स्थिराणि सप्तविंशतिसंख्याकानि अश्विन्यादिसंज्ञकानि नक्षत्राणि निश्चितानि यैर्ग्रहाणां स्वस्वकक्षायां स्थितिज्ञानं भवति। इत्थं च नक्षत्राणां सम्बन्धस्तु सर्वैर्ग्रहैस्सह भवति; किन्तु पञ्चाङ्गसाधने चन्द्रसम्बन्धिनक्षत्रज्ञानमेवापेक्षितं भवति।

**योग:**—अश्विनीनक्षत्रादारभ्य रविचन्द्रयोर्भुक्तकलानां मेलनेन अष्टशतकलात्मको भोगकाल एकस्य योगस्य विज्ञेयम्। एवमाहत्य एकस्मिन् चक्रे (२१६००-) कलात्मके सप्तविंशतियोगा विष्कम्भाद्वैधृतिपर्यन्ता भवन्ति।

**वार:**—सूर्योदयात्सूर्योदयं यावत् सावनदिनं यत् तदेव वार इति संज्ञया व्यवह्रियते। एते रव्यादिसप्तवारा मध्यममानेन चतुर्विंशतिहोरात्मका भवन्ति। तेषां प्रवृत्ती रव्यादिग्रहकक्षाक्रमेण होरागणनया भवति। अर्थाद् रवौ सूर्योदयाद् आचतुर्विंशतिहोरो रविवार:। पञ्चविंश्या होराया: स्वामी चन्द्र:, अतोऽग्रिम: चन्द्रवासरश्चतुर्विंशतिहोरा यावत् प्रवर्तते। पुनश्चाग्रिमहोरेशो भौम:, अतोऽग्रे भौमवार इत्यादिक्रमेण विज्ञेयम्।

## अग्निपुराणे पञ्चाङ्गसाधनम्

पञ्चाङ्गस्योपयोगितमत्वाद् अग्निपुराणेऽपि ज्योतिषखण्डस्य प्रथमाध्यायात्मके द्वाविंशत्यधिकैकशततमा(१२२-)ध्याये कालगणनाख्ये पञ्चाङ्गसाधनमेव अग्निदेवो जगाद—

'काल: समागणो वक्ष्ये गणितं कालबुद्धये।
काल: समागणोऽर्कघ्नो मासैश्चैत्रादिभिर्युत:॥१॥
द्विघ्नो द्विष्ठ: सवेद: स्यात् पञ्चाङ्गाष्टयुतो गण:'।

अर्थाद् अहमधुना कालगणनां तस्या गणितञ्च वदामि। वर्षसंख्या समाभि-र्द्वादशभिः सङ्गुण्य चैत्रादिमासैर्युता कार्या। सा संख्या द्विगुणिता कार्या। ततः स्थानद्वये स्थाप्या। एकत्र चत्वारि, अपरत्र पञ्चषष्ट्यधिकाष्टशतं (८६५) योजितं तदा लब्धो यः सः सगुण इति प्रोच्यते।

वर्षसंख्या × १२ = मासाः (गतवर्षावधयः)

मासाः + चैत्रादिगतमासाः = अभीष्टमासावधयो गतमासाः

(I) (गतमासाः × २) + ४ (II) (गतमासाः × २) + ८६५

I + II = सगुणः

अग्रे उच्यते—

'त्रिष्ठो मध्यो वसुगुणः पुनर्वेदगणश्च सः।।२।।
अष्टरन्ध्राग्निहीनः स्याद् अधः सैकरसाष्टकैः।
मध्यो हीनः षष्टिहतो लब्धयुक्तस्तथोपरि।।३।।
न्यूनः सप्तकृतो वारस्तदधस्तिथिनाडयः'।

स च सगुणः स्थानत्रये स्थापितः। यो मध्ये स्थापितः स अष्टसंख्यया सङ्गुण्य पुनश्च वेदैश्चतुर्भिर्गुण्यते। एवं मध्यं संस्कार्य गोमूत्रिकारूपेण स्थापितानां त्रयाणामपि सगुणानां यथास्थाने संयोजनं कार्यम्। ततः प्रथमस्थानस्थितस्य 'ऊर्ध्वम्' द्वितीयस्य 'मध्यम्' इत्येवं तृतीयस्य 'अधः' संज्ञा क्रियते। अधोऽङ्काद् अष्टाशीत्यधिकत्रिशतं (३८८) तथा मध्याङ्कात् सप्ताशीतिः (८७) विशोधिताः। ततश्चाधोऽङ्कं षष्ट्या विभज्य लब्धिं मध्याङ्के च योजयित्वा सोऽपि षष्ट्या विभक्तः। लब्धिं पुनः ऊर्ध्वाङ्के संयोज्य एतादृगूर्ध्वाङ्कः सप्ततष्टः कार्यः। ततः शेषतुल्यो रव्यादिवारस्तथा ततोऽग्रे तिथिनाड्यस्तिथिध्रुवा च सिद्ध्यतः।

| (I) | (II) | (III) |
|---|---|---|
| सगुणः | सगुणः | सगुणः |
| | × ८ | |
| | गुणनफलम् | |
| | × ४ | |
| | गुणनफलम् | |

(I) + (II) + (III) = ऊर्ध्वम् + मध्यम् + अधः

ऊर्ध्वम् + (मध्यं−८७) + (अधः−३८८) ÷ ६०
――――――――――――――――――
७

शेषम् (रव्यादिवारः + तिथिध्रुवा)

'सगुणो द्विगुणश्चोर्ध्वं त्रिभिरूनो गुणः पुनः॥४॥

अधः खरामसंयुक्तो रसार्काष्टपलैर्युतः।

अष्टाविंशाच्छेषपिण्डस्तिथिनाड्या अधः स्थितः॥५॥

गुणस्तिसृभिरूनोर्ध्वं द्वाभ्यां च गणयेत् पुनः।

मध्ये रुद्रगुणः कार्यो ह्यधः सैको नवाग्निभिः॥६॥

लब्धहीनो भवेन्मध्यो द्वाविंशतिविवर्जितः।

षष्टिशेषमृणं ज्ञेयं लब्धमूर्ध्वं विनिक्षिपेत्॥७॥

सप्तविंशतिशेषंस्तु ध्रुवो नक्षत्रयोगयोः'।

पुनः द्विगुणिते सगुणे त्रयं विशोधनीयम्। तदनन्तरं तत्रैव सगुणं तथा त्रिंशतमपि (३०) पुनरेकवारं योजयित्वा ऊर्ध्वादिक्रमेषु षट् (६), द्वादश (१२), अष्टौ च योजनीयम्। ततो षष्ट्या विभज्य प्रथमस्थाने अष्टाविंशतिसंख्यया भागः क्रियते। शेषे पूर्वानीते तिथिध्रुवके योजिते सति 'ध्रुवा' (ऊर्ध्वम्) इति भवति। पुनः सगुणमर्धं कृत्वा तत्र त्रीणि विशोधनीयानि। अनेन या संख्या लब्धा सा द्विगुणिता कार्या। तस्यां संख्यायां यो मध्यमः (अर्थात् प्रथमस्थानस्थितः) स एकादशेन गुणयित्वा स्थाप्यते। अधःस्थाने (द्वितीयस्थाने) एकं योज्यते। स एव अधः एकोनचत्वारिंशत्संख्यया विभज्य लब्धिः प्रथमस्थाने वियोजिता। अनेन प्राप्ता संख्यैव 'मध्यम्' इति कथ्यते। अस्मान्मध्याद् द्वाविंशतिं विशोध्य षष्ट्या शयिते सति शेषः ऋणसंज्ञः। यो लब्धः सः पूर्वानीते ऊर्ध्वे संयोज्य सप्तविंशतिसंख्यया भक्ते सति नक्षत्रयोगयोर्ध्रुवा भवेत्।

[(सगुणः × २) − ३] + सगुणः + ३०

= योगफलम्

योगफलम् (ऊर्ध्वं/मध्यं/अधः) + (६/१२/८)

= फलम् (ऊर्ध्वं/मध्यं/अधः ÷ ६०)
――――――
२८

= शेषम्

शेषम् + तिथिध्रुवा = (ध्रुवा) ऊर्ध्वम्

(सगुण: ÷ २) − ३ = विशोधनफलम्

विशोधनफलम् × २ = गुणनफलं (मध्यम:/अध:)

(मध्यम: × ११) / (अध: + १) ÷ ३९

= (गुणनफलम्) − लब्धि: / शेषम्

= मध्यम्

$\frac{(\text{मध्यम्} - २२)}{६०}$ = लब्धि: (अत्र शेषस्य 'ऋणम्' इति संज्ञा)

$\frac{(\text{लब्धि:} + \text{ऊर्ध्वम्})}{२७}$

= नक्षत्रध्रुवा (इयमेव योगध्रुवा अपि भवति)

'मासि मासि क्षिपेद्वारं द्वात्रिंशद्घटिकास्तिथौ॥८॥
द्वे पिण्डे द्वे च नक्षत्रे नाड्य एकादश ह्यृणे।
वारस्थाने तिथिं दद्यात्सप्तभिर्भागमाहरेत्॥९॥
शेषवाराश्च सूर्याद्या घटिकासु च पातयेत्।
पिण्डकेषु तिथिं दद्याद् हरेच्चैव चतुर्दश'॥१०॥

अधुना तु तिथिनक्षत्रयोर्मासिकध्रुवा उच्यते। (२-३२-००) इयं मासिकतिथिध्रुवा तथा (२-२१-००) इयं मासिकनाक्षत्रध्रुवा भवति। एतां मासिकतिथिध्रुवां प्रत्येकस्मिन् मासे संयोज्य वारस्थाने सप्ततष्टे शेषो मध्यमस्तिथिवारादिर्भवति।

तथैव मासिकनाक्षत्रध्रुवा अपि प्रत्येकस्मिन् मासे पूर्वानीते नाक्षत्रध्रुवके संयोज्य सप्तविंशत्या भक्ते सति मध्यमो नक्षत्रदण्डादिर्भवेत्।

पूर्वानीता तिथिध्रुवा + मासिकतिथिध्रुवा (प्रत्येकस्मिन् मासे)

= फलम्

$\frac{\text{फलम्}}{७}$ (यदि प्रथमस्थाने अर्थाद् वारस्थाने सप्ततोऽधिका संख्या भवेत् तर्हि)

शेषम् (तिथिवारादिर्मध्यमः)

एवमेव, पूर्वानीता नाक्षत्रध्रुवा + मासिकनाक्षत्रध्रुवा

= फलम्

$\frac{\text{फलम्}}{२७}$ (यदि प्रथमस्थाने अर्थाद् नक्षत्रस्थाने सप्तविंशतितोऽधिका संख्या भवेत् तर्हि)

शेषम् (नक्षत्रदण्डादिर्मध्यमः)

पूर्वोक्तप्रकारेणानीतं तिथ्यादिमानं मध्यमम्, तस्य स्फुटीकरणाय संस्कार उच्यते—

'ऋणं धनं धनमृणं क्रमाज्ज्ञेयं चतुर्दश।
प्रथमे त्रयोदशे पञ्च द्वितीयद्वादशे दश॥११॥
पञ्चदश तृतीये च यथा चैकादशे स्मृतम्।
चतुर्थे दशमे चैव भवेदेकोनर्विंशतिः॥१२॥
पञ्चमे नवमे चैव द्वाविंशतिरुदाहृताः।
षष्ठाष्टमे त्वखण्डाः स्युश्चतुर्विंशतिरेव च॥१३॥
सप्तमे पञ्चविंशः स्यात् खण्डशः पिण्डकाद् भवेत्'।

अत्र चतुर्दशीत्यादितिथिषु उक्ताः घट्यः क्रमादृणं धनं तथा धनम् ऋणं कार्यम्। यथा, चतुर्दश्यां शून्यघटी तथा त्रयोदशीप्रतिपत्तिथ्योः पञ्च(५)घट्यः क्रमेण विशोधनीयास्तथा योजनीयाः। एवं द्वादशीद्वितीययोर्दशप्रमिता नाड्यः क्रमादृणं धनञ्च कार्याः। तथैव तृतीयैकादश्योः पञ्चदश (१५), चतुर्थीदशम्योरेकोनविंशतिः (१९) घट्यस्तथा पञ्चमीनवम्योर्द्वाविंशतिनाड्यः, षष्ठ्यष्टम्योश्चतुर्विंशतिमिताः (२४) घट्यः, एवं सप्तम्यां पञ्चविंशतिघटिकाः क्रमेण धनर्णीयाः। संस्कारोऽयं चतुर्दशीत्यादितिथिपिण्डेंऽशात्मके, भवति।

तिथिः

१४

| तिथिः | तिथिः | | क्रमाद् ऋणं धनम् |
|---|---|---|---|
| १३ | १ | = | ५ |
| १२ | २ | = | १० |

| तिथिः | तिथिः | | क्रमाद् ऋणं धनम् |
|---|---|---|---|
| ११ | ३ | = | १५ |
| १० | ४ | = | १९ |
| ९ | ५ | = | २२ |
| ८ | ६ | = | २४ |
| ७ | | = | २५ |

अर्थात् त्रयोदश्याः साधिते माने घट्यात्मके (५) पञ्च घटिकाः ऋणं कार्याः, तथा प्रतिपत्तिथौ तावत्यः (५) घटिका योजनीयाः। अन्यत्रापि एवं रीत्यैव घटीफलस्य संस्कारोऽवगन्तव्यः।

अधुना कलाफलसंस्कार उच्यते—

'कर्कटादौ हरेद्राशिमृतुवेदत्रयैः क्रमात्॥१४॥
तुलादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात्।
मकरादौ दीयते च रसवेदत्रयः क्रमात्॥१५॥
मेषादौ प्रातिलोम्येन त्रयो वेदरसाः क्रमात्।
खेषवः खयुगा मैत्रं मेषादौ विकला धनम्॥१६॥
कर्कटे प्रातिलोम्यं स्यादृणमेतत्तुलादिके।
चतुर्गुणा तिथिर्ज्ञेया विकलाश्चेह सर्वदा॥१७॥
हन्याल्लिप्ता गतागामि पिण्डसंख्या फलान्तरैः।
षष्ट्याऽऽप्तं प्रथमोच्चार्ये हानौ देयं धने धनम्॥१८॥
द्वितीयोच्चारिते वर्गे वैपरीत्यमिति स्थितिः।'

कर्कादित्रिषु राशिषु क्रमेण षट्-चत्वारि-त्रीणि (६-४-३) तथा तुलादिषु त्रिषु ततो व्यतिक्रमात् त्रीणि-चत्वारि-षट् (३-४-६) एताः संख्याः संस्कार्याः, तेन खण्डो भवति। एवमेव मकरान्मिथुनाभ्यन्तरेऽपि। पुनः खेषवोऽर्थात् पञ्चाशत् (५०"), खयुगोऽर्थाच्चत्वारिंशत् (४०"), मैत्रमर्थात् द्वादश (१२") एताः मेषादित्रिषु क्रमाद्योजनीयाः। एवं कर्कादित्रिषु वैपरीत्येन युक्ताः कार्याः; किन्तु तुलादिषट्सु मेषादिक्रमेणैव विशोधनीयाः। अयं विकलात्मकः संस्कारः चतुर्गुणिततिथौ भवति। ततः प्रथमं तावत् गतैष्यखण्डयोरन्तरेण विकलात्मकफलसंस्कृततिथिकलां संगुण्य षष्ट्या विभजनीयम्। भजनफलमृणं वा

धनं वा यद् भवति, तत् प्रथमोच्चार्ये कर्कादिषट्कवर्गे सत्यंशादिफलसंस्कृततिथौ योजनीयमेव तथा द्वितीयोच्चार्ये मकरादिषट्कवर्गे सत्यंशादिफलसंस्कृततिथौ विशोधनीयम्।

**कलादिफलसाधनमेवं करणीयम्**

| | | | | |
|---|---|---|---|---|
| कर्क: | ६ | + | १२" | मिथुन: |
| सिंह: | ४ | + | ४०" | वृष: |
| कन्या | ३ | + | ५०" | मेष: |
| तुला | ३ | – | ५०" | मीन: |
| वृश्चिक: | ४ | – | ४०" | कुम्भ: |
| धनु: | ६ | – | १२" | मकर: |

अत्र गतखण्डादधिको यदि एष्यखण्डो न भवति, तर्हि फलमृणात्मकं विजानीयात्।

(तिथि: × ४) ± उक्तविकला: (विकलादिसंस्कार:)

= विकलादिफलसंस्कृता तिथि:

$$\frac{\text{विकलादिफलसंस्कृततिथिकला:} \times (\text{गतगम्यखण्डान्तरम्})}{६०}$$

=फलम् (ऋणात्मकं धनात्मकं वा)

अंशादिफलसंस्कृता तिथि: + फलम् (कर्कादिषट्के)

तथा

अंशादिफलसंस्कृता तिथि: – फलम् (मकरादिषट्के) = स्फुटतिथिमानम्

पुन: तिथिसंस्काराय तृतीय: संस्कार उच्यतेऽत्र—

'तिथिर्द्विगुणिता कार्या षड्भागपरिवर्जिता॥१९॥
रविकर्मविपरीता तिथिनाडीसमायुता।
ऋणे शुद्धे तु नाड्य: स्यु: ऋणं शुद्ध्येत नो यदा॥२०॥
सषष्टिकं प्रदेयं तत्षष्ट्याधिक्ये च तत्त्यजेत्।
नक्षत्रं तिथिमिश्रं स्यात् ..................................'॥

अर्थात् पूर्वानीतं मध्यमं तिथिमानं दण्डादिकं द्विगुणितं कृत्वा स्वषष्ठांशेन हीनं करणीयम्। ततः सूर्यांशफलस्य विपरीतसंस्कारं कृत्वा तत्र तिथिनाडी योजिता। अत्र कलादि-ऋणफले संशोधिते सति स्पष्टतिथेर्दण्डादिकं स्यात्; किन्तु यदि ऋणात्मकं मानं न घट्यते तर्हि षष्टिः संयोज्य अयं संस्कारो विधेयः। एवमेव यस्मिन् ऋणात्मकं मानं संस्कार्यं स एव षष्टेरधिको भवेत्, तर्हि तं षष्टिहीनं कृत्वा शेषस्य संस्कारः कार्यः। अनेनैव विधिना नक्षत्रमपि साधनीयम्।

$$[(\text{दण्डादिकं})\ \text{मध्यमतिथिः} \times २] - \left[\frac{\text{मध्यमतिथिदण्डादिकं}}{६}\right]$$

= फलम्

(फलम्–सूर्यांशः) + तिथिनाडी (तिथिध्रुवा) = योजनफलम्

योजनफलम् ± कलादेः फलम् (धने सति योजनीयमृणे सति शोध्यम्)

कलादिफलस्य ऋणत्वे सति—

(६० + योजनफलम्) – कलादि-ऋणफलं (ऋणफले योजनफलादधिके सति)

(६० – योजनफलम्) - कलादि-ऋणफलं (योजनमाने षष्ट्यधिके सति)

= स्फुटा तिथिः

(एवं रीत्या नक्षत्रमपि साधनीयम्।)

**योगसाधनप्रकारः**

.........................चतुर्भिर्गुणिता तिथिः॥२१॥

तिथिस्त्रिभागं संयुक्ता ऋणेन च तथान्विता।

तिथिरत्र चिता कार्या तद् वदेद्योगशोधनम्॥२२॥

रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः।'

प्रथमविधिः—अस्माभिस्तिथिः स्फुटा कृता, अधुना योगः साधनीयः। तस्यानयनाय स्फुटा तिथिश्चतुर्गुणिता कार्या। तत्र स्फुटतिथेस्तृतीयांशमपि संयोज्य ऋणफलमपि तत्रैव योजनीयम्, एवं योगो भवति।

द्वितीयविधिः—सूर्याचन्द्रमसोर्योगेनापि योगः साध्यते।

प्रथमविधिः—(स्फुटा तिथिः × ४) + $\frac{\text{(स्फुटा तिथिः)}}{३}$ = फलम्

फलम् + ऋणफलम् (पूर्वमानीतम्) = योजनफलम् = $\frac{\text{योजनफलम्}}{२७}$

शेषतुल्यो योगः (घट्यादिः)

द्वितीयविधिः—वयं ज्योतिषसिद्धान्तग्रन्थेभ्यो द्वितीयविधिं जानीमः।

**करणसाधनक्रमः**

'एकोना तिथिर्द्विगुणा सप्तभिन्नाकृतिर्द्विधा॥२३॥
तिथिश्च द्विगुणैकोना कृताङ्कैः करणं निशि।
कृष्णाचतुर्दश्यन्ते शकुनिः पर्वणीह चतुष्पदम्॥२४॥
प्रथमतस्तिथ्यर्धतो हि किंस्तुघ्नं प्रतिपन्मुखे'॥ इति।

स्पष्टार्थेयं कारिका। यथा—

(वर्तमानतिथिसंख्या–१) = गततिथिः

(गततिथिः × २) – १ = फलम् (सप्तचरकरणानि)

यदि फलं सप्ततोऽधिक भवति तर्हि,

$\frac{\text{फलम्}}{७}$ = बवादिचलकरणम्

उदाहरणम्—कल्प्यते वर्तमानवर्षगणसंख्या=२२ वर्तते। अस्मिन् शालिवाहनशकवर्षे वैशाखशुक्लपतिपत्तिथौ पञ्चाङ्गज्ञानमपेक्षते, तर्हि—

२१ × १२ = २५२ (गतवर्षावधिमासाः)
+ १
२५३ (अभीष्टमासावधि चैत्रादिगतमासाः)

२५३ × २ = ५०६

| | |
|---|---|
| ५०६ | ५०६ |
| ४ | ८६५ |
| ५१० | १३७१ ÷ ६० |

| | |
|---|---|
| ५१० | ५१ |
| २२ | |
| ५३२ | |

५३२ । ५१ (सगुणः)

**सगुणः स्थानत्रये स्थाप्यः**

५३२ । ५१ ऊर्ध्वसंख्या

५३२ । ५१ मध्यसंख्या

५३२ । ५१ अधःसंख्या

(मध्यसंख्या) ५३२ । ५१

× ८

४२५६ । ४०८

× ४

१७०२४ । १६३२ ÷ ६०

२७ । १२

१७०५१ । १२

५३२ । ५१

१७०५१ । १२

५३२ । ५१

ऊर्ध्वं मध्यम् अधः (सर्वे यथास्थानं योजिताः)

५३२ । १७१०२ । ५४४ । ५१

अत्र (५१) त्यज्यते।

ऊर्ध्वम् । मध्यम् । अध:

५३२ । १७१०२ । ५४४

(–) ८७ । ३८८ (अधोऽङ्के ३८८ एवं मध्ये ८७ विशोधितम्)

शेष:

५३२ । १७०१५ । १५६ (एतत्षष्ट्या भक्ते सति)

८१५ । ३७ । ३६ वारस्थाने सप्ततष्ट: कार्य:

३ । ३७ । ३६ तिथिवारादि:

३७ । ३६ तिथिध्रुवा (तिथिनाडी)

सगुण: ५३२ । ५१

× २ (सगुणो द्विगुणित: कार्य:)

१०६४ । १०२ ÷ ६० (षष्ट्या भक्ते सति)

१०६५ । ४२

– ३ (प्रथमे स्थाने त्रीणि विशोधनीयानि)

१०६२ । ४२

५३२ । ५१

१०६२ । ५७४ । ५१

\+ ३० (तृतीयस्थानीयसंख्यायां त्रिंशद्योजितम्)

१०६२ । ५७४ । ८१

६ । १२ । ८ (अत्र 'रसार्काष्टपलैर्युतै:' इत्यनुसारेण

१०६८ । ५८६ । ८९ (६-१२-८) योजितम्)

१०६८ । ५८६ । ८९ ÷ ६० (षष्ट्या भक्ते सति)

१०७७ । ४७ । २९ (प्रथमस्थाने अष्टाविंशत्या भक्त:)

१३ । ४७ । २९

\+ ३ । ३७ । ३६ (अत्र पूर्वानीता तिथिवारादि: योजिता)

१७ । २५ । ०५ 'द्वितीयम् ऊर्ध्वाङ्कम्'

सगुणः

| | |
|---|---|
| ५३२ । ५१ ÷ २ | (सगुणमर्धं कार्यम्)— |
| = २६६ । २५ | |
| − ३ | (द्वितीयस्थाने त्रीणि विशोधितम्) |
| २६६ । २२ | |
| × २ | |
| ५३२ । ४४ | |
| × ११ | (एकादशेन प्रथमं गुणनीयम्) |
| ५८५२ । ४४ | |
| + १ | (द्वितीये एकं योजितम्) |
| ५८५२ । ४५ ÷ ३९ | (पुनः द्वितीये एकोनचत्वारिंशता |
| ५८५२ । ६ | भक्ते सति) |
| − १ | (लब्धिः प्रथमस्थाने विशोधिता) |
| ५८५१ । ६ ÷ ६० | (षष्ट्या भक्तः) |
| ९७ । ९ । ६ | |
| + १७ । २५ । ५ | |
| ११४ । ३४ । ११ | (अत्रोर्ध्वाङ्कं योजितम्) |

प्रथमस्थाने सप्तविंशत्या २७ भक्ते सति—

| | |
|---|---|
| ६ । ३४ । ११ | 'नक्षत्रध्रुवा' ('योगध्रुवा' च) |
| ३ । ३७ । ३६ | (पूर्वानीता तिथिवारादिः) |
| २ । ३२ । ०० | (मासिकतिथिध्रुवा युक्ता कार्या) |
| ६ । ०९ । ३६ | वैशाखशुक्लप्रतिपत् मानं (मध्यमं) वारादिः |

| | |
|---|---|
| (पूर्वानीतं नाक्षत्रमानम्) | ६ । ३४ । ११ |
| (मासिकनक्षत्रध्रुवा) | + २ । ११ । ०० |
| | ८ । ४५ । ११ 'पुष्य'नक्षत्रम् (४५।११) मध्यमदण्डादिः |

**प्रथमस्तिथिसंस्कारः अंशादिफलात्मकः**

पूर्वानीतं प्रतिपत्तिथेर्मध्यमं घट्यादिकं मानम्— ६ । ०९ । ३६

(अत्रांशादिफलसंस्कारा प्रतिपत्तिथेः अंशात्मकफलं
(५ घटी) योजितम्) ५ । ००

अंशादिफलसंस्कृता तिथिः ६ । १४ । ३६

**द्वितीयस्तिथिसंस्कारः कलादिफलात्मकः**

कल्प्यते[१] (चन्द्रः–सूर्यः) × ४ = ०० । ११ । २५ । १०"

(अत्र मेषस्य विकलात्मकं फलं ५०"

५०" योजितम्) ०० । ११ । २६ । ००

विकलादिफलसंस्कृता तिथिः

अत्र गतखण्डो मीनस्तथा गम्यखण्डो मेषः,

तेन गतगम्यखण्डान्तरं राशिध्रुवयोरन्तरम् (३–३) = ०

विकलादिफलसंस्कृततिथिकलाः = २६ । ००

(राशिध्रुवान्तरेण गुणितम्) = ०

०० । ०० (फलम्)

फलस्य अंशादिफलसंस्कृततिथौ संस्कारः कार्यः—

(अंशादिफलसंस्कृततिथिः) ६ । ४ । ३६

०० । ००

६ । ४ । ३६ स्फुटतिथिमानम् (कल्पितम्)

**स्फुटतिथिसाधने अन्यः संस्कारः**

तृतीयसंस्कारे 'द्विगुणिता' इति पाठस्थाने 'त्रिगुणिता' इति पाठः समीचीनः; अन्यथा स्फुटतिथेरासन्नं मानं न स्यात्।

---

१. अस्यां विधौ उक्ततिथिसम्बन्धिकलाफलसंस्कारस्य निरूपणे स्फुटत्वाभावात् तत्संस्कार-सम्बन्धिकल्पितादाहरणमेव उपस्थापितम्।

| | |
|---|---|
| पूर्वानीतं मध्यमतिथिमानं दण्डादिकम् | ९ । ३६ |
| (त्रिगुणितं कार्यम्) | × ३ |
| | २८। ४८ |
| (त्रिगुणिततिथेष्षष्ठांशः शोधितः) | – ४ । ४८ |
| | २४। ०० |
| (तिथिध्रुवा योजिता) | + ९ । ३६ |
| | ३३। ३६ |
| (सूर्यांशफलं विशोधितम्) | ५ । ०० |
| (स्फुटतिथिघट्यादिकम्) | २८। ३६ (षष्टेरधिकं नास्ति, अतः षष्ट्या भागो न कार्यः) |

२८ । ३६ इति घट्यादिस्फुटतिथिर्मध्यतिथेः (९ । ३६) आसन्नं भवति।

**योगसाधनम्**

| | | |
|---|---|---|
| स्पष्टा तिथिः | २८ । ३६ | |
| | × ४ | (स्फुतितिघट्यादिश्चतुर्गुणिता कार्या) |
| | ११४ । २४ | |
| | + ९ । ३२ | (स्फुटतिथितृतीयांशः योजितः) |
| | १२३ । ५६ | (फलम्) |

$\frac{१२३ । ५६}{२७}$ = लब्धिः ४, अतः 'सौभाग्यम्' इति योगः।

शेषः १५ । ५६ नक्षत्र(सौभाग्य)घट्यादिमानम्। अन्यदवशिष्टं करणसाधनं सामान्यमेव, अतो नोक्तमत्र।

**उदाहरणान्तरम्**

अत्रोक्ताग्निपुराणीयरीत्या अन्यदेकमुदाहरणं प्रस्तूयते विधेरस्य समीक्षायै। १९२२ (२००० ईसवीसंवत्) तमे शालिवाहनशकसंवत्सरे ज्येष्ठमासे शुक्लपक्षे षोडश(१६)तमे दिनाङ्के पञ्चाङ्गं साधनीयम्—

१९२१ गतशकवर्षाणि
× १२
२३०५२
\+ २ (चैत्रादिगतमासाः)
२३०५४

२३०५४
× २
४६१०८

४६१०८ । ४६१०८
४ । ८६५
४६११२ । ४६९७३ ÷ ६०
७८२ । ५३
४६८९४ । ५३ (सगुणः)

४६८९४ । ५३ ऊर्ध्वसंख्या
४६८९४ । ५३ मध्यसंख्या
४६८९४ । ५३ अधःसंख्या

४६८९४ । ५३
× ८. (मध्यसंख्या अष्टगुणिता कार्या)
३७५१५२ । ४२४
× ४
१५००६०८ ।१६९६ ÷ ६०
२८ । १२०
(लब्धिः १५००६३४ । ४९६
४८०
१६ (शेषः)

४६८९४ । ५३

१५००६३४ । १६

४६८९४ । ५३

४६८९४ ।१५००६८७ । ४६९१० । ५३ (५३ अत्र त्यक्तव्यम्)

४६८९४ ।१५००६८७ । ४६९१०

(ऊर्ध्वम्) (मध्यम्) (अधः)

४६८९४ ।१५००६८७ । ४६९१०

– ८७ । ३८८

४६८९४ ।१५००६०० । ४६५३० ÷ ६०

(लब्धिः) २५०२२ ।(लब्धिः) ७७५ । ३०

७१९१६ ।१५०१३१५ । ३०

७१९१६ । ५५ । ३० (मध्यं षष्ट्या विभक्तः)

'तिथिध्रुवा'वारादिः ५ । ५५ । ३० (सप्तभिर्भक्ते सति)

सगुणः ४६८९४ । ५३

× २

९३७८८ । १०६

९३७८९ । ४६ (षष्ट्या भक्ते सति)

– ३

९३७८६ । ४६

\+ ४६८९४ । ५३ (सगुणः)

९३७८६ । ४६९४० । ५३

\+ ३०

९३७८६ । ४६९४० । ८३

\+ ६ । १२ । ८

९३७९२ । ४६९५२ । ९१

९४५७४ । ३३ । ३१ (षष्ट्या भक्ते सति)

२८ ) ९४५७४ । ३३ । ३१ ( ३३७७
८४
———
१०५
८४
———
२१७
१९६
———
२१४
१९६
———
१८

१८ । ३३ । ३१
५ । ५५ । ३० (पूर्वानीतस्तिथिवारादिर्योजित:)
———
२४ । २९ । ०१ 'द्वितीयम् ऊर्ध्वाङ्कम्'

सगुण: ४६८९४ । ५३
———
२

= २३४४७ । २६

२३४४७ । २६
– ३
———
२३४४७ । २३
× २
———
४६८९४ । ४६
× ११ (प्रथमस्थाने एकादशं गुणितम्)
———
५१५८३४ । ४७ (द्वितीयस्थाने एकं योजितम्)
———
५१५८३३ । ८
– (लब्धि:) २२ (द्वितीयस्थाने एकोनचत्वारिंशता विभज्य लब्धितुल्य:
———
५१५८११ । ८ प्रथमस्थाने ऊनित:)
———

६० ) ५१५८११ । ८ ( ८५९६

४८०

३५८

३००

५८१

५४०

४११

३६०

५१

८५९६ । ५१ । ८

\+ २४ । २९ । १ (ऊर्ध्वाङ्कम्)

८६२१ । २० । ९

२७ ) ८६२१ । २० । ९ ( ३१९

८६१३

× ८

८ । २० । ९ 'नक्षत्रध्रुवा' ('योगध्रुवा' च)

५ । ५५ । ३० पूर्वानीततिथिवारादि:

\+ २ । ३२ । ०० (चैत्राय मासिकतिथिध्रुवा)

८ । २७ । ३०

\+ २ । ३२ । ०० (वैशाखाय मासिकतिथिध्रुवा)

१० । ५९ । ३० ज्येष्ठशुक्लप्रतिपन्मानम् वारादि:

८ । २० । ९ नक्षत्रध्रुवा

२ । ११ । ० मासिकनक्षत्रध्रुवा (वैशाखाय)

१० । ३१ । ९

२ । ११ । ०

१२ । ४२ । ९ तेन 'उत्तराफाल्गुनी' (१२) नक्षत्रम्, तथा तस्य दण्डादिमानं मध्यम् (४२।९)

**तिथेस्तृतीयः संस्कारः**

| | | |
|---|---|---|
| पूर्वानीतं मध्यमतिथिमानं (घट्यादिः) = | | ५९ । ३० |
| (त्रिगुणितं कार्यम्) | × | ३ |
| | | १७८ । ३० |
| (षष्ठांशः विशोधितः) | − | २९ । ४५ |
| | | १४८ । ४५ |
| | + | ५९ । ३० |
| (तिथिध्रुवा योजिता) | | २०८ । १५ |
| (कल्पितं सूर्यांशफलं विशोधितम्) | | ५ । ०० |
| (षट्या विभक्तः) | | २०३ । १५ |
| स्फुटतिथिमानं घट्यादिकम् | | ३ । २३ |

**योगसाधनम्**

| | | |
|---|---|---|
| स्फुटतिथिघट्यादिः | ३ । २३ | |
| | × ४ | (चतुर्गुणिता कार्या) |
| | १३ । ३२ | |
| | + १ । ०८ | (तृतीयांशो योजितः) |
| | १४ । ४० | फलम् |

$$\frac{१४ \mid ४०}{२७} = ० \mid १४ \mid ४०$$

अतः 'विष्कम्भः' इति योगः, तथा १४ । ४० घट्यादिमानम्। करणसाधनमग्निपुराणे यथोक्तं तथैव सिद्धान्तग्रन्थेष्वपि वर्तते। अत्र तिथिसाधने स्पष्टताया अभावाद् वैशिष्ट्याभावाच्च तन्नोच्यते।

**अग्निपुराणोक्तपञ्चाङ्गविधिसमीक्षा**

**दोषाः** — अग्निपुराणोक्तस्य अस्य कालगणनाविधेराधारभूतो यः कालः सोऽनभिहितः। तेन कदा आरभ्य कालगणना अत्र कृता करणीया वा इति स्पष्टज्ञानं न जायते। यत्तु अत्र कालः 'समागणोऽर्कघ्नः' इत्युक्तः, तत्कदा प्रभृति गणनीयम्, कल्पात्? उत युगात्? उत ग्रन्थारम्भकालात्? उत व्यवस्थितशकाद् इति

अशक्यनिर्धारणम्। अत एव कालगणनार्थं वर्षस्थाने स्वमत्यनुसारेण अभीष्टशकवर्षं स्वीकृत्य गणना विहिता, ज्योतिषग्रन्थान्तरेषु शकाब्दस्यैव गृहीतत्वात्; किन्तु गणिते उपपत्तिसिद्ध एव आगमो मान्य इत्यस्माद् हेतोः कल्पनया स्वबुद्ध्यनुसारेण वा कृता कालगणना कथं वा शुद्धा सर्वमान्या च स्यात्? इत्यवधेयम्।

एवमेव वर्षगणं मासेषु तथा मासान् पक्षेषु परिवर्त्य यत्फलमानीयते तत्तु सम्यगेव भासते; किन्तु ततः फलं स्थानद्वये किमर्थं स्थाप्यते? तत्रापि एकत्र चतुर्णाम्, अपरत्र पञ्चषष्ट्याधिकाष्टशतानां योजने कारणं नोत्प्रेक्षामहे। अत्र कदाचिदेवं स्याद् यत् तस्मिन् समये 'सवेदः पञ्चाङ्गाष्टयुत' इत्यादिना संस्कारः फलद आसीत्; किन्तु साम्प्रतमनेनाभीष्टं फलमशक्यलभ्यम्।

पुनः 'सगुण' इति यदुक्तं वर्तते, तत्रापि मतिविभ्रम एव जायते। यतः स्थानद्वये संस्कृतयोस्तयोरुभयोरपि संख्ययोर्योगः सगुणः? अथवा पृथक्तया उभावपि सगुणौ? उत तयोरेकः सगुणो भवतीति इत्यनिश्चये उभयोर्योग एव सगुण इति विचारोऽयं सर्वोत्तमस्तर्कसङ्गतश्च प्रतीयते।

पुनः अस्मिन् विधौ बहुत्र बहुप्रकारकः संस्कारः कृतो दृश्यते। क्वचित् सैकरसाष्टकैः अष्टरन्ध्राग्निभिश्च विशोधनीयम्, कुत्रचित् खरामेण (३०) तथा रसार्काष्टपलैः (६-१२-८) युक्तं कार्यम्, क्वचिद् द्विगुणस्तथा क्वचिद् रुद्रगुणः कार्यः। एवमेव केषुचित् स्थलेषु अष्टाविंशतिभिः, उत एकोनचत्वारिंशद्भिस्तथा सप्तविंशतिभिर्भागोऽपि कृतो वर्तते; किन्तु एतेषां संस्काराणामुपपत्तिर्न कुत्रापि प्रदर्शिता। अत्र यद्यपि एवं वक्तुं शक्यते यत् कदाचित् तस्मिन् समये एतेषां संस्काराणामावश्यकता आसीत् तथा सम्प्रति एतेषामावश्यकता वर्तते न वा? अथवा एतानतिरिच्य अन्ये संस्कारा अपि विधेया इति सर्वमेतज्ज्ञानं कालगणनाविधिप्रणयनसमये कालनिर्वचनाभावादसम्भवमेव प्रतीयते।

पुनः 'ध्रुवो नक्षत्रयोगयोः' इत्यत्र उभयोर्नक्षत्रयोगयोर्मासिकध्रुवाङ्को यो निर्धारितः, तस्याधारोऽपि कश्चन कालोऽवश्यमेव स्यात्। तर्हि कदा एतौ तयोर्नक्षत्रयोगयोर्ध्रुवाङ्कौ बभूवतुः? अधुनापि तावेव ध्रुवाङ्कौ वर्तेते, उत तयोः परिवर्तनं जातम्? यदि परिवर्तनं जातं तर्हि परिवर्धितरूपेण अधुना ध्रुवाङ्कः क इत्यादिज्ञानाभावे गणितस्य शुद्धिर्न जायते।

अत्र तिथिनक्षत्रयोस्साधनमप्यस्पष्टं वर्तते। तत्र तिथिसाधनक्रमे तिथिमासिकतिथिध्रुवाङ्कयोर्योजनात् शुक्लप्रतिपद्यावत् मध्यमातिथिरानीयते; किन्तु प्रतिपत्तिथेरनन्तरं तिथिज्ञानाय किमपि न भणितम्। एवमेव मध्यमतिथेः स्फुटीकरणक्रमे तस्यां मध्यमतिथौ अंशादिकलादिफलसंस्काराय याः संख्या उक्ता वर्तन्ते तेषामाधारः कः? एवमेव तासां संख्यानां तथैव धनर्णसंस्कारक्रमे कारणं किम्? इत्यत्र न कापि सूचना उपलभ्यते।

अतस्तेन गणितस्य शुद्धिकरणे बाधा आपतति। तत्र अंशादि-कलादिफलसंस्कारयोर्मध्यमतिथिज्ञानं परमावश्यकं यत्तत्र प्रतिपत्तिथिं विहायास्पष्टं वर्तते।

एवमेव स्फुटतिथिसाधनक्रमे मध्यमतिथे रविचन्द्रान्तरं स्वीकरणीयमिति स्पष्टज्ञानाभावात् स्फुटतिथिज्ञानाभावः। स्फुटतिथेरज्ञानाद् योगकरणयोः स्फुटीकरणमपि बाधितं स्यात्।

**गुणाः**—अत्र करणज्ञानाय तथा योगज्ञानाय सङ्केतरूपेण यो द्वितीयविधिरुक्तः स स्फुट एव, तथैव करणज्ञाने स्थिरकरणानां प्रवृत्तिविषये पृथक्तया सारल्येन उक्तम्। चलकरणानां शुक्लप्रतिपदुत्तरार्धात् प्रवृत्तिकारणात् शिष्यक्लेशापनयनाय 'द्विगुणिततिथिरेकं विशोधनीयमिति' या युक्तिरुक्ता सा श्लाघनीयैव।

किञ्चाध्ययनेन अत्रोक्तविधौ बहुदोषा वर्तन्ते येषां निराकरणमपि कालज्ञानाभावाद् असम्भवमेव। अतः अग्निपुराणोक्तमतमिदमाधारीकृत्य सम्यक् पञ्चाङ्गसाधनं न पुरुषसाध्यमिति कथने नाल्पीयसी वाच्यता भवेत्।

ग्रन्थोक्तकालगणनाविधेराधारो यः कालः, तस्य कथनाभावाद् अनया रीत्या गणितं कार्यमित्युक्ते वृथा भ्रमः स्यात्। भवेदस्य विधेराधारः कश्चन कालः; किन्तु सत्यप्याधारे तस्य कथनाभावाद् अत्रोक्तगणितस्योपयोगिता नास्तीति कथने न दोषः स्यात् कश्चन। तस्य मूलभूतकालस्य कथनाभावे कारणत्रयं भवितुमर्हति। प्रथमं तावत्—ग्रन्थोक्तविधेराधारे अग्निपुराणात्पूर्ववर्तिनि कस्मिंश्चिदन्ये ग्रन्थे सः कालोऽभिहितः स्यात्; किन्तु तस्य ग्रन्थस्य लोपो जातः।

द्वितीयं, मूलवर्तमानाग्निपुराणयोः कालान्तरवशाद् मूलपुराणोक्तविधेरपेक्षया वर्तमानपुराणोक्तविधिर्भिन्नः अपूर्णः सदोषश्च स्यात्।

तृतीयं कदाचिद् मूलोपलब्धाग्निपुराणयोर्मध्ये किमपि अन्यदग्निपुराणमथवा अग्निपुराणोक्तविधेस्समर्थनरूपोऽन्यो ग्रन्थः, अग्निपुराणोक्तविधेस्संशोधित-परिवर्धितरूपात्मकोऽन्यः कश्चन ग्रन्थो वा आसीत्, यस्यानुपलब्धिवशादग्नि-पुराणोक्तविधिः गणिताधाररूपकालकथनाभावात् सदोषः प्रतीयते।

वस्तुतः कस्मिन्नपि विधौ कस्याञ्चिदपि पद्धतौ वा भवन्ति केचन सामान्यनियमाः केचिच्च विशेषनियमाः। तत्र सामान्यनियमा अलिपिबद्धाः, गुरुपरम्परायां सुरक्षिताः, आवश्यकतानुसारेण लोकप्रचलिताश्च जायन्ते। कारणवशाद् गुरुपरम्परायामुच्छिन्नायां गूढविषयत्वेन जनसामान्यानुपयोगे च ते सामान्यनियमा लुप्यन्ते। इयमेव स्थितिः कदाचिदग्निपुराणीयपञ्चाङ्गसाधनविधौ समजनि, येन सम्प्रति अयं विधिः छिन्नमूलः सन् न फलति। पुनरपि इह विधेरस्य विशिष्टनियमास्तु सन्ति सुरक्षिताः। अपि च तस्मिन् काले सिद्धान्तज्योतिषस्य

आर्यभटीयमित्यादिसिद्धान्तग्रन्थाः पार्थक्येन विषयं सुस्पष्टं बोधयितुं प्रणीताः। अतो वर्तमानपुराणे विधिं स्फोरयितुमपेक्षिताः सामान्यनियमा मन्ये न सङ्कलिताः। किन्तु विधेर्विशिष्टा नियमाः सन्त्येव, येषां ज्योतिषग्रन्थेषु प्रभूतः प्रभावः प्रस्फुटं प्रवर्तते।

**अग्निपुराणोक्तगणितस्य प्रभावः**

अग्निपुराणोक्तपञ्चाङ्गसाधनक्रमस्य परवर्तिग्रन्थोक्तविधेरपेक्षया भिन्नता वरीवर्ति; किन्तु मतवैभिन्न्यं न दृश्यते। यतो हि तिथ्यादिपञ्चाङ्गानां संख्या प्रवृत्तिक्रमश्च उभयत्र समान एव। अपि च अग्निपुराणवद् आर्यभटीयादिग्रन्थेष्वपि कालगणनार्थं वर्षगणं द्वादशभिः संगुण्य मासा आनीयन्ते तथा तेषु चैत्रादिगतमासा योज्यन्ते। एवमेव वारसाधनाय ऊर्ध्वादिसंख्यामानं सप्तभिर्विभज्य रव्यादिक्रमात् शेषतुल्यो वारो यथा गण्यतेऽत्र (.......'शेषवाराश्च सूर्याद्या'........) तथैव सूर्यसिद्धान्तादिग्रन्थेषु[1]। तेन वारसंख्याप्रवृत्तिविषये उभयत्र (अग्निपुराणे तथा इतरेषु ग्रन्थेषु) साम्यमेव।

तथैव.........'सप्तविंशतिशेषस्तु ध्रुवो नक्षत्रयोगयोः' तथा 'रविचन्द्रौ समौ कृत्वा योगो भवति निश्चलः' इति वचनस्वरसाद् नक्षत्रयोगयोः ध्रुवाङ्कज्ञानाय पूर्वानीतसंख्या सप्तविंशत्या विभज्यते। अनेन नक्षत्रयोगयोस्संख्या सप्तविंशतिरेवाङ्गीक्रियते अस्मिन् अग्निपुराणे इति सिद्ध्यति। तथैव सिद्धान्तग्रन्थेष्वपि तयोस्संख्या सप्तविंशतिरेव गण्यते[2]।

'एकोना तिथिर्द्विगुणा.........प्रतिपन्मुख' इति वर्णनाद् उभयोः अग्निपुराणसिद्धान्तग्रन्थयोः करणसम्बन्धिविचारसाम्यमपि सिद्ध्यति[3]।

अतः पाञ्चाङ्गिकपद्धतिसादृश्ये दरीदृश्यमानेऽपि कालभेदात् तस्यानयनक्रमे उभयोर्ग्रन्थयोर्व्यत्यासः प्रत्यक्षीक्रियतेऽस्माभिः। एतावता अग्निपुराणस्य ज्योतिषीयाधारत्वं निरपवादमेव। ततोऽग्निपुराणानन्तरं काले काले नवनवोन्मेषशालिनां गणकानां ज्योतिषीयविषयानुसन्धानेन वैचारिकान्दोलनेन च ज्योतिषशास्त्रे नैके सिद्धान्ताः प्रतिष्ठापिता बभूवुः। तेन पञ्चाङ्गसाधनं शुद्धं सरलं च जातमिति।

●

---

१. 'सावनो द्युगणो सूर्याद्दिनमासाब्दपास्तथा। सप्तभिः क्षयितः शेषः सूर्याद्यो वासरेश्वरः'।।इति। (सूर्यसिद्धान्तः, मध्यमाधिकारः, श्लो. ५१)

२. 'ग्रहकलाः सरवीन्दुकला हृताः खखगजैश्च भयोगमिति क्रमात्।
अथ हृताः स्वगतैष्यविलिप्तिकाः स्वगतिभिश्च गतागतनाडिकाः'।।इति।
(सिद्धान्तशिरोमणिः स्पष्टाधिकारः, श्लो. ६७)
अत्रेदमवधेयं यद् भचक्रलिप्तात्मकस्य (२१६००') सप्तविंशतितमो भागः खखगज-(अष्टशत ८००) कलामितो भवति।

३. सूर्यसिद्धान्तः, स्पष्टाधिकारः, श्लोक-सं. ६७-६८।



कलिकातास्थ-श्रीहनुमन्मन्दिरसाहित्यानुसन्धानसंस्थानाधिकारिभिः साकं श्रीशास्त्रिपादाः
(मध्ये महामहिम-श्री ५ काशीनरेशाः डॉ. विभूतिनारायणसिंहमहाभागाः)

# भारतनेपालयोः सांस्कृतिकः सम्बन्धः एकं समीक्षणम्

**प्रो. युगलकिशोरमिश्रः**
आचार्योऽध्यक्षश्च, वेदविभागस्य
प्रतिकुलपतिचरश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



ऐतिहासिकदृष्ट्या नेपालदेशस्योपत्यका भारतशासनस्याधीना विरलत एवातिष्ठत। अस्या राजतन्त्रात्मिका स्थितिर्या काऽपि भवेत् परमियं सहस्राब्देभ्यः भारतीयसांस्कृतिकजगतोऽभिन्ना विद्यते। पौराणिकसन्दर्भानुशीलनेनेदं विदितं भवति यद् नेपालदेशानां सत्ता सत्ययुगत एव विद्यते। इदानीं परिदृश्यमानमिदं नेपालघाटीक्षेत्रं प्रारम्भे महाह्रदरूपेणासीत्। स्वयम्भूपुराणानुसारेण महाह्रदस्यास्य नाम 'नागवासः' 'नागह्रदः' वा आसीत्। भगवान् विष्णुर्नागह्रदस्यास्य दक्षिणपार्श्वस्थितां पर्वतशृङ्खलां विदार्य महान्तं जलराशिं बहिर्निस्सारयामास। किञ्चोपदिष्टं तेन यत् पुण्यक्षेत्रमिदमनेकतीर्थैः सुशोभितं, देवभूमिरूपेण प्रथितं भविष्यति। तस्मिन्नेव महाह्रदस्थाने नेपालाख्योऽयं देशो विराजते।

'नेपाल-वंशावलिः' इत्याख्ये ग्रन्थे भारतनेपालयोः पौराणिकसम्बन्धस्य चर्चा दरीदृश्यते। त्रेतायुगे नेपालदेशेषु सुधन्वाख्यनरेशस्य शासनमासीत्, येन जनकपुरक्षेत्रे समायोजिते सीता-स्वयंवरे भागग्रहणञ्चाकारि। द्वापरयुगे बाणासुरमन्वधावन् श्रीकृष्णो नेपालदेशमलञ्चकार। काण्ठमण्डपाद् अष्टक्रोश-पश्चिमभागे स्थितमिदानीञ्च विध्वस्तं 'पानभोट'-नामनगरं भागवतादिपुराणेषु 'शोणितपुर'क्षेत्ररूपेण वर्णितमस्ति यद्धि बाणासुरस्य राजधानी केषाञ्चिन्मते आसीत्। अनेकेषु पौराणिकाख्यानेषु श्रीकृष्णपुत्रस्यानिरुद्धस्योद्वाहः बाणासुर मनोज्ञया कन्यया उषया सह समभूदिति वर्णितमस्ति। श्रीकृष्णस्य द्वितीयपुत्रे प्रद्युम्नेन नेपालोपत्यकायां विष्णुमती-वाग्मतीनद्योस्तटे प्रद्युम्नेश्वरभगवतः स्थापनं कृतम्। अद्यापि इदं मन्दिरं जनेषु विश्रुतं विद्यते। द्वापरयुग एव काशीतः

'काश्यकवृद्धमुनि:' (कङ्कमुनि:) गुह्येश्वरीदेव्या दर्शनार्थं तत्र तपश्चरणार्थञ्च नेपालदेशं प्रति गतोऽभूत्। तपोव्रतपूर्त्यनन्तरं कङ्कमुनिर्गौडदेशं (वङ्गप्रदेशम्) प्रत्यावर्तितः। महाभारतग्रन्थस्यावलोकनेनेदं प्रतीयते यद् भारतनेपालदेशयोः सम्बन्धः सहजः प्रकृष्टतरश्चासीत्। महाभारतग्रन्थस्य वनपर्वणि महादेव्या द्रौपद्या आग्रहेण कमलपुष्पान्वेषणप्रसङ्गेन भीमसेनो हिमाद्रिप्रदेशोपत्यकासु भ्राम्यन् नेपालदेशमधिष्ठितवान्। काष्ठमण्डपक्षेत्राद् नातिदूरं पूर्वस्यां दिशि 'दोल्खा'-नाम्नि क्षेत्रे संस्थापितं भीमसेनमन्दिरं भीमस्य नेपालयात्रास्मारकरूपेण विराजते। नेपालपर्वतशृङ्खलायां भीमसेनस्य सन्त्यनेकानि मन्दिराणि। इदमपि विचारणीयं विद्यते यद् नेपालेषु अद्यापि पाण्डुनन्दनस्य भीमसेनस्य पूजनपरम्परा प्रवर्तिता दृश्यते। विदुषामिदमभिमतं वर्तते यत्पाण्डुनन्दनेन भीमसेनेन नेपालदेशवासिनां सुरक्षा शत्रुभिर्हिंसकैश्च भृशं कृताऽस्माद्धेतोः प्राचीनकालाद् भीमसेन आराध्यदेवरूपेण नेपालाभिजनानां विद्यते।

नेपाल-भारतदेशयोः प्राक्तनसम्बन्धप्रमाणानि समुपलभ्यन्ते अन्यान्यपि। नेपालेषूत्तरपर्वतशृङ्खलासु एकस्य गिरेर्नाम 'महाभारत' इति विद्यते। अनेन नाम्ना नेपालस्येदं सम्पूर्णमपि क्षेत्रं 'महाभारतम्' इति नाम्ना प्रसिद्धमस्ति। नामकरणस्यास्य सम्बन्धः कौरवपाण्डवैः सह अवश्यमेव भवेत्।

महाभारतग्रन्थेनेदं विज्ञायते यद् महाभारतयुद्धकाले नेपालाभिजनेन केनापि किरातराजेन पाण्डवपक्षतो युद्धमकारि। नेपालेषु तोल्खा-क्षेत्रस्थितः पर्वतप्रदेशो द्वैतवनरूपेणाभिज्ञां भजते, यत्र पाण्डवैर्वनवासो विहितः। अनेन पाण्डवानां नेपालदेशेषु गमनं तत्रापि विशेषतो भीमसेनस्य भ्रमणं सिद्ध्यति।

पाशुपतास्त्रप्राप्तये किरातवेशधारिणा शिवेन सहार्जुनस्य युद्धमभूदिति सुप्रथितं विद्यते। इदं युद्धं गढवालनेपालपर्वतीयक्षेत्रेषु समभूत्। स्वकीय-दिग्विजययात्राप्रसङ्गेनार्जुनेन दक्षिणत आरभ्योत्तरदिशं यावद् ये ये प्रदेशाः स्वायत्तीकृता अभूवन् तेषु शाकलद्वीपस्यापि नाम वर्तते। ऐतिहासिकानां विदुषामन्वेषणानुसारमयं शाकलद्वीपो गढवालनेपालयोः संयुक्तक्षेत्रमासीत्।

एशियोपमहाद्वीपस्यान्यदेशानामिव नेपालैः सह भारतस्य सम्बन्धः बौद्धधर्मप्रवेशानन्तरं सुदृढः सञ्जातः। स्कन्दपुराणे स्वयम्भूपुराणे च नेपालस्य माहात्म्येन लोकश्रुतिपरम्परया चेदं ख्यायते यद् भगवान् बुद्धः स्वशिष्यैः साकं नेपालयात्रामन्वतिष्ठत्। नेपालेषु इदम्प्रथमतया प्रविष्टा जातिः किरातानां वर्तते। एवमनुश्रूयते यत् किरातानां शासनकाले भगवान् बुद्धो नेपालेषु जगाम। तस्मिन्

समये तत्र किरातराजेषु सप्तमस्य 'जितेदास्ती' (५२०बी.सी.) इति नाम्नो राज्ञः शासनमासीत्। भगवतो बुद्धस्योपदेशेन तस्मिन् काले किरातराजा तत्प्रजाश्च बौद्धधर्मं स्वीचक्रुः।

नेपालदेशेन सह सम्बन्धस्य जीवन्ती परम्परा सम्राजः अशोकस्य कालतः प्रारभ्यते। सम्राजा अशोकेन बुद्धपरिनिर्वाणात् २२६ वर्षानन्तरम् (३०० बी.सी.) पाटलिपुत्रे तृतीयबौद्धसङ्गीत्या आयोजनमकारि। अस्याः सङ्गीत्या वर्णनं 'दीपवंश'-'महावंश'-'सामन्तपासादिका'-प्रभृतिग्रन्थेषु समुपलभ्यते। अस्यां सङ्गीत्यामयमपि निर्णयो जातो यद् भारते द्वीपान्तरेषु च बौद्धधर्मप्रचारार्थं भिक्षुसङ्घाः प्रेषणीयाः। हिमालयस्य पञ्चप्रदेशेषु ये पञ्चस्थविरा धर्मप्रचारार्थं प्रेषितास्तेषां नामानि सन्ति—

स्थविरमज्झिमः, स्थविरकाश्यपः, स्थविरालकदेवः, स्थविरदुन्दुभिस्सरः, स्थविरमहादेवश्चेति। साँचीक्षेत्रात् सोनारिक्षेत्राच्च प्राप्तस्तम्भेषु, अस्थिसम्पुटेषु, अभिलेखेषु चैतेषां धर्मप्रचारकाणां महतो योगदानस्योल्लेखो विद्यते। यत्र हिमाद्रिप्रदेशेषु एते पञ्चस्थविराः प्रेषितास्तेषां प्रामाणिकं स्वरूपं यद्यपि नोपलभ्यते, परं हिमालयस्य ते पञ्चखण्डाः सम्भवतया बौद्धग्रन्थेषु वर्णिताः पञ्चप्रदेशाः सन्ति येषामुल्लेखः पुराणेषु इत्थमुपलभ्यते—

'खण्डाः पञ्च हिमालयस्य कथिताः नेपालकूर्माञ्चलौ
केदारोऽथ जलन्धरोऽपि रुधिरः काश्मीरसंज्ञोत्तमः'॥

सम्राजा अशोकेन सम्प्रेषिता एते बौद्धधर्मप्रचारकाः पञ्चस्थविराः पूर्वं नेपालेषु तदनु मानसरोवरमार्गेण तिब्बतेषु चीनदेशेषु च गतास्तत्र च भगवतस्तथागतस्य लोकहितकारिण्या वाण्याः प्रचारमकार्षुः।

प्राचीनभारतीयग्रन्थे कौटिलीयार्थशास्त्रे (ई.पू. अन्तिमा शताब्दी) नेपालशब्दस्य प्रयोगः समुपलभ्यते—

'अष्टप्लोतिसङ्घात्या कृष्णा-भिङ्गिसी-वर्षवारणमपसारकमिति नैपालकम्'[१]।

सम्राजः अशोकस्य पश्चाद् गुप्तसाम्राज्यस्य स्थापनानन्तरं (पञ्चसप्तत्यधिकद्विशतमितेशवीयवर्षानन्तरम्) समुद्रगुप्तस्य प्रयागप्रशस्तौ (३३५–३७५ ई.) उल्लिखितवर्णनेनेदं सिद्ध्यति यत् तस्मिन् काले नेपालस्य लिच्छविराजानां गुप्तराजभिः सह चारुतरः सम्बन्ध आसीत्। ते च करप्रदानं

१. कौटिलीयार्थशास्त्रम्—२/२७/११।

कुर्वन्ति स्म। प्रशस्तेरंश एवमस्ति—

'समतट-डवाक-कामरूप-नेपाल-कर्तृपुरादिप्रत्यन्तनृपतिभिर्मलिकार्जुनायन-यौधेय-भाद्रकाभीर-प्रार्जुन-सनकानीक-काक-खरपरिकादिभिश्च सर्वकरदानाज्ञाकरण..'।

चन्द्रगुप्तप्रथमस्य पुत्रः समुद्रगुप्तः प्राचीनाभिलेखेषु 'लिच्छविदौहित्र' इत्येवमभिहितः। समुद्रगुप्तस्य प्रयागप्रशस्तौ अभिलेखोद्धरणमेवमस्ति—

'महाराजश्रीगुप्तप्रपौत्रस्य महाराजश्रीघटोत्कचपौत्रस्य महाराजाधिराजश्रीचन्द्रगुप्तपुत्रस्य लिच्छविदौहित्रस्य महादेव्यां कुमारदेव्यामुत्पन्नस्य महाराजाधिराजश्रीसमुद्रगुप्तस्य.....'।

ईशवीयवत्सरस्य चतुर्थशताब्दे वृषदेवस्य नेपालराज्यारोहणेतिहासः प्राप्यते। वृषदेवस्य बहवः पुत्रा आसन् (सुतैर्विद्वद्भिर्बहुगर्वितैश्चपलैः ख्यातैर्विनीतात्मभिः)। तेषु शङ्करदेवः (४२०–४४० ई०) अप्यासीत्। वंशावल्यनुसारं ज्ञायते यत् तज्जन्मकाले शङ्कराचार्यवर्यैर्नेपालस्य यात्रा कृता आसीदिति स शङ्करदेव इति नाम्ना अलङ्कृतः। शङ्करदेवस्य पुत्र उत्तराधिकारी च धर्मदेवः (४४०–४६० ई०) आसीत्। अयं महान् धर्मप्राण आसीत्। अनेन नन्दिकेश्वरस्य विग्रहो निर्मापितः स्वयम्भुनाथस्य देवालयश्च निर्मापितः। अस्य पत्नी राज्यवतीनाम्नी आसीत्। तस्या वर्णनं मानदेवस्य चाङ्गुनारायणाभिलेखे एवमस्ति—

'पत्नी तस्य विशुद्धवंशविभवा श्रीराजवत्युत्तमा
प्राणानामभवत्प्रिया कुलगुणैर्लक्ष्मीरिवाग्र्या हरेः'।।

अस्या गर्भतः सुप्रथितस्य नरेशस्य प्रथममानदेवस्य जन्माभवत्। मानदेवस्योल्लेखः चांगुनारायणमन्दिराभिलेखे वर्तते। अस्य राज्यारोहणं षष्ट्यधिकचतुश्शतमिते (४६०) ईशवीयेऽब्दे प्रायशोऽभवत्। अनेन स्वपितुर्यशोवर्द्धनपूर्वकं पूर्वदिशि शत्रुदमनार्थं विजयप्रयाणं कृतमित्युच्यते—

'यूपैश्चारुभिरुच्छ्रितैर्वसुमती पित्रा समालङ्कृता
क्षात्रेणाजिमखाश्रयेण विधिना दीक्षाश्रितोऽहं स्थितः।
यात्राम्प्रत्यरिसंक्षयाय तरसा गच्छामि पूर्वां दिशं
ये चाज्ञावशवर्तिनो मम नृपाः संस्थापयिष्यामि तान्।।

मानदेवः स्वमातुलेन साकं मल्लपुरीविजयार्थं प्रयाणं कृतवानित्यपि चांगुनारायणाभिलेखे इत्थं स्पष्टमुक्तम्—

'अद्यैव प्रियमातुलोरु विषमक्षोभार्णवस्पर्द्धिनीं
भीमावर्त-तरङ्ग-चञ्चलजलान्तङ्गण्डटीमुदतरत्'।।

नेपालेषु भारतीया राजानो वैवाहिकसम्बन्धं प्रतिष्ठाप्योभयदेशयोरात्मीयसम्बन्धं स्थिरं कृतवन्तः। जनन्या जानक्या जन्मभूमिर्जनकपुराख्या नेपालदेशान्तर्वर्तिनी एवास्ति। सम्राट् अशोकः स्वपुत्र्याश्चारुमत्याः सम्बन्धं प्रतिष्ठाप्य, सम्राट् चन्द्रगुप्तः प्रथमश्च कुमारदेव्याः पाणिग्रहणं कृत्वा द्वयोरपि देशयोः पूर्वतनीं चिरसम्बन्धपरम्परामग्रेसरामकुरुताम्। इदमेव कारणमस्ति यन्नेपालेषु गुप्तकालिकेतिहासस्य विपुला सामग्री समुपलभ्यते। नेपालस्य लिच्छविराज्यकालिकेषु उपलब्धेष्वभिलेखेषु पुरातात्त्विकसांस्कृतिकवस्तुषु स्मारकेषु हस्तलेखेषु चाङ्कितो गुप्तसंवत्सरस्य प्रयोगो गुप्तकाले नेपालभारतसम्बन्धयोर्दार्ढ्यस्य परिचायकः सुतरामस्ति।

लिच्छविराजानां ब्राह्मलिप्यां लिखिताः संस्कृतभाषामया अभिलेखास्तेषु चाङ्किता भारतीयसंवत्सरमासतिथ्यादीनां प्रयोगा नेपालदेशीयलिच्छविराजानां भारतप्रेम्णः परिचयं प्रदर्शयन्ति।

भारतीयस्य बौद्धधर्मस्य साहित्यस्य च रिक्थसन्देशं नूतनमेव गृहीत्वा आचार्यो वसुबन्धुः (चतुर्थशतके ई.) नेपालदेशं प्रति गतवान्। सोऽयमाचार्यो वसुबन्धुस्तत्समये सर्वोत्कृष्टो बौद्धदार्शनिक आसीत्। नेपालमागत्य बौद्धधर्मस्य दार्शनिकपक्षोऽनेन प्रतिपादितः प्रसारितश्च। अद्यत्वेऽपि नेपालदेशे आचार्यस्य वसुबन्धोर्भूयस्यः कृतयो मूलरूपेणानूदितरूपेण चोपलभ्यन्ते।

लिच्छविराजानां काले संस्कृतभाषायां लिखितानां विक्रमसंवत्सराङ्कितानामभिलेखानामध्ययनेन शैवधर्मस्य व्यापकः प्रचारः प्रसारश्चात्र सिद्ध्यति, साध्यते चोभयदेशयोः प्रगाढः सम्बन्धः। शैवधर्मस्यात्र प्रसारप्रतिष्ठयोः कारणभूताः शङ्कराचार्या आसन्निति कथ्यते ऐतिह्यविद्भिः।

गुप्तराजवंशानन्तरं बृहद्भारतस्य शासनतन्त्रं सम्राट् हर्षवर्धनः (६०५-६४७ ई.) अङ्गीचकार। हर्षवर्धनस्य शासनं यदा भारतेषु आसीत्, तदानीं नेपालदेशे यशस्वी राजा अंशुवर्मा विजयधुरीणः शासक आसीत्। बाणभट्टेन स्वकीये हर्षचरितग्रन्थे लिखितं यत्—'अत्र परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतकरः'। अनेनेदमनुमीयते यन्महाराजस्य हर्षस्य नेपालेषु शासनसम्बन्ध आसीत्। श्रीहर्षस्य काले नेपालभारतयोः सम्बन्धेषु प्रगाढता अभवत्, कला-संस्कृति-धर्मसाहित्यानां विकासे विस्तारश्च सञ्जातः।

ईशवीयाब्दस्य सप्तमाष्टमशतकयोर्नेपालस्य राज्ञो नरेन्द्रदेवस्य पुत्रो राजा शिवदेवो मगधनरेशस्यादित्यसेनस्य पौत्रीं देवीं वत्सां पाणिना गृहीतवान्। तत्पुत्रो राजा जयदेवगुणकामः कलिङ्गराजस्य हर्षदेवस्य सुतया राजमत्या सह विवाहं विधाय उभयदेशयोः सम्बन्धपरम्परां सुदृढामकरोत्। द्वितीयजयदेवस्य पशुपतिनाथ-शिलालेखे अयमुल्लेख एवंविधोऽस्ति—

'देवी बाहुबलाढ्यमौखरिकुलः श्रीवर्मचूडामणिः
ख्यातिह्रेपितवैरिभूपतिगणश्रीभोगवर्मोद्भवा।
दौहित्री मगधाधिपस्य महतः श्र्यादित्यसेनस्य या
व्यूढा श्रीरिव तेन सा क्षितिभुजा श्रीवत्सदेव्यादरात्'।।
'माद्यद्दन्तिसमूह-दन्त-मुसल-क्षुण्णारिभूभृच्छिरो
गौडोड्रादिकलिङ्ग-कोशलपति-श्रीहर्षदेवात्मजा।
देवी राज्यमती कुलोचितगुणैर्युक्ता प्रभूताकुलै-
र्येनोढा भगदत्तराजकुलजा लक्ष्मीरिव क्ष्माभुजा'।।

लिच्छविराजवंशे प्रभावगुणयुक्तो बौद्धधर्मानुयायी च राजा जयदेवगुणकाम आसीत्। तस्य शासनसमये बौद्धविद्याविशारदो महानाचार्यः शान्तरक्षितो भारताद् नेपालदेशमागत्य बौद्धधर्मप्रचारं कृतवान्।

कल्हणविरचितया राजतरङ्गिण्या ज्ञायते यत् काश्मीरनरेशस्य ललितादित्यमुक्तापीडस्य पौत्रो जयापीडविनयादित्यो नेपालदेशमागतवान्; परं नेपालविजययात्रायां सः सफलो नाभूत्। किञ्च तत्रत्येन नृपालेन अरमुडीति नामधेयेन स कारायां निरुद्धः कृतः। किञ्चित्कालानन्तरं स्वामात्यसाहाय्येन विनयादित्यः कारागृहात् पलायने समर्थोऽभूत्। ततश्च स्वसैन्यबलसहकारेण अरुमुडीनरेशं पराजितवान्। अत एव वर्णितमस्ति राजतरङ्गिण्याम्—

'प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः।
तमशेषं सभूपालं नेपालविषयक्षयम्'[१]।।

नेपालेषु जनजीवने तत्रत्यधार्मिकसांस्कृतिकप्रवृत्तिषु च महायोगिराजस्य मत्स्येन्द्रनाथस्य योगीन्द्रगोरखनाथस्य च महान् प्रभावो दृश्यते। उभावपि महात्मानौ नेपालेषु यथाकालं वसतिञ्चक्रतुरिति सुप्रथितमेव।

---

१. राजतरङ्गिण्याश्चतुर्थस्तरङ्गः।

नवमदशमशताब्द्यां बौद्धधर्मस्य महनीय आचार्यः श्रीकमलशीलो दीपङ्करश्रीज्ञानवर्यश्च नेपालेषु गतौ आस्ताम्, ततश्च त्रिविष्टपदेशं (तिब्बतम्) प्रति गतौ उभावप्याचार्यपादौ नेपालदेशे बौद्धधर्मस्य प्रचारं कृतवन्तौ।

द्वादशशताब्द्यां भारतदेशे मोहम्मदीयानामाक्रमणं सञ्जातम्। ते यदा नालन्दा-तक्षशिलाप्रभृतिविद्याकेन्द्राणि भञ्जयामासुः, विशालान् ग्रन्थागारांश्च हुतवहपरीतान् अकार्षुस्तदा बहवो हिन्दवो बौद्धाश्च ग्रन्थरक्षणधिया पुस्तकान्यादाय नेपालेषु त्रिविष्टपेषु च शरणमातस्थुः। भारताद् बहुसंख्यजनताया गमनागमनकारणाद् उभयोर्देशयोः पारस्परिकसम्बन्धो न केवलं वृद्धिङ्गतोऽभूत्, अपि तु नेपालदेशो भारतीयसंस्कृतेर्विद्यायाः साहित्यस्य च मुख्यकेन्द्रत्वेन प्रतिष्ठितोऽभूत्।

राज्ञो जगज्ज्योतिर्मल्लस्य पुत्रेण राज्ञा यक्षमल्लेन भारतस्य दक्षिणभागात् श्रोत्रियविप्रानाहूय प्रसिद्धे पशुपतिनाथमन्दिरे गर्भगृहप्रवेशस्याधिकारो दत्तः, मुख्यार्चकपदे च तेषां प्रतिष्ठापनं कृतम्। ततः प्रभृति अद्यावधि सैषा व्यवस्थाऽविच्छिन्नरूपेण प्रवर्तिता विद्यते। राज्ञा शिवमल्लसिंहेन दक्षिणभारतदेशीयो विद्वानेकः स्वराजगुरुपदे प्रतिष्ठापितः। राज्ञः प्रतापमल्लस्य (१६३९-८९ ई.) काले दक्षिणभारताद् द्वौ प्रसिद्धौ तान्त्रिकौ लम्बकर्णस्वामिज्ञानानन्दनामानौ नेपालदेशं समागतौ। ताभ्यां प्रतापमल्लेनागमविद्यायाः शिक्षा गृहीता प्रभूतेन राजसम्मानेन च सत्कृतौ तौ।

यवनानामातङ्कभिया सूर्यवंशीयो नृपतिरयोध्यानरेशः श्रीहरिसिंहदेवः (१३३५ ई.) नेपालेषु वसतिञ्चक्रे। तत्र सबहुमानं सत्कृतिमवाप्यासौ नेपाल-देशजनताभिः स्वपालकत्वेनाप्यङ्गीकृत इत्यैतिह्यग्रन्थेषु वर्णितमस्ति। पाल्पा-क्षेत्रस्य नरेशेण धर्मसेनेन साकं स्वपुत्र्या उद्वाहं विधाय राज्ञा हरिसिंहदेवेन नेपालेषु सेनवंशस्य शाखा प्ररोहिता पुष्पिता च कृता। सोऽयं सेनवंशो नेपालेषु प्रतिष्ठितः सन् प्रायशः १७३२ ई. पर्यन्तं शशास, भारतेन च साकमस्य वंशस्य मातामहकुलत्वेन सम्बन्धो जातः।

सेनवंशानन्तरं नेपालेषु सुप्रथितस्य गोरखावंशस्य शासनं स्थापितमभूत्। गोरखावंशीयानां सम्बन्धो भारतीयचित्तौडक्षेत्रस्य क्षत्रियशासकैः सह संयोजितो विद्यते, ये त्रयोदशशताब्द्यां यावनाक्रमणपर्याकुलतया चित्तौडक्षेत्रं विहाय नेपालेषु वसतिं स्वीचक्रुः। वंशस्यास्य राजा पृथ्वीनारायणशाहदेवः (१७४२-१७७४ ई.) काष्ठमण्डपशासकैर्मल्लवंशीयैः पराभूतः सन् भारतेषु शरणं गृहीतवान्। अत्र

वाराणस्यां बैसक्षत्रियकुलोद्भवस्य अहिमानसिंहाभिधस्य कन्यया सह पृथ्वीनारायणशाहदेवस्योद्वाहो जातः। इत एव भटान् सैन्यसामग्रीञ्चादाय स काष्ठमण्डपं प्रति गतः, तत्र च विजयश्रियं लब्ध्वा काष्ठमण्डपं स्वायत्तीकृतवान्।

अष्टादशशताब्द्यां भारतदेशे ब्रिटिशशासनस्य स्थापना सञ्जाता। आङ्ग्ल-शासनकाले भारतप्रतिवेशिनेपालराष्ट्रेण साकं राजनैतिकः सम्बन्धस्तु विच्छिन्नोऽभूत्, परं धार्मिकः सम्बन्धः सांस्कृतिकश्च गाढः सम्बन्धो निरवच्छिन्नतयाऽद्यापि संराजत इति।





काशीस्थ-कामाक्षा (कमच्छा) स्थिते 'सीसमहल' प्रासादे भारतीयराजनीतिविचारगोष्ठीं सम्बोधयन्तः पूज्यश्रीशास्त्रिपादाः

# श्रीमद्भागवते गायत्र्यर्थसमन्विति:

**डॉ. विन्ध्येश्वरीप्रसादमिश्रो 'विनय:'**
उपाचार्य:, संस्कृताध्ययनशालायाम् (स्नातकोत्तरसंस्कृतविभागे)
विक्रमविश्वविद्यालयस्य, उज्जयिनी (म.प्र.)



ॐ भुर्भूव:स्वरिति तत्त्वमयीं पुरस्ता-
त्पश्चाच्च तत्सवितुरर्हणमन्त्ररूपाम्।
ब्रह्मात्मिकां निखिलविप्रगणैरुपास्यां
तां वेदमातरमचिन्त्यकलां नमाम:।।

गायत्रीच्छन्दसां सारं सच्चिदानन्दरूपिणी।
जगत्प्रसवितु: शक्तिस्त्रिपदाऽथ चतुष्पदा।।
श्रीमद्भागवतं तस्या भाष्यमित्युच्यते पुन:।
तस्माद्विमृश्यते ह्यस्मिन् गायत्र्यर्थसमन्विति:।।

गायत्रीति वैदिकच्छन्द:सु प्रधानं छन्दस्तेष्वपि सवितु: प्रभावानुध्यानात्मक: प्रणवाक्षरजुष्टो व्याहृतित्रयसंवलित: समस्तद्विजवृन्दैकजप्यो मन्त्रविशेष इत्यधिभूतं, हंसाधिष्ठिता ब्रह्मविष्णुरुद्रात्मिका विग्रहवती देवता वेदमातेत्यधिदैवं, प्रत्यगात्मस्वरूपिणी सच्चिदानन्दमयी ब्रह्मविद्येति चाध्यात्मम्। तस्मादेव,

गायत्री वा इदं सर्वं भूतं यदिदं किञ्च,
वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति त्रायते च[1]।

सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता इत्येवन्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयांस्तत्रेप्राणा वै गयास्तत्प्राणां-स्तत्रेतद्यद्गयांस्तत्रे तस्माद् गायत्री नाम स यामेवामूं सावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणांस्त्रायते[2]।

---

१. छान्दोग्योपनिषदि-३।१२।१;     २. बृहदारण्यके-५।१४।४।

गायत्री वा इदं सर्वं यदिदं किञ्च[१] ।
ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्।।
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान्[२]।।
गायत्री छन्दसामहम्[३]।
गायत्री वेदजननी गायत्री पापनाशिनी।
गायत्र्याः परमं नास्ति दिवि चेह च पावनम्[४]।।

इत्यादिश्रुतिस्मृतिवचनानि सङ्गच्छन्ते। भगवान् बादरायणोऽपि—'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम्'[५]। इत्यस्मिन् सूत्रे श्रुतिशिरःसु समाम्नाता गायत्रीसन्दर्भा ब्रह्मसम्बद्धा एव न च्छन्दोमात्रसम्बद्धा इति पूर्वोत्तरपक्षपद्धत्याऽमुमेवार्थं समर्थयते। यथाऽत्र शाङ्करभाष्यम्—

'गायत्री वा इदं सर्वम्' इति गायत्रीमुपक्रम्य तामेव भूतपृथिवीशरीरहृदय-वाक्प्राणप्रभेदैर्व्याख्याय 'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं तावानस्य महिमा' इति तस्यामेव व्याख्यातरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद् ब्रह्म चतुष्पादभिदध्यात्। योऽपि तत्र 'यद्वै ब्रह्म' (छा. ३।१२।५-६) इति ब्रह्मशब्दः सोऽपि छन्दसः प्रकृतत्वाच्छन्दोविषय एव। 'य एतामेव ब्रह्मोपनिषदं वेद' (छा. ३।११।३) इत्यत्र हि वेदोपनिषदमिति व्याचक्षते, तस्माच्छन्दोऽभिधानान्न ब्रह्मणः प्रकृतत्वमिति चेत्, नैष दोषः, 'तथा चेतोऽर्पणनिगदात्' तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसोऽर्पणं चित्तसमाधानमनेन ब्राह्मणवाक्येन निगद्यते—'गायत्री वा इदं सर्वम्' इति। न ह्यक्षरसन्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं सम्भवति ××× तस्मादस्ति छन्दोऽभिधानेऽपि पूर्वस्मिन् वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टमिति।

अथाधिभौतिकमाधिदैविकाऽऽध्यात्मिकमिति गायत्र्याः स्वरूपत्रयमुच्यते। अधिभूतं क्षरो भावः[६]—क्षरतीति क्षरो, विनाशी भावो यत्किञ्चिज्जनिमद्वस्तु, भूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतमुच्यत इति भगवदुक्तिस्वारस्यादुत्पादविनाश-मद्ध्वन्यात्मकं वर्णपदवाक्यमयं व्यावहारिकं छन्दोमयं गायत्र्याः

---

१. नृसिंहपूर्वतापनीयोपनिषदि-४।२; २. मनुस्मृतौ-२।८१-८२।
३. श्रीमद्भगवद्गीता-१०।३५; ४. शङ्खस्मृतौ-१२।११-१२।
५. ब्रह्मसूत्रे-१।१।२५; ६. श्रीमद्भगवद्गीता-८।४।

स्वरूपमाधिभौतिकम्। प्रणवादिव्याहृतित्रयसंवलितं चतुर्विंशत्यक्षरं तद्यथा—

'ॐ भूर्भुवः स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्'[1] इति। अस्य विवृतिर्यथा—

ॐकारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च।
चतुर्विंशत्यक्षरां च गायत्रीं प्रोच्चरेत् ततः[2]॥

चतुर्विंशत्यक्षरत्वे एकाक्षरस्य न्यूनता चेच्छन्दोदृष्ट्या गायत्र्या 'निचृद्गायत्रीति' सञ्ज्ञा भवति, अत्रापि—

तत्सवितुर्वरेण्यम् { तत्/१ स/२ वि/३ तुर/४ व/५ रे/६ ण्यम्/७ } इत्यस्मिन् प्रथमे पादे सप्त एवाक्षराणि नाष्टौ, तस्माद् 'ण्यम्' इत्यस्य 'णियम्' इति स्वरूपमुद्भाव्य परिगणनीयमुच्चारणन्तु यथोक्तमेव विधातव्यमिति मार्कण्डेयस्मृतौ निर्दिष्टम्—

अत्र यः सप्तमो वर्णः स तु वर्णद्वयात्मकः।
'णि'कारश्च 'य'कारश्च द्वावित्येव मनीषिभिः॥
ज्ञात्वा तु वैदिकैः सर्वैर्जप्यो वेदे यथैव सा॥ इति।

अस्या जपमात्रेणाधिभौतिकान्यनिष्टान्यपवार्यन्ते, यथाऽऽह भगवान् व्यासः—

नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते।
न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगाः[3]॥

अथास्या आधिदैविकं स्वरूपं, यथा—

भास्वज्जपाप्रसूनाभां कुमारीं परमेश्वरीम्।
रक्ताम्बुजासनासीनां रक्तगन्धानुलेपनाम्॥
रक्तमाल्याम्बरधरां चतुरास्यां चतुर्भुजाम्।
द्विनेत्रां स्रक्स्रुवौ मालां कुण्डिकाञ्चैव बिभ्रतीम्॥
सर्वाभरणसन्दीप्तामृग्वेदाध्यायिनीं पराम्।
हंसपत्रामाहवनीयमध्यस्थां ब्रह्मदेवताम्॥

---

१. यजुर्वेदे-३६।३; अपि च, प्रणवरहितं निर्व्याहृतिकं मन्त्रं, यजुर्वेदे-३६।३५, सामवेदे-१४.६२, ऋग्वेदे च ३।६२।१० इत्यत्राप्युपलभ्यते।
२. देवीभागवते-११।१६।१०५।
३. महाभारते, अनुशासनपर्वणि-१५८।७०।

चतुष्पदामष्टकुक्षिं सप्तशीर्षां महेश्वरीम्।
अग्निवक्त्रां रुद्रशिखां विष्णुचित्तां तु भावयेत्।।
ब्रह्मा तु कवचं यस्या गोत्रं सांख्यायनं स्मृतम्।
आदित्यमण्डलान्तःस्थां ध्यायेद् देवीं महेश्वरीम्।।

अथ चास्यास्त्रैकालिकसन्ध्योपासनाभिमतानि ध्येयस्वरूपाणि, यथा—

**प्रातःकालिकं ध्येयस्वरूपम्**

ॐ प्रातर्गायत्री रविमण्डलमध्यस्था रक्तवर्णा द्विभुजा अक्षसूत्रकमण्डलुधरा हंसासनसमारूढा ब्रह्माणी ब्रह्मदैवत्या कुमारी ऋग्वेदोदाहृता ध्येया। अपि च, पद्यात्मकं ध्यानम्—

ॐ बालां विद्यां तु गायत्रीं लोहितां चतुराननाम्।
रक्ताम्बरद्वयोपेतामक्षसूत्रकरां तथा।।
कमण्डलुधरां देवीं हंसवाहनसंस्थिताम्।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम्।।
मन्त्रेणावाहयेद् देवीमायान्तीं सूर्यमण्डलात्।।

**मध्याह्नकालिकं ध्येयस्वरूपम्**

ॐ मध्याह्ने सावित्री रविमण्डलमध्यस्था कृष्णवर्णा चतुर्भुजा त्रिनेत्रा शङ्खचक्रगदापद्महस्ता युवती गरुडारूढा वैष्णवी विष्णुदैवत्या यजुर्वेदोदाहृता ध्येया।

एवञ्च पद्यबद्धमपि, यथा—

ॐ मध्याह्ने विष्णुरूपाञ्च तार्क्ष्यस्थां पीतवाससाम्।
युवतीञ्च यजुर्वेदां सूर्यमण्डलसंस्थिताम्।।इति।

**सायंकालिकं ध्येयस्वरूपम्**

ॐ सायाह्ने सरस्वती रविमण्डलमध्यस्था शुक्लवर्णा चतुर्भुजा त्रिशूलडमरुपाशपात्रकरा वृषभासनमारूढा वृद्धा रुद्राणी रुद्रदैवत्या सामवेदोदाहृता ध्येया।

---

१. श्रीदेवीभागवते, ११।१६।९४-९७।

पद्यात्मकञ्च, यथा—

ॐ सायाह्ने शिवरूपाञ्च वृद्धां वृषभवाहिनीम्।
सूर्यमण्डलमध्यस्थां सामवेदसमायुताम्।।

इत्थं 'पुरुषश्चाधिदैवत'[1]मिति श्रीमद्भगवद्गीतोक्तिनिर्देशादधिदैवगायत्री विग्रहवती देवता, भक्तानुग्रहविधायिनी भगवतो महाविष्णोरादिशक्तिः पुराणतन्त्रादिषु प्रथिततमेत्यवगम्यते। सायणादिवेदव्याख्यातृभिर्गायत्रीमन्त्रस्य यः सूर्यदैवतपरोऽर्थोऽभिहितः सोऽप्याधिदैविक एव। आध्यात्मिकञ्च स्वरूपं, यथेयं छान्दोग्यश्रुतिः—

'सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यामनूक्तम्। तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति। यद्वै तद्ब्रह्मेतीदं वाव तद्यो बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः'[2]। अत्र च शाङ्करभाष्यम्—

'.....तदेतस्मिन्नर्थ एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तमृचापि मन्त्रेणाभ्यनूक्तं प्रकाशितम्। तावानस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः। .....त्रिपादमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थ इति। यद्वै त्रिपादमृतं गायत्रीमुखेनोक्तं ब्रह्मेतीदं वाव तदिदमेव तत्'। इति।

एवमेव, 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्'[3] इति वेदान्तसूत्रस्य भाष्येऽपि भगवन्तो भाष्यकारा अभ्यूचुः—'इतश्चैवमभ्युपगन्तव्यमस्ति पूर्वस्मिन् वाक्ये[4] प्रकृतं ब्रह्मेति यतो भूतादीन् पादान् व्यपदिशति। भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह—'सैषा चतुष्पदा षड्विधा गायत्री' इति। न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते, अपि च, ब्रह्मानाश्रयणे नेयमृक्सम्बध्येत—'तावानस्य महिमा' इति। अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते—'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छान्दोग्य. ३।१२।५) इति सर्वात्मत्वोपपत्तेः। ××× तस्मादस्ति पूर्वस्मिन् वाक्ये ब्रह्म प्रकृतम्'। इति।

तदेवं निष्कृष्यते—आध्यात्मिकदृशा गायत्री प्रत्यग्ब्रह्मैक्यबोध्या, यथा हि—मन्त्रात्प्राग् 'ओङ्कारः' 'ओमित्येकाक्षरं ब्रह्मे'ति रीत्या ब्रह्मणोऽभिधानमिति स्पष्टमेव।

---

१. ८।४; २. छान्दोग्योपनिषदि, ३।१२।५-७।
३. ब्रह्मसूत्रम्, १।१।२६।
४. 'गायत्री वा इदं सर्वम्' इति छान्दोग्यश्रुतिसमाम्नाते।

तदनु, 'भूरिति' सन्मात्रत्वबोधिका व्याहृतिः। भुव इति सर्वं भावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपमुच्यते। 'सुव्रियत' इति व्युत्पत्त्या स्वरिति सुष्ठु सर्वैर्व्रियमाण-सुखस्वरूपमुच्यत इति व्याहृतित्रयेणापि सच्चिदानन्दलक्षणं ब्रह्मैवाभिव्यज्यते। मन्त्रस्यापि तदिति पदेन प्रत्यग्भूतं स्वतःसिद्धं ब्रह्मैव सूच्यते सवितुरिति सृष्टिस्थितिलयलक्षणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठानं लक्ष्यते वरेण्यमिति परमेश्वरस्यात्मभूतं सर्ववरणीयं सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयं निरतिशयानन्दरूपं, भर्ग इत्यविद्यादिदोषभर्जनात्मकज्ञानैकविषयत्वं, देवस्येत्यपि—

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च[१]।।

इति श्रुत्युक्तप्रामाण्याद् ब्रह्मण एवाभिव्यञ्जकम्। धीमहीति—'योऽहं सोऽसौ, योऽसौ सोऽहमिति' वयं ध्यायेम। अयमाशयः—बुद्ध्यादिसर्वदृश्यसाक्षिलक्षणं यन्मे स्वरूपं तत्सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्मेत्येवं धीमहि—ध्यायेम। एवं सह ब्रह्मणः स्वविवर्त्तजडप्रपञ्चेन रज्जुसर्पन्याये-नापवादसामानाधिकरण्यरूपमेकत्वमित्यद्वैताचार्याणां श्रुत्यन्तपारङ्गतानामभिमतिः।

एतदतिरिक्तमधियज्ञपरोऽप्यर्थोऽस्याः[२] समुत्प्रेक्षणीयो विद्वद्भिर्यथाऽऽह श्रीमदमलानन्दसरस्वती गायत्र्याः सर्वच्छन्द इति। एवं हि श्रूयते—चतुरक्षराणि छन्दांस्यग्रे समभवन्, तेषु जगती सोमाहरणाय गता त्रीण्यक्षराणि हित्वा आगच्छत्। एकं हित्वा त्रिष्टुबागता। गायत्री तु गत्वा तानि गलितानि चत्वार्यक्षराणि सोमञ्चाहृतवती ततः साष्टाक्षराऽभवत्तयैव सवनत्रयमतन्वन्त याज्ञिकाः। माध्यन्दिने सवने त्रिष्टुभा प्रार्थिता गायत्री तामुपाह्वयत्। सा च गायत्र्यक्षरैरष्टभिः स्वीयैरेव शिष्टैस्त्रिभिरक्षरैरेकादशाक्षराऽभवत्। ततो जगत्या प्रार्थिता गायत्री तां तृतीयसवने उपाह्वयत्। सा च स्वीयेनैकेन प्राचीनैश्चैकादशभिरक्षरैर्द्वादशाक्षराऽभवदित्युक्त्वोप-संहृतं तस्मादाहुर्गायत्राणि वै सर्वाणि सवनानीति[३]।

इत्थं सङ्क्षेपेण यथामति गायत्रीतत्त्वमुपदर्शितमधुना श्रीमद्भागवत-महापुराणेन सममेतस्य सामञ्जस्यमीक्षामहे। पद्मपुराणोक्तश्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतस्य गायत्र्या सार्द्धमभिन्नत्वं स्फुटमवबुध्येरन्मार्मिकाः श्लोकैरेभिर्यथा—

---

१. श्वेताश्वतरोपनिषदि, ६।११।
२. अधियज्ञोऽहमेवात्र देहे देहभृतां वर। (श्रीमद्भगवद्गीता-८/४)
३. ब्रह्मसूत्रे १।१।२५ इत्यस्य शाङ्करभाष्यभामत्यां 'वेदान्तकल्पतरु'टीका।

वेदादिर्वेदमाता च पौरुषं सूक्तमेव च।
त्रयी भागवतञ्चैव द्वादशाक्षर एव च॥
द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः।
ब्राह्मणाश्चाग्निहोत्रञ्च सुरभिर्द्वादशी तथा॥
तुलसी च वसन्तश्च पुरुषोत्तम एव च।
एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते[१]॥

एवञ्चास्य गायत्रीमयत्वमनेनापि विधानेन स्फुटीभवति, तत्रैव सप्ताहयज्ञनिरूपणप्रसङ्गे—

एवं नगाहयज्ञेऽस्मिन् समाप्ते श्रोतृभिस्तदा।
पुस्तकस्य च वक्तुश्च पूजा कार्याऽतिभक्तितः॥
प्रतिश्लोकं तु जुहुयाद्विधिना दशमस्य च।
पायसं मधुसर्पिश्च तिलान्नादिकसंयुतम्॥
अथवा हवनं कुर्याद् गायत्र्या सुसमाहितः।
तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः[२]॥

एतस्मादेव श्रीमद्भागवतस्य स्वरूपलक्षणेऽपि गायत्र्या नियतमनूनकञ्च महत्त्वं चाकशीति। अन्यान्यपि पुराणानि श्रीमद्भागवतमहापुराणं, गायत्रीभाष्यत्वेन समाम्नासिषुस्तद्यथा हि—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते॥ इति।
(पुराणदानादिप्रस्तावे मत्स्यपुराणम्[३])

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः।
गायत्र्या च समारम्भस्तद्वै भागवतं विदुः॥ इति। (स्कन्दपुराणम्[४])

एवमेव,

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः।
गायत्रीभाष्यभूतोऽसौ वेदार्थपरिबृंहितः॥ इति। (गरुडपुराणम्[५])

---

१. श्रीपद्मपुराणे, उत्तरखण्डे, श्रीमद्भागवतमाहात्म्ये-३।३४, ३५, ३६।
२. तत्रैव, ६।५६, ६०, ६१; ३. ५३।२०।२२-२३।
४. उत्तरखण्डे; ५. १०।२८३।

अपि च, श्रीमद्भागवतस्य सर्वेऽपि टीकाकृतो निबन्धकृतश्च स्वस्वटीकानामुपक्रम एव तथ्यमिदमावेदयाञ्चक्रुः। केषाञ्चिद् वचनानि चेत्थमवलोकनीयानि—'धीमहीति गायत्र्या प्रारम्भेण च गायत्र्याख्यब्रह्मविद्या-रूपमेतत्पुराणमिति दर्शितम्'। इति 'भावार्थदीपिकायां' श्रीधरस्वामिनः। 'अत्र गायत्र्युपक्रमत्वं प्रतीयते'—धीमहीति शब्दतः पदान्तरैरर्थतश्च तदुपक्रमत्वप्रत्यभिज्ञानात्'। इति वीरराघवाचार्यो भागवतचन्द्रिकायाम्। 'ननु 'धीमहीति' छान्दसः प्रयोगः कस्मात्कृतः? उच्यते—'गायत्री'-प्रतिपाद्यं नारायणाख्यं परं ब्रह्मैव न सूर्यस्तस्य 'चक्षोः सूर्यो अजायत' इति श्रुत्या तदङ्गजननोक्तेरिति दर्शयितुं यथा वेदाध्ययनोपक्रमे गायत्र्यभिधीयते विशिष्टफलहेतुत्वात् तथा भागवतोपक्रमे इति वा गायत्र्याद्यशेषवेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यत×××धीमहीति छान्दसं पदं प्रायुङ्क्त भगवान् बादरायणः'। इति 'पदरत्नावल्यां' विजयध्वजतीर्थः। 'तं धीमही'त्यादिप्रमाणवचनेन गायत्रीशब्देन तत्सूचकतदव्यभिचारि 'धीमहि'-पदसंवलिततदर्थ एवेष्यते। सर्वेषामपि मन्त्राणामादिरूपायास्तस्याः साक्षाल्लिखनानर्हत्वात्। इति 'क्रमसन्दर्भे' जीवगोस्वामी। अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गायत्र्यर्थश्च दर्शितः। इति विश्वनाथचक्रवर्ती 'सारार्थदर्शिन्याम्'। 'धीमहीति गायत्रीपदोपन्यासश्च गायत्र्याः फलितार्थप्रकाशकं श्रीमद्भागवतमिति द्योतयति'। इति 'सिद्धान्तप्रदीपे' श्रीशुकदेवः। 'एवं 'ध्यायेमेति' पदस्थाने 'धीमहीति' छान्दसप्रयोगाद् गायत्रीरूपत्वमस्याः सूचितम् ××× तथा च गायत्रीवदनिशं जप्तव्यैषा संहितेति दर्शितम्'। इति 'भागवतभावार्थप्रकाशिकायां श्रीमधुसूदनसरस्वती। 'भगवदाज्ञया भक्तिजनिकां संहितामारभमाणः शिक्षार्थं मङ्गलमाचरन् बीजभावेन प्रथमं गायत्र्यर्थमुपनिबबन्ध—जन्माद्यस्येति'। इति श्रीवल्लभाचार्यः 'सुबोधिन्याम्'। 'गायत्रीप्रतिपाद्यं नारायणाख्यं परं ब्रह्मैव न तु सूर्यः, 'चक्षोः सूर्यो अजायत' इति श्रुत्या तदङ्गजननोक्तेरिति दर्शयितुं यथा वेदाध्ययनोपक्रमे गायत्र्यभिधीयते विशिष्टफलहेतुत्वात्तथा भागवतोपक्रमे इति वा, गायत्र्यशेषवेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यते इति वा ××× 'धीमहीति'-च्छान्दसं प्रायुङ्क्त भगवान् बादरायण इति'। इति 'भावार्थदीपिकाप्रकाशे' वंशीधरः। 'सर्वगायत्रीमन्त्राव्यभिचारि-'धीमहीति' पदसंवलितगायत्र्यर्थेन प्रारम्भेणेत्यर्थः। अत्यन्तसुगोप्यायाः सर्वमन्त्रादि-रूपाया गायत्र्याः प्रकाश्यतया पठनानर्हत्वादपि गायत्र्यर्थेन प्रारम्भ इति बोध्यम्। इति राधारमणदासगोस्वामी, 'दीपिन्याम्'।

अग्नेः पुराणं गायत्रीं समेत्य भगवत्पराम्।
भगवन्तं तत्र मत्वा जगज्जन्मादिकारणम्।।

यत्राधिकृत्य गायत्रीमिति लक्षणपूर्वकम्।
श्रीमद्भागवतं शश्वत्पृथिव्यां जयति सर्वतः॥

इति जीवगोस्वामी 'तत्त्वसन्दर्भे'[१]

इत्थं पुराणशिरोमणेरस्य गायत्रीमयत्वं सर्वैरेवाभ्युपगतं विपश्चित्प्रवरैष्टीका-निबन्धादिकृद्भिरिति स्फुटमवगम्यते। यद्यपि गायत्र्यर्थब्रह्मनिरूपणपरत्वात्समग्रमपि पुराणं गायत्र्या भाष्यरूपं तथाप्यस्य प्रथमपद्ये विशिष्य गायत्र्यर्थसमन्वितिः सर्वैरप्याचार्यैः स्वस्वपद्धत्याऽऽविष्कृता, तदत्र पद्योद्धृतिपुरस्सरं केषाञ्चिदेव व्याख्या समुपस्थाप्यते सुमनसां मनोमोदाय, पद्यं तद्यथा—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्महृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजो वारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि[२]॥

अत्र गायत्र्यर्थान्वितिमाह केवलाद्वैतवेदान्तपारदृश्वा तत्रभवान् श्रीमधुसूदनसरस्वती—'तत्सवितुर्वरेण्यमित्यस्यार्थः स्वराडित्यनेन सूचितः' भर्गो देवस्य धीमहीत्यस्यार्थः 'जन्माद्यस्य यत' इत्यादिना सूचितः। 'धियो यो नः प्रचोदयादित्यस्यार्थस्तेन ब्रह्महृदेत्यादिना सूचितः'[३]।

अथ विशिष्टाद्वैती श्रीविजयध्वजतीर्थः—गायत्र्यर्थोऽप्यनेन श्लोकेन सूचितः। तथा हि—तत्सवितुर्देवस्येत्यस्यार्थः—'जन्माद्यस्य यत' इत्यादीति, 'वामं वरेण्यं परम्' इत्यभिधानाद् वरेण्यमित्यस्य व्याख्यानं परमिति, 'भर्ग' इत्यस्य व्याख्यानं धाम्ना स्वेन सदा निरस्तकुहकमिति, 'भर्गः' सकलदुरितभर्जनं ज्योतीरूपं तत्पदार्थव्याख्यानं स्वराडिति, धियो यो नः प्रचोदयादित्यस्य विवरणं 'तेने ब्रह्महृदा य आदिकवय' इति। यः सविता, जन्मादिकर्त्ता नः, अस्माकं धियः धर्मादिविषया बुद्धीः, उपलक्षणमेतत्, सर्वेन्द्रियाणि इत्यादिस्वतत्त्वविषयं ज्ञानं गुरुमुखेनोपदिश्य तज्ज्ञानसाधनानि सर्वाणि करणानि प्रचोदयात्—प्रचोदयति, स्वात्मविषयतया प्रेरयति तस्य सवितुर्देवस्य क्रीडादिगुणसम्पन्नस्य नारायणस्य अनन्याधीनतया ततत्त्वाद् व्याप्तत्वात्तद्वरेण्यं सकलगुणाकरतया परममङ्गलं भर्गः ज्योतीरूपं भरणगमनयोगात् सर्वज्ञं वा वपुर्ज्ञानादिगुणरचितकरचरणाद्यवयवमिति यावद् धीमहि ध्यायेम। ज्ञानमेव तत्प्रीतिजनकं न कर्मादिकं तस्मात् तच्चिन्तनं कर्त्तव्यमित्यर्थः[४]।

---

१. ७३-७४ कारिके; २. श्रीमद्भा., १।१।१।

३. श्रीमद्भा., १।१।१ इत्यत्र 'भागवतभावार्थप्रकाशिका'।

४. तत्रैव, 'पदरत्नावली'।

एवञ्च शुद्धाद्वैतपरमाचार्यो महाप्रभुर्वल्लभदीक्षितः—यथा हि यज्ञा ब्रह्मावगतिश्च काण्डद्वयार्थोऽन्योन्यहेतुभूतस्तथाऽत्र द्वयमपि भक्तिहेतुरिति निरूपयितुं गायत्रीबीजं 'वेदा वृक्षा भागवतं फल'मिति निरूप्यते, अतः काण्डद्वयार्थ-निष्णातोऽप्यफलवृक्ष इव व्यर्थ इति भागवतारम्भः। तदत्र श्लोकत्रयेण निरूप्यते—यद्यपि प्रणवो व्याहृतयश्च तथा भवन्ति, तथापि तेषामर्थः स्पष्टो नेति गायत्र्यर्थो निरूप्यते×××। तत्र गायत्र्यां जगत्प्रसवकर्तृत्वेन सर्वकर्तृत्वं, देवत्वेन च सर्वज्ञत्वं षष्ठीद्वयेन निरूप्यते। वरेण्यमिति भक्तिबीजं भर्ग इति संसारनिवृत्तिः। भर्जयत्यखिलाविद्यामिति। अतस्तदेव धीमहीति। आवश्यकत्वं चाह—

धियः सर्वेन्द्रियाण्येव मनसा सह सर्वदा।
प्रेरयेद् यः समस्तानां तद्ध्यानं सर्वथा हितम्[१]।।इति।

विञ्चाचिन्त्यभेदाभेदवादिगौडीयवैष्णवाचार्यश्रीलजीवगोस्वाम्यपि— तदर्थता च, जन्माद्यस्य इति प्रणवार्थः, सृष्ट्यादिशक्तिमत्त्ववाचित्वात्। यत्र त्रिसर्गो मृषेति व्याहृतित्रयार्थः, उभयत्रापि लोकत्रयस्य तदन्यत्वेन विवक्षितत्वात्। 'स्वराडिति' सवितृप्रकाशकपरमतेजोवाचि 'तेने ब्रह्म हृदेति' बुद्धिवृत्तिप्रेरणाप्रार्थना सूचिता। तदेवं कृपया स्वाध्ययनाय बुद्धिवृत्तिं प्रेरयतादिति भावः[२]।

अथ श्रीधरस्वामिनां मतमनुवदन् विस्तरेणाह गोस्वामिराधारमणदासो यथा—'जन्माद्यस्ये'त्यत्र समग्रगायत्र्यर्थसन्निवेशलक्षणा बहुविधव्याख्या सुबोधि-न्यादिबहुटीकाकृद्भिः कृता, तत्रातिविशदत्वादत्र व्याख्यालेशोक्तव्याख्येयं परिगृह्यते। 'जन्माद्यस्य यत' इत्यनेन 'सवितु'रित्यस्यार्थ उक्तः, यतः सूते इति सविता, अत्र स्थितिप्रलयावप्युपलक्षणीयौ। 'पर'मित्यनेन 'वरेण्य'पदस्यार्थ उक्तः उभ्योरपि श्रेष्ठवाचकत्वात्, 'सत्य'मित्यनेन 'भर्ग'पदस्यार्थ उक्तः, यतो ब्रह्मैव सदन्यदसत्यम्। तत्पदार्थस्तु विशेषणतया न स्वतन्त्रः, यद्वा तत्प्रसिद्धं 'स्वराडि'त्यनेन देवपदस्यार्थ उक्तः, यतो दीव्यति स्वतः प्रकाशत इति देवः, स्वेनात्मनैव राजत इति स्वराट्। प्रकाशोऽत्र ज्ञानं तस्य द्योतनात्मकत्वात्। यदुक्तं ज्योतिर्वज्ज्ञानानि भवन्तीति तेन स्वतःसिद्धज्ञानः स्वप्रकाशोऽन्येषान्तु तदधीनप्रकाशस्तेन ब्रह्मेत्यादिपदपञ्चकेन 'धियो यो नः प्रचोदया'दिति वाक्यस्यार्थ उक्तः। यो हि ब्रह्मणोऽपि वेदप्रदानेन प्रज्ञामचालीत्स तु सर्वेषामस्माकं जीवानां बुद्धिवृत्तीः प्रवर्तयति न त्वन्य इति वाक्यार्थः धीमहीति तुल्यमेव[३]।

---

१. श्रीमद्भा., १।१।१ इत्यत्र 'सुबोधिनी'।

२. तत्रैव, 'क्रमसन्दर्भः'।

३. तत्रैव, 'दीपनीं'।

श्रीमद्भागवतस्यादिपद्य'रसव्याख्या'कृज्जगन्नाथसुधी चापि—×××'गायत्रीभाष्यरूपोऽयं द्वादशस्कन्धसंयुतः। ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः'।। इति गौरीतन्त्राच्चास्य पुराणस्य गायत्रीभाष्यरूपत्वं गायत्र्यारम्भत्वञ्च प्रतीयते, तच्च गायत्रीभाष्यं नाम तद्विवरणं तच्च जीवेश्वरयोः शुद्धतत्त्वं पदयोरेकत्वेनोपपादनम्, 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावादित्ये पुरुषः सोऽहमस्मीति' श्रुतेः। तच्च श्रीमद्भिः सर्वज्ञैः स्वामिपादैः सुविस्तरं समग्रग्रन्थेनोपपादितम्। गायत्र्यारम्भस्तु, धीमहीति पदेनैव गायत्र्याः प्रारम्भेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितमित्युक्तम्, न त्वानुपूर्व्येण, अत एवेदानीं जन्माद्यस्येति पद्येन गायत्र्यर्थो निरूप्यते। ×××तत्रादौ गायत्री यथा—'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादिति'। अस्या अर्थस्तु, तत् तस्य प्रसिद्धस्य देवस्य दिवि द्योतमानस्य, सवितुर्विश्वप्रसवकर्त्तुर्यो भर्गोऽज्ञानादिद्वैततृणभर्जको मण्डलस्थः पुरुषविशेषस्तेजोरूपो नोऽस्माकं जीवानां धियो धीवृत्तीः प्रचोदयाद् दृष्टादृष्टफलजनकेषु कर्मसु प्रेरयति तं वरेण्यं वरणीयं सर्वोत्तमं पुरुषमात्मत्वेन धीमहि ध्यायेम इत्याशंसा। वस्तुतस्तु सवितुर्देवस्येत्यत्र उपचारे षष्ठी, 'राहोः शिर' इतिवत्। तेन यः सः प्रसिद्धः सविता देवो भर्गः सर्वानर्थभर्जको नोऽस्माकं धियः प्रचोदयात् तं वरेण्यं धीमहीत्येव प्रतिभातीति मनसि निधाय भगवान् कृष्णद्वैपायनो मङ्गलमाचरति, जन्माद्यस्येति। यतो यस्मात् सवितुरस्य विश्वस्य जन्मादि भवतीति शेषस्तस्य तेजो भर्गो धीमहीति सम्बन्धः। यच्छब्दस्योद्देश्यसमर्पकत्वात्सवितृसमर्पकत्वं युक्तमेव, भर्गपदस्य भर्जनकर्तृत्वाद्युक्तमेव तेजोवाच्यत्वमिति, यथोक्तं योगियाज्ञवल्क्येन—

सविता सर्वभूतानां सर्वभावान् प्रसूयते।
सवनात्पवनाच्चैव सवितेत्युच्यते हि सः।।
भ्रस्जो पाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि।।
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः।
भ्राजयेद् यत्स्वरूपेण तस्माद् भर्गः स उच्यते।।

तथा च—

भेति भीषयते लोकान् रेति रञ्जयते प्रजाः।
'ग' इत्यागच्छत्यजस्रं भगवान् भर्ग उच्यते।। इति।

यच्छब्देनोक्तस्य सवितुर्विशेषणं स्वराडिति, स्वः स्वर्गे आसम्यगटतीति स्वराट्। यद्वा, स्वेनासाधारणस्वरूपेण राजत इति स्वराट्, अनेन देवपद व्याख्यातं यदाह योगियाज्ञवल्क्यः—

दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः।। इति।

चः समुच्चये, पुनः कथम्भूतः सविता? अरिमृदां हृदायः। अरिभिः कामादिभिः षडिन्द्रियैर्वा मृद्यन्ते पीड्यन्त इत्यरिमृदो बुद्ध्यादिपरतन्त्रा जीवास्तेषां हृदायः। हृद् अन्तःकरणम्, आययति दृष्टादृष्टार्थकर्मसु प्रेरयतीति हृदायः। एतेन पदद्वयेन 'धियो यो नः प्रचोदयादिति' पदचतुष्टयं व्याख्यातं यथाऽऽह स एव—

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात्।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः।। इति।

धीमहीति स्वरूपमेवोक्तं×××तेजसो विशेषणं परमिति परं सर्वोत्तममित्यर्थः। एतेन वरेण्यपदं व्याख्यातम्। एवमेभिरुक्तपदैः सर्वोऽपि गायत्र्यर्थो व्याख्यातः[१]।

इत्थं स्वस्वसम्प्रदायानुरोधेन विविधपद्धत्या मेधिष्ठैरेभिर्विद्वत्तमैर्या व्याख्या व्यधायि साऽस्माभिः सर्वाप्यधिकारिभेदेन स्वीकार्या, तथाप्यत्र सुस्पष्टदिग्दर्शनाय स्वाभिमतपद्धत्या पुनरपि सङ्क्षिप्यते, तद्यथा—

श्रीमद्भागवताद्यपद्यस्य, जन्माद्यस्य यतोऽन्वयादितरत इति वाक्यं गायत्रीमन्त्रस्य सवितुरिति पदस्य व्याख्यानम्, अन्वयपद्धत्या व्यतिरेकपद्धत्या चोभयथा, ब्रह्मण एवास्य प्रपञ्चस्योत्पत्तिस्थितिप्रलयसञ्ज्ञकप्रतिभासाना-मधिष्ठानत्वात्।

'चार्थेष्वभिज्ञः स्वराड्' इत्यनेन देवस्येति मन्त्रपदस्य व्याख्यानं भवति देवशब्दस्य प्रकाशपरत्वादाधिभौतिकानामर्थानामधिष्ठातृतयाऽभिज्ञानशालित्वाच्च।

'तेने ब्रह्महृदा य आदिकवये' इति 'धियो यो नः प्रचोदयादि'त्यस्य बोधकं वाक्यं यो ब्रह्मणे परमेष्ठिनेऽपि ज्ञानं ददाति स एवास्मानपि प्रेरयितुमीष्टे। मुह्यन्ति यत्सूरयः, धाम्ना स्वेन सदा निरस्तकुहकं सत्यमिति च वाक्यद्वयेन मन्त्रस्थं भर्ग-पदमन्वाख्यायते। धीमहीत्युभयत्र समानम्। पद्यस्य तृतीयेन समग्रेणापि पादेन—तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेत्येतेन व्याहृतित्रयान्वितो

१. 'रसव्याख्या', बनारससंस्कृतसीरीज, चौखम्बाप्रकाशनं वाराणसी इत्यनेन प्रकाशिता।

मन्त्रात्प्राङ्नियततयोच्चार्यमाण ओङ्कारः परामृश्यते, भूर्भुवःस्व इत्यस्य तेजोवारिमृदामिव भ्रमरूपत्वात् प्रणवापरपर्याये ब्रह्मण्यधिष्ठानरूपे विज्ञाते सत्यशेषस्याध्यासभ्रमस्य विगलितत्वादविज्ञाते च भासमानत्वादिति व्याख्याभेदेन 'मृषाऽमृषेत्युभयोः पदयोः सङ्गतिरिति सर्वं निरवद्यम्।

यत्तु, यत्राधिकृत्य गायत्रीमिति मत्स्यपुराणाद्युक्तो गायत्र्यधिकारो देवीभागवत एवास्ति न श्रीमद्भागवत इति, तत्रैव—

'ॐ सर्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि बुद्धिं या नः प्रचोदयात्'[1] इति रूपेण स्पष्टतया त्रिपदागायत्र्याः सन्निवेशाद् गायत्रीघटक'धीमहि'-'प्रचोदयादि'ति पदद्वयस्योपलभ्यमानत्वादपि च श्रीमद्भागवताद्यपद्यस्य शार्दूल-विक्रीडिताख्यलौकिकच्छन्दोमयत्वाद् 'धीमही'ति पदमात्रयुक्तत्वादिति चेदनर्थज्ञैः कैश्चिदुच्यते, तन्न चारु, गायत्र्यधिकारोऽत्र गायत्र्यर्थप्रतिपादकश्लोकेनारम्भ एव, न साक्षात्, तथात्वे श्रुतिस्मृत्योर्भेदाप्रतीतेः। किञ्च तत्त्वसंसूचनार्थं प्रयुक्तस्यैकस्यापि मन्त्रघटकपदस्य गायत्रीपदलक्ष्यत्वे बाधकाभावेन पदद्वयलक्ष्यताया आवश्यकत्वासिद्धेः।

वस्तुतस्तु श्रीमद्भागवतं देवीभागवतमित्युभयमपि भागवतमित्याख्यां धत्तस्तस्मादुभयत्रापि गायत्र्यधिकारः सङ्गच्छते। देवीभागवतं ब्रह्मणः सविशेषशक्तिरूपतां पुरस्करोति, श्रीमद्भागवतं च सगुणसाकारलीलापरत्वेऽपि ब्रह्मणो निर्विशेषस्वरूपमेव सिद्धान्तत्वेनावगमयतीत्युभयोर्भेदः। देवीभागवते विशिष्य, गायत्र्या आधिदैविकं स्वरूपं श्रीमद्भागवते च तस्या आध्यात्मिकस्वरूपं प्रामुख्यं भजते, आनुषङ्गिकरूपेण चोभयत्रान्यस्वरूपाणामुपयोग इत्यग्रेऽपि यथाऽवसरं वक्ष्यते। एवमेव श्रीमद्भागवतस्योपसंहृतौ समापनपद्येऽपि[2] गायत्र्यर्थसन्निवेशः प्रत्यक्षीकर्त्तुं शक्यते, तत्पद्यं विवरणञ्च यथा—

कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।
योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि[3]॥

१. श्रीमद्देवीभागवते-१।१।१।

२. यद्यप्येतत्पद्यानन्तरमपि तत्र पद्यचतुष्टयं, 'नमस्तस्मै' इत्यारभ्य 'हरिं परम्' (श्रीमद्भा. १२।१३।२०-२३) इत्यन्तमुपलभ्यते; किन्तु प्रतिपाद्यस्य पर्यवसानत्वाद् ग्रन्थोपसंहृतिरत्रैव 'कस्मै येनेति' (१२।१३।१९) पद्येऽङ्गीकार्या, पद्यान्यन्यानि तदनुष्ठान-कर्तॄणां वक्तृश्रोतॄणामुपयोगार्थमित्यास्थेयम्। श्रीधरस्वामिभिरप्येतावत्पर्यन्तमेव टीका। सन्दृब्धा

३. श्रीमद्भा. १२।१३।१९।

इति पद्यम्। अत्र हि स्वामिचरणाः श्रीधराचार्याः—'इति गायत्र्यैव यथोपक्रममुपसंहरन् गायत्र्याख्यब्रह्मविधेयमिति दर्शयति'—'भावार्थदीपिका'। प्रायशः समेऽपि टीकाकाराः प्रसङ्गेऽस्मिञ्छब्दशोऽनुधावन्ति वचनानीमानि किन्त्वेभिः पृथग्रूपेण पदकृत्यपद्धत्या प्रथमपद्यवन्न गायत्र्यार्थः समुपदर्शित इति वयमेव बालचापलमवलम्बामहे जिज्ञासूनामवबोधाय तज्ज्ञानाञ्च मनोमोदाय, तद्यथा—

'कस्मै ब्रह्मणे, येन परब्रह्मणाऽयमतुलो, नास्ति केनचिदपि साम्यं यस्येति तादृशो ज्ञानप्रदीपो भागवतं ज्ञानं विभासितम्—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[१]।।

इति स्वकीयसिद्धान्तेन बुद्धौ प्रविश्य प्रकाशितम्, तदनु ब्रह्माख्यप्रजापतिरूपेण नारदर्षये, पुनर्नारदरूपेण मननशीलाय कृष्णद्वैपायनव्यासाय, अतः परं व्यासरूपेण योगीन्द्राय शुकाय, ततश्च शुकरूपेण भगवद्राताय परीक्षिन्नाम्ने नृपाय तत्प्रत्तं, तत्समेषामेषां बुद्धिप्रेरकं, तच्छुद्धं विमलं विशोकममृतञ्च परं तत्त्वं (वयं) धीमहि ध्यायेमेत्यन्वितार्थः। अत्र पद्यस्य पादत्रयेण, 'कस्मै येने'त्यारभ्य 'कारुण्यत' इत्यन्तेन, गायत्रीमन्त्रस्यान्तिमपादस्य 'धियो यो नः प्रचोदयात्' इत्यस्य व्याख्यां व्यदधाद् भगवान् वेदव्यासस्तदनु परेणान्तिमेन च पादेन सङ्क्षेपेणैव तस्य व्याहृतित्रयसंवलितप्रणवार्थपूर्वकं पादद्वयस्यार्थमपि सङ्कलितवान्, यथा—

'शुद्धं केवलम्' विशेषणेनानेन ओङ्कारो व्याख्यातः, विमलमिति सत्तान्तरव्यतिरेकाभिव्यञ्जनात्सद्रूपं भूरिति पदं सूचितम्। विशोकमित्यनेन 'तरति शोकमात्मवित्'[२] इति श्रुत्या चित्तत्त्वाभिव्यञ्जकं मन्त्रस्थं द्वितीयव्याहृतिपदं भुव इत्यन्वितम्। अमृतमिति विशेषणेन, 'यो वै भूमा तत्सुखं×× यो वै भूमा तदमृतमि'त्यादिमन्त्रवर्णोपलक्षितं[३] परमसुखरूपं 'स्व' इति पदमभिव्यक्तम्। तदिति समानमुभयत्र, सत्यमिति पदेन 'सवितुर्देवस्य भर्ग' इति व्याख्यानमुपनीतो मन्त्रार्थः, सकलाज्ञानभर्जनक्षमत्वात्सत्यस्यैव 'भर्ग'पदव्यपदेशौचित्यात्।

इत्थमुपसंहृतावपि गायत्र्यर्थसमन्वितिरनुसन्धानमर्हति भागवतप्रस्थानविदां विदुषाम्। वस्तुतः श्रीमद्भागवतमहापुराणस्य द्वादशस्कन्धाश्चतुर्विंशत्यक्षरात्म-

---

१. श्रीमद्भगवद्गीता-१०।१०-११; २. छान्दोग्ये-७।१।३।
३. तत्रैव-७।२३।१; ७।२४।१।

गायत्रीमन्त्रस्य भाष्यरूपाः। तत्र प्रत्येकमक्षरद्वयमन्वेति गायत्र्या इत्यखण्डार्थान्वितिः, खण्डान्वयपद्धतिस्तु—

| | | | | | |
|---|---|---|---|---|---|
| ॐ | भूर्भुवःस्वः, | तत् | सवितुर् | वरेण्यं | भर्गो |
| १ | २ | ३ | ४ | ५ | ६ |
| देवस्य | धीमहि, | धियो | यो | नः | प्रचोदयात्। |
| ७ | ८ | ९ | १० | ११ | १२ |

इति मन्त्रेऽस्मिन् द्वादशपदानि साभिप्रायाणि। एतेषु प्रथममेकाक्षरमोङ्कारं, द्वितीयं सच्चिदानन्दरूपां व्याहृतित्रयीं, तृतीयं परोक्षत्वादिविशिष्टं ब्रह्म, चतुर्थं जगत्सृष्टिस्थितिप्रलयाद्युपलक्षितमस्य ब्रह्मणो मायाशबलमीश्वररूपं, पञ्चमं परानुरक्तिरूपभक्त्या वरणीयं तदपरस्वरूपं भगवत्तत्त्वं, षष्ठं प्रपञ्चप्रशमकरं ज्ञानस्वरूपं, सप्तमं विविधक्रीडापरायणमवतारादिलीलासंवलितं भगवतः शक्तिमत्त्वमष्टमं ध्यातृध्यानध्येयमिति त्रिपुटीसंवलितं योगालम्बनात्मकं, नवममस्मदादीनामन्तःकरणसाक्षिभूतं, दशमं पुरुषविधमेकादशं समेषामात्मरूपं, द्वादशञ्च सर्वकार्यगतप्रेरकत्वं परमात्मस्वरूपमवगमयति। श्रीमद्भागवते च द्वादशस्कन्धास्तेषु तु भिन्नक्रमेण पदानामेतेषामन्वितिरेवमवधारणीया—

ॐकाररूपप्रथमस्यान्वितिः आश्रयतत्त्वनिरूपणात्मके द्वादशस्कन्धे—'ओङ्कार एवेदं सर्वम्'[1], 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च'[2] 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'[3] इति श्रुतिशिरःसु समाम्नातत्वात्। भूर्भुवःस्वः इत्यस्य भाष्यं स्थाननिरूपणात्मके पञ्चमस्कन्धे।

तदिति मुक्तिलक्षणे एकादशस्कन्धे। सवितुरित्यस्य व्याख्यानं सर्गलक्षणे तृतीयस्कन्धे। वरेण्यमिति निरोधाभिधाने दशमे स्कन्धे। भर्ग इति साधनाख्ये द्वितीये स्कन्धे। देवस्य नवमस्कन्धे ईशानुकथाभिधाने। धीमहि सद्धर्मलक्षणेऽष्टमे स्कन्धे। धिय इति वासनालक्षणे सप्तमस्कन्धे। य इति पौरुषाख्ये चतुर्थे स्कन्धे। नः इत्यधिकारलक्षणे प्रथमस्कन्धे। प्रचोदयाद् इत्यनुकम्पाऽऽशंसनपरं परं पदं मन्त्रस्य पुष्ट्याख्यानुग्रहलक्षणे श्रीमद्भागवतस्य षष्ठे स्कन्धे समन्वेतीति प्रेक्षावद्भिः स्वयमपि यथायथमुत्प्रेक्षणीयम्।

अथ श्रीमद्भागवते विविधा गायत्रीसन्दर्भा आधिभौतिकस्वरूपसम्बद्धास्तद्यथा—

---

१. छान्दोग्ये, २।२३।३।

२. बृहदारण्यके, ३।८।११।

३. तत्रैव, ३।८।९।

तस्योष्णिगासीद् लोमभ्यो गायत्री च त्वचो विभोः।
तिष्टुम्मांसात्स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः।।
मज्जायाः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत्[1]।

इत्यत्र शब्दब्रह्मात्मनः परमेष्ठिनस्त्वग्रूपेण चतुर्विंशत्यक्षरात्मिकायास्त्रिपदायाश्छन्दोमय्या गायत्र्याः सङ्केतस्तथैवैकादशेऽपि—

छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः।
अनन्तपारां बृहतीं सृजत्याक्षिपते स्वयम्।।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।
त्रिष्टुब्जगत्यतिच्छन्दो ह्यत्यष्ट्यतिजगद्विराट्[2]।।

अस्मिन् स्वरूपे स्पष्टमत्र प्रणवाक्षरसहितत्वं व्याहृतिसंवलितत्वं त्रिपदात्वञ्चास्या निर्दिश्यते, तदाह पञ्चमे—

'×××छन्दांस्यध्यापयिष्यन्, सह व्याहृतिभिः सप्रणवशिरस्त्रिपदी सावित्री ××× ग्राहयामास'[3]। गायत्र्याः सेयं जपादिरूपोपासना त्रैवर्णिकानामेवाधिकृता। प्रत्यहं प्रातःमध्याह्नसायन्तनमिति त्रैकालिकसन्ध्योपासनसमये गायत्रीमन्त्रस्य जपो ध्यानञ्च सर्वैरपि द्विजातिभिरनुष्ठीयते। मन्त्रस्यास्य 'ब्रह्म'-'ब्रह्माक्षरमि'त्यपि सञ्ज्ञा दृश्यते। भागवते समुपलभ्यन्ते चास्य सन्दर्भाः—

ब्रह्माक्षरमभिगृणानो मुहूर्त्तत्रयमुदकान्त उपविवेश[4]।
उभे सन्ध्ये च यतवाग्जपन् ब्रह्म समाहितः[5]।
निमज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम्[6]।
क्वापि सन्ध्यामुपासीनं जपन्तं ब्रह्म वाग्यतम्[7]।
चकार सन्ध्योपगमादिसत्तमो
हुतानलो ब्रह्म जजाप वाग्यतः[8]।। इति।

एवञ्च, ब्रह्मचर्याश्रमेण सार्धमस्याः सावित्र्याख्याया गायत्र्या सहजोऽनिवार्यश्च सम्बन्धः। उपनयनादनन्तरं वटुभिरासेव्यमानं गायत्रव्रतं ब्रह्मव्रतं वा सुतरामेतदधीनमेवेति श्रीमद्भागवत एतस्यापि निदर्शनान्यवलोकनीयानि—

---

१. श्रीमद्भा., ३।१२।४५-४६;
२. तत्रैव, ११।२१।३९,४१।
३. तत्रैव, ५।९।५;
४. तत्रैव, ५।८।१।
५. तत्रैव, ७।१२।२;
६. तत्रैव, १०।३९।४१।
७. तत्रैव, १०।६९।२५;
८. तत्रैव, १०।७०।६।

तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत्[१]।
गर्गाद् यदुकुलाचार्याद् गायत्रं व्रतमास्थितौ[२]।
वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः[३]।
रेतो नावकिरेज्जातु ब्रह्मव्रतधरः स्वयम्।
अवकीर्णेऽवगाह्याप्सु यतासुस्त्रिपदीं जपेत्।।
समाहित उपासीत सन्ध्ये च यतवाग्जपन्[४]।।

इत्येवञ्जातीयकानि। श्रीमद्भागवते गायत्र्या विग्रहवद्देवतामयमाधिदैविकं स्वरूपं प्रायशो न निरूपितं भगवता ग्रन्थकृता, श्रीदेवीभागवते तस्यैव भूयस्त्वादिति प्रागवादिष्म, केवलमेकस्मिन् प्रसङ्गे 'सावित्री सवितुः कन्येति' मरुज्जन्मप्रकरणमारभमाणः पुराणकृदित्थमभिधत्ते—

पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम्।
अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान्।।
सिद्धिर्भगस्य भार्याऽङ्ग महिमानं विभुं प्रभुम्।
आशिषञ्च वरारोहां कन्यां प्रासूत सुव्रताम्[५] ।। इति।

अत्र चेत्थमाहुष्टीकाकृतः—'सावित्रीं गायत्र्यभिमानिनीं देवतां व्याहृतिं तदभिमानिनीमेवं त्रयीं वेदत्रयाभिमानिनीञ्च' इति श्रीधरस्वामिनः। 'सवितुः पत्नी पृश्निः सावित्र्याद्यभिमानिदेवताः प्रासूत' इति वीरराघवाचार्यः। सावित्री गायत्र्यभिमानिनीत्युत्तरत्राप्येवमनुसन्धेयमिति विजयध्वजः।

अथ गायत्र्यर्थसमन्वितेश्चापरमनुद्घाटितपूर्वं वैशिष्ट्यमपरोक्षयामो नूतनोत्प्रेक्षाप्रियाणां मन्त्रसाधकानाञ्च प्रयोजनीभूतम्। यद्यपि प्रसिद्धस्य गायत्रीमन्त्रस्य परमार्थः प्रत्यक्चैतंन्यं परं ब्रह्मैव' तथाप्यस्योपासनात्मकोऽर्थः सूर्यदैवत आदित्यमण्डलपरस्तथैव परम्परायां विविधानामुपास्यदेवानां भगवत्स्वरूपाणामुपलक्षकांनपि गायत्रीमन्त्रानुपलभामहे, ते ह्येवं श्रूयन्ते महानारायणोपनिषदि—

तत्पुरुषाय विद्महे, महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्।
तत्पुरुषाय विद्महे, नन्दिकेश्वराय धीमहि तन्नो वृषभः प्रचोदयात्।

---

१. श्रीमद्भा., ८।१८।१४; २. तत्रैव, १०।४५।२९।
३. तत्रैव, ११।१७।२२; ४. तत्रैव, ११।१७।२५-२६।
५. तत्रैव, ६।१८।१-२।

तत्पुरुषाय विद्महे, वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात्।
षण्मुखाय विद्महे, महासेनाय धीमहि तन्नः षष्ठः प्रचोदयात्।
पावकाय विद्महे, सप्तजिह्वाय धीमहि तन्नो वैश्वानरः प्रचोदयात्।
भास्कराय विद्महे, दिवाकराय धीमहि, तन्नः सूर्यः प्रचोदयात्।
कात्यायन्यै विद्महे, कन्याकुमार्यै धीमहि, तन्नो दुर्गा प्रचोदयात्।
महाशूलिन्यै विद्महे, महादुर्गायै धीमहि, तन्नो भगवती प्रचोदयात्।
सुभगायै विद्महे, काममालिन्यै धीमहि, तन्नो गौरी प्रचोदयात्।
तत्पुरुषाय विद्महे, सुवर्णपक्षाय धीमहि तन्नो गरुडः प्रचोदयात्।
नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्।
नृसिंहाय विद्महे, वज्रनखाय धीमहि, तन्नः सिंहः प्रचोदयात्।
चतुर्मुखाय विद्महे, कमण्डलुधराय धीमहि, तन्नो ब्रह्मा प्रचोदयात्[१]।

वनदुर्गोपनिषद्यपि एतादृश्योऽन्याश्च गायत्र्यः प्राप्यन्ते, तासु नूत्नाः काश्चिदिह समुद्ध्रियन्ते, यथा—

रघुवंश्याय विद्महे, सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात्।
कालिकायै विद्महे, श्मशानवासिन्यै धीमहि, तन्नोऽघोरः प्रचोदयात्।
ॐ ऐं ह्रीं श्रीं आनन्देश्वराय विद्महे, सुधादेव्यै च धीमहि, तन्नो अर्धनारीश्वरः प्रचोदयात्।
एं वागीश्वर्यै च विद्महे, क्लीं कामेश्वर्यै च धीमहि, तन्नः क्लीं प्रचोदयात्।
ऐं त्रिपुरादेव्यै च विद्महे, क्लीं कामैश्वर्यै च धीमहि, सौः तन्नः शक्तिः प्रचोदयात्।
हंसहंसाय विद्महे, सोऽहं हंसाय धीमहि, तन्नो हंसः प्रचोदयात्।
यन्त्रराजाय विद्महे, महायन्त्राय धीमहि, तन्नो यन्त्रः प्रचोदयात्।
तन्त्रराजाय विद्महे, महातन्त्राय धीमहि, तन्नस्तन्त्रः प्रचोदयात्।
मन्त्रराजाय विद्महे, महामन्त्राय धीमहि, तन्नो मन्त्रः प्रचोदयात्[२]।

---

१. तृतीयखण्डे, १-१८ मन्त्राः।
२. द्रष्टव्यः—उपनिषत्सङ्ग्रह, पृ. ४६३ (मोतीलालबनारसीदासप्रकाशनम्, देहली १९८४ ख्रीस्तवर्षीयं संस्करणम्)।

एवमन्यत्रापि 'श्रीकृष्णगायत्री'-'हनुमद्गायत्री'-सञ्ज्ञका निगमागमसम्मता गायत्रीमन्त्रा गुरुपरम्परया तत्तद्देवोपासकेषु प्रथिता अभ्युदयनिःश्रेयसार्थं च विदधाना अनुभूयन्ते। एतेषु चतुर्विंशत्यक्षरमयत्वमोङ्कारादिसंवलितत्वञ्च न सार्वत्रिकं, त्रिपदात्वमपि प्रायिकम्; किन्तु प्रत्येकं 'धीमहीति' 'प्रचोदयादि'त्याख्यातपदद्वयस्य नियतत्वमवलोक्यते। समेषामपि यद्यपि तत्तद्देवतानुगुणकः सामान्योऽर्थः प्रतीयते, तथापि तात्त्विकविचारणानन्तरं विशेषोऽर्थो ब्रह्मपर एवेत्यनुभवसाक्षिकं तथ्यं कृतविद्यानाम्। एवंरीत्या पुराणोत्तमेऽप्यस्मिन् तत्र तत्रापाततो विविधदैवतात्मानो गायत्रीमन्त्रा अभ्युपगम्यन्ते, येऽन्ततो ग्रन्थप्रतिपाद्यं परसत्याख्यं प्रत्यक्तत्त्वापरपर्यायमद्वयं ब्रह्मैवाभिप्रयन्ति।

श्रीमद्भागवततन्त्रानुसारिण्युपासनासु तासु तासु, व्यवजिहीर्षमाणानामुपयोगाय तेषां सङ्ग्रहोऽत्र विधीयते, यथा—

१. गायत्रीसहोदरः सूर्योपस्थानमन्त्रः—पुलहपुलस्त्याश्रमपदे वानप्रस्थत्वेन तपस्यन् राजर्षिर्भरतः प्रत्यहमनेन मन्त्रेण सूर्यमण्डलस्थं हिरण्मयादिपुरुषं नारायणं स्तौति; तच्चेत्थम्—

परो रजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान।
सुरेतरादः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिङ्गिरामिमः[१]॥ इति।

श्रीधरस्वाम्यनुसारेणास्यार्थश्च यथा—परो रजः—रजसः प्रकृतेः परं शुद्धसत्त्वात्मकं सवितुर्देवस्य सूर्यस्य भर्गः स्वरूपभूतं तेजः, जातं वेदो धनं कर्मफलं यस्मात्तत्कर्मफलमित्यर्थः। अत्र हेतुर्यन्मनसैवं विश्वं जजान ससर्ज। पुनश्च, अदः सृष्टं विश्वमन्तर्यामिरूपेण प्रविश्य गृध्राणं काङ्क्षन्तं हंसं सुरेतसा चिच्छक्त्या विचष्टे पश्यति पालयतीत्यर्थः। नृषु सीदत्युपाधितया तिष्ठतीति नृषद् तस्यां रिङ्गि रिङ्गणं गतिं रातिं ददातीति नृषद्रिङ्गिराम्। 'वा छन्दसि' इत्यमि पूर्वरूपत्वाभावः। तद्भर्ग इमः—शरणं व्रजामः।

श्रीधरवीरराघवविश्वनाथचक्रवर्तिशुकदेवभगवत्प्रसादाचार्याद्याष्टीकाकारा मन्त्रमिमं ऋगिति शब्देन व्यपदिशन्ति, वंशीधरजीवगोस्वामिप्रभृतयश्च मन्त्रोऽयं गायत्रीसहोदर इति[२]। तत्र गायत्रीसहोदरं मन्त्रमाह–परो रज इति[३]। इत्येवमादिभिर्वचनैरिमं 'गायत्रीसहोदरम्' इत्याचक्षते।

२. गायत्र्यर्थव्याख्यापरः सूर्यस्तुतिमन्त्रः—(याज्ञवल्क्यप्रोक्तः), स चैवंप्रकारकः—

---

१. श्रीमद्भा. ५।७।१४; २. तत्रैव, 'भावार्थदीपिका'।
३. तत्रैव, 'भावार्थदीपिकाप्रकाशः'; ४. तत्रैव, 'क्रमसन्दर्भः'।

याज्ञवल्क्य उवाच—ॐ नमो भगवते आदित्याखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचित-संवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति।

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठ-मानानामखिलदुरितवृजिनबीजावभर्जनभगवतः समभिधीमहि तपनमण्डलम्। य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मन इन्द्रियासुगणाननात्मनः स्वयमात्माऽन्तर्यामी प्रचोदयति। य एवेमं लोकमतिकरालवदनान्धकारसञ्ज्ञाज-गरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्या-हरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति। परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः।

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुः-काम उपसरामीति[१]। इत्यत्र, 'ओम्' 'सवितः' '×××धीमहि' 'प्रचोदयति' इति मन्त्रसूचकानां पदानां साक्षादेव विन्यासो, गायत्र्यर्थव्याख्यान्वितिश्चेत्थं सङ्गीर्यते सुमेधोभिः—

नमो भगवते तुभ्यमादित्याय यो भवानेक एवेमां लोकयात्रा-मनुवहतीत्यन्वयः। तदेव दर्शयति—अखिलजगतामात्मस्वरूपेणान्तर्हृदयेषु कालस्वरूपेण च बहिरपि वर्त्तमान इति। अखिलजगतामित्यस्य प्रपञ्चश्चतु-र्विधेति। हृदयान्तर्वर्तित्वेऽपि जीववत्तेनोपाधिनाऽव्यवधीयमानोऽनाच्छाद्य-मानः। कालस्वरूपेण चेत्यस्य प्रपञ्चः क्षणेति। क्षणलवादयो येऽवयवास्तै-रुपचिताः संवत्सरास्तेषां गणेन प्रत्यब्दमपादानं शोषणं विसर्गो वृष्टिस्ताभ्याम्। अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता। द्वितीयपादार्थानुवर्णनेन स्तौति यदु हेति। हे विबुधर्षभ, हे सवितः, यदप्यदो भगवतस्तव मण्डलं तपति तत्समभिधीहीति सम्यगामुख्येन ध्यायेम। पुनस्तस्यैव सम्बोधनं, प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानञ्च तेषामवभर्जन विनाशक हे तपनेति। तृतीयपादेन स्तौति य इहेति। भवान् स्थावरजङ्गमसमूहानां स्वाश्रयाणां जीवानां मन इन्द्रिय-प्राणगणाननात्मनो जडान् स्वयमात्मैवान्तर्यामी सन् प्रचोदयति—प्रवर्तयति। तृतीयपादमेव मण्डलस्थपरतया व्याचक्षाणः स्तौति—य एवेति। य एक एव

१. श्रीमद्भा., १२।६।६७-७२।

भगवानतिकरालवदनो योऽन्धकारसञ्ज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मिन् प्रवर्तयति.....। इति 'भावार्थदीपिकायां' श्रीधरस्वामिनां विवृतिः। एवमेव 'भागवतचन्द्रचन्द्रिका'कृद् वीरराघवः, 'पदरत्नावली'कृद्विजयध्वजः, 'सिद्धान्तप्रदीप'कृच्छुकदेवो, 'बालप्रबोधिनी'कृद् गिरिधरलालो 'भक्तमनोरञ्जनी'कारो भगवत्प्रसादश्चैवमादयो विद्वांसस्तत्त्वार्थमिमं निरदिशन्निति निबन्धभूयस्त्वभयादुपरम्यते।

३. सङ्कर्षणगायत्री—श्रीमद्भागवतस्य षष्ठे स्कन्धे नारदप्रोक्तायां 'साङ्कर्षणीविद्यायां' प्रणवसहिता किञ्चिच्छब्दपरिवृत्त्या च प्रथमस्कन्धे पञ्चमेऽध्यायेऽन्तःकरणचतुष्टयाधिष्ठातृत्वेन चतुर्व्यूहतयोपास्यमानस्य परतत्त्वस्योपलक्षिकेयं 'सङ्कर्षणगायत्री'। उभयरूपा च सा, यथा—

ॐ नमस्तुभ्यं भगवते वासुदेवाय धीमहि।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च[1]॥

इति प्रथमः सन्दर्भः। यद्यप्येतदनन्तरमपि 'नमो विज्ञानमात्राय' इत्यारभ्य, 'परमपरमेष्ठिन्नमस्ते' इत्यन्ता स्तुतिरत्र विराजते, तथापि गायत्रीशरीरमेतावन्मात्रमिति प्रथमस्कन्धोक्तसन्दर्भेण विज्ञायते, प्रणवरहितः किञ्चित्पाठभेदान्वितश्चासौ द्वितीयः सन्दर्भोऽपि, यथा—

नमो भगवते तुभ्यं वासुदेवाय धीमहि।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च[2]॥

अत्र मूलगायत्र्यां बुद्धीत्युपलक्षितस्यान्तःकरणस्य शुद्धये तच्चतुष्टयोपास्यमूर्त्तिचतुष्टयस्य ध्यानमुपन्यस्यते तद्विवृतिश्चापि—

'भगवते ज्ञानादिषडैश्वर्यमयाय वासुदेवाय चित्ते समुपास्याय, प्रद्युम्नाय बुद्धौ समुपास्याय, अनिरुद्धाय मनस्युपास्याय, सङ्कर्षणाय चाहङ्कार उपास्यायेत्येवंरूपाऽवगन्तव्या।

४. हंसगायत्री—इयमप्यस्मिन्नेव स्कन्धे, पञ्चमेऽध्यायेऽनुस्यूतेत्थं समुद्धृतपद्यविग्रहा—

---

१. श्रीमद्भा., ६।१६।१८।

२. तत्रैव, १।५।३७।

ॐ नमो नारायणाय पुरुषाय महात्मने।
विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि[१] ।।इति।

५. परेशगायत्री—अष्टमस्कन्धे सुप्रथिते गजेन्द्रमोक्षाख्यस्तवराजे सेयमुपलभ्यते पूर्वसन्दर्भवल्लौकिकच्छन्दोविग्रहा, तद्यथा—

ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम्।
पुरुषायादिबीजाय परेशायाभिधीमहि[२] ।।

इति सुस्पष्टत्वात्र विविच्यते। पञ्चमस्कन्धे विंशेऽध्याये भूगोलवर्णनप्रसङ्गे पूर्ववर्णितजम्बूद्वीपं व्यतिरिच्य प्लक्षादिषड्द्वीपानामुपासकैर्व्यवहार्या विविधा गायत्र्यः समुपलभ्यन्ते, ता अप्यस्मिन्नेव क्रमे अनूद्यन्ते—

६. सूर्यात्मगायत्री—प्लक्षद्वीपे हंसपतङ्गोर्ध्वायनसत्याङ्गसञ्ज्ञकाश्चत्वारो वर्णाः सहस्रवर्षायुषो देववर्चसस्ते त्रयीमयं भगवन्तं सूर्यमात्मरूपेणोपासन्ते तेषामियं 'सूर्यात्मगायत्रीति' विज्ञेया—

प्रत्नस्य विष्णो रूपं यत्सत्यस्यर्तस्य ब्रह्मणः।
अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति[३] ।।इत्यात्मिका।

७. सोमात्मगायत्री—एवमेव शाल्मलिद्वीपस्य वर्षपुरुषाः श्रुतधरवीर्यधरवसुन्धरेषन्धरसञ्ज्ञका भगवन्तं वेदमयं सोममात्मरूपेणोपासन्ते तत्र सोमात्मगायत्रीमेतां च ब्रह्मोपासनामूलामुदाहरन्ति—

स्वगोभिः पितृदेवेभ्यो विभजन् कृष्णशुक्लयोः।
प्रजानां सर्वासां राजाऽन्धः सोमो न आस्त्विति[४] ।।

८. जातवेदो गायत्री—कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसञ्ज्ञा जातवेदसं भगवन्तमात्मत्वेनोपासन्तो गायत्रीमिमामभिगृणन्ति—

परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट्।
देवानां पुरुषाङ्गानां यज्ञेन पुरुषं यजेति[५] ।।

९. आपोगायत्री—पुरुष-ऋषभ-द्रविण-देवकाख्यचतुराश्रमिणः क्रौञ्च-

---

१. श्रीमद्भा., ६।५।२८;
२. तत्रैव, ८।३।२।
३. तत्रैव, ५।२०।५;
४. तत्रैव, ५।२०।१२।
५. तत्रैव, ५।२०।१७।

द्वीपस्था जना:, गायत्रीमेनां समाश्रित्य भगवन्तमापोमयं परमात्मानमपां पूर्णेनाञ्जलिना यजन्ते—

आप: पुरुषवीर्या:स्थ पुनन्ती भूर्भुव: सुव:।
ता न: पुनीतामीवघ्नी: स्पृशतामात्मना भुव:।। इति[१]।

१०. वाय्वात्मगायत्री—शाकद्वीपीया वर्षपुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्तं वाय्वात्मकं प्राणायामविधूतरजस्तमस: परमसमाधिना यजन्तेऽनया 'वाय्वात्मगायत्र्या'—

अन्त: प्रविश्य भूतानि यो बिभर्त्यात्मकेतुभि:।
अन्तर्यामीश्वर: साक्षात्पातु नो यद्वशे स्फुटम्[२]।। इति।

११. ब्रह्मात्मगायत्री—तथैव, पुष्करद्वीपनिवासिनो भगवन्तं ब्रह्मेति विश्रुतं, लोकपितामहरूपिणं परमात्मानं सकर्मकेन कर्मणाऽऽराधयन्तीदं चोदाहरन्ति—

यत्तत्कर्ममयं लिङ्गं ब्रह्मलिङ्गं जनोऽर्चयेत्।
एकान्तमद्वयं शान्तं तस्मै भगवते नम:।। इति[३]।

१२. कालात्मविष्णुगायत्री—षड्द्वीपवर्णनानन्तरमत्रैव खगोलनिरूपणप्रसङ्गे कालात्मरूपस्य भगवत: श्रीविष्णोरैश्वर्यमयं ज्योतिरनीकं नाम शिशुमारचक्रं सर्वग्रहर्क्षतारामयं सर्वदेवतामयमाधिदैविकमनवद्यगद्यबन्धैर्निबबन्ध भगवान् भागवतकृत्, तस्यैवोपस्थानमन्त्रत्वेनायातीयं 'कालात्मविष्णुगायत्री', तद्यथा—

यत्तत्कर्ममयं लिङ्गं ब्रह्मलिङ्गं जनोऽर्चयेत्।
एकान्तमद्वयं शान्तं तस्मै भगवते नम:।। इति[४]।

सर्वास्वेतासु, रेखाङ्कनपद्धत्योपदर्शितदृशा मूलगायत्र्या, 'ॐ', 'धीमहि', 'सवितु:', 'भर्ग:', 'प्रचोदयति', 'तत्', 'न:' प्रभृतिपदानां, तत्सदृशानाम्, 'अभिधीमहि'-'ईमही'त्यात्मकानाञ्च यथाऽवसरं प्रयोगात् किञ्च सर्वत्र गायत्र्यर्थस्यैव परमार्थतयाऽभिव्यञ्जनादेतासां गायत्रीत्वं न प्रमाणपराङ्मुखमाकल्पनीयम्।

इदानीं यावदस्माभिर्लोकात्मवेदात्मप्राणात्मरूपाणां गायत्र्यास्त्रयाणां पादानां

१. श्रीमद्भा., ५।२०।२३; २. तत्रैव, ५।२०।२८।
३. तत्रैव, ५।२०।३३; ४. तत्रैव, ५।२३।८।

विवेचनं विधाय तेषामन्वितिश्च श्रीमद्भागवते समुपदर्शिता, गायत्री तु तत्त्वतश्चतुष्पदास्तस्याश्चतुर्थो निष्प्रपञ्चात्मको यतिभिर्जप्यः पादस्तु—

'परो रजसेऽसावदोम्' इत्येवमाम्नातः। तथा हि श्रुतिः—'एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परो रजा इति सर्वमु ह्येवैष रज उपर्युपरि तपत्येवँ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद।

सैषा गायत्र्येतस्मिँस्तुरीये दर्शते परो रजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितम्[१]।

प्रत्नकाले व्यवह्रियमाणानि 'ब्रह्मास्त्र'-'पाशुपतास्त्र'-'वैष्वणास्त्र'-प्रभृतीनि दिव्यास्त्राणि गायत्र्या अनेनैव पदेन साकं पूर्वोक्तपदत्रयस्यानुलोमविलोमपद्धत्या व्यवस्थापनेन निर्मीयन्ते स्म तत्त्वज्ञैर्महर्षिभिः, किञ्च सर्वत्राव्याहतत्वेनाभ्यर्हितो विप्राणां ब्रह्मदण्डोऽप्यस्यैव क्रमपर्यावर्तादिजन्यविवर्तरूपस्तदुक्तं मन्त्रर्षिणा विश्वामित्रेण—

ब्रह्मदण्डं तथा वक्ष्ये सर्वशास्त्रास्त्रनाशनम्।
गायत्री सम्यगुच्चार्य परो रजसीति संयुतम्।।
एतद्वै ब्रह्मदण्डं स्यात्सर्वशस्त्रास्त्रभक्षणम्[२]।।इति।

श्रीमद्भागवतेऽप्यस्य ब्रह्मदण्डस्य चर्चा दृश्यते, तद्यथा—ब्रह्मदण्डो दुरत्ययः[३]। ऋषिभिः कृत उत्पथगामिनो राज्ञो वेनस्य वधोऽपि ब्रह्मदण्डस्यैव प्रयोग इति सन्दर्भस्य सूक्ष्मपरिशीलनेनावगम्यते[४]। तथा चास्योपक्रमे विदुरस्य प्रश्नः—

किं वांहो वेन उद्दिश्य ब्रह्मदण्डमयूयुजन्।
दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः[५]।। इति।

---

१. बृहदारण्यकोपनिषदि, ५।१४।३-४।
२. विश्वामित्रस्मृतौ, १९-२०।
३. श्रीमद्भा. ९।४।१४।
४. तत्रैव, ९।४।१४।
५. तत्रैव, ४।१३।२२।

गायत्र्याश्चायं तुरीयः पादोऽत्रैव पूर्वविवेचिते गायत्रीसहोदराख्ये मन्त्रारम्भ एव सङ्केतितः—

'परो रजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान' इत्यात्मकः। स्वकीयप्रवचनस्योपक्रम एव यतिचक्रचूडामणिर्भगवान् व्यासनन्दनः शुकः—

अन्तकाले तु पुरुष आगते गतसाध्वसः।
छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम्॥

गृहात्प्रव्रजितो धीरः पुण्यतीर्थजलाप्लुतः।
शुचौ विविक्त आसीनो विधिवत्कल्पितासने॥

अभ्यसेन्मनसा शुद्धं त्रिवृद् ब्रह्माक्षरं परम्।
मनो यच्छेज्जितश्वासो ब्रह्मबीजमविस्मरन्॥

नियच्छेद्विषयेभ्योऽक्षान् मनसा बुद्धिसारथिः।
मनःकर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया॥

तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा।
मनो निर्विषयं युक्त्वा ततः किञ्चन न स्मरेत्॥
पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति॥

रजस्तमोभ्यामाक्षिप्तं विमूढं मन आत्मनः।
यच्छेद् धारणया धीरो हन्ति या तत्कृतं मलम्[1]॥

इत्यत्र तस्यैव व्याख्यानमध्यक्षति। इयं तुरीयपादोक्ता गायत्र्युपासनैव श्रीमद्भागवतस्य परमोपनिषद् यामाश्रित्यात्मयोनिना ब्रह्मणाऽपि पुरा व्यामोहमपनुद्य सृष्टिसामर्थ्यमवापि—

एवं पुरा धारणयात्मयोनि-
र्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात्।
तथा ससर्जेदममोघदृष्टि-
र्यथाऽप्ययात् प्राग्व्यवसायबुद्धिः[2]॥

१. श्रीमद्भागवते, २।१।१५-२०।
२. तत्रैव, २।२।१।

इमामेवोपासनां सूत्रयत्येषा परमेष्ठिप्रोक्ता वासुदेवगायत्र्यपि—

'तस्मै नमो भगवते वासुदेवाय धीमहि'[१] इत्येवंरूपा। अत्र सङ्कर्षणादिव्यूहत्रयस्यानुल्लेखादस्यास्तुरीयपादात्मकत्वं, तस्माच्च 'वासुदेवगायत्रीत्वमिति सर्वमनवद्यम्।

इतीयं तत्त्वमालोड्य गायत्र्यर्थसमन्वितिः।
श्रीमद्भागवते भगवत्कृपयाऽत्र प्रदर्शिता।। इति।

१. श्रीमद्भा, २।५।१२।



सम्पूर्णानन्दसंस्कृतविश्वविद्यालये पूज्यश्रीशास्त्रिपादानां पुण्यस्मृतौ
पण्डितराजश्रद्धासमारोहः (मध्ये कुलपतयः आचार्यकरुणापतित्रिपाठिमहाभागाः)

# आयुर्यज्ञेन कल्पताम्

**डॉ. प्रभुनाथद्विवेदी**
उपाचार्यः, संस्कृतविभागस्य
महात्मा-गान्धि-काशीविद्यापीठे
वाराणसी



यज्ञदेव! नमस्तुभ्यं त्वत्तः सृष्टिः प्रजायते।
प्राणास्त्वमेव जीवानामायुस्त्वत्तः प्रकल्पते।।१।।
ब्रह्माण्डे निखिले व्याप्ते ब्रह्मणो वितते मुखे।
कालो जुहोत्यजस्त्रं यत्तद्धि यज्ञः प्रतिष्ठितः।।२।।
शरीरेणात्मनो योगः कर्तृत्वमिन्द्रियाश्रितम्।
प्राप्तानुबन्धजीवस्य कालो ह्यायुर्निगद्यते।।३।।
आचाराल्लभते ह्यायुस्तस्माद्यज्ञः प्रवर्तते।
आयुर्यज्ञो भवेल्लोके नायुर्यज्ञं विना क्वचित्।।४।।
द्वयोस्स्वरूपसम्बन्धावनुसन्धाय यत्नतः।
प्रस्तूयते मया किञ्चिदस्मिन् सारस्वते मखे।।५।।

महर्षेः पाणिनेः 'यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्' (३।३।९०) इति सूत्रेण 'यज'धातुना 'नङ्'प्रत्ययस्य योगे सति 'यज्ञ' इति शब्दो व्युत्पाद्यते। 'यज-देवपूजासङ्गतिकरणदानेषु' (पाणिनिधातुपाठः १०८७) इत्यनेन यज्ञो देवपूजायां सङ्गतिकरणे दाने च प्रयुज्यते। अतो यज्ञस्य भवितुमर्हन्त्यनेकानि निर्वचनानि[1]—

---

१. यज्ञमीमांसा : पं. वेणीरामशर्मा गौड, पृ. २-३।

**देवपूजायाम्**

'इन्द्रादिदेवानां यजनं पूजनं यज्ञः'।

'इज्यन्ते पूज्यन्ते देवा अनेनेति अस्मिन्निति वा यज्ञः'।

'इज्यते देवेभ्योऽस्मिन्निति यज्ञः'।

'इज्यते असाविति यज्ञः'।

'इज्यन्ते तृप्तिमासाद्यन्ते देवा अत्रेति यज्ञः'।

**सङ्गतिकरणे**

'यजनं धर्म-देश-वर्ण-मर्यादारक्षणाय देवानां महापुरुषाणां विदुषां वा सङ्गतिकरणमेकीकरणमिति यज्ञः'।

इज्यन्ते निमन्त्र्यन्ते सङ्गतीक्रियन्ते विश्वकल्याणाय देवा वेदा (वैदिकविद्वांसः) वाऽस्मिन्निति यज्ञः'।

'इज्यन्ते आहूयन्ते सङ्गतिकरणाय प्रेमसम्मानभाजो येन कर्मणेति यज्ञः'।

**दानम्**

'यजनं यथाशक्ति देशकालपात्रादिविचारपुरस्सरद्रव्यादित्यागो यज्ञः'।

'इज्यते देवतोद्देशेन श्रद्धापुरस्सरं द्रव्यादि त्यज्यते अस्मिन्निति यज्ञः'।

'इज्यन्ते सन्तोष्यन्ते याचका येन कर्मणा स यज्ञः'।

'इज्यते भगवति सर्वस्वं निधाप्यते येन वा स यज्ञः'।

'इज्यन्ते चत्वारो वेदाः साङ्गाः सरहस्याः सच्छिष्येभ्यः सम्प्रदीयन्ते उपदिश्यन्ते सदाचार्यैर्येन स यज्ञः'।

'यज्ञ' इति शब्दस्य व्युत्पत्तिलभ्याः केचनार्थाः सन्त्येवम्[१]—

१. येन सदनुष्ठानेनेन्द्रप्रभृतयो देवाः सुप्रसन्नाः सुवृष्टिं कुर्युस्तद् यज्ञपदाभिधेयम्।

२. येन सदनुष्ठानेन स्वर्गादिप्राप्तिः सुलभा स्यात्तद् यज्ञपदाभिधेयम्।

३. येन सदनुष्ठानेन सदैव विश्वं जगत् कल्याणं भजेत् तद् यज्ञपदाभिधेयम्।

---

१. यज्ञमीमांसा : पं. वेणीरामशर्मा गौडः, पृ. ४।

४. येन सदनुष्ठानेन तापत्रयोन्मूलनं सुकरं स्यात्तद् यज्ञपदाभिधेयम्।

५. यागाङ्गसमूहस्यैकफलसाधनयाऽपूर्ववान् कर्मविशेषो यागः।

६. मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानं यागः।

अपि चेत्थं यज्ञस्य वेदविहितार्थः[१]—

१. यज्ञो वै श्रेष्ठतमं कर्म[२]।

२. एतद्वै देवानामपराजितमायतनं यद्यज्ञः[३]।

३. सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यद्यज्ञः[४]।

४. यज्ञो वोऽन्नम्[५]।

५. यज्ञ उ देवानामन्नम्[६]।

६. आहुतिर्हि यज्ञः[७]। यज्ञो वाऽऽज्यम्[८]।

यज्ञमधिकृत्य निरुक्तकारो यास्को निर्वक्ति—'यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ताः। यच्व्यो भवतीति वा यजुर्भिरुन्नो भवतीति वा, बहुकृष्णाजिन इत्यौपमन्यवः यजूंष्येनं नयन्तीति वा'[९]। मत्स्यपुराणे भौतिकयज्ञस्य लक्षणं प्रोक्तम्—

देवानां द्रव्यहविषां ऋक्सामयजुषां तथा।
ऋत्विजां दक्षिणानाञ्च संयोगो यज्ञ उच्यते[१०]॥

वस्तुतो देवतामुद्दिश्य तन्मन्त्रोच्चारणपूर्वकं स्वद्रव्योत्सर्जनं हविर्द्रव्यस्य वा प्रक्षेपणं वह्नौ 'यज्ञ' इत्युच्यते—'दैवतं प्रति स्वद्रव्यस्योत्सर्जनं यज्ञः'[११]।

---

१. नैके सन्ति यज्ञस्य वेदप्रतिपाद्या अर्थाः। अत्र केवलं प्रमुखा अर्था एवोद्धृताः।

२. शुक्लयजुर्वेदः (वाज. माध्यन्दिनी शाखा) १.१; शतपथब्राह्मणम्, १.७.१.५; तैत्तिरीयब्राह्मणम्, ३.२.१.४।

३. तैत्ति.ब्रा., ३.३.७.७।

४. शतपथब्रा., १४.३.२.१।

५. तत्रैव, २.४.२.१।

६. तत्रैव, ८.१.२.१०।

७. तत्रैव, ३.१.४.१।

८. तैत्ति.ब्रा., ३.३.४.१।

९. निरुक्तम्, ३.४.१९।

१०. मत्स्यपुराणम्, १४४.१४।

११. यज्ञमीमांसा, पृ. ५।

अनेनैवाभिप्रायेण श्रुतयोऽग्निमेव यज्ञं यज्ञमुखं वेत्यामनन्ति—'अग्निर्वै यज्ञः'[१]। 'अग्निर्वै योनिर्यज्ञस्य'[२]। 'अग्निर्वै यज्ञमुखम्'[३]।

यथा, अनन्ता वै वेदास्तथैवानन्ता वै यज्ञाः, वेदानां यज्ञमयत्वात्। ये भवन्त्यैहिकपारलौकिककल्याणाय ते यज्ञाः ये तु विश्वकल्याणाय ते महायज्ञा इत्युच्यन्ते। महर्षिणा भारद्वाजेनानयोर्द्वयोरपि स्वरूपमाख्यातम्[४] —

'यज्ञः कर्मसु कौशलम्। समष्टिसम्बन्धान्महायज्ञः'।

एतदेव वैशिष्ट्यं महर्षिणाऽङ्गिरसापि प्रोक्तम्[५] —

'यज्ञमहायज्ञौ व्यष्टिसमष्टिसम्बन्धात्'।

अनिवार्यमनुष्ठानं नित्यकर्म च गृहस्थानामेते पञ्चमहायज्ञा इति निर्दिशन्ति धर्मसूत्राणि गृह्यसूत्राणि च। स्मृतिग्रन्थेषु, पुराणेषु महाभारतादिग्रन्थेषु चोपलभ्यन्ते पञ्चमहायज्ञानां विपुलं वर्णनं महत्त्वादिविषयकम्। सन्त्येते पञ्चमहायज्ञाः—ब्रह्म-पितृ-देव-भूत-मनुष्ययज्ञा इति[६]। यज्ञस्य श्रौतस्मार्तभेदौ प्रसिद्धावेव। श्रीमद्भगवद्गीतायां सात्त्विको राजसस्तामसश्चेति यज्ञास्त्रिधा विभक्ताः[७]।

यज्ञो हि वैदिकसंस्कृतेर्मुख्यमङ्गम्। अस्यां सृष्टौ यत्किञ्चित्तत्सर्वं यज्ञ एव—'सर्वं यज्ञमयं जगत्'[८]। मनुष्याणां सर्वे समारम्भा यज्ञार्थमेव भवेयुरिति प्रोक्तं भगवता वासुदेवेन—'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः'[९]। भवतु नाम यज्ञः स्वार्थाय परार्थाय वा, तस्मिन् लोककल्याणभावना सविशेषं सन्निहिता भवति—'यज्ञोऽपि तस्यै जनतायै कल्प्यते'[१०]। यज्ञार्थमेव वेदाः प्रादुर्भूता इति

१. शत.ब्रा., ३.४.३.१९; ताण्ड्यब्रा. ११.५.२।

२. शत.ब्रा. १.५.२.११,१४; ३.१.३.२८; ११.१.२.२।

३. तैत्ति.ब्रा. १.६.१.८;

४. यज्ञमीमांसा, पृ. ६।

५. तत्रैव, पृ. ६।

६. मनुस्मृतिः, ३.६८-७१; सर्वैर्गृहस्थैः पञ्चमहायज्ञा अहरहः कर्तव्याः। शत.ब्रा. ११.५.५.१; तैत्ति.आरण्यकम्, २.१०; आश्वलायनगृह्यसूत्रम्, ३.१.१; छान्दोग्यपरिशिष्टम्; याज्ञवल्क्यस्मृतौ आचाराध्याये १०२; कालिकापुराणम्, ३२.१६; बृहन्नारदीयपुराणमित्यादिषु ग्रन्थेष्वपि द्रष्टव्यम्।

७. श्रीमद्भगवद्गीता, १७.११-१३।

८. कालिकापुराणम्, ३१.४०।

९. श्रीमद्भगवद्गीता, ३.९।

१०. ऐतरेयब्राह्मणम् १.२.३।

यज्ञस्य परमं महत्त्वमाख्यातम्—'वेदास्तु यज्ञार्थमभिप्रवृत्ताः'[१]। 'ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये'[२]।

'दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्'[३]।।इति।

यज्ञानामाध्यात्मिकं महत्त्वमसन्दिग्धं सर्वस्वीकृतम्[४]। अतः कर्ममीमांसायां यज्ञस्य निर्विवादं प्राधान्यं निर्दिष्टम्—'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्'[५]। इत्थं यज्ञस्वरूपस्य तदवधारणायाश्च प्रतीयते परमं व्यापकत्वम्। यज्ञमयीयं सृष्टिः। मानवस्य सर्वाणि श्रेष्ठतमानि कर्माणि जीवनधारणस्य च सर्वाः क्रिया यज्ञभूताः। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति, 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति च श्रुतिसर्वस्वम्। अभिप्रायस्तु मनुष्यः स्वजीवनस्य प्रतिक्षणेषु प्रतिश्वासप्रश्वासे निर्बाधं यज्ञं वितनोति। प्रतिक्षणं तस्य जीवनं यज्ञमयम्।

संक्षेपतोऽत्र यज्ञस्य स्वरूपं विमृष्टम्। अथायुषो विषये विचार्यते। प्रथित एवास्त्यायुर्वेद आयुस्सम्बद्धः। य आयुर्जानाति विचारयति वा, य आयुर्हितः, येन चायुर्लभ्यते स आयुर्वेदः—

हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स॰ उच्यते।।

(चरकसंहिता, सूत्रस्थानम्, १।४१)

अत्रैवास्मिन् क्रमे आयुर्लक्षयति महर्षिश्चरकः—

शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम्।
नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते।।

(तत्रैव, सूत्रस्थानम्, १।४२)

इदमायुः पर्यायतो धारि, जीवितं नित्यगोऽनुबन्धश्चापि कथ्यते। अमुमेव विषयं महर्षिचरकः संहितायाः सूत्रस्थानस्य त्रिंशत्तमेऽध्याये प्रसङ्गवशात्पुनरपि स्पष्टीकरोति। स तत्रायुर्वेदं निरूप्य आयुर्विमृशति—

---

१. विष्णुधर्मोत्तरपुराणम्, २.१०४।

२. ब्रह्मपुराणम्, १.४१।

३. मनुस्मृतिः, १.२३।

४. तैत्तिरीयसंहिता, ३.१०.५—'यज्ञेन देवेभ्यः'। श्रीमद्भागवतपुराणम्, १०.८४.३९।

५. श्रीमद्भगवद्गीता, १८.५।

तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेत्येकोऽर्थः।
(च.सं., सूत्रस्थानम्, ३०।२२)

अर्थात्, चेतनानुवृत्तिः (चेतनायाः शरीरानुकूलो व्यवहारः), जीवितम्, अनुबन्धः (देहसम्बद्धत्वम्), धारि (येन शरीरं धार्यते तत्कारणम्)—एते आयुषः समानार्थिनः पर्यायवाचका वा।

आयुर्वेदस्य व्युत्पत्तिकरणे महर्षिणा सुश्रुतेन (सुश्रुतसंहितायाम्) 'आयुः' इति शब्दो गृहीतः[१]; किन्तु न किमपि ब्रूते आयुर्विषये। तत्र टीकां कुर्वता श्रीडल्हणाचार्येणायुर्विमृष्टम्—'आयुः शरीरेन्द्रियसत्त्वात्मसंयोगः' इति। आयुष इयमेव परिभाषा महर्षिचरककृतायां संहितायामुपलभ्यते।

शतपथब्राह्मणेऽग्निरन्नं संवत्सरश्चायुःसंज्ञया समाम्नातास्सन्ति—'अग्निर्वा आयुः'[२]।

'अग्निर्वाऽआयुष्मानाऽयुष ईष्टे'[३]। 'अन्नम् उ वाऽ आयुः'[४]। 'संवत्सर आयुः'[५]।

शतपथब्राह्मणे ऐतरेयब्राह्मणे च प्राण एवायुर्निगदितः—'यो वै प्राणः स आयुः'[६]। 'प्राणो वा आयुः'[७]।

प्राणिनामायुर्विषये[८] कृते इति विमर्शे, समीचीनमेव प्रतिभाति यदग्निरन्नं प्राणः संवत्सरश्चेत्येते शब्दा आयुरिति संज्ञयोच्यन्ते। यतो हि आयुषा नित्यसम्बन्धः। एवमेव शब्दशक्तिविमर्शप्रसङ्गे लक्षणायाः शुद्धा सारोपा शुद्धा

---

१. सुश्रुतसंहिता, सूत्रस्थानम् १.१४—'आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः'।

२. शत.ब्रा., ६.७..३.७; ७.२.१.१५।

३. तत्रैव, १३.८.४.८।

४. तत्रैव, ९.२.३.१६।

५. तत्रैव, ४.१.४.१०; ४.२.४.४।

६. तत्रैव, ५.२.४.१०।

७. ऐतरेय-ब्रा. २.३८।

८. आयुर्न केवलं जीवानामपि तु निर्जीवानामपि भवति; यतो हि कालप्रभावादन्येभ्योऽपि नैसर्गिककारणेभ्यो निर्जीवानामपि पदार्थानां क्षरणं भवति। आधुनिकविज्ञानानुसारं, सर्वेऽपि लौकिकाः पदार्था निश्चितमायुर्धारयन्ति। जङ्गमस्थावरा जीवा निर्जीवाः सर्वे सन्ति लौकिकाः पदार्थाः। साम्प्रतं तु भवन-सेतु-यन्त्रादि-निर्माणवस्तूनामप्यायुर्निर्धार्यते वास्तुविद्भिर्यान्त्रिकैर्वैज्ञानिकैश्च।

साध्यवसाना चेति भेदद्वयस्योदाहरणे घृतमायुरिति समाख्यातम्—'आयुर्घृतम्' 'आयुरेवेदम्' चेति। 'सर्पिषोऽपि स्यात्'[१] इति वाञ्छायां स्पष्टमेवायुषा सह घृतस्य घनिष्ठः सम्बन्धो विद्योतते।

बृहदारण्यकोपनिषदि देवैरायुस्संज्ञकस्य ब्रह्मण उपासना क्रियत इत्युल्लेखो विहितः—

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्[२]॥

अत्र भाष्यं कुर्वद्भिः श्रीमदाद्यशङ्कराचार्यपादैर्लिखितं यदायुष्काम आयुरूपस्य ब्रह्मण उपासनां कुर्यात्—'तस्मादायुष्कामेन आयुर्गुणेनोपास्यं ब्रह्मेत्यर्थः'।

'.....शरीराणि च म आयुश्च मे जरा च मे यज्ञेन कल्पन्ताम्' इति (१८.३) शुक्लयजुर्वेदीयमन्त्रस्य भाष्यं कुर्वता भाष्यकारेणाचार्यमहीधरेण 'आयुः' इति शब्दो व्याख्यातः—'आयुर्जीवनम्। जरावार्धकान्तमायुः'। अर्थात्, जीवनं (जीवनस्य कालावधिरेव) त्वायुष्पदवाच्यम्। जन्मत आरभ्य वार्धक्यपर्यन्तं (देहत्यागपर्यन्तमिति यावत्) य कालावधिः स आयुरिति निगद्यते। तत्त्वत आयुस्तु शरीरस्यैव भवति। यावत्कालपर्यन्तं देहात्मसंयोगोऽनुभूयते तावदेव तदायुरिति निर्विशयो विषयः। अधिकाधिकं कालपर्यन्तं जीवितुमिच्छति मानवः। इयमार्षकामना नित्यमेव समुदेति समेषां मनसि—'जीवेम शरदः शतम्। पश्येम शरदः शतम्। अदीनाः स्याम शरदः शतम्' इति। एवं हि यो दीर्घजीवनं दीर्घायुष्यं वाऽभिलषति स साधयति स्वकीयां जीवनपद्धतिम्। साधनां विना न सिद्ध्यति किमपि प्रयोजनम्। साधनामयं जीवनं व्यतीत्यैव कश्चित्पुरुषः पूर्णकामो दीर्घायुष्यश्च भवितुमर्हति। ईदृशी साधनाऽपि लोकेऽसन्दिग्धं यज्ञं वितनोति यज्ञत्वञ्च प्राप्नोति।

यज्ञस्तु समाम्नातः आयुरेव—'यज्ञो वा आयुः'[३]। अत्र यज्ञश्चायुश्च तथैव कारणकार्यसम्बन्धपूर्वकं सामानाधिकरण्यं भजेते यथा घृतञ्चायुश्चेति। यज्ञस्त्वाज्यमप्युच्यते। अतो यज्ञ आयुषः कारणम्। अत्राज्यस्याप्यायुषा सह सम्बन्धः कारणकार्यसम्बन्धो भवति। विस्पष्टमेवाशयो यदायुष्कामो यजेत्। श्रुतिरपि

---

१. 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु'—पा.अष्टा., १.४.९६।

२. बृहदारण्यकोपनिषद्, ४.४.१६।

३. ताण्ड्यब्राह्मणम्, ६.४.४।

प्रमाणयति — यः श्रद्धया यजति तस्येष्टं न कदापि क्षुण्णं भवति—"स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते'[१]। सर्वानुभवसिद्धमिदं तथ्यं यत्सर्वेषामिष्टतमं स्वजीवनं दीर्घाद्दीर्घतमञ्चायुः। अतोऽत्र वेदवाक्येऽयं ध्वनिरर्थमाक्षिपति प्रतिबोधयति च—'यजमानस्य (सततं यज्ञकर्तुः) आयुर्न क्षीयते। स सुखायुर्दीर्घायुश्च जीवति'।

'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां........' इत्यादयो मन्त्राः कैश्चित्परिवर्तनैः शुक्लयजुर्वेदे (माध्य. शाखा) त्रिषु स्थलेषु समुपलभ्यन्ते[२]। अत्रैवाष्टादशाध्यायस्य तृतीये मन्त्रेऽप्ययमेवाभिप्रायः सुव्यक्तः। शुक्लयजुर्वेदस्य काण्वशाखीयग्रन्थेऽप्ययं मन्त्र एकत्र प्रयुक्तो विद्यते[३]। शुक्लयजुर्वेदस्य (माध्य. शाखा) तस्य मन्त्रस्य (१८.२९) व्याख्यां विदधताऽऽचार्येणोव्वटेन प्रोक्तम्—'आयुरादीनि मम यज्ञक्लृप्तानि भवन्तु'। तत्राचार्यमहीधरो लिखति—'यज्ञेन निमित्तेनायुर्जीवनकालः कल्पतां साध्यतां प्राप्यताम्'। काण्वशाखीयस्य शुक्लयजुर्वेदस्यायं मन्त्रः (२४.३८) आचार्यसायणेन व्याख्यातः—'आयुर्जीवनम्। यज्ञेन साधनेन कल्पतां सम्पद्यताम्'। एवं हि त्रयोऽप्येते आचार्याः श्रुतेर्निर्देशं शब्दान्तरैर्व्यक्तीकुर्वन्तः समानमेवाभिप्रायं प्रकाशयन्ति यन्मनुष्यो यज्ञानुष्ठानैः ससुखं दीर्घायुर्लभेत।

उपलभ्यते छान्दोग्योपनिषदि रूपकमयमेकमाख्यानं यस्मिन् मानवजीवनस्य (आयुषः) यज्ञेन सह रोचकविधिना सम्बन्धः स्थापितो विद्यते। अस्या उपनिषदस्तृतीयाध्यायस्य षोडशे खण्डे, 'पुरुषस्तु यज्ञ एवे'ति प्रोक्तम्। पुरुषस्यायुषो यानि प्रथमानि चतुर्विंशतिवर्षाणि तानि प्रातःसवनमिति ज्ञेयानि। ततश्च चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवनमन्ततश्च पुरुषस्यायुषोऽष्टचत्वारिंशद्वर्षाणि तृतीयं सायंसवनमित्याख्यातानि। एवं हि यः पुरुषः स्वीयं जीवनं त्रिधा विभज्यायुषस्तत्तत्कालावधौ प्रातःसवनस्य, माध्यन्दिनसवनस्य सायंसवनस्य च भावनां विभावयन् शास्त्रोक्तविधिना ससंयमं युक्ताहारविहारमयं सदाचारपूतं जीवनं यापयति, स कथमप्यल्पायुर्न भवति, सर्वथैवारोग्यमनुभवन् षोडशाधिकं शतं वर्षमितमायुः प्राप्नोति, ततोऽपि सुदीर्घं जीवनं लभते[४]।

---

१. कौषीतकि-ब्रा., ७.४।

२. शुक्लयजुर्वेदः (वाज.माध्य.) ९.२१; १८.२९; २२.२३।

३. तत्रैव (काण्वशाखा), २४.३८—सायणभाष्यम्—'आयुर्जीवनम्। यज्ञेन साधनेन कल्पतां सम्पद्यताम्'॥

४. छान्दोग्योपनिषद्, ३.१६—'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातः-सवनम्......'॥

सविधि सश्रद्धं स्थापिते प्रज्वालिते चाग्नौ पवित्रैर्हविर्द्रव्यैर्यजनं यज्ञक्रियेत्युच्यते। अस्माकं शरीरगुहायामपि निरन्तरं पवित्रोऽग्निः प्रज्वलति यं जठराग्निमित्याहुः। परमेश्वरः स्वयमेवानेन जठराग्निना वैश्वानरो भूत्वा प्राणिनां देहमाश्रयते[1]। अस्य जठराग्नेरजस्रमुद्दीपनार्थं प्राणिमात्रेणाहारव्याजेन सोमस्य (अन्नस्य) आहुतिरसकृत्प्रदीयते। एवं हि निसर्गतोऽयमग्नीषोमीयो यज्ञो प्राणिदेहाभ्यन्तरे निरन्तरमिज्यते। अस्यापि सुनिपुणं निरूपणं छान्दोग्योपनिषत्कुरुते—'वयं यथाकालं भोजनं नित्यमेव कुर्मः। यदि 'प्राणाय स्वाहा', 'व्यानाय स्वाहा' इत्यादिना शास्त्रोक्तविधिना भोजनस्य प्राथमिकाः पञ्च ग्रासा गृह्यन्ते तदाऽस्माकं भोजनं तु 'अग्निहोत्रयज्ञो' भवति। परिणामतः स मनुष्य आयुस्सन्ततितेजोभिस्समृद्धो भवति[2]।

यज्ञेन सहायुषः सम्बन्धे विमृष्टे सत्यपरमेकं विशुद्धं विज्ञानसम्मतं मतं समुद्भासितं भवति। इदं स्थूलं शरीरं विपश्चिद्भिरन्नमयः कोश इति समाख्यातम्। शरीरस्यास्य धारणपोषणार्थं नित्यमेव सहजविधिना प्राणिभिः सनियममाहारो गृह्यते। एतदाहारग्रहणन्तु शरीराभ्यन्तरवर्तिनि जठराग्नौ (वैश्वानरे वह्नौ) सोमस्य (अन्नरूपिणः) आहुतिभिर्हवनम्। अनेन वैश्वानरोऽग्निर्निरन्तरं दीप्तो ज्वलति। तेनेदं शरीरमौष्मिकीं शक्तिं समवाप्नोति। एतदेव कारणं यदस्माकं शरीरं सततमेकं सुनिश्चितं तापक्रमं धारयति। अस्मिन् यज्ञविधौ समागते सति विपर्यये शरीरस्यायं स्थिरस्तापक्रम उच्चावचत्वं प्रतिगच्छति, येन ज्वरादयो व्याधयः समुत्पद्यन्ते, कायः क्षीणतामापद्यते आयुश्चापि क्षीयते। निरन्तरं निश्चिततापमानस्य स्थैर्यमस्माकं शरीरस्यारोग्यं दीर्घायुष्यञ्च सूचयति। त्यक्ताहारस्य जीवस्य जठराग्निः क्रमशो (शनैश्शनैः) मन्दतामेति अन्ततश्चोपशान्तो भवति। अथ शरीरमपि समोष्णतां विहाय शनैश्शनैः क्षीणायुः सन् प्राणैर्वियुक्तो जायते। स्वतःप्रमाणमिदं लोकसिद्धश्चानुभूतो विषयः। अत एव यज्ञायुषो सम्बन्धः सर्वथा प्रामाणिको वैज्ञानिकंश्चेति निश्चीयते।

अन्नादिरूपं यमाहारं मनुष्यो गृह्णाति, यदि स निर्दुष्टो पुष्टोऽविकृतः स्यात्तदैव तेनोजो वीर्यञ्च प्रबलतया जायेते। तेनैवायुरपि सुपुष्टं दीर्घञ्च प्रतिपद्यते नान्यथा। एतत्करमीदृगमन्नमपि यज्ञेनैव सम्भवति। 'यज्ञादन्नमन्नादायुरि'ति वैज्ञानिकी प्रक्रिया वेदात्पुराणपर्यन्तं सर्वत्रैव समाख्याता तल्लक्षणतक्षणैर्विचक्षणैर्व्याख्यायते।

---

१. 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः'। (श्रीमद्भगवद्गीता, १५.१४)

२. छान्दोग्योपनिषद्, ५.१८-२४।

दिव्याकाशात् प्रथमसृष्टसुधावर्षणे रम्यरमणेऽनाविलधूलिधूमकणेऽचिन्त्यचरणे पुरा पर्यावरणे यदौषधिगुणमयं चन्द्रामृतांशुसम्पर्कभिन्नमन्नं चण्डातपतापपक्वं सुपुष्टाकारं जीवनाधारमारोग्यकारं समग्रशक्तिसारञ्च वारं वारं समुपभुज्य जनाः समुल्लसितमनाः सुपुष्टदेहा वैशद्यगेहाः सुदीर्घं सुखायुर्हितायुश्च प्राप्नुवन्ति स्म; किन्त्विदानीं भौतिकसमृद्धिसम्पन्ना अपि दीर्घसुखायुर्विपन्ना विविधव्याधिग्रस्ताः समस्ता मनःशान्तिनिर्जना जनाः कष्टकरं जीवनं यथाकथञ्चिन्निर्वहन्ति। कथमिदमन्तरमुपपन्नम्? स्पष्टमेवोत्तरम्। यज्ञाऽभावात्प्रदूषितपर्यावरणप्रभावाच्च। अत एवेदानीं पर्यावरणप्रदूषणसन्दर्भे यज्ञस्य महत्त्वमुपयोगित्वञ्च सर्वेषां बुद्धिप्राकारे विचारप्रचारे कृतपदं विद्योतते। पर्यावरणे वर्धमानस्य प्रदूषणस्य दुष्प्रभावः प्राकृतिकविकारैस्सह प्राणिमात्रस्य जीवने सुस्पष्टमेवालक्ष्यते। नानाविधव्याधि-सङ्क्रान्ता भूरिशो भयाक्रान्ता जना अन्ये च प्राणिनोऽल्पायुस्सङ्कटापन्ना दृश्यन्ते। यज्ञस्याल्पतया तस्याभावाद्वा प्राणिनामायुर्दुःखायुश्चापि क्षीणतरमेवावगम्यते।

इयं सृष्टिर्यज्ञादेव प्रवर्तते। यज्ञादेव विविधानि फलान्यन्नान्यौषधयो वनस्पतयश्च प्रादुर्भवन्ति। अतो जीवानां कल्याणार्थं तत्त्वविद्भिरवश्यमेव यज्ञः करणीय इति प्रोक्तं महर्षिणा वसिष्ठेन—

'स्यात् सृष्टिः प्रजायन्ते अन्नानि विविधानि च।
तृणान्यौषधान्यथ च फलानि विविधानि च॥
जीवानां जीवनार्थाय यज्ञः सङ्क्रियतां बुधैः'[1]॥

'अग्नेर्वै धूम्रो जायते धूम्रादभ्रमभ्राद् वृष्टिः' इति श्रुतिः। शतपथब्राह्मणेन यज्ञात्सुवृष्टेर्वर्णनं विहितम्—

'इतःप्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते'[2]। श्रुतेरनुवर्तनं स्मृतिः करोति। मनुस्मृतौ कथितमेव यदग्नौ सम्यक् प्रक्षिप्ताऽऽहुतिरादित्यं प्रतिगच्छति, तस्माद् वृष्टिर्वृष्टेरन्नं ततः प्रजाः प्रजायन्ते—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'॥ (३.७६)

महाभारतस्य शान्तिपर्वण्यपि भगवता व्यासेनाक्षरश एतदेवोक्तम्—

'अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'॥ (२६३.११)

---

१. यज्ञमीमांसा, पृ. २;　　२. शत.ब्रा. ३.८.२.२२।

इममेवार्थं पुराणान्यपि निबध्नन्ति। पद्मपुराणस्य सृष्टिखण्डे यज्ञाः कल्याणहेतवः प्रोक्ताः। यतो हि यज्ञेन देवास्तुष्यन्ति, यज्ञेनैव वृष्टिर्भवति—

'यज्ञेनाप्यायिता देवा वृष्ट्युत्सर्गेण मानवाः।
आप्यायन्ते धर्मयज्ञा यज्ञाः कल्याणहेतवः'।। (३.१३२)

विष्णुपुराणेऽप्येवमेव निरूपितम्—

'यज्ञैराप्यायिता देवा वृष्ट्युत्सर्गेण वै प्रजाः।
आप्यायन्ते धर्मज्ञ यज्ञाः कल्याणहेतवः'।। (१.६.८)

कालिकापुराणे यज्ञात्सर्वभावित्वमुद्घुष्य प्रथमं यज्ञस्य महत्त्वं प्रतिपादितम्—

'यज्ञाद्देवाः प्रजाश्चैव यज्ञादन्नानि योगिनः।
सर्वं यज्ञात्सदाभावि सर्वं यज्ञमयं जगत्'।। (३१.४०)

ततश्च विस्तरेण तत्सर्वं पुनरपि प्रोक्तम्—

'यज्ञेषु देवास्तुष्यन्ति यज्ञे सर्वं प्रतिष्ठितम्।
यज्ञेन ध्रियते पृथ्वी यज्ञस्तारयति प्रजाः।।
अन्नेन भूता जीवन्ति यज्ञे सर्वं प्रतिष्ठितम्।
पर्यन्यो जायते यज्ञात् सर्वं यज्ञमयं ततः'।। (तत्रैव, ३२.७-८)

अतः पूर्वमपि कालिकापुराणे यज्ञाभावाद् वृष्ट्यभावस्तस्मादन्नाभावोऽन्ततश्च प्रजानाशः प्रोक्तः—

'यज्ञाभावात्तु देवानामन्नं सर्वं क्षयं गतम्।
पर्जन्याश्च ततो नष्टास्ततो वृष्टिर्न चाभवत्।।
वृष्ट्यभावे तु लोकानामाहाराः क्षीणतां गताः।
दुर्भिक्षव्यसनोपेते सर्वलोके द्विजोत्तमाः'।। (२०.११२-१३)

अपि च—

'यज्ञे विनष्टे सकलाः प्रजाः क्षुद्भयकातराः।
वृष्ट्यभावान्महद्दुःखं प्राप्य नष्टाश्च काश्चन'।। (२१.१६)

श्रीमद्भगवद्गीतायां यज्ञस्यैतद्विषयकं महत्त्वं तत्कर्तृत्वञ्च सविस्तरं प्रतिपादितम्। तत्र श्रुतिस्मृतिपुराणोक्ता एतेऽर्थाः समुपबृंहिताः क्रमबद्धतया सुष्ठु प्रोक्ताः—

'अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः'।। (३.१४)

अस्यास्त्ययमभिप्रायः। सर्वेषां प्राणिनां शरीरं स्थूलमथ चान्नमयं जायते। एतदन्नं वृष्टेरेवोत्पद्यते। पर्जन्या वृष्टिभिर्वसुधामार्द्रयन्ति। पर्जन्योऽपि यज्ञकारणादेव भवति। एष यज्ञः सर्वेषां कर्मणां योनिरेव। यज्ञो वै श्रेष्ठतमं कर्म। अस्मादेव मनुष्यकृताच्छ्रेष्ठकर्मणो यज्ञाद् वृष्टिस्ततोऽन्नं जायते। यथा वृष्टिस्तथैवान्नम्। अत्र वृष्टेराशयः सुवृष्ट्यैव। पश्यन्तु भवन्तः, साम्प्रतं तु यज्ञकर्मणः प्रायोऽभावो दृश्यते। यदा कदा कुत्रचिद्यज्ञानुष्ठानमायोज्यते, तथापि वृष्टिस्तु भवत्येव। तया वृष्ट्याऽन्नोत्पादनमपि भवति, तथापि तदन्नस्य यदभीष्टं स्वस्थं रूपं पुरा कदाचिद् भवति स्म, तादृगिदानीं न सम्भवति। अस्य मुख्यं कारणमस्ति कुवृष्टिनाऽऽकाशादापतितं प्रदूषितं जलम्। मेघा वृष्टिं किरन्ति। वायुमण्डले समुपस्थितेषु धूलिधूमकणेषु जलबाष्पस्य सङ्घननेन मेघा निर्मीयन्ते। समवायभूतानामेतेषां सङ्घनितजलबाष्पबिन्दूनां भारो यदा वायुमण्डलायाऽसह्यो भवति तदा सङ्घनितजलबाष्पभूताः पर्जन्या वृष्टिभिर्धरित्रीं सन्तृप्तां कुर्वन्ति। महाकविना कालिदासेन गीतिकाव्ये मेघदूते मेघस्य यत्स्वरूपं निरूपितं तत्तु सर्वथा वैज्ञानिकमेव—

'धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः'। इति।

अस्याभिप्रायोऽस्ति—'धूमस्य, (सूर्यस्य) प्रकाशस्य, जलस्य (बाष्परूपस्य) वायोश्चैकत्र सङ्घटनमेव मेघः। अतो यादृशी प्रकृतिर्गुणवत्ता वैतेषां धूमज्योतिः-सलिलमरुतां तादृश एव मेघोऽपि स्यात्तथैव च वृष्टिरपि। अधुनातने काले जनसंख्याबहुले जगति चत्वार्यप्येतानि द्रव्याणि भृशं प्रदूषितानि विद्यन्ते। प्रदुष्टेऽस्मिन् पर्यावरणे सर्वाधिकं प्रदूषणं वायुमण्डलमिति सूचयन्ति पारिस्थितिकीशास्त्रविदो वैज्ञानिकाः। नित्यमेव भूतलोत्थितैर्बीटिका-श्मकोकिलखनिजतैलाद्यपद्रव्याणां धूमैराकुलितं वायुमण्डलं निरन्तरं प्रदूषितं सम्पद्यमानं वर्तते। वायुमण्डलस्य प्राणवायुरपि सततं क्षीयते तत्र 'कार्बनडाई-आक्साइड', 'कार्बन-मोनो-आक्साइड' चेति द्वावप्यपवायू अभिवृद्धिं यातः। वायुमण्डलस्य प्रदूषणवशात्तत्र सन्निहितं बाष्परूपं जलमपि दुष्टाविलं सञ्जायते।

ओजोनपटलस्य ('ग्रीन हाउस' इति दुष्प्रभावात्) क्षीणतया तस्मान्निर्गलितं सूर्यादिग्रहज्योतिरपि स्वीयं दोषं न मुञ्चन्ति। एवं सदोषो धूमज्योतिःसलिलमरुतां सन्निपातो मेघः। अतस्तस्माद् भूयमाना वृष्टिरपि दुर्गुणोपेता। परिणामतस्तस्माद् वृष्टिजलात्समुत्पन्नानि तान्यन्नान्यपि कुपुष्टानि दुर्गुणानि च। अस्य दुष्प्रभावः स्पष्टतया मानवस्य प्राणिमात्रस्य वा स्वास्थ्यमायुश्च कवलीकरोति। अस्माभिः सर्वैरनुभूयते यदन्नस्य, फलस्य, दुग्धस्य, घृतस्य, ओषधेर्वा न सा प्रकृतिर्न च ते गुणाः। उदरम्भरो मानवस्तान्युपभुज्य न केवलं शारीरिकमपि तु मानसिकमप्यारोग्यं जहाति नियतकालाच्च पूर्वमेव यमराजाय प्राणानर्पयति।

यज्ञक्रियायां समिद्धेऽग्नौ घृतस्य, हविर्द्रव्यानामोषधीनाञ्चाहुतयो हूयन्ते। अग्निस्तानि हविर्द्रव्याणि सूक्ष्मकणेषु विभज्य विशदयति सर्वत्र विस्तारयति च, पवनमारोप्य दिशि दिशि नभसि भू-प्रदिशि च। ज्योतिर्गर्भितेषु होमधूमेषु सङ्घनिता बाष्पबिन्दवः सद्वायुसम्पृक्ताः सुपर्यवसिताः सुपर्जन्याः सुवृष्टिं किरन्ति। इयं वृष्टिस्तु सुधोपमं जलं पृथिव्यै समर्पयति। एतद्विपरीतं, पर्जन्या अपद्रव्यधूमोत्थिताः साम्प्रतं विषतुल्यं जलं वर्षन्ति। अतो यज्ञः प्राणिनां स्वास्थ्येनायुषा च सम्बद्धते। यज्ञः पर्यावरणविशोधनस्यानुपमेयं साधनं चकास्ति। यज्ञेन न केवलं पर्यावरणमेव संशोध्यतेऽपि तु तस्य सन्तुलनमपि विधीयते। यज्ञस्तु परत्रेहशर्मणे प्रवर्तते। यज्ञविहिते विशुद्धे पर्यावरणे जनानां हितायुः सुखायुश्च वर्धेते, व्याधिकराणां सूक्ष्मकृमिजीवाणूनां विनाशादारोग्यतयाऽऽयुरपि सुपुष्टं भवति। स्वस्थे निर्मले च काये मनोवैशद्यमपि सम्पद्यते। एवं जनानां भौतिकी अभ्युन्नतिः, आध्यात्मिकी चाभ्युन्नतिः सिद्ध्यतः।

प्रातःस्मरणीया ब्रह्मलीना यतिवरेण्याः श्रद्धेयाः स्वामिवर्याः श्रीमदखण्डानन्दसरस्वतीमहानुभावा यज्ञेन सहाऽऽयुषोऽत्यन्तं स्वाभाविकं व्यावहारिकञ्च सम्बन्धं स्थापयन्ति स्म। तेषामेतद्विषयकं कथनमत्र सुधियां मनः-प्रीतये समुद्ध्रियते—

'अत्र भवन्तः पश्यन्तु यज्ञम्। यदि वयं यजामहे तदाऽस्माकं जीवने त्रिविधं परिवर्तनं समायाति। प्रथमं दिनचर्या साध्यते। यथा—कदा शयनं, कदा जागरणं, कदा स्नानं, कदा सन्ध्यावन्दनं, कदा च भगवच्चिन्तनम्? अनेन जीवनं सन्नियम्यते। यदि बाह्यो यज्ञः क्रियते तदा यज्ञाग्निमुपावस्थानं, देवानुचिन्तनं तदनु हवनं चानिवार्यं भवत्येव। अग्निरस्मभ्यं पवित्रतमं तेजः प्रयच्छति। अग्निमतिरिच्य न कश्चिदन्यः शोधको, न जलं न वा वायुः। अनेन यज्ञेन जीवनं नियमितं

संयमितं सुव्यवस्थितचर्यं भवतीति निश्चप्रचम्। द्वितीयं भवति तत्राग्नितस्तेजोग्रहणम्। तृतीयं च भवति प्रदानम्। किं नामेदं प्रदानम्? उच्यते, यदा मन्त्रोच्चारणपूर्वकमग्नौ हविर्हूयते तदा तेन न केवलमग्निः प्रयतो भवति, अपि तु तस्मादुत्थितो होमधूमो विस्तारमवाप्याऽस्माभिर्दूषितमाकाशं पुनाति। प्रसाधिते यज्ञे प्रसादिते चाकाशे देवता प्रसन्ना भूत्वाऽस्मान् (यजमानान्) प्राणनीयाभिः शक्तिभिः संयोजयति सन्मार्गञ्च दिशति'[१]।

'स्वर्गकामो यजेदि'ति श्रुतिः। किं नाम स्वर्गः? उच्यते,

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्'[२]।।

अतो दुःखविरोधी सुखविशेषश्च स्वर्गः। सुखितं दीर्घजीवितमपहाय सुखं किमन्यद्भवितुमर्हति? अपरञ्च स्वर्गे नास्ति यौवनादन्यद्वयः। यौवनं हि सुखमूलमायुः। अपि च, जरसा क्षीणकायोऽपि जनो मनसा युवा भवितुमर्हति। अतोऽनेनापि निश्चीयते यज्ञस्य सुकृतमायुरिति।

'आचाराल्लभते ह्यायुरि'ति प्रोक्तं महाभारतकारेण। यः सदाचारवान् स एव यज्ञकामो भवति। आचारं विहाय कृतेन यज्ञेन नेष्टसिद्धिः। यो यज्ञं वितनुते स आचारं धारयति। पवित्रेण शरीरेण पूतेन च मनसा शिवसङ्कल्पपूर्वकं यजति यजमानः। यज्ञदीक्षिता यज्ञरक्षिता भवन्ति। तेषामाचारशुद्धिं परीक्ष्यैव यज्ञदीक्षा दीयते। यजमानः सदैवाचारपालनं करोति। एवं यः सदाचरति स सुखायुर्हितायुश्च भवति।

'यागपरः पुरुषधर्मः[३]' इति प्रोक्तं महर्षिणा भारद्वाजेन। यज्ञोऽस्ति मानवमात्रस्य विशिष्टो धर्मः। भगवता श्रीकृष्णेनापि गीतायां प्रोक्तम्—'नायं लोकोऽस्त्ययज्ञस्य'[४] इति। अतो मानवाः स्वीयं जीवनं यज्ञमयं कुर्युः। भवतु नाम, यज्ञस्य कोऽपि प्रकारः, यजनमस्माकं नित्यधर्मः स्यात्। 'यजनं वै जीवनमि'ति कृत्वा नरा यागपरा भवेयुः। समवाप्तुं सुखायुर्हितायुर्दीर्घायुश्च यज्ञात्परतरं न किञ्चिदन्यत्साधनमिति परिकल्प्यैव भगवती श्रुतिराह—'आयुर्यज्ञेन कल्पतामि'ति शम्।

●

---

१. मूलतो हिन्दीभाषया प्रोक्तमत्र संस्कृतगिराऽनूद्योद्धृतम्। ग्रन्थस्तु—'व्यवहारशुद्धि', सत्साहित्य प्रकाशन ट्रस्ट, विपुल २८/१६, खेरमार्ग, मालावारहिल, मुम्बई-४००००६।

२. ईश्वरकृष्णकृता सांख्यकारिका। तत्र द्वितीयकारिकाया वाचस्पतिमिश्रविरचिता 'तत्त्वकौमुदी'ति व्याख्या।

३. यज्ञमीमांसा, पृ. २३।

४. श्रीमद्भगवद्गीता, ४.३१।

# अथर्वाख्यश्चतुर्थोऽसौ वेद एव न संशयः

**प्रो. सन्निधानसुदर्शनशर्मा**
आचार्यः, साहित्यविभागस्य
राष्ट्रियसंस्कृतविद्यापीठे
तिरुपतिः



'ऋग्वेदेन होता करोति यजुर्वेदेनाध्वर्युः, सामवेदेनोद्गाता सर्वैर्ब्रह्मा'[१], 'स त्रिभिर्वेदैर्विधीयते'[२] 'ऋचा दीक्षे यजुषा दीक्षे साम्ना दीक्षे'[३], 'उच्चै ऋचा क्रियते उपांशु यजुषा उच्चैस्साम्ना'[४], 'वेदैरशून्यैस्त्रिभिरेति सूर्यः'[५] 'ऋचस्सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्, यजुस्तस्मादजायत'[६], 'त्रयो वेदा अजायन्त। ऋग्वेद एव अग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्'[७], 'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्, यदृचा तद्दृढम्'[८] इत्यादिषूच्चावचेषु वाक्येषु वेदस्य आथर्वणविरहितत्रित्वश्रवणात् कथं तस्य चातुष्ट्वमिति चेदुच्यते।

अथर्वशब्दाश्रवणं त्रित्वसङ्ख्यावाचकश्रवणं च आथर्वणस्य वेदत्वं व्याहन्तुं नैव शक्नुतः; अथर्ववेदेऽपि ऋचामेव स्थितेस्तस्य ऋच्छब्देनैव परिग्रहात्। महतो वेदराशेरनन्तत्वादेकत्वम्, मन्त्रत्वब्राह्मणत्वाभ्यां द्वित्वम्, छन्दोबद्धत्व-तद्रहितत्वगेयत्वेभ्यस्त्रित्वमिव ऋग्यजुस्सामाथर्वाख्येयत्वाच्चतुष्ट्वमपि सुवचम्। काव्यमुपहितरूपमाश्रित्य दृश्यं श्रव्यमिति द्विधा, शरीरमाश्रित्य गद्यं, पद्यं, चम्पूरिति त्रिधा, आत्मानं पुरस्कृत्य उत्तमोत्तमम्, उत्तमं, मध्यममधममिति चतुर्धा च।

---

१. आप.श्रौ.सू., परिभाषासूत्रम्;
२. सत्याषाढश्रौतसूत्रम्-१।३।
३. जैमिनीयब्राह्मणम्, २।६४,६५।
४. सत्याषाढश्रौतसूत्रम्, १।२।
५. ऋ.सं., ३।१२।९।
६. ऋ.सं. १०।९०।९; तै.आ. ३।१२।४।
वाज.सं. ३१।७; अथर्व.सं. १९।६।१३।
७. ऐ.ब्रा., ५।३२।
८. तै.सं. ६।५।१०।३।

सर्वत्र विभाजकोपाधिः सङ्ख्याया निमित्तम्। एवमेव चतुर्णां वेदानां ऋग्यजुस्साम-रूपाणां त्रित्वमौत्पत्तिकम्। अत एव न पारस्परिको विरोधः।

ननु 'ऋग्वेदेन होता करोति, यजुर्वेदेनाध्वर्युः सामवेदेनोद्गाता सर्वैर्ब्रह्मा'[1] इत्यत्र 'यदृचैव हौत्रं क्रियते, यजुषाऽध्वर्यवम्, साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति; अथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्'[2] इत्यत्र च यज्ञस्य त्रिभिरेव ऋग्यजुस्सामभिर्वेदैः साध्यत्वस्य श्रवणात् कथमाथर्वणिकस्य वेदत्वेन परिग्रह इति चेत्, सत्यम्। यद्यप्यथर्वशब्दस्तत्र न श्रूयते, तथापि पूर्वोक्तयो-र्वाक्ययो'स्सर्व'शब्देन स पर्यगृह्यत। 'सर्वैर्ब्रह्मा' इत्यस्य ऋग्यजुस्सामाथर्वाख्यै-स्सर्वैश्चतुर्भिर्वेदैर्ब्रह्मा व्यवहरतीत्यर्थः। सर्वशब्दस्य केवलम् ऋग्यजुस्सामाथर्वमात्र-प्रत्यायकत्वं न शङ्क्यम्, तथा सत्यपि ऋक्छब्देन तद्भूयिष्ठस्याथर्ववेदस्याप्य-वश्यपरिग्राह्यत्वात्। तर्हि आथर्वणिकेन कुत्रापीज्यायां ब्रह्मणो व्यवहारो दृष्टो वा? ओम्, बहुत्र। किञ्च '......अथ ह प्रजापतिस्सोमेन यक्ष्यमाणो वेदानुवाच' कं वो होतारं वृणुयां, कमध्वर्युं, कमुद्गातारं, कं ब्राह्मणमिति, ते ऊचुः ऋग्विदमेव होतारं वृणीष्व यजुर्विदमध्वर्युं, सामविदमुद्गातारम्, अथर्वाङ्गिरसोविदं ब्रह्माणं तथा हास्य यज्ञश्चतुष्पात् प्रतितिष्ठति' इत्युपाख्यानमुखेन गोपथब्राह्मणं[3] ब्रह्मणः अथर्ववेदवित्त्वं विधत्ते। अपि च, 'प्रजापतिर्यज्ञमतनुत। स ऋचैव हौत्रमकरोत्। यजुषाऽऽध्वर्यवम्। साम्नौद्गात्रम्। अथर्वाङ्गिरोभिर्ब्रह्मत्वम्'[4] इति ब्रूते च।

वस्तुतो यज्ञो वाङ्मनोनिष्पाद्यः। तत्र वाङ्निष्पादनमाद्यैस्त्रिभिर्वेदैः क्रियते। मनसो निष्पादनं तु अथर्ववेदेन। तदुक्तम्—'प्रजापतिर्यज्ञमतनुत। स ऋचैव हौत्रमकरोत्। यजुषाऽऽध्वर्यवम्। साम्नौद्गात्रम्। अथर्वाङ्गिरोभिर्ब्रह्मत्वम्। स वा एष त्रिभिर्वेदैर्यज्ञस्यान्तः पक्षः संस्क्रियते। मनसैव ब्रह्मा यज्ञस्यान्तरं पक्षं संस्करोति'[5] इति। तथा चेतरेषु ऋत्विक्षु ऋग्यजुस्सामवेदैर्यज्ञस्य वाग्रूपं (शरीरं) निष्पादयत्सु सत्सु ब्रह्माऽथर्ववेदेन मानसं निष्पादयतीति स्पष्टम्। उक्तं चैतरेयब्राह्मणे—'अयं वै यज्ञो योऽयं पवते। तस्य वाक्च मनश्च वर्तन्यौ। वाचा च हि मनसा च यज्ञोऽवर्तत। इयं वै वाक्। अदो मनः। तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति मनसैव ब्रह्मा संस्करोति'[6] इति। एवञ्च, यज्ञस्य वाङ्मनसी ऋत्विक्चतुष्टयेन वेदचतुष्टयेनैव साध्येते। यज्ञाख्यरथस्य वाङ्मनोद्वन्द्वं चक्रद्वन्द्वमिव। ब्रह्मणो

१. आप.श्रौ.सू., परिभाषासूत्रम्; २. ऐत.ब्रा., ५।३३।
३. गो.ब्रा., २।२४; ४. तत्रैव।
५. तत्रैव, ३।२; ६. ऐ.ब्रा. ५।३३।

वाऽथर्ववेदस्य वाऽभावे चक्रेणैकेन विहीनस्येव रथस्य, यज्ञस्य गतिः कुण्ठीभवेत्। तदुक्तम्—'अथैकपात्पुरुषो यन् अनुभयचक्रो वा रथो वर्तमानो भ्रेषं न्येति, एवमेव अस्य यज्ञो भ्रेषं न्येति'[१] इति। किञ्च ब्रह्मणः सत्ता यज्ञे यथाऽनिवार्या तथाऽस्याथर्ववित्ताऽपि। ब्रह्मणोऽनथर्ववित्त्वे यज्ञो विकलो भवेत्। तथा हि—'अथ चेन्नैवंविधं ब्राह्मणं वृणुते, दक्षिणत एवैषां यज्ञो रिच्यते'[२] इति गोपथब्राह्मणवचनम्।

यदुक्तम्—'स त्रिभिर्वेदैर्विधीयत' इति, तस्यायमाशयः—प्रायशो ब्रह्माऽथर्वविदेव स्यात्। तदप्राप्तौ अनथर्वविदाऽपि यथाकथञ्चिद् यज्ञो निर्वर्त्य इति। तत्तात्पर्यं व्यवृणोन्मुनिः—'स त्रिभिर्वेदैर्विधीयत इति स्मृतिस्तु उदाहृतश्रुत्यनुसारेण मुख्यस्याथर्वविदोऽसम्भवे तत्तच्छाखासु यावदुक्तब्रह्मत्वमात्रेणापि क्रतुशरीरनिष्पत्तिर्भवतीत्येवमभिप्राया'[३] इति। अत एवायं 'ब्रह्मवेद' इति श्रुतिषु श्रौतिषु च प्रसिद्धः।

यच्च 'उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना'[४], 'वेदैरशून्यैस्त्रिभिरेति सूर्यः'[५] इत्यादिवचनोन्नीतं त्रित्वं तस्य सवनत्रयोपयोगिकालत्रयपरत्वान्न श्रुतिचतुष्ट्वव्याघातः। 'ऋग्भिः पूर्वाह्णेः.....'[६] इत्यादिश्रुतिरेवात्र प्रमाणम्।

यदप्युक्तम्—पुरुषसूक्तगतवाक्यैर्वेदानां त्रित्वमेवाभिधीयत इति। तत्र विचार्यते—इमानि वाक्यानि अथर्ववेदेऽपि[७] अवैलक्षण्येन लक्ष्यन्ते (यजुर्वेदेऽपि[८])। तत्रत्यानि ऋगादीनि पदानि ऋग्वेदादिपराण्येवेति ब्रूयाच्चेत् किमथर्ववेदः स्वात्मानं वेदेभ्यः पृथक्कृत्य स्वस्य वेदत्वं स्वयमेव जहातीति वा अर्थः? कोऽपि स्वस्यैव हानिं स्वयमेव कल्पयेद्वा? न केवलं ऋग्वेदीयपुरुषसूक्तेऽपि तु स्थलान्तरेष्वपि ऋग्यजुस्साममात्रपदघटितानि, च्युताथर्वपदानि वाक्यानि बहून्यथर्ववेद उपलभ्यन्ते[९]। तदुपलब्धेः किमथर्ववेदः स्वस्य वेदत्वं स्वयं व्याजिघत्सतीति वक्तव्यं वा? यद्युच्येत, युज्येत वा?

---

१. गो.ब्रा.· ३।२।
२. तत्रैव, २।४।
३. पृ. ७, अथर्ववेदसंहिता (सभाष्या)।
४. सत्या.श्रौ.सू., १।२;
५. ऋ.सं., ३।१२।९।
६. तै.ब्रा., ३।१२।९।१;
७. अथ.सं., १९।६।१३।
८. तै.आ. ३।१२।४; वाज.सं., ३१।७।
९. 'ऋचस्साम यजुर्मही'—अथ.सं. १०।७।१४।
'ऋचस्सामानि छन्दांसि'—अथ.सं. ११।७।२४।
'ऋचस्साम अथो यजुः'—अथ.सं. ११।८।२३।

श्रुतवन्तः, ऋग्यजुस्सामेति पदानि मन्त्रपराणि, उत (प्रसिद्ध-) वेदपराणीत्यस्मिन् विषये विचक्षणैर्भाव्यं भवद्भिः। न हि सर्वत्र ऋगादिशब्दा वेदपराः, क्वचिन्मन्त्रपरा अपि। पूर्वोदाहृतवाक्येष्वपि सैव गतिर्न्याय्या। अतो न वेदचतुष्टयत्वव्याघातः।

इतोऽपि विचार्यताम्। अस्य महतो भूतस्य निःश्वसितरूपे स्वभावत एव सन्ति वाक्यानि कानिचिच्छन्दोबद्धानि, कानिचिद्गेयानि, कानिचिन्मुक्तानि तानि तानि तैस्तैर्नामभिर्व्यपदिश्यन्ते—ऋग्यजुस्सामेति। अथर्ववेदे ऋग्यजुस्सामातिरिक्ता मन्त्रास्सन्ति वा? यद्यभविष्यन् अथर्ववेदस्तन्नाम्ना व्यवाहरिष्यत। तदेव तु न पश्यामः। अत्रापि ऋचामेव सत्त्वाद् ऋग्वेदात्पार्थक्यप्रतिपत्तये अन्याऽऽख्याऽऽवश्यक्यभूत् सैवाथर्ववेद इत्यथर्वाङ्गिरोभ्यां प्रवर्तितत्वात्। ऋगित्याख्यया अथर्ववेदगता मन्त्रा न व्याप्यन्त इति वक्तुं शक्येत वा? तर्हि पुरुषसूक्तादिगतेषु वाक्येषु अथर्ववेदः परित्यक्त इति वक्तुं सदृशं किं बुद्धिमत्तायाः? किमिदं साहसादन्यत्?

ओङ्कारानन्दमहाभागस्तु भङ्ग्यन्तरेण व्याचष्टे। तन्मते—'ऋचस्सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत' इत्यत्र 'छन्द'श्शब्दः अथर्ववेदपरः[1]।

अथ 'तेषां ऋग्यत्रार्थवशेन पादव्यवस्था'[2] 'गीतिषु सामाख्या'[3] 'शेषे यजुश्शब्दः'[4] इति सूत्रयता परमकारुणिकेन भगवता जैमिनिना त्रय एव वेदा अभ्युपगता वा इति मानसं समाविष्टः शङ्कातङ्कः पूर्वोक्तवचोविन्यासेन यद्यप्यपनुत्तप्रायस्तथापि शङ्कालवस्याप्यनुपेक्ष्यत्वात्किञ्चित् प्रस्तूयते। विद्यारण्यस्वामिनां मते सूत्रोपात्तत्रिविधान्यतममन्त्रवत्ताया अथर्ववेदेऽपि सत्त्वान्न वेदचतुष्ट्वव्याकोपः[5]।

अन्यच्च। नात्र जैमिनिः ऋग्वेदादीनां लक्षणं वक्तुमुपाक्रमत; किन्तु ऋगादीनां मन्त्राणाम्। पूर्वोक्तसूत्रत्रय्याः पूर्वं नातिव्यवहितं 'तच्चोदकेषु मन्त्राख्या' इति सूत्रं विदाङ्कुर्वन्तु। प्राकरणिको विषयो मन्त्र एव। अतः सूत्रत्रयीगता ऋगादिशब्दा

१. 'वेदों के सुप्रसिद्ध पुरुषसूक्त में भी चारों वेदों का विराट् पुरुष से उत्पन्न होना लिखा हुआ है। वहाँ अथर्ववेद को 'छन्दोवेद' कहा गया है'।
पृ. १५, अथर्ववेद का एक सरल सङ्क्षिप्त अध्ययन,
द्वारा—महर्षि ओङ्कारानन्द सरस्वती, ओङ्काराश्रम, गोरखपुर।

२. पूर्वमीमांसा, २।१।३५; ३. तत्रैव, २।१।३६।

४. तत्रैव, २।१।३७।

५. 'तस्मिन्नपि वेदे विद्यत इति न चतुष्ट्वव्याकोपः' अथर्ववेदसंहिता, प्रथमो भागः, पृ.११।

मन्त्रपराः, न तु वेदपराः। अधिकरणान्ते 'इति ऋङ्मन्त्रलक्षणाधिकरणम्' इत्यादीनि भाष्यव्याख्याकाराणां वाक्यान्यपि सहृदयानां दृष्टेर्नापहार्याणि। तस्मान्न कथञ्चन जैमिनिर्वेदत्रयवादी।

'यमृषयस्त्रैविदा विदुः। ऋचस्सामानि यजूंषि'[1] इत्यादिष्वपि ऋगादिशब्दा वेदगतमन्त्राभिप्रायका एव। न तु वेदाभिधायिनः। एवमेव—

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्'।।

इत्यात्रापि मानवीये[2]।

यदप्युक्तम्—'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत्। यदृचा तद्दृढम्'[3] इति श्रुतिवाक्यप्रामाण्यात् त्रय एव वेदा इति, तदसत्। अस्य वाक्यस्य ऋङ्मन्त्रप्रशंसाऽर्थवादत्वात्। अतोऽथर्ववेदस्य वेदत्वविषये संशयो हेयः।

अथ, अथर्ववेदस्य वेदत्वं, प्राधान्यं, प्रशंसां च प्रतिपादयन्तीं सामग्रीमक्षिसात्कर्तुमर्हन्ति प्राज्ञाः—

१. 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः'[4] इति वाजसनेयश्रुतिः।

२. 'यदृचोऽध्यगीषत ताः पय आहुतयो देवानामभवन् यद्यजूंषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वाङ्गिरसो मध्वाहुतयः'[5] इति तैत्तिरीयकम्।

३. यत्त्रिराचामति तेन ऋचः प्रीणाति, यद्द्विः परिमृजति तेन यजूंषि यत्सकृदुपस्पृशति तेन सामानि यत्सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेनाथर्वाङ्गिरसः'[6] इत्यपि।

४. 'द्वे विद्ये वेदितव्ये परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः......'[7] इति मुण्डकोपनिषत्।

५. 'ऋग्यजुस्सामाथर्वणाश्चत्वारो वेदाः'[8] इति नृसिंहपूर्वतापिन्युपनिषत्।

---

१. तै.ब्रा., १।२।१।२६; २. मनु.स्मृ., १।२३।
३. तै.सं., ६।५।१०।३; ४. बृह.उ., ४।४।१०।
५. तै.आ., २।९; ६. तत्रैव, २।११।
७. मुण्ड.उ. १।४,५; ८. नृ.पू.ता.उ. १।

एवंविधानि श्रुतिवाक्यानि स्पष्टमाथर्वणस्य वेदत्वं ब्रुवते। यो वेदव्यासो वेदं व्यभजदिति सर्वे विश्वसन्ति, यश्च ब्रह्मसूत्रपुराणेतिहासादिवाङ्मयजात्तं प्रसार्य आप्तत्वात्प्रामाणिकोऽभूत्तस्यापि वाक्यं किमप्रमाणम्?

१. तत्रर्ग्वेदधरः पैलस्सामगो जैमिनिः कविः।
वैशम्पायन एवैको निष्णातो यजुषामुत।।
अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः।। (श्रीमद्भागवतम्-१।४)

२. न तिथिर्न च नक्षत्रं न ग्रहो न च चन्द्रमाः।
अथर्वमन्त्रसम्प्राप्त्या सर्वसिद्धिर्भविष्यति।।
यस्तत्राथर्वणान्मन्त्रान् जपेच्छ्रद्धासमन्वितः।
तेषाम़र्थोद्भवं कृत्स्नं फलं प्राप्नोति स ध्रुवम्।।
(स्कन्दपुराणे कमललयखण्डः)

३. पुरोहितं तथाऽथर्वमन्त्रब्राह्मणपारगम्। (मत्स्यपुराणम्)

४. अभिषिक्तोऽथर्वमन्त्रैर्महीं भुङ्क्ते ससागराम्। (मार्कण्डेयपुराणम्)

१. किञ्च, '......एकशतमध्वर्युशाखाः......नवधा आथर्वणम्'[१] इति आथर्वणमपि वेदरूपेण परिगण्य तच्छाखासङ्ग्रहं वदतो भगवतः पतञ्जले-र्वचनं किमप्रमाणम्?

२. अपि च इतरेषामिवाथर्वणस्यापि शाखाविस्तृतिं प्रदर्शितवतोनादिपरम्परा-परिप्राप्तस्य चरणव्यूहस्यापि वचः किमप्रमाणम्?

३. एवमेव—
'वेदशब्दश्चतुष्के वा प्रत्येकं वा चतुष्टये।
एकत्वेन प्रयुक्तोऽपि नैकव्यक्त्यभिधानकृत्[२]।।
इति सङ्गिरमाणस्य महादेवस्य वाक्यं किमप्रमाणम्?

४. तथैव,
'जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतिमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि'[३]।।
इति नाट्यशास्त्रकर्तुर्भरतस्य वचनं किमप्रमाणम्?

---

१. महाभाष्ये पस्पशाह्निकम्।

२. सत्याषाढश्रौतसूत्रम्, वैजयन्तीसमन्वितम्, पृ. १७१।

३. नाट्यशास्त्रम्, ६।

५. इत्थमेव—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश'[१]॥

इति वाक्यमुद्धरतः, 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते'[२] इत्यवितथां प्रतिज्ञां कृतवतो व्याख्यातृचक्रवर्तिनः सदसत्काव्यनिकषोपलायमानस्य मल्लिनाथस्यापि गीरप्रामाणिकी?

६. वेदार्थस्य प्रकाशेन हार्दं तमो निवारयतो विद्यारण्यमुनेश्चतुर्वेदान्तर्गताथर्ववेदभाष्यप्रणयनं किं वितथं प्रमाणम्?

७. अथर्ववेदान्तर्गतयोर्मुण्डमाण्डूक्योपनिषदोः आचार्यशङ्करभगवत्पादप्रणीतं भाष्यं किं वितथं प्रमाणम्?

८. वेदाङ्गशिक्षावाङ्मयान्तर्गता माण्डूकीशिक्षा सप्रातिशाख्या वितथा?

९. वेदाङ्गकल्पान्तर्गत—'वैतानश्रौतसूत्र'—'कौशिकसूत्रयोः' किं वैतथ्यमेव?

१०. आथर्वणस्य वेदत्वं नाङ्ग्यकरिष्यत, महाभारते न पञ्चमो वेद इति ख्यातिर्नालप्स्यत।

साक्षाद्भगवती श्रुतिरपि क्वचित् त्रयीति क्वचिच्च वेदाश्चत्वार इति च ख्याति। परस्पराविरुद्धौ इमौ व्यवहारौ। तथा हिं—मन्त्रस्वभावं पुरस्कृत्य त्रित्वं, वेदराशिविभागं पुरस्कृत्य तु चतुष्ट्वमित्येतदुभयमपि सङ्गच्छते। तथा च श्रुतिः—

'यत्स्वाध्यायमधीयीतैकामप्यृचं यजुस्साम वा
तद्ब्रह्मयज्ञस्सन्तिष्ठते यदृचोऽधीते पयसः कूल्या
अस्य पितॄन् स्वधा अभिवहन्ति यद्यजूंषि
घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते
यदथर्वाङ्गिरसो मधोः कूल्या..........' (तै.आ. २।१०)

अस्मिन् वाक्ये आदौ ऋग्यजुस्साम्नाम् (केवलानाम्) अध्ययनं व्यधायि, पश्चाद् वेदशस्तस्य क्षीरादिरूपत्वनिरूपणावसरे आथर्वणोऽपि पर्यग्राहि। तथैव भगवान् बादरायणोऽपि एकतस्त्रयीति व्यवहरन्नेवापरतो वेदानां चतुष्ट्वं वक्ति।

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
इति भारतमाख्यानं कृपया मुनिना कृतम्'॥

(श्रीमद्भागवतम्— १।४।२५)

---

१. माघकाव्यव्याख्या-सर्वङ्कषाख्याया उपोद्घातश्लोकः, सं. १।

२. मल्लिनाथव्याख्या—नैषधीयचरितम्, १।५।

इत्यत्र त्रयीति व्याहृत्य,

> तत्रर्ग्वेदधरः पैलस्सामगो जैमिनिः कविः।
> वैशम्पायन एवैको निष्णातो यजुषामुत।।
> अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः।।
> (श्रीमद्भागवतम्—१।४।२१,२२)

इति स्पष्टं चतुरो वेदान्नाम्नोवाच।

यथेतरेषु, तथाऽथर्ववेदेऽपि 'अपौरुषेयवाक्यत्वम्'[1], 'मन्त्रब्राह्मणात्मकत्वम्'[2], 'प्रत्यक्षाद्यसाध्यालौकिकोपायबोधकत्वं'[3] च सुव्यवस्थितम्। अतः,

> जाग्रत्यपि त्रयीशब्दे विरोधाभासकारणात्।
> अथर्वाख्यश्चतुर्थोऽसौ वेद एव न संशयः।।इति।।



---

१. अपौरुषेयं वाक्यं वेदः (मीमांसान्यायप्रकाशः)।

२. 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप.श्रौ.सू.)।

३. 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता'।। (तैत्तिरीयभाष्यभूमिकायां विद्यारण्येनोद्धृतम्)

# निगमागमसंस्कृतिविमर्शः

**डॉ. राममूर्तिचतुर्वेदी**
प्राध्यापकः, वेदविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



भारतीयसंस्कृतौ निगमागमयोः क्वचिदत्यन्तं भिन्ना, क्वचिच्च परस्परं मिश्रिता संस्कृतिरवलोक्यते। संस्कृतसाहित्ये सामान्यतया निगमशब्देन वेद एव गृह्यते, निरुक्तशास्त्रे यास्काचार्येण बहुषु स्थलेषु 'इत्यपि निगमो भवती'त्यादिना वेदमन्त्रस्यैव ग्रहणं कृतं विद्यते। एवमेव 'आगम'शब्देन वेदातिरिक्तं शिवेन शिवायै प्रोक्तं शास्त्रजातं सामान्येन गृह्यते।

वेदेषु यथा कर्मोपासनाज्ञानमिति विषयत्रयस्य प्रतिपादनं विद्यते, तथैवागम-शास्त्रेष्वपि कर्मोपासनाज्ञानमिति त्रितयस्यैव विस्तरो दृश्यते। ज्ञानमेव परं ब्रह्म, तदेव वस्तुत उभयत्र प्रधानम्। इदञ्च ज्ञानमेकत्र वैदिककर्मणा वैदिकोपासनया चाधिगम्यते, अपरत्र आगमोक्तकर्मणा आगमिकोपासनया चाधिगन्तुं शक्यते। तत् परब्रह्माख्यं ज्ञानमवाप्तुं यथा वैदिककर्मोपासने प्रवर्तेते, तथैव तान्त्रिककर्मोपासने अपि प्रवर्तेते। अत इदं वक्तुं शक्यते यदेकमेव प्राप्तव्यमधिगन्तुं वैदिकस्तान्त्रिकश्च द्वौ पन्थानौ प्राचीनकालत एव प्रथिततरौ विद्येते।

**निगमागमयोः श्रुतित्वम्**

निगमो वेदो यथा गुरुमुखोच्चारणानूच्चारणविधिना गुरुशिष्यपरम्परया श्रवण-सम्प्रदायेन च समागतः श्रुतिशब्देनाभिधीयते, तथैव तन्त्रशास्त्रमपि गुरुशिष्यपरम्परया अविच्छिन्नधारारूपेण प्रवाहितत्वाद् वेदवत् श्रुतित्वमुपगच्छति। अत एव मनुस्मृति-टीकाकारेण कुल्लूकभट्टेन प्रोक्तम्—'वैदिकी तान्त्रिकी चेति द्विविधा श्रुतिरुच्यते' इति।

शारदातिलकानुसारेण परमकारुणिकः परमशिवो जीवानां कल्याण-सम्पादनार्थं स्वकीयां विमर्शात्मिकां शिवारूपां शक्तिं शिष्यं मत्वा तन्त्रशास्त्रं समुपदिदेश। तद्यथा—

गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः।
प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत्।।

अनादिकालतः श्रवणपरम्परया समागतत्वात् तन्त्रशास्त्रमेवेदमागमशास्त्रमप्युच्यते।

'आगमः पञ्चमो वेदः कौलस्तु पञ्चमाश्रमः' इति महर्षिहारीतवचनानुसारम् आगमशास्त्रं वेदसमं सम्मान्यते, यथा 'अनन्ता वै वेदाः' इति शास्त्रश्रुतिः प्रसिद्धा, तथैव 'अनन्ता वै आगमाः' इत्यपि वक्तुं शक्यते। 'यस्य निःश्वसितं वेदाः' इत्यादिना निगमापरपर्यायो वेदस्तु परमेश्वरस्य निःश्वासरूपः। आगमस्तु तस्यैव परमात्मन उपदेशरूपो वाग्विस्तारः। यतो हि आगमशास्त्रस्योद्गमो नास्ति कस्माच्चित् सामान्यपुरुषात्, अपि तु आदिदेवो महादेवो जगत्कर्ता नारायणो वा स्वयमेवागमशास्त्रस्य कर्ता, उपदेष्टा, व्याख्याता च वर्तते।

परमेश्वरनिःश्वासरूपस्य वेदस्य परमेश्वरेच्छया विनापि सततं शब्दात्मना प्रवहमानत्वाद् दुर्ज्ञेयत्वं तावदक्षुण्णमिति मन्यमानेन भगवता शिवेन तस्यैव परमेश्वरप्राणभूतस्य वेदस्य तननं विस्तारणं यत्र कृतं तदेव तन्त्रशास्त्रं जातमिति मे प्रत्ययः।

तन्त्रशास्त्रस्य आगमो यामलञ्च द्वौ भागौ विद्येते। तदत्र क्रमशः विविच्यते।

**शाब्दिकव्युत्पत्तिदिशा तन्त्रशब्दार्थः**

शब्दकल्पद्रुमकोशानुसारेण तनोति तन्यते वेत्यर्थे 'तनु'विस्तारे धातोः कर्त्रादौ यथायथं 'ष्ट्रन्'प्रत्यये कृते तन्त्रपदं निष्पद्यते, तच्च शिवप्रोक्तं शास्त्रमुच्यते। अथवा 'तत्रि'कुटुम्बधारणे इत्यस्माद्धातोः घञि प्रत्यये जाते तन्त्रं निष्पद्यते, यस्यार्थः कुटम्बकृत्यमिति। अत्रान्येऽप्यर्थाः कोशकारैर्विद्वद्भिश्च निरूपिताः सन्ति। तद्यथा—तन्त्रमिति श्रुतिशाखाविशेष इति मेदिनीकारः, कुलमिति मञ्जरीकारः, शास्त्रमिति विश्वः। तन्त्रशब्दार्थविमर्शे तत्रभवन्तो महावैयाकरणाः पण्डितश्रीरामप्रसादत्रिपाठिचरणा एवमूचुः—

तन्मते विस्तीर्यन्ते ऐहिकामुष्मिकाभ्युदयनिःश्रेयससाधका उपाया अनेनेति व्युत्पत्तिमादधानो वर्त्तते तन्त्रशब्दः। तत्र 'तनु'विस्तारे इति तनादिकाद् धातोः करणेऽर्थे 'सर्वधातुभ्यः ष्ट्रन्' इत्यौणादिकसूत्रेण 'ष्ट्रन्'प्रत्यये कृते तन्त्रशब्दो निष्पद्यते। अथवा 'तत्रि'कुटुम्बधारणपोषणयोरित्यस्माच्चौरादिकाद् धातोः कर्मणि करणेऽधिकरणे वा 'अकर्तरि च कारके संज्ञायाम्' इति पाणिनीयसूत्रेण घञ्प्रत्यये कृते सति तन्त्र्यते यद्, येन, यत्र वा इति व्युत्पत्तिभिस्तन्त्रशब्दस्य साधुत्वं

विधीयते। ततश्च समाजस्य धारकत्वं पोषकत्वं वा तन्त्रत्वम्' इति 'नियमविशेष नियन्त्रितलोकत्वं तन्त्रत्वम्' इति वा लभ्यते। तथा चोक्तम्—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
त्राणञ्च कुरुते यस्मात् तन्त्रमित्यभिधीयते।।
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते।।

**शास्त्रेषु तन्त्रलक्षणम्**

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च।
देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम्।।
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च।
संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः।।
उत्पत्तिर्विबुधानाञ्च तरूणां कल्पसंज्ञितम्।
संस्थानं ज्यौतिषाञ्चैव पुराख्यानकमेव च।।
कोषस्य कथनञ्चैव व्रतानां परिभाषणम्।
शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम्।।
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम्।।
राजधर्मो दानधर्मो युगधर्मस्तथैव च।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते।।

**तन्त्रग्रन्थाः**

आगमतत्त्वविलासग्रन्थे चतुष्षष्टितन्त्रग्रन्थानां नामान्युक्तानि प्राप्यन्ते। वाराहीतन्त्रे श्लोकसंख्यासहितानि त्रिंपञ्चाशत् तन्त्रनामानि प्रोक्तानि सन्ति। महासिद्धिसारस्वततन्त्रेऽपि तन्त्रशास्त्रं चतुष्षष्टिसंख्याकमेवोपलभ्यते, तत्र हि— 'सिद्धीश्वरमहातन्त्रं कालीतन्त्रं कुलार्णवम्' इत्यारभ्य 'एतानि तन्त्ररत्नानि सफलानि युगे युगे' इत्यन्तं समेषां चतुष्षष्टिसंख्याकानां तन्त्राणां नामानि उल्लिखितानि प्राप्यन्ते। एवमेव महाविश्वसारतन्त्रेऽपि—

चतुष्षष्टिश्च तन्त्राणि यामलादीनि पार्वति।
सफलानीह वरारोहे विष्णुक्रान्तासु भूमिषु।।

इत्यमुना श्लोकेन चतुष्षष्टि-संख्या तन्त्राणामस्तीत्यवगम्यते।

**तन्त्रशास्त्रकालविचार:**

तन्त्रशास्त्रस्योद्भवकाल: क:? इति निर्णये नास्ति विदुषामैकमत्यम्। अपि चाष्टादशपरिगणितविद्यासु प्राचीनस्मृतिसंहितासु च कुत्रचिदपि तन्त्रशास्त्रस्योल्लेखो नैव प्राप्यते येनास्य प्राचीनताया: परिज्ञाने विदुषां महत् काठिन्यमनुमीयते। पुराणान्यपि तन्त्रकालनिर्धारणविषये मौनमेवावलम्बन्ते। यद्यपि अथर्ववेदे—मारणोच्चाटनादीनि कानिचित्तन्त्रलक्षणानि दृश्यन्ते; परन्तु नैतावता तन्त्रशास्त्रस्याथर्वमूलत्वं प्रतिपादयितुं शक्यते। इत: परं सर्वत: प्रथमं नृसिंहतापनीयोपनिषदि तत्र शाङ्करभाष्ये च तन्त्रलक्षणानि प्राप्यन्ते, येन ख्रीष्टसप्तमशताब्दीत: किञ्चिन्मात्रमस्य प्राचीनता प्रतीयते। किञ्च तन्त्रशास्त्रस्य यद्यप्यष्टादशविद्यासु नास्त्युल्लेखस्तथाप्यास्तिकमान्यतया वेदाविरोधितया च वेदानामुपाङ्गेषु स्थानमस्य दीयते वेदविद्भि:।

**आगमशब्दार्थविचार:**

आङ्पूर्वकाद् गम्धातोर्गत्यर्थकाद् भौवादिकात्—गृहबृद्निश्चिगमश्च' (पा.३/३/५८) इति पाणिनीयसूत्रेण कर्मणि करणेऽधिकरणे वा अप्प्रत्यये कृते आगम्यते यो येन यत्र वेति विग्रहे आगमशब्दो निष्पद्यते। ततश्च गति: प्राप्ति: ज्ञानं वेति स्वीकृत्या सम्यक्प्राप्तिविषय: सम्यक्प्राप्तिसाधनम्, सम्यग्ज्ञानाधिकरणमिति त्रयोऽप्यर्था लभ्यन्ते। 'सम्यक्प्राप्तिविषयता मोक्षरूपपुरुषार्थस्यैव भवितुमर्हतीति मोक्षतत्त्वम्, मोक्षसाधनत्वम्, आगमत्वमिति आद्यविग्रहद्वयीयोऽर्थ:। तृतीयविग्रहेण तु सम्यग्ज्ञानमात्मज्ञानमेव, तदधिकरणमात्मैव, अत एव आत्मतत्त्वविवेचक आगमपदार्थ इत्यपि वक्तुं शक्यते।

वस्तुत आगमस्तन्त्रशास्त्रस्य फलं तन्त्रशास्त्रञ्चागमात्मकस्यात्मज्ञानस्य साधनमस्तीति वक्तुं शक्यते। अतो द्वयोरनयो: साध्यसाधनभावेन पूर्णता जायते, येन योगरूढ्या तन्त्रागमशब्दार्थयो: साम्यं दृष्ट्वा तान्त्रिकैरन्यैर्वा विद्वद्भिरभेदेनानयोर्व्यवहार: कृत:। तद्यथा मृगेन्द्रतन्त्रं मृगेन्द्रागमोऽपि कथ्यते—शैवतन्त्रं शैवागम इत्यपि व्यवह्रियते, भैरवतन्त्रं भैरवागम इत्यादि।

**आगमभेद:**

प्राधान्येनागमशास्त्रस्य द्वौ भेदौ वर्तेते—शैवागम: वैष्णवागमश्च। शैवान्तर्गतमेव शाक्तागमोऽपि मन्यते तन्त्रविद्भि:। शैवागमानामुपदेष्टा सदाशिव:, वैष्णवागमानामुपदेष्टा जगत्कर्ता नारायण:, शाक्तागमानाञ्चोपदेष्ट्री भगवती शिवा मन्यते। इमानि आगमशास्त्राणि वैदिकसिद्धान्तपोषकाणि विविधानि प्राप्यन्ते, इत: परं भारतीयसंस्कृत्यन्तर्गतौ परन्तु वैदिकपरम्परातो बहिर्भूतौ बौद्धागम: जैनागमश्चेति द्वावन्यावप्यागमौ प्रचलितौ स्त:। वैष्णवागमेषु वैखानसागम: पाञ्चरात्रागमश्च प्रसिद्धौ

स्तः। तत्र विखनसो ब्रह्मा उच्यते, तेन प्रोक्त आगमो वैखानसागमः कथ्यते। एवमेव भगवता शिवेन पञ्चरात्रिषु प्रोक्तत्वात् पाञ्चरात्रागमो जातः। इमौ द्वावपि आगमौ दक्षिणदेशेषु मन्दिरस्थदेवार्चनादिकर्मसु प्रथितप्रचारौ दृश्येते।

## आगमप्रतिपाद्यम्

मुख्यतया आगमशास्त्रे सृष्टिप्रलय-मन्त्रनिर्णय-देवसंस्थान-यन्त्रनिर्णय-तीर्थाश्रम-धर्म-कल्प-ज्यौतिष-संस्थान-व्रतकथा-शौचाशौच-स्त्रीपुरुषलक्षण-राजधर्म-दानधर्म-युगधर्म-व्यवहाराध्यात्मिकविषयाणां प्रतिपादनं दृश्यते।

## यामलशब्दविमर्शः

यमलं नाम युगलं तत्त्वद्वयमित्यर्थः। यमलस्य भावः कर्म वा यामलमुच्यते। शैवागमे शिवतत्त्वस्य शाक्तागमे शक्तितत्त्वस्य अर्थात् शिवारूपायाः शक्तेर्विशदं वर्णनं प्राप्यते, परन्तु यामलतन्त्रे उभयोरभेदेन सामरस्यं वर्णनं प्राप्यते। तत्र शिवतत्त्वमर्थरूपं, शक्तितत्त्वं शब्दरूपं निरूप्यते। अत्र यामलतन्त्रे परस्परमाश्रितस्य भेदकल्पना नैव कर्तुं शक्यते, अपि तु योऽयं शब्दः सोऽर्थः, योऽर्थः सोऽयं शब्द इति रीत्या येयं शक्तिः सोऽयं शिवः, योऽयं शिवः सेयं शक्तिरिति सिद्धान्तोऽभिमतो विद्यते।

## वेदा एव आगमस्रोतांसि

सर्वेषां भारतीयास्तिकदर्शनानामागमानाञ्च वेदा एव स्रोतांसि वर्तन्त इति कथने नास्ति केषाञ्चिन्निगमागमतत्त्वविदां विप्रतिपत्तिः; परन्तु तत्र इयान् विशेषो यद् वेदाः परमेश्वरस्य निःश्वासभूताः[१] स्वत एवाविर्भवन्ति। अपि च सृष्ट्यग्रे परमेश्वरो ब्रह्माणं विधाय तस्मै पूर्वतो विद्यमानान् निजनिःश्वासभूतान् वेदान् प्रयच्छति[२]। ब्रह्माऽपि प्रतिकल्पं पूर्वकल्पितान् वेदान् वसिष्ठमरीच्यादिभ्य ऋषिभ्य उपदिशति।

आगमानान्तूपदेष्टा पार्वतीनाथो भगवान् विश्वनाथस्तान्त्रिकम्, आगमिकञ्च रहस्यजातं भगवत्यै शिवायै सर्वतः प्रथमं समुपदिदेश। यथोक्तं स्वच्छन्दतन्त्रे—

आगतं शिववक्त्रेभ्यो गतञ्च गिरिजानने।
मतञ्च वासुदेवस्य तस्मादागम उच्यते।।

'वेदैश्च सर्वैरहमेव वेद्यः'[३] इति गीतोक्त्या यथा भगवान् वासुदेवः सर्ववेदवेद्यो निरूप्यते, तथा आगमशास्त्रेष्वपि वासुदेवमतमेव भगवता शिवेन

---

१. यस्य निःश्वसितं वेदा यो................ऋग्वेदभाष्यभू. सायणः।

२. यो ब्रह्माणं विदधाति पूर्वं.............श्वेताश्वतरोपनिषद्, ६।१८।

३. श्रीमद्भगवद्गीता-१५।१५।

शिवायै श्रावितम्। अतो वैदिकं हार्दमेव तन्त्रागमेषु प्रकारान्तरैः प्रतिफलितमिति प्रतिभाति। निगमागमयोर्बहुविधवैभिन्न्येऽपि औपास्यं वस्तु एकमेव, तत् परं ब्रह्म एव। 'महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' इति निरुक्तोक्तवचनानुसारमागमशास्त्रेष्वपि वैदिकदेवताया नानात्ववद् नानारूपा देवता उपास्यन्ते; परन्तु तत्रापि वैदिकदेवतैकत्ववद् एकैव प्रधानभूता देवता मन्यते। सैव क्वचित् शिवरूपा, क्वचित् शक्तिरूपा, क्वचिच्च शिवशक्त्योः सामरस्यरूपा वर्ण्यते।

निगमागमयोरध्ययनाधिकारो यद्यपि नैव समानः, तथापि शास्त्रयोरुभयोरध्येतव्यमधिगन्तव्यं वा तत्त्वमेकमेव विद्यते। यथा—तन्त्रागमशास्त्रेषु स्त्रीशूद्रादीनामपि अध्ययनाधिकारो दृश्यते; परन्तु वेदाध्ययने नास्ति तेषामधिकारः शास्त्रसम्मतः। तथापि यथा वेदाध्ययनेन इष्टप्राप्तिरनिष्टपरिहारश्च कर्तुं शक्येते, तथैव तन्त्रागमाध्ययनेन तदुदितनिर्दिष्टोपायेनापि तत्कर्तुं शक्यते, अपि च यथा वेदोक्तकर्मानुष्ठानेन विगतकल्मशः स्वच्छहृदयः परमतत्त्वाधिगमनाधिकारी भवति, तथैवागमोक्तकर्मानुष्ठानेनापि मनुष्यः परमात्मरूपतामवाप्तुं शक्नोत्यत्र नास्ति संशयः।

एवमेव यथा मुख्यनिगमाङ्गभूते व्याकरणशास्त्रे शब्दब्रह्मण उपासनं परमोपासनया प्रामुख्येन वर्ण्यते, तथैव तन्त्रागमेष्वपि पराख्यवाग्ब्रह्मणः समुपासनं विविधप्रकारैः समुपदिश्यते। शाक्तागमेषु शक्तिरेव क्वचित् परब्रह्ममहिषी उच्यते, क्वचिच्च शिवकेशवादीनामपि जननी उच्यते। एवं रीत्या निगमागमयोर्भवतु नाम उपासनाभेदः, कर्मानुष्ठानभेदः, पूजासम्भारभेदश्च; परन्तु नामरूपविभेदेऽपि उभयत्रैकमेव परं तत्त्वं परा शक्तिर्वा निरूपिता विद्यते। अत्र हि प्रोक्ततथ्यप्रतिपादकानि श्रुतिस्मृतिवचनान्यपि भूंयासि प्राप्यन्तो। तद्यथा—

चत्वारि वाक्परिमिता पदानि. (ऋग्वेदे-१।६४।४५)
अकारो वै सर्वा वाक् (ऐ. आ. २।३।६)
वाचीमा विश्वा भुवनानि. (तै. ब्रा. २।८।८।४)
वागक्षरं प्रथमजा ऋतस्य. (तै. ब्रा. २।८।८।५)
अहं रुद्रेभिर्वसुभिश्चरामि. (ऋग्वेदीयं वाक्सूक्तम्)
वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्।। (वाक्यपदीये-१।१४४)
सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका।। (तन्त्रसद्भावे प्रसिद्धः)

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां शिवसहचरीमद्रितनयाम्।
तुरीया काऽपि त्वं निखिलनिगमोद्गीतचरिता
महामाये! विश्वं भ्रमयसि परब्रह्ममहिषी।। (सम्प्रदायतः)
या विद्या शिवकेशवादिजननी या वै जगन्मोहिनी
या पञ्चप्रणवद्विरेफनलिनी या चित्कलाकामिनी।
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोक्ता जगत्साक्षिणी
सा पायात्परदेवता भगवती श्रीराजराजेश्वरी।। (आगमसम्प्रदायतः)

**निगमागमशब्दयोः समानार्थः**

भारतीयसंस्कृतवाङ्मये बहुत्र निगमागमशब्दयोः सामान्येन व्यवहारो दृश्यते। श्रीभर्तृहरिणा वाक्यपदीये नैकत्र आगमशब्दस्य निगमार्थे प्रयोगः कृतः। तद्यथा—

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्।। (वा.प.१।३०)

अत्र वारद्वयमागत आगमशब्दो वेदार्थे प्रयुक्तः। तत्रायमाशयो यद् धर्मो यागादिर्वेदप्रामाण्यनिरपेक्षेण केवलं तर्कबलेन नैव व्यवस्थापयितुं शक्यते, यतो हि यागः साधनं, स्वर्गः साध्यमित्यत्र साध्यसाधनभावस्य कुत्रापि व्यापिग्रहाभावान्न तर्केणानुमातुं शक्यते धर्मस्य स्वर्गसाधनत्वम्। यतः ऋषीणां वेदोक्तकर्मानुष्ठानजन्यं शुद्धान्तःकरणपरिपूतं दिव्यं ज्ञानमपि आगमापरपर्यायश्रुतिमूलकमेव, अतो यागः स्वर्गसाधनमिति विषये वैदिकागमसमुत्थितस्तर्को निर्णयहेतुर्भवितुमर्हति न केवलं शुष्कस्तर्क इति। अत एव मीमांसायां प्रोक्तमिदम्—'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इति। एवमेव—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते।। (वा.प.१।४१)

अत्र स्वोपज्ञटीकायां भर्तृहरिणा—'तथैवायं श्रुतिस्मृतिलक्षणः सर्वैः शिष्टैः परिगृहीत आगम इति' एतावता आगमपदेन श्रुतिस्मृत्योरपि ग्रहणं कृतम्। भावप्रदीपटीकाकारेण तु 'चैतन्यमिव यश्चायं श्रुतिलक्षण आगमोऽविच्छेदेन स्वतःप्रमाणतया वर्तते' इत्यत्र श्रुतिस्वरूप एव आगमः परिगृहीतः। एवमेव भगवता मनुनापि आगमपदेन वेदस्यैव ग्रहणं क्रियते, तद्यथा—

इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः।
चौरिकानृतमायाभिर्धर्मश्चापैति पादशः।। (मनु-स्मृ. १।८२)

इत्यत्र मेधातिथिः 'आगमाद् वेदाख्याद् धर्मः पादशो युगे युगे पादेनावरोपितः' इत्यादिना वेदं जग्राह। पस्पशाह्निके भगवान् पतञ्जलिरपि वैदिकविधिवाक्य-मागमपदेनैव निर्दिशति, यथा—'आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति'। वाक्यपदीयकारो भर्तृहरिस्तु न केवलं वेदापरपर्यायत्वेन आगमशब्दं प्रयुङ्क्ते, अपि तु पौरुषेयमार्षं शास्त्रं दर्शनादिकञ्चापि आगमशब्देन व्यवहरति। तद्यथा—

न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते।
बीजं सर्वागमापाये त्रय्येवादौ व्यवस्थिता।। (वा.प.१।१३३)

एतट्टीकायाम्—आगमपदेन ऋषिप्रणीतानां सांख्यादिदर्शनानां ग्रहणं परिदृश्यते, तद्यथा—'जातु कदाचिदपि कश्चित् सांख्यादिः आगमं स्वागमं कपिलादिदर्शनमकर्तृकमपौरुषेयं न प्रतिपद्यते—न स्वीकरोति, सर्वागमानां कर्तृपरिग्रहेण पौरुषेयत्वात् तेषामपाये विनाशे सति त्रयी ऋग्यजुस्सामलक्षणा श्रुतिरेव सर्वागमानां बीजं मूलरूपेणावतिष्ठते।

**निगमागमयोः पौर्वापर्यम्**

वस्तुतो बीजाङ्कुरन्यायेन निगमागमयोः पूर्वापरीभावो व्यवस्थापयितुं न शक्यते, तथापि केचन आगमिकास्तर्कबलेनागमानां पौर्वात्यं संसाधयिषन्ति, तेषामयं तर्को यद् ऋषीणामार्षत्वं तेषां मन्त्रद्रष्टृत्वसामर्थ्येनैव जायते। तच्च सामर्थ्य-मागमोक्ततपोनिष्ठसाधनानुष्ठानविधानेन तद्द्वारा मन्त्रसाक्षात्कर्तृत्वयोग्यता-सम्पादनेनैव समुपजायते, अतो हेतोः ऋषीणामपि तादृशं सामर्थ्यं समानेतुं पूर्वतः प्राप्तेष्वागमाचारविधानेषु योग्यताऽऽपादनमावश्यकमासीत्। तादृशीं योग्यतामादधाना एवर्षयो मन्त्रान् साक्षात्कर्तुं प्राभवन्। अत एवोच्यते—ऋषयो मन्त्रद्रष्टारः, साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्रादुः' इति (निरुक्ते)।

एवञ्च भर्तृहरिप्रोक्तागमशब्दो वेदातिरिक्तमागमशास्त्रपरतयापि ग्रहीतुं शक्यते। यदुक्तमपि पूर्वम् 'ऋषीणामपि यद् ज्ञानं तदप्यागमपूर्वकमिति'। अत्र अतीन्द्रियार्थविषयकं प्रातिभं ज्ञानं यदृषीणां प्रोक्तं, तदागमशास्त्रज्ञानपूर्वकं न स्वोत्प्रेक्षापूर्वकमिति। तथा चागमोक्ततपश्चर्यादिना संस्कृतात्मनामेवार्षत्वमिति; परन्त्वेतन्न विद्वन्मनोरमं यतो हि स्वयमेव श्रुतिर्जगन्निर्मातुर्ब्रह्मणः पूर्वमेव वेदानां विद्यमानत्वं निर्दिशति। तद्यथा—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देव........(श्वेताश्वतरोपनिषद्-६।१८)। अत्रेदं विज्ञाप्यते यद् विधात्रा परमेश्वरेण

सृष्ट्यादौ ब्रह्मा विधीयते, न तु वेदा विधीयन्ते, ते तु पूर्वत एव नित्यसिद्धाः परमेश्वरहृदये विराजमाना भवन्ति। 'एकोऽहं बहु स्यामि'ति श्रुत्या यदा परमेश्वरो जगत् स्रष्टुमिच्छति, तदा सर्वतः प्रथमं ब्रह्माणं विदधाति तथा तस्मै ब्रह्मणे जगत्सर्जनाय पूर्वतो विद्यमानान् वेदान् प्रयच्छति। अतः सृष्ट्यादौ वेदानां ज्ञानात्मना विद्यमानत्वान्निगमस्यैव पौर्वात्यं निष्पद्यते।

**वेदाविर्भावः**

यत्तु मन्त्रद्रष्टृत्वयोग्यतापादनाय पूर्वमागमोक्तनियमपालनमुक्तं तत्तु वेदाध्ययननियमपालनेऽध्यवसितम्। वेदाविर्भावे तु सम्प्रदायद्वयं खलु श्रूयते, तच्च ब्रह्मसम्प्रदायः, आदित्यसम्प्रदायश्च। ब्रह्मसम्प्रदाये परमेश्वरसकाशाद् ब्रह्मणाधिगता वेदा वंशपरम्परया तत्तदृषिभिरधिगम्यन्ते, तद्यथा ब्रह्मा परमेश्वरप्रहितं वेदराशिं स्वपुत्राय वसिष्ठाय ददौ, वसिष्ठः स्वपुत्राय शक्तये, शक्तिः स्वपुत्राय पराशराय, पराशरस्तु स्वपुत्राय कृष्णद्वैपायनाय, कृष्णद्वैपायनः स्वपुत्राय शुकदेवाय, शुकदेवो हि विमलात्मा सर्वदा ब्रह्मलीनचेताऽखण्डब्रह्मचारी आसीत्, अतस्तस्य पुत्राभावात् ततः प्रभृति शिष्यपरम्परयां वेदाध्ययनसम्प्रदायः प्रारभत। तत्र कृष्णद्वैपायन उत्तरोत्तरमृषीणां वेदधारणशक्तिं क्षीणामवलोक्य पूर्वतः प्राप्तवेदराशिं चतुर्धा विभज्य ऋग्यजुःसामाथर्ववेदात्मना चतुर्भ्यः पैल-वैशम्पायन-जैमिनि-सुमन्तुनामभ्यः शिष्येभ्यः पृथक् पृथक् प्रायच्छत्। एतदुक्तं भागवते—

चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकम्।<br>
व्यदधात् यज्ञसन्तत्यै वेदमेकं चतुर्विधम्।।<br>
ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उद्धृताः।<br>
तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः।।<br>
वैशम्पायन एवैको निष्णातो यजुषामुत।<br>
अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः।।

वायुपुराणेऽपि—

वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः।<br>
ब्रह्मणो वचनात्तात लोकानां हितकाम्यया।।<br>
चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत्।<br>
आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च।।<br>
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः।।

ततः प्रभृति शिष्यप्रशिष्यपरम्परया चतुर्वेदस्य शाखाविस्तारो जातः। शाखाविस्तारविषये भगवान् पतञ्जलिर्महाभाष्ये पस्पशाह्निके एवं स्मरति—

महान् शब्दस्य प्रयोगविषयः, सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्याः बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणो वेद इति। एवं रीत्या ब्रह्मणः सकाशाद् वंशपरम्परया सम्प्राप्तो वेदः पुनः शिष्यप्रशिष्यपरम्परया अध्ययनाध्यापननिमित्तेन शाखावैभिन्न्यमुपगतः। तत्र शाखानां बहुत्वेऽपि तत्र प्रतिपाद्यं कर्म न भिद्यते, सर्वशाखाप्रत्ययमेककर्म इति सूत्रसिद्धान्ताङ्गीकारात्। तद्यथा जैमिनीयन्यायमालायाम्—

शाखाभेदात् कर्मभेदो न वा कर्मात्र भिद्यते।
दृष्टं काठकनामादि बहुभेदस्य कारणम्।।
ग्रन्थद्वारादिना ह्येते युज्यन्ते भेदहेतवः।
रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते।। (जै.न्या.मा. २।४।२)

**आदित्यसम्प्रदायः**

व्यासशिष्यान्यतमं महर्षिवैशम्पायनं यावद् ब्रह्मणोऽविच्छिन्न-परम्परातोऽधिगतो यजुर्वेद एक एव यजुर्वेद आसीत्। पुनः वैशम्पायनशिष्येषु महामनीषी योगी याज्ञवल्क्यो जातः। अनेनैव भगवन्तं सूर्यं समाराध्य शुक्लयजुर्वेदोऽधिगतः। ततः प्रभृति यजुर्वेदस्य सम्प्रदायद्वैविध्यं सञ्जातम्— ब्रह्मसम्प्रदायः, आदित्यसम्प्रदायश्च। तत्र ब्रह्मपरम्पराधिगतो यजुर्वेदः कृष्णयजुर्वेद उच्यते। तथादित्यपरम्पराप्राप्तो वेदः शुक्लयजुर्वेद उच्यते। अत्र शुक्ल-यजुर्वेदभाष्यकारेण महीधराचार्येण स्वकीये भाष्ये यजुर्वेदस्य कृष्णशुक्लत्व-द्वैविध्येऽतिसमासेनैतिह्यं प्रकाशितम्, तच्चेत्थम्—'तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यवस्य ऋग्यजुः-सामाथर्वाख्यांश्चतुरो वेदान् पैल-वैशम्पायन-जैमिनि-सुमन्तुभ्यः क्रमादुपदिदेश, ते च स्वशिष्येभ्यः, एवं परम्परया सहस्रशाखो वेदो जातः। तत्र व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यान्मूर्तां विद्यां विधायोद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरूक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमाल्यानि कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्। तथा च श्रुतिः—आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते (बृह. ५।५।३३)।

**निगमो वेदः**

निगमशब्दो वेदपर्यायः। स च वेदो मन्त्रब्राह्मणेति भागद्वयात्मकः, विभिन्नशाखोपबृंहितः, ऋग्यजुस्सामाथर्वनामभिश्चतुर्धा व्यवह्रियमाणः, प्रमाणान्तर-निरपेक्षः, समस्तप्राणिनामनुग्राहकः, समग्रसृष्टिप्रपञ्चनियमावबोधको नित्यः, सनातनः, ब्रह्मणोऽविच्छिन्नपरम्पराप्राप्तः शब्दराशिरेव।

अस्य शब्दराशेः सामान्यतया द्विधा विभागः क्रियते प्राचीनाचार्यैः, तथा हि 'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति वचनेन महर्षिकात्यायनेन प्रतिज्ञापरिशिष्टे तथा आपस्तम्बाचार्येण स्वकीये गृह्यसूत्रे च प्रतिज्ञातम्। तेन मन्त्ररूपो ब्राह्मणरूपश्च वेदो निगमपदवाच्यः।

मन्त्रस्वरूपमुक्तवता भगवता कात्यायनेन कातीयश्रौतसूत्रीये प्रथमे परिभाषाध्याये निरूपितं, यत् 'ऋचो यजूंषि सामानि निगदाः मन्त्राः' (का. श्रौ. सू. १।३)। अत्र चतुर्विधमन्त्रप्रकारेषु 'नियतपादाक्षरावसाना ऋचः, अनियतपादाक्षरा-वसानानि यजूंषि, गीतिविशिष्टा ऋच एव सामानि, परसम्बोधनार्थाः प्रैषादयो निगदा उच्यन्ते। मन्त्रस्य प्रायः ऋग्यजुःसामरूपास्त्रयः प्रकाराः ऋग्यजुःसामाथर्वेषु चतुर्ष्वपि वेदेषु संदृश्यन्ते, अत एव क्वचिद् वेदस्त्रयीशब्देनाप्युच्यते। 'त्रयी' इत्यत्रावयवार्थे 'तयप्'प्रत्ययो विहितः, न तु संख्यार्थे। अतः ऋग्यजुःसामलक्षणो वेद एव त्रयीशब्दवाच्यः।

निरुक्तकारो यास्को मन्त्राणामन्यथा विभागत्रयं कुरुते। तदनुसारं वेदेषु केचन मन्त्राः प्रत्यक्षाः, केचन परोक्षाः, केचनाध्यात्मिका भवन्ति। तद्यथा—'तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नाम विभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। अथ प्रत्यक्षकृता मध्यमपुरुष-योगास्त्वमिति चैतेन सर्वनाम्ना। अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना इति (नि. ७।२)।

**निगमागमयोः साम्यसंस्कृतिः**

निगमागमयोर्दैवानुष्ठानात् पूर्वं समानरूपेणोपवासः फलाहारश्च विधीयेते। शतपथब्राह्मणे यज्ञानुष्ठानात् पूर्वमशनानशनयोर्भूयान् विचारः कृतः[१]। तत्र सवयसपुत्रः 'अषाढनामर्षिः' पूर्णतया उपवासपक्षमेवाश्रीयते; परन्तु महर्षि-र्याज्ञवल्क्यः सर्वथा उपवासे दोषमुद्भाव्य अशितमप्यनशितं यथा स्यात् तथोपवासपक्षमङ्गीकरोति, तदनुसारं वानस्पत्यं फलादिकम्, आरण्यकमौषधादिकञ्च गृह्यते। एतत्सर्वं श्रुतिसम्मतं नियमजातमागमसंस्कृतावपि तथैव स्वीक्रियते। एवमेव

१. शतपथ-ब्राह्मणे-१।१।१।७-१०।

वैदिके दर्शपूर्णमासाख्ये कर्मणि अथ चागमिके दीक्षाकर्मणि दिवसद्वयसाध्यं विधिविधानं समानमेव परिलक्ष्यते। तत्रोभयत्र प्रथमदिने पूर्वाङ्गविधिं परिसमाप्य रात्रौ यज्ञकर्तुर्दीक्षाग्रहीतुश्च अग्निशालायां पूजास्थाने च विश्रामो विहितः। तद्यथा शतपथब्राह्मणे—'स आहवनीयागारे वैतां रात्रीं शयीत गार्हपत्यागारे वा। देवान्वा एष उपावर्तते, यो व्रतमुपैति'। (श. ब्रा. १।१।१।८) एतस्मिन् सन्दर्भे त्रिपुरार्णवतन्त्रेऽपि निर्दिष्टम्। तद्यथा—

दीक्षादिनात्तु पूर्वेऽह्नि कृतनित्यक्रियः शुभः।
आचम्य वषडा बद्ध्वा शिखामधिवसेत् ततः॥
ध्यायन्देवीं स्वहृदये कृतकृत्योऽपरेऽह्नि॥ (त्रिपुरार्णवतन्त्रे-१।२३)

एवमेव निगमागमयोर्यागविधिषु यजमानस्योपवेशनसाम्यं परिलक्ष्यते। श्रौतयागावसरे महर्षिकात्यायनेन—'दक्षिणतो ब्रह्मयजमानयोरासने' तथा 'पश्चाद् यजमानो वेदिस्पृक्' इति सूत्राभ्यां ब्रह्मणो यजमानस्य चोपवेशनस्थलं निर्दिष्टम्। त्रिपुरार्णवतन्त्रेऽपि ऋत्विजामुपवेशनस्थलं समानमेव निर्दिष्टम्[1]। एवं प्रकारेण निगमागमयोरनेकत्र संस्कृतौ साम्यं विहितमस्तीति दरीदृश्यते। अत्र केवलं दिङ्मात्रमेव निर्दिष्टं लघुकलेवरेऽस्मिन् शोधलेखे तत्सर्वं साम्यं दर्शयितुमशक्यत्वादिति दिक्।

●

१. त्रिपुरार्णवतन्त्रे-१९।२४-२७।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञ-विचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. ''**वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः ''**सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी-२२१००२** (उ.प्र.)'' इति सङ्केतेन विधेयः।



